# भैषज्यरत्नावली ।

श्रीमद् गोविन्ददासविशारद कृत भैषज्यरत्नावलीमवलम्ब्य
चरक सुश्रुत वाग्भट हारीत भावप्रकाश शार्ङ्गधर
चक्रदत्त रसेन्द्रचिन्तामणि प्रभृति ग्रन्थेभ्यः ।

पञ्चाशदधिकव्याधयस्तेषां परीक्षितं तथा-
द्रव्यगुणविज्ञानादि सन्निवेशिता ।

श्रीविनोदलाल सेनगुप्त कविराजेन
संगृहीता प्रकाशिता च ।

---

# VAISHAJYARATNAVALI

A WELL-KNOWN SANSKRIT TREATISE ON
PRACTICAL THERAPEUTICS.

*EDITED AND PUBLISHED BY*


## KAVIRAJ BINOD LAL SEN.

*(Author of Ayur-veda Vijnana, Aryagriha Chikitsa &c. and
Examiner of Hindu system of medicine, Punjab University)*

No. 146, Lower Chitpore Road, Calcutta.



*CALCUTTA.*

*Printed by Udoy Churn Pal, at the New Valmiki Press,
No. 39, Shibnarain Dass Lane.*

**Price Rs 4.**


---


To be had from Kaviraj Binod Lal Sen.
Baakhana, Calcutta.

# विज्ञापनम् ।

गासीद् वर्त्तमान कालापेक्षया शताधिक समा-
ङ्गकुलचन्द्रो भिषक् शिरोमणिर्गोविन्ददास विशार-
ा कश्चित् सुधीः । तेन महात्मना चरक सुश्रुत
रसेन्द्रचिन्तामणि प्रभृतिभ्यो नानायुर्वेद ग्रन्थेभ्यो
र मुनिभ्य उद्धृत्य भैषज्यरत्नावली नाम संग्रहो
: । ततश्चेयं भैषज्यरत्नावली वङ्गजनपदवासि-
षजां रत्नायमानेव स्वे स्वे कण्ठे सादरं
तत्र सम्प्रतिष्ठोऽपि नानायुर्वेद विचक्षणाः सुभिषज
चिकित्साकुशला आसन् । तथाच या सुधियामपि
सुखकरी अभूत् । तामिमां भैषज्यरत्नावली मस्मत्स्वा
भि रभिनव भैषज्यरत्नाख्येषा प्रकाशोता ( इत पूर्व-
ग्रन्थं वङ्गानुवाद सहिता च मुद्रिता ) । यद्यप्यस्या-
भिनवं संग्रहस्य भैषज्यरत्नावलीति आख्या विहिता पर-
न्तु मूल भैषज्यरत्नावलीतोऽतिरिक्ता विविधाः
यो विषया निहिताः कालमहिम्ना यद्यत्कर्मादिक-
निक मानवानां नोपयुक्तं नवा सुखकरं तत्तत्परि-
तथास्माकं पुरुषपरम्परायां व्यवहृतान्यस्मा-
वन्कृतान्यतीव सुफलप्रदान्याशुक्लेशनिवर्त्तकानि
भैषजानि विविधानि च कर्माणि विहितानि ।

[illegible] हि अत्र प्रबन्धनिबन्धनेऽस्माभिर्भूयान् श्रमः
[illegible] एतस्य गुणदोषविचारे हंसावक्षाविव विद्व-
[illegible]ः ।

[illegible]थेहैत दवश्यं वाच्यं ज्ञानवतां वरस्य सुगभीर धियः
[illegible]दाम्बुधेः पारदृश्वनो यशसोज्ज्वलीकृतदिङ्मण्डलस्य
[illegible]कशिरोमणेः पूज्यपादस्य पितृव्यदेवस्य श्रीश
श्रीयुक्त चन्द्रकिशोर सेनगुप्त कविराजस्य श्रीचरण प्रसा-
[illegible] मस्मिन् दुरूहे कर्मणि लब्धसिद्धिः [illegible]
[illegible] कल्याणवाग्मिर्जगति प्रसिद्धेव [illegible]
[illegible] न। अतः परं कृतज्ञहृदयेन मया सादर-
[illegible] स्वीक्रियते मम चिरमित्रेण आयुर्वेदविचक्षणेन
[illegible] विदुषा श्रीमता योगीन्द्रकुमार भिषजा
[illegible]देन एतत् प्रबन्ध निबन्धने महान् श्रमः कृतः।
[illegible]द कोऽसौ महात्मा चिराय मम स्मरणे [illegible]
अलमति विस्तरेणेति। १८९८

श्रीविनोदलाल सेनगुप्त कविराजः।

विषयः । पृष्ठाङ्कः ।

वातपैत्तिक ज्वरे ।



पित्तश्लेष्मज्वरे ।



वातश्लेष्मज्वरे ।



सान्निपातिके ज्वरे ।

| विषयः । | पृष्ठाङ्कः । |
|---|---|

| विषयः। | पृष्ठाङ्कः। |
|---|---|
| नवज्वरेभसिंहः | ४३ |
| त्रिपुरभैरवः | ४३ |
| ज्वरधूमकेतुः | ४४ |
| श्रीमृत्युञ्जयः | ४४ |
| श्रीराम रसः | ४५ |
| नवज्वराङ्कुशः | ४५ |
| प्रचण्डरसः | ४५ |
| वैद्यनाथ वटी | ४५ |
| अग्निकुमारः | ४६ |
| रत्नगिरिः | ४६ |
| प्रतापमार्त्तण्डः | ४७ |
| चण्डेश्वरः | ४७ |
| उदकमञ्जरी रसः | ४७ |
| अचिन्त्यशक्तिः | ४८ |

सान्निपातिकज्वरादौ।

| | |
|---|---|
| मोहान्धसूर्य्यो रसः | ४८ |
| कुलवधूः | ४८ |
| सौभाग्य वटी | ४८ |
| श्रीवेताल रसः | ५० |
| चक्री | ५० |
| चक्री | ५० |
| ब्रह्मरन्ध्ररसः | ५० |
| आनन्दभैरवी वटी | ५१ |

| विषयः । | पृष्ठाङ्कः । |
|---|---|

सन्निपातज्वरादौ ।



मध्यज्वरादौ ।

| विषयः | पृष्ठाङ्कः |
| --- | --- |

| विषयः । | | | | पृष्ठाङ्कः |
|---|---|---|---|---|
| नासिकायाः शोणितस्रावेऽरुद्रप्रयोगाः | | ... | | १८७ |
| मेढ्रात् तत्प्रवृत्तौ विधिः | .. | ... | | १८७ |
| कूष्माण्डखण्डः | ... | .. | ... | १८७ |
| वासाकूष्माण्डखण्डः | ... | .. | ... | १८८ |
| वासाखण्डः | ... | ... | ... | १८८ |
| वासाघृतम् | . | ... | ... | १८९ |
| दूर्वाद्यं घृतम् | .. | . | ... | १८९ |
| समशर्करं लौहम् | ... | .. | ... | १९० |
| शतमूल्यादिलौहम् | . | .. | ... | १९० |
| खण्डकाद्यं लौहम् | | . | ... | १९० |
| रक्तपित्तान्तकलौहम् | ... | | ... | १९१ |
| सुधानिधिरसः | . | | ... | १९२ |
| ह्रीवेराद्यं तैलम् | ... | . | ... | १९१ |
| उशीरासवः | ... | | ... | १९२ |

अग्निमान्द्याधिकारः ।

| | | | |
|---|---|---|---|
| पाचकाग्नेः सर्वथा रक्षणीयता | ... | ... | १९३ |
| अग्निविकृतेश्चिकित्साविधिः | ... | ... | १९३ |
| हिङ्ग्वादि चूर्णम् | .. | ... | .. | १९४ |
| हिङ्गुष्टकं चूर्णम् | ... | ... | ... | १९४ |
| अग्निमुख चूर्णम् | ... | ... | ... | १९४ |
| वृहदग्निमुखचूर्णम् | ... | .. | .. | १९५ |
| भास्करलवणम् | ... | ... | ... | १९६ |
| आमजीर्णादीनाश्चिकित्सा | ... | ... | १९६ |

| विषयः । | पृष्ठाङ्कः । |
|---|---|

अतीसाराधिकारः ।

विषयः । पृष्ठाङ्कः ।



हिक्काश्वासाधिकारः ।

विषयः । ... पृष्ठाङ्कः ।



स्वरभेदाधिकारः ।



हृद्रोगाद्यधिकारः ।

विषयः । पृष्ठाङ्कः ।

| विषयः। | पृष्ठाङ्कः। |
| --- | --- |

विषयः। पृष्ठाङ्कः।

विषयः। पृष्ठाङ्कः।

विषयः। पृष्ठाङ्कः।

शूकदोषाधिकारः।



प्रमेहाधिकारः।

विषयः। पृष्ठाङ्कः।

औपसर्गिकमेहाधिकारः।



शुक्रमेहाधिकारः।



प्रमेहपिड़काधिकारः।

कुष्ठाधिकारः ।

विषयः। पृष्ठाङ्कः।

| विषय: । | पृष्ठाङ्क: । |
| --- | --- |
| महाभल्लातकगुड: | ५५२ |
| अमृताङ्कुरलौहम् | ५५३ |
| पाकलक्षणम् | ५५४ |
| उदयभास्कर: | ५५५ |
| समामानिक्यम् | ५५५ |
| तालकेश्वर: | ५५६ |
| तालकेश्वर: | ५५६ |
| महातालकेश्वर: | ५५७ |
| पञ्चतिक्तघृतम् | ५५८ |
| पृथ्वीसारतैलम् | ५५८ |
| खदिरारिष्ट: | ५५९ |
| **अर्शोऽधिकार: ।** | |
| अर्शसां चिकित्साविधि: | ५५९ |
| अर्श:पातनलेपा: | ५५९ |
| अपरे प्रयोगा: | ५६० |
| नागराद्यो मोदक: | ५६१ |
| लवणोत्तमादिचूर्णम् | ५६१ |
| स्वल्पशूरणमोदक: | ५६१ |
| बृहच्छूरणमोदक: | ५६२ |
| श्रीबाहुशालगुड: | ५६२ |
| प्राणदागुडिका | ५६३ |
| रक्तार्श:सु कतिपयप्रयोगा: | ५६४ |
| कुटजलेह: | ५६५ |

| विषयः । | पृष्ठाङ्कः । |
|---|---|

सद्योव्रणाधिकारः ।



नाड़ीव्रणाधिकारः ।



शिरोरोगाधिकारः ।

| विषयः। | पृष्ठाङ्कः। |
|---|---|

अपस्माराधिकारः।



मदात्ययाधिकारः।



नेत्ररोगाधिकारः।

| विषयः । | पृष्ठाङ्कः |
|---|---|

विषयः । पृष्ठाङ्कः ।



मुखरोगाधिकारः ।

विषयः । पृष्ठाङ्कः ।

क्षुद्ररोगाधिकारः ।

विषयः । | पृष्ठाङ्कः ।



स्त्रीरोगाधिकारः ।

विषयः। पृष्ठाङ्कः।

| विषयः । | पृष्ठाङ्कः । |
|---|---|



## गर्भिणीचिकित्सा ।



## सूतिकारोगचिकित्सा ।

विषयः । पृष्ठाङ्कः ।

बालरोगाधिकारः ।

विषयः । पृष्ठाङ्कः ।

रसायनाधिकारः ।



वाजीकरणाधिकारः (वृष्याधिकारः) ।

परिशिष्टस्य सूचीपत्रम् ।

विषयः। पृष्ठाङ्कः।

सूचीपत्रं सम्पूर्णम्।



ओं नमः परमात्मने

# भैषज्यरत्नावली।



सच्चिदानन्दमव्यक्तं विश्वेशं पुरुषोत्तमम्।
वन्दे सिद्धिप्रदं भक्त्या प्रत्यूहानां प्रशान्तये॥
गोविन्ददासं भिषजां मुख्यं विद्वत्कुलोत्तमम्।
नत्वा तेन कृतं ग्रन्थमवलम्ब्य विशेषतः॥
अन्यान्यपि च तन्त्राणि पूर्व्वाचार्य्यैः कृतानि च।
सारं तेभ्यः समाकृष्य संग्रहोऽयं निबध्यते॥
परम्परोदितानाञ्च बहुशो दृष्टकर्म्मणाम्।
आविष्कृतानाञ्चास्माभिः प्रत्यक्ष फलदायिनाम्॥
प्रयोगोऽगदसंघानां कीर्त्तितोऽस्मिन् निबन्धने॥

आयुर्वेदस्य लक्षणं निरुक्तिश्च।

आयुर्हिताहितं व्याधेर्निदानं शमनं तथा
विद्यते यत्र विद्वद्भिः स आयुर्वेद उच्यते॥
अनेन पुरुषो यस्मादायुर्विन्दति वेत्ति च।
तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः॥

आयुर्वेदोत्पत्तिः।

ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत्।
स दक्षौ तौ सहस्राक्षं सोऽत्रिजं समुपादिशत्॥
सोऽग्निवेशश्च भेड़ञ्च जातुकर्णं पराशरम्।
क्षारपाणिञ्च हारीतमायुर्वेदमपाठयत्॥
ब्रह्मा प्रजापतिर्दस्रौ देवराड़त्रिजस्तथा।
स्वनाम्ना संहितां चक्रे पृथक् कल्याणहेतवे॥
तन्त्रस्य कर्त्ता प्रथममग्निवेशोऽभवत् पुरा।
ततो भेड़ादयः सर्वे पृथक् तन्त्राणि ते निरे॥
धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्।
रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च॥
व्याधयो द्विविधाः प्रोक्ताः शारीरा मानसास्तथा।
शारीरा ज्वरकुष्ठाद्या उन्मादाद्या मनोभवाः॥
दोषाणां साम्यमारोग्यं वैषम्यं व्याधिरुच्यते।
सुखसंज्ञकमारोग्यं विकारो दुःखमेव च॥
साध्योऽसाध्य इति व्याधिर्द्विधातोऽपि पुनर्द्विधा।
सुखसाध्यः कृच्छ्रसाध्यो याप्यो यश्चाप्रतिक्रियः॥
याप्यत्वं याति साध्यस्तु याप्यो गच्छत्यसाध्यताम्।
जीवितं हन्त्यसाध्यस्तु नरस्याप्रतिकारिणः॥
याप्यत्वमसाध्यत्वञ्च द्विधा ज्ञेयं प्रकृतित उपेक्षणाच्च

तथाच सारचन्द्रिकायाम्।

याप्याः केचित् प्रकृत्यैव केचिद्याप्या उपेक्षया।
प्रकृत्या व्याधयोऽसाध्याः केचित् केचिदुपेक्षया॥
एकोत्तरं मृत्युशतमस्मिन् देहे प्रतिष्ठितम्।

तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः॥
ये त्विहागन्तवः प्रोक्तास्ते प्रशाम्यन्ति भेषजैः।
जपहोमप्रदानैश्च कालमृत्युर्न शाम्यति॥
पीड़ितं रोगसर्पाद्यैरपि धन्वन्तरिः स्वयम्।
सुस्थीकर्त्तुं न शक्नोति कालप्राप्तं हि देहिनम्॥

## तथाच ज्योतिस्तत्त्वे।

आयुष्ये कर्म्मणि क्षीणे लोकेऽयं दृश्यते मया।
नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः॥
त्रायन्ते मृत्युनोपेतं जरया चापि मानवम्॥

## तत्रैव।

वर्त्त्याधारस्नेहयोगात् यथा दीपस्य संस्थितिः॥
विक्रियापि च दृष्टैवमकाले प्राणसंक्षयः।
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः॥
यादृच्छिको मुमूर्षुश्च विहीनः करणैश्च यः।
वैरी च वैद्यविद्वेषी श्रद्धाहीनः सशङ्कितः॥
भिषजामनियम्यश्च नोपक्रम्यो भिषग्विदा।
एतानुपाचरन् वैद्यो बहून् दोषानवाप्नुयात्॥
यावत् कण्ठगताः प्राणा यावन्नास्ति निरिन्द्रियः।
तावच्चिकित्सा कर्त्तव्या कालस्य कुटिला गतिः॥
जातमात्रश्चिकित्स्यस्तु नोपेक्ष्योऽल्पतयागदः।
वह्निशस्त्रविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ॥
यथा स्वल्पेन यत्नेन छिद्यते तरुणस्तरुः।

स एवातिप्रवृद्धस्तु छिद्यतेऽतिप्रयत्नतः ॥
ग्रहेषु प्रतिकूलेषु नानुकूलं हि भेषजम् ।
ते भेषजानां वीर्य्याणि हरन्ति बलवन्त्यपि ॥
प्रतिकृत्य ग्रहानादौ पश्चात् कुर्य्याच्चिकित्सितम् ।
आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता ।
शस्त्रैः कषायैर्होमाद्यैः क्रमेणान्त्या सुपूजिता ॥
याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः ।
सा चिकित्सा विकाराणां कर्म्म तद्भिषजां मतम् ॥
क्वचिद्धर्म्मः क्वचिन्मैत्री क्वचिदर्थः क्वचिद्यशः ।
कर्माभ्यासः क्वचिच्चापि चिकित्सा नास्ति निष्फला ॥
भिषग्द्रव्यमुपस्थाता रोगी पादचतुष्टयम ।
गुणवत् कारणं ज्ञेयं विकारस्योपशान्तये ॥
श्रुते पर्य्यवदातत्वं बहुशो दृष्टकर्म्मता ।
दाक्ष्यं शौचमिति ज्ञेयं वैद्ये गुणचतुष्टयम् ॥
प्रशस्तदेशसम्भूतं प्रशस्तेऽहनि चाहृतम् ।
अल्पमात्रं महावीर्य्यं गन्धवर्णरसान्वितम् ॥
उद्भिज्जमपरिच्छिन्नं शुद्धं धात्वादिकं तथा ।
समीक्ष्य काले दत्तञ्च प्राहुः परममौषधम् ॥
उपचारज्ञता दाक्ष्यमनुरागश्च भर्त्तरि ।
शौचञ्चेति चतुर्थोऽयं गुणः परिचरे जने ॥
स्मृतिर्निर्देशकारित्वमभीरुत्वमथापि च ।
ज्ञापकत्वञ्च रोगाणामातुरस्य गुणा मताः ॥
मृद्दण्डचक्रसूत्राद्याः कुम्भकाराहते यथा ।
नावहन्ति गुणं वैद्याहते पादत्रयं तथा ॥

यस्तु रोगमभिज्ञाय कर्माण्यारभते भिषक्।
अप्यौषधविधानज्ञस्तस्य सिद्धि यदृच्छया॥
यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः।
साध्यासाध्यविधानज्ञस्तस्य सिद्धिः करे स्थिता॥
दृष्टकर्मा च शास्त्रज्ञो वैद्यः स्यात् सिद्धिभाजनो।
एकाङ्गहीनो न श्लाघ्य एकपक्ष इव द्विजः॥
शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चासकृत्।
यः कर्म्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः॥
नाभिज्ञाय तु शास्त्राणि भेषजं कुरुते भिषक्।
यम एव स विज्ञेयो मर्त्त्यानां मर्त्तरूपधृक्॥
कुचेलः कर्कशः स्तब्धः कुग्रामी स्वयमागतः।
पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा यदि।
नाड़ीजिह्वास्यमूत्राणां कोष्ठादीनाञ्च सर्वथा।
परीक्षां यो न जानाति स वैद्यो यम एव हि॥
अप्येकं नीरुजं कृत्वा जन्तुं यादृश तादृशम्।
आयुर्वेदप्रसादेन किं न दत्तं भवेद्भुवि॥
कपिला कोटीदानाद्धि यत् फलं परिकीर्त्तितम्।
फलं तत्कोटिगुणितमेकातुरचिकित्सया॥

नन्दिपुराणे

अप्येकं नीरुजीकृत्य व्याधितं भेषजैर्नर।
धर्म्मार्थकाममोक्षाणामारोग्यं कारणं यतः।
तस्मादारोग्यदानेन नरो भवति सर्वदः॥
प्रयाति ब्रह्मसदनं कुलसप्तकसंयुतः॥
चिकित्सितशरीरं यो न निष्क्रीणाति दुर्म्मतिः।

स यत् करोति सुकृतं तत्सर्वं भिषगश्नुते ॥
दर्शनस्पर्शनप्रश्नैर्व्याधेर्ज्ञानं त्रिधामतम् ।
दर्शनान्मूत्र जिह्वादेः स्पर्शनान्नाड़िकादिभिः ॥
प्रश्नैर्दूतादिवचनादिति त्रेधा समुच्यते ।
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म्म भिषक् पश्चात् ज्ञानपूर्वं समाचरेत् ॥
यथाविषं यथाशस्त्रं यथाग्निरशनिर्यथा ।
तथौषधमविज्ञातं विज्ञातममृतं यथा ॥

अथ ज्वरचिकित्सा ।

पूर्वरूपे प्रयुञ्जीत ज्वरस्य लघुभोजनम् ।
लङ्घनञ्च यथादोषं विरेकं वातिके पुनः ॥
पाययेत् सर्पिरच्छं पैत्तिके तु विरेचनम् ।
मृदुप्रच्छर्दनं तद्वत् कफजे तु विधीयते ॥
द्वन्द्वजेषु द्वयं कार्य्यं बुद्धा सर्वन्तु सर्वजे ।
नवज्वरे दिवास्वप्नस्नानाभ्यङ्गान्नमैथुनम् ।
क्रोधप्रवातव्यायामकषायांश्च विवर्जयेत् ॥
कषायं यः प्रयुञ्जीत नराणां तरुणज्वरे ।
सुसुप्तं कृष्णसर्पन्तु कराग्रेण परामृशेत् ॥
न कषायं प्रयुञ्जीत नराणां तरुणे ज्वरे ।
कषायेणाकुलीभूता दोषा जेतुं सुदुष्कराः ॥
चतुर्भागावशिष्टन्तु यः षोड़शगुणाम्भसा ।
स कषायः कषायः स्यात् स वर्ज्यस्तरुणज्वरे ॥
फाण्टादीनां प्रयोगस्तु न निषिद्धः कदाचन ।
न छिन्द्यात् पूर्वाह्ने नाभिष्यन्दि कदाचन ।

न नक्तं न गुरुप्रायं भुञ्जीत तरुणज्वरी ॥
परिषेकान् प्रदेहांश्च स्नानं संशोधनानि च ।
दिवा स्वप्नं व्यवायञ्च व्यायामं शिशिरं जलम् ॥
क्रोधप्रवातभोज्यानि वर्जयेत्तरुणज्वरी ।
शोषच्छर्दिं मदं मूर्च्छां भ्रमं तृष्णाद्यरोचकान् ॥
प्राप्नोत्युपद्रवानेतान् परिषेकादिसेवनात् ।
ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात् ।
क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् ॥
आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधापयन्
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥
अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ।
ज्वरघ्नं दीपनं काङ्क्षा रुचिलाघवकारकम् ॥
प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत् ।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥
तत्र मारुतक्षुत्तृष्णा मुखशोषभ्रमान्विते ।
कार्यं न बाले नो वृद्धे न गर्भिण्यां न दुर्बले ॥
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासा सहोदये ।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥
पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च ।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ॥
मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमो हृदि ।
देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ॥

मद्यो भुक्तस्य वा जाते ज्वरे सन्तर्पणोत्थिते।
वमनं वमनार्हस्य शस्तमित्याह वाभटः॥
कफप्रधानानुत्क्लिष्टान् दोषा नामाशयोत्थितान्।
बुद्ध्वा ज्वरकरान् काले वम्यानां वमनैर्हरेत्॥
अनुपस्थितदोषाणां वमनं तरुणज्वरे।
हृद्रोगं श्वासमानाहं मोहञ्च कुरुते भृशम्॥
तृष्यते सलिलं चोष्णं दद्याद्वातकफज्वरे।
मद्योत्थे पैत्तिके वाथ शीतलं तिक्तकैः शृतम्॥
दीपनं पाचनञ्चैव ज्वरघ्नमुभयञ्च तत्।
स्रोतसां शोधनं बल्यं रुचिस्वेदप्रदं शिवम्॥

षडङ्गपानीयम्।

मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः।
शृतशीतं जलं देयं पिपासाज्वरशान्तये॥
मुख्यभेषजसम्बन्धो निषिद्धस्तरुणे ज्वरे।
तोयपेयादिसंस्कारैर्निर्दोषं तेन भेषजम्॥

षडङ्गादिसाधनम्।

यदप्सु शृतशीतासु षडङ्गादिप्रयुज्यते।
कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि॥
अर्द्धशृतं प्रयोक्तव्यं पाने पेयादि सन्निधौ।
लाजपेयां सुखज्वरां पिप्पली नागरैः शृताम्॥
पिबेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरादितः।
पेयां वा रक्तशालीनां पार्श्वबस्ति शिरोरुजि॥
श्वदंष्ट्रा कण्टकारीभ्यां सिद्धां ज्वरहरीं पिबेत्।
षडङ्गपरिभाषैव प्रायः पेयादि सम्मता॥

यवागूपानमात्रा ।

यवागूमुचिताद् भक्ताच्चतुर्भागकृतां वदेत् ।

मण्डादिलक्षणम् ।

सिक्थकै रहितो मण्डः पेया सिक्थसमन्विता ।
यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा ॥

अन्नादिसाधनम् ।

अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे ।
मण्डश्चतुर्दश गुणे यवागूः षड्गुणेऽम्भसि ॥
अष्टादशगुणे तोये यूषः शार्ङ्गधरेरितः ।
अमोपवासानिलजे हितो नित्यं रसौदनः ।
मुद्गयूषौदनश्चापि देयः कफसमन्विते ॥
स एव सितया युक्तः शीतः पित्तज्वरे हितः ।
रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह ॥
यवाग्वोदनलाजार्थं ज्वरितानां ज्वरापहाः ।
मुद्गान् मसूरांश्चणकान् कुलत्थान् समकुष्ठकान् ॥
आहारकाले यूषार्थं ज्वरिताय प्रदापयेत् ।
पटोलपत्रं वार्त्ताकुं कुलकं कारवेल्लकम् ॥
कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम् ।
पत्रं गुडूच्याः शाकार्थं ज्वरिताय प्रदापयेत् ॥
ज्वरितो हितमश्नीयाद् यद्यप्यस्यारुचिर्भवेत् ।
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽपि वा ॥
सातत्यात् स्वाद्वभावाद्वा पथ्यं द्वेष्यत्वमागतम् ।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः ॥
ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु ।

श्लेष्मक्षये विवृद्धोष्मा बलवाननलस्तदा ॥
गुर्वभिष्यन्दिकाले च ज्वरी नाद्यात् कथञ्चन ।
न हि तस्याहितं भुक्तमायुषे वा सुखाय वा ॥
लङ्घनं स्वेदनं कालो यवागूस्तिक्तको रसः ।
पाचनान्यविपक्कानां दोषाणां तरुणे ज्वरे ॥
आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ।
मध्यं द्वादशरात्रन्तु पुराणमत उत्तरम् ॥

यत्तु ।

त्रिसप्ताहव्यतीतस्तु ज्वरो यस्तनुतां गतः ।
प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते ॥
ज्वरितं षड़हेऽतीते लघ्वन्न प्रतिभोजितम् ॥
पाचनं शमनीयं वा कषायं पाययेत्तु तम् ।
सप्ताहात् परतोऽस्तब्धे सामे स्यात् पाचनं ज्वरे ।
निरामे शमनं स्तब्धे सामे नौषधमाचरेत् ॥

षड़हेऽतीते इति ज्वरोत्पाददिनमारभ्य षड़हेऽतिक्रान्ते सप्तमेऽहनि लघ्वन्न प्रतिभोजितं, अर्थादष्टमेऽहनि । पाचनं शमनीयं वा इति विकल्पद्वयं योग्यतया यथाक्रमं आमदोष पक्वदोष विषयं ज्ञेयम् । पाचनं शमनीयं वा कषायं पाययेदिति योजना, यत उपवास परदिने भेषज निषेधः यदुक्तं पीताम्बुर्लङ्घित इत्यादिना । अन्ये पुनरस्यैवार्थं प्रकारान्तरेणेच्छन्ति षड़हेऽतीते इति ज्वरोत्पाददिनं परित्यज्य गणना कार्य्या, आरम्भदिनपरिहारेण परिहारकाल गणनावत् तेन षड़हे अतीते इत्यर्थो भवति ।

इदानीं सप्ताहानन्तरमपि यस्यामवस्थायां पाचनं

शमनञ्च देयं यस्याञ्च न देयं तदाह समाहात् परत इत्यादिना सामे ज्वरे सप्ताहोपरि पाचनं विधीयते अस्तब्धे प्रवर्त्तमानमूत्रपुरीषे, निरामे शमनं शमनयोग्यं, स्तब्धे सामे नौषधमाचरेदिति न सर्वथैव औषधं पिबेदित्यर्थः। ननु सप्ताहानन्तरं ज्वरस्य निरामत्वात् किमर्थं पाचनं यदुक्तं अष्टाहो निरामज्वरलक्षणमिति। उच्यते द्विधा हि सामता एका दोषसामता प्रथमा दोषदुष्टिरूपा, प्रथमां दोषदुष्टिञ्च केचिदामं प्रचक्षते। सा सप्ताहेनापैति, सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः। निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि॥ इति चरकः। तस्यां दोषसामतायं पाचननिषेधः अपरा रससामता सप्ताहात् परतोऽप्यनुवर्त्तते तस्यामप्रबलायां पाचनं देयं सुश्रुत सम्वादात्। तेन सप्ताहादर्वाक् तरुणे, सप्ताहानन्तरमपि स्तब्धे सामे प्रबलरससामतायां मुख्यभेषजं न देयमिति पर्य्यवसितोऽर्थः। पाचनमामपाचनं शमनं दोषशमनमिति।

रससामतालक्षणमाह।

लालाप्रसेको हृल्लासहृदयाशुद्धरोचकाः।
तन्द्रालस्या विपाकास्य वैरस्यं गुरुगात्रता॥
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः।
आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम्॥
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्।
मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च।
पक्वं दोषं विजानीयात् ज्वरे देयं तदौषधम्॥

पीताम्बुर्लङ्घितः क्षीणोऽजीर्णीभुक्तः पिपासितः
न पिबेदौषधं जन्तुः संशोधनमथेतरत् ॥
वीर्य्याधिकं भवति भेषजमन्नहीनं
हन्यात्तदामयमसंशयमाशु चैव।
तद्बालवृद्धयुवतीमृदुभिश्च पीतं
ग्लानिं परां नयति चाशु बलक्षयश्च ॥
अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कता।
लघुत्वमिन्द्रियोद्गार शुद्धि जीर्णौषधाकृतिः ॥
औषधशेषे भुक्तं पीतं तदौषधं सशेषेऽन्ने ।
न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥
क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजा।
अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥
शीघ्रं विपाकमुपयाति बलं न हिंस्या-
दन्नावृतं न च मुहुर्वदनान्निरेति।
प्रागभुक्तसेवितमथौषधमेतदेव
दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥
मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः।
व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्यमात्रां प्रयोजयेत् ॥

सर्वज्वरस्य साधारण कषायमाह ।

## धान्यपटोलम् ।

दीपनं कफविच्छेदि वातपित्तानुलोमनम् ।
ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयोः ॥

## अथ वातिकज्वरे।

### किरातादिः क्वाथः।

किराताब्दामृतोदीच्य वृहतीद्वयगोक्षुरैः।
चन्दिरा कलसीविश्वैः क्वाथो वातज्वरापहः।

## अथ पित्तज्वरे।

### यवपटोलम्।

पटोलयवनिःक्वाथो मधुना मधुरीकृतः।
तीव्रपित्तज्वरामर्दी पानात्तृड्दाहनाशनः।
(यावता माधुर्य्यं स्यात् तावत् प्रमाणं मधुदेयम्।)

### पर्पटकादिः क्वाथः।

एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः।
किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः॥

### धान्यशर्करा।

उषितं धन्याकजलं प्रातःपीतं सशर्करं पुंसाम्
अन्तर्दाहं शमयत्यचिराद्दूरप्ररूढमपि॥
पित्तज्वरेण तप्तस्य क्रियां शीतां समाचरेत्।

उत्तानसुप्तस्य गभीरताम्र
कांस्यादि पात्रं विनिधाय नाभौ।
तत्राम्बुधारा बहुला पतन्ती
निहन्ति दाहं त्वरितं सुशीता।

अम्लपिष्टैः सुशीतैर्वा पलाशतरुजैर्दिहेत्।
बदरी पल्लवोत्थेन फेनेनारिष्टकस्य वा।

## अथ कफज्वरे।

### निम्बादिः क्वाथः।

निम्बविश्वामृतादारु शटि भूनिम्बपौष्करम्।

पिप्पल्यो बृहती चेति क्वाथो हन्ति कफज्वरम्।

सिन्धुवार क्वाथः।

सिन्धुवारदलक्काथं सोषणं कफजे ज्वरे।
जङ्घायाश्च बले क्षीणे कर्णे वापिहिते पिबेत्॥

चातुर्भद्रावलेहिका।

कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह।
श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकृत्।
जर्द्धजत्रुजरोगघ्नी साऽयं स्यादवलेहिका।
अधोरोगहरी या तु सा पूर्वं भोजनान् मता।

मधुपिप्पली।

क्षौद्रोपकुल्या संयोगः श्वासकासज्वरापहः।
प्लीहानं हन्ति हिक्काञ्च बालानाञ्चापि शस्यते।

अथ वातपैत्तिकज्वरे।

नवाङ्गः क्वाथः।

विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः।
कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम्॥

गु[illegible]दिः क्वाथ।

गुडूचीनिम्ब[illegible]क पद्मक [illegible]नम्।
एष [illegible] हन्ति गुडूच्यादिस्तु दीपनः॥
हृल्ला[illegible]च्छर्दिपिपासादाहनाशनः।

[illegible] गुडूच्यादि।

गुडूची [illegible] पद्मनाग[illegible]शासकम्।
अभय[illegible] पाठा धान्याब्दरोहिणी॥
कषाय[illegible] पिप्पलीचूर्णसंयुतम्।

कासश्वास ज्वरान् हन्ति पिपासादाहनाशनः ॥
विण्मूत्रानिलविष्टम्भे त्रिदोषप्रभवेऽपि च ॥

पञ्चचन्दनादिः।

रक्तचन्दनपर्पटकं कटुकं समृणालपटोलदलं जलम्।
शृतशीत सितायुतं पित्तहरं ज्वरच्छर्दितृषारुचि दाहहरम्॥

मुस्तादिः।

मुस्तपर्पटकोत्पलकिराताशीरचन्दनात् कषः।
शर्करया च क्रियते वातपित्तज्वरे बहुधा दृष्टफलः॥

अथ पित्तश्लेष्मज्वरे।

अमृताष्टकः।

अमृतेन्द्रयवारिष्टपटोलं कटुरोहिणी।
नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम्।
अमृताष्टक इत्येष पित्तश्लेष्म ज्वरापहः।
छर्द्यरोचकहृल्लासतृष्णादाहनिवारणः॥

काष्ठकार्य्यादिः।

काष्ठकार्य्यमृताभार्गी नागरेन्द्रयवासकम्।
भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी॥
कषायं पाययेदेतं पित्तश्लेष्म ज्वरापहम्।
दाहतृष्णारुचिच्छर्दिकासहृत् पार्श्वशूलनुत्॥

अथ वातश्लेष्मज्वरे।

कफवातज्वरे स्वेदान् कारयेद्रूक्षनिर्म्मितान्।
स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम्॥
हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति।
खर्परभ्रष्टस्थितकाञ्जिकसिक्तो हि वालुकास्वेदः॥

शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ।
वीक्ष्य स्वेदविधिं कुर्य्यात् स्वेदनं वालुकादिभिः ॥
सर्वाङ्गे यदि वा यत्र वेदना संप्रजायते ॥
शीतशूल व्युपरमे स्तम्भगौरवनिग्रहे ।
संजातमार्दवे स्वेदे स्वेदनाद्विरतिर्मता ॥

आमज्वरे वातबलासजे वा
कफोत्थिते मारुतसम्भवे वा ।
त्रिदोषजे स्वेदमुदाहरन्ति
स्तम्भप्रमोहाङ्गरुजाप्रशान्त्यै ॥

पञ्चकोलः ।

पिप्पली पिप्पलीमूल चव्यचित्रक नागरैः ।
दीपनीयः स्मृतो वर्गः कफानिलगदापहः ॥
पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनम् ।
वातश्लेष्मविकारघ्नं प्लीहज्वरविनाशनम् ॥

आरग्वधादिः ।

आरग्वधग्रन्थिकमुस्ततिक्त-
हरीतकीभिः क्वथितः कषायः ।
सामे सशूले कफवातयुक्ते
ज्वरे हितो दीपनपाचनश्च ।

क्षुद्रादिः ।

क्षुद्रामृता नागरपुष्कराह्वयैः
कृतः कषायः कफमारुतोत्तरे ।
सश्वासकासारुचिपार्श्वरुग्ज्वरे
ज्वरे त्रिदोषप्रभवेऽपि शस्यते ॥

दशमूलीक्वाथः।

दशमूलीरसः पेयः कणायुक्तः कफानिले॥
अविपाकेऽतितन्द्रायां पार्श्वरुक् श्वासकासके॥

अथ सन्निपातज्वरे।

लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा।
अवलेहोऽञ्जनं चैव प्राक् प्रयोज्यं त्रिदोषजे॥
सन्निपातज्वरे पूर्वं कुर्य्यादामकफापहम्।
पश्चात् श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ॥

अथ लङ्घनम्।

त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा।
लङ्घनं सन्निपातेषु कुर्य्यादारोग्यदर्शनात्॥
दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता।
न हि दोषक्षये कश्चित् सहते लङ्घनादिकम्॥

अथ स्वेदः।

न स्वेदव्यतिरेकेण सन्निपातः प्रशाम्यति।
तस्मान्मुहुर्मुहुः कार्य्यं स्वेदनं सन्निपातिनाम्॥
सन्निपाते जलमया नराणां विग्रहा भवेत्।
विना वह्न्युपचारेण कस्तं शोषयितुं क्षमः॥
प्रयोगा बहवः सन्ति सविषा निर्विषा अपि।
वह्न्यास्त्राणां विना प्रायो न वीर्य्यं दर्शयन्ति ते॥
प्रतिक्रियाविधावेवं यस्य संज्ञा न जायते।
पादतले ललाटे वा दहेल्लोहशलाकया॥
लौहित्ये नेत्रयोर्वाम्लो प्रलापे भृङ्गधावने।
न स्वेदः शुभदो प्रेयस्तत्र शोधनक्रिया हिता।

अथ नस्यम्।

सैन्धवं श्वेतमरिचं सर्षपं कुष्ठमेव च।
वस्तमूत्रेण संपिष्य नस्यं तन्द्राविनाशनम्॥
मधूकसारसिन्धूत्थ वचोषणकणाः समाः।
श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्य्यात् संज्ञा प्रबोधनम्॥
षड्ग्रन्थि सैन्धवकणाः समधूकसाराः
पिष्टाः समेन मरिचेन जलैः कदूष्णैः।
नस्यं निवारयति शीघ्रमचेतनत्वं
तन्द्राप्रलापसहितं शिरसो गुरुत्वम्॥
लशुनं मरिचं पिष्टं नस्यं स्यात् श्लेष्मनाशनम्॥
शितिकुक्कुटिकाण्डजजलं पानात् नस्यादप्यञ्जनाच्च।
दुःसाधनसन्निपातः प्रबलोऽप्याश्वेव शममेति॥

अथ निष्ठीवनम्।

आर्द्रकस्वरसोपेतं सैन्धवं स कटुत्रयम्।
आकण्ठं धारयेदास्ये निष्ठीवेच्च पुनः पुनः॥
तेनास्य हृदयात् श्लेष्मामन्यापार्श्वशिरोगलात्।
लीनोऽप्याकृष्यते शुष्को लाघवञ्चास्य जायते॥
पर्वभेदो ज्वरो मूर्च्छा निद्राकास गलामयाः।
मुखाक्षिगौरवं जाड्यमुत्क्लेदश्चोपशाम्यति॥
एकद्वित्रिश्चतुः कुर्य्याद्दृष्ट्वा दोष बलाबलम्।
एतद्धि परमं प्राहुर्भेषजं सन्निपातिनाम्॥

अथावलेहः।

कट्फलावलेहिका।

कट्फलं पौष्करं शृङ्गी व्योषं यासञ्च कारवी।

श्लक्ष्णचूर्णीकृतं चैतन्मधुना सह लेहयेत् ॥
एषावलेहिका हन्ति सन्निपातं सुदारुणम् ।
हिक्कां श्वासञ्च कासञ्च कण्ठरोधं नियच्छति ॥
ऊर्द्ध्वगश्लेष्महरणे उष्णे स्वेदादिकर्म्मणि ।
विरोधुष्णे मधु त्यक्ता कार्य्यंमार्द्रकजै रसैः ॥

अथाञ्जनम् ।

शिरीषबीजगोमूत्र कृष्णा मरिचसैन्धवैः ।
अञ्जनं स्यात् प्रबोधाय सरसोन शिलावचैः ।
असुराह्वपतङ्गस्य विट्चूर्णं मधुसंयुतम् ।
अञ्जनाद्बोधयेन्मुग्धं तन्द्रितं सन्निपातिनम् ।

दशमूलम् ।

विल्वश्योनाक गाम्भारी पाटला गणिकारिका ।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ।
शालपर्णी पृश्निपर्णी वृहतीद्वयगोक्षुरम् ।
वातपित्तापहं वृष्यं कनीयः पञ्चमूलकम् ।
उभयं दशमूलं हि सन्निपातज्वरापहम् ।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥
पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम् ।

चत्वारिंशदङ्गः क्वाथः ।

चिरज्वरे वातकफोल्वणे वा
त्रिदोषजे वा दशमूलमिश्रः ।
किराततिक्तादिगणः प्रयोज्यः
शुद्धार्थिने वा त्रिवृतादिमिश्रः ॥

भूनिम्बाद्यष्टादशाङ्गः ।

भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रबीजधनिकेभकणा कषायः ।
तन्द्राप्रलापकसमारुचिदाहमोह-
श्वासादियुक्तमखिलं ज्वरमाशु हन्ति ॥

वृहत् कट्फलादिः ।

कट्फलाब्दवचापाठा पुष्करा जाजिपर्पटैः ।
शृङ्गी कलिङ्ग धन्याकं शटीभृङ्ग कणाह्वयम् ॥
तिक्ताभयाम्बुकैरातं भार्गीरामठकं बला ।
दशमूली कणामूलं निक्वाथ्य क्वाथमुत्तमम् ।
हिङ्ग्वार्द्रकरसोपेतं सन्निपातविनाशनम् ।
गलगण्डं गण्डमालां स्वरभेदं गलामयान् ॥
कर्णमूलोद्भवं शोथं हन्याद्वनमुखामयान् ।
कफवातज्वर कासं तथा हन्ति शिरोगदान् ॥
शिरोगुरुत्वं व्याधिर्थ्यं निहन्ति कफवातिकम् ।

कारव्यादिः ।

कारवी पुष्करैरण्डत्रायन्तीनागरामृताः ।
दशमूली शठी शृङ्गी यासभार्गी पुनर्नवाः ॥
तुल्या मूत्रेण निःक्वाथ्य पीताः स्रोतो विशोधनाः
अभिन्यासज्वरं घोरमाशुघ्नन्ति समुद्धतम् ॥
निद्रोपेतमभिन्यासक्षीणं विद्याद्धतौजसम् ।
सन्निपाते प्रकम्पन्तं प्रलपन्तं न लंघयेत् ॥
तृष्णा दाहाभिभूतेषु न दद्याच्छीतलं जलम् ।
वातपित्तोल्वणे चैव घृतं योज्यं पुरातनम् ॥

अभ्यङ्गात् प्रमयत्याशु सन्निपातं सुदारुणम् ।
स्वेदोद्गमे ज्वरे देयश्चूर्णो भृष्टकुलत्थजः ।
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ॥
शोथः संजायते तेन कश्चिदेव प्रमुच्यते ।
ज्वरादितो वा ज्वरमध्यतो वा
ज्वरान्ततो वा श्रुतिमूलशोथः ।
क्रमेण साध्यः खलु कृच्छ्रसाध-
स्ततस्त्वसाध्यः कथितो भिषग्भिः ॥
रक्तावसेचनैः पूर्वं सर्पिः पानैश्च तं जयेत् ।
प्रदेहैः कफवातघ्नैर्वमनैः कवडग्रहैः ॥
कुलत्थकट्फले शुण्ठी कारवी च समांशिकैः ।
सुखोष्णैर्लेपनं दद्यात् कर्णमूले मुहुर्मुहुः ॥
गैरिकं पांशुजं शुण्ठी वचा कट्फलकाञ्जिकैः ।
कर्णशोथहरो लेपः सन्निपातज्वरे नृणाम् ॥
सुखोष्णदशमूलेन प्रलेपोऽपि महाफलः ।
वीजपूरकमूलानि अग्निमन्थं तथैव च ॥
सनागरं देवदारु चव्यचित्रकपेषितम् ।
प्रलेपनमिदं श्रेष्ठं गलेश्वयथुनाशनम् ॥

अथ जीर्णज्वरादौ ।

निदिग्धिकादिः ।

निदिग्धिका नागरकामृतानां
क्वाथं पिबेन् मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचककासशूल-
श्वासाग्निमान्द्यार्दितपीनसेषु ॥

हन्त्यूर्द्ध्वगामयं प्रायः सायं तेनोपयुज्यते।

इति चक्रः।

एतद्रात्रिज्वरे सायमन्यथा प्रातरिष्यते।
पित्तानुबन्धे संत्यज्य पिप्पलीं प्रक्षिपेन्मधु॥

इति वृद्धाः॥

पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नरुहोद्भवः।
जीर्णज्वरकफध्वंसी पञ्चमूलीकृतोऽथ वा॥
पिप्पली मधुसंमिश्रं गुडूची स्वरसं पिबेत्।
जीर्णज्वरकफप्लीहकासारोचकनाशनम्॥

अथ प्लीहज्वरे निदिग्धिकादिः।

निदिग्धिकागणः पथ्या तथा रोहीतको मतः।
क्वाथं कृत्वा क्षिपेत्तत्र यवक्षारं कणायुतम्॥
एतच्च पानमात्रेण प्लीहज्वरविनाशनम्।

निदिग्धिकागणः स्वल्पपञ्चमूलम्॥

अस्थिकर्कटपञ्चाङ्गं शुण्ठ्या चिरज्वरप्रणुत्।

अस्थिकर्कटस्य मूलवल्कलपत्रपुष्पफल मंक्षुद्र पोट्टलीं बद्ध्वा दग्ध्वा रसं गृहीत्वातः २ तो, शुण्ठ्या पेयम्।

गुडूची पर्पटं भेकपर्णी च छिन्नमोचिका।
पटोलं पुटपाकेन रस एषां मधुप्लुतः॥
वातपित्तज्वरं हन्ति चिरोत्थमपि दारुणम्।
मधुना सर्वज्वरनुत् शेफालीदलजो रसः।
अजाजीगुडसंयुक्ता विषमज्वरनाशिनी।
अग्निसादं जयेत् सम्यक् वातरोगांश्च नाशयेत्॥

रसोन कल्कं तिलतैलमिश्रं
योऽश्नाति नित्यं विषमज्वरार्त्तः।
विमुच्यते सोऽप्यचिराज्ज्वरेण
वातामयैश्चापि सुघोररूपैः॥

गुड़प्रगाढ़ां त्रिफलां पिबेद्वा विषमार्दितः।

महौषधादिः क्वाथः।

महौषधामृतामुस्तचन्दनोशीरधान्यकैः।
क्वाथस्तृतीयकं हन्ति शर्करा मधुयोजितः॥
तृतीयके अत्यन्तसिद्धफलः।

उशीरादिः।

उशीरं चन्दनं मुस्तं गुडूची धान्यनागरम्।
अम्भसा क्वथितं पथं शर्करा मधुयोजितम्॥
ज्वरे तृतीयके देयं तृष्णादाहसमन्विते।

पटोलादिः।

पटोलारिष्टमृद्वीका श्यामाकं त्रिफला वृषम्।
क्वाथ ऐकाहिकं हन्ति शर्करा मधुयोजितः॥
कषायोऽयं तृतीयके॥

चातुर्थके वासादिः।

वासाधात्रीस्थिरादारुपथ्यानागरसाधितः।
सितामधुयुतः क्वाथश्चातुर्थकविनाशनः॥

महाबलादिः।

महाबलामूलमहौषधाभ्यां
क्वाथो निहन्याद् विषमज्वरञ्च।

शीतं सकम्पं परिदाहयुक्तं
विनाशयेद् द्वित्रिदिनप्रयुक्तः॥

अथ रात्रिज्वरे गुडूच्यादिः।

गुडूचीमुस्तभूनिम्बं धात्री क्षुद्रा च नागरम्।
विल्वादिपञ्चमूलञ्च कटुकेन्द्रयवासकम्॥
निशाभवं ज्वरं वातकफपित्तसमुद्भवम्।
चिरोत्थं द्वन्द्वजं हन्ति सकणं मधुसंयुतम्॥

मुस्तादिः।

मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः।
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति॥

मधुकादिः।

मधुकं चन्दनं मुस्तं धात्री धान्यमुशीरकम्।
छिन्नोद्भवं पटोलञ्च क्वाथः समधुशर्करः॥
ज्वरमष्टविधं हन्ति सन्तताद्यं सुदारुणम्।
वातिकं पैत्तिकं चैव श्लैष्मिकं सान्निपातिकम्॥

स्वल्पभार्ग्यादिः।

भार्ग्यब्दपर्पटकधान्ययवासविश्व-
भूनिम्बकुष्ठकणासिंह्यमृताकषायः।
जीर्णज्वरं सततसन्ततकं निहन्या-
दन्येद्युष्कं सतृतीयकचतुर्थकञ्च॥

भार्ग्यादिः।

भार्ग्यब्दपर्पटकपुष्करशृङ्गवेर-
पथ्याकणाश्च दशमूलकृतः कषायः।

सद्यो निहन्ति विषमज्वर सन्निपात-
जीर्णज्वर श्वयथु शीतक वह्निसादान्॥

हहद्भार्ग्यादिः।

भार्गी पथ्या कटुः कुष्ठं पर्पटं मुस्तकं कणा।
अमृता दशमूलञ्च नागरं क्वाथयेद् भिषक्॥
हन्ति धातुगतं सर्वं वह्निःस्थं शीतसंयुतम्।
सतताद्यं ज्वरं घोरं मन्दाग्नित्वमरोचकम्॥
प्लीहानं यकृतं गुल्मं श्वयथुञ्च विनाशयेत्।
एष भार्ग्यादिको नाम सर्वज्वरहरः परः॥

दार्व्यादिः।

दार्वीदारुकलिङ्ग लोध्रलता श्यामाक पाठाशठी-
शुण्ठीशीर किरात कुञ्जरकणा त्रायन्तिकापद्मकैः।
वल्लीधान्यक नागराब्दसरलैः शिग्रुव्रुसिंहीशिवा-
व्याघ्रीपर्पटदर्भमूलकटुकानन्तामृता पुष्करैः॥
धातुस्थं विषमं त्रिदोषजनितं चैकाहिकं द्व्याहिकं
कामैः शोक समुद्भवञ्चविविधं यं छर्दियुक्तं नृणाम्।
पित्तो हन्ति त्रयोद्भवं सततकं चातुर्थकं भूतजं
योगोऽयं मुनिभिः पुरा निगदितो जीर्णज्वरे दुस्तरे॥

दार्व्यादिः।

दार्वीकलिङ्गमञ्जिष्ठा व्याघ्रीदारुगुडूचीकाः।
भूधात्री पर्पटं श्यामा तगरं करिपिप्पली॥
क्षुद्रानिम्बं घनं व्याधिर्नागरं पद्मकं शटी।
रामाटरूषः सरलं त्रायमाणास्थिसन्धिकम्॥

मागधी धान्यकं चेति क्वाथं मधुयुतं पिबेत् ॥
वातिकं पैत्तिकं चापि श्लैष्मिकं सान्निपातिकम्।
द्वन्द्वजं विषमं घोरं सतताद्यं सुदारुणम् ॥
अन्तःस्थञ्च वहिःस्थञ्च धातुस्थञ्च विशेषतः।
सर्वज्वरं निहन्त्याशु तथाच द्वैवरात्रिकम् ॥
शीतं कम्पं भ्रमं दाहं कार्श्यं घर्म्मस्नुतिं वमिम्।
ग्रहणीमतिसारञ्च कासं श्वासं सकामलम् ॥
शोथं हन्यात्तथा शोथं मन्दाग्नित्वमरोचकम्।
शूलमष्टविधं हन्ति प्रमेहानपि विंशतिम् ॥
प्लीहानमग्रमांसञ्च यकृतञ्च हलीमकम्।
पृथगदोषांश्च विविधान् समस्तान् विषमज्वरान् ॥
तान् सर्वान् नाशयत्याशु वृत्रमिन्द्राशनिर्यथा।

अथ मूलिकाधारणादयः प्रयोगाः।

काकजङ्घा वला श्यामा ब्रह्मदण्डी कृताञ्जलि।
पृश्निपर्ण्यपामार्ग स्तथा भृङ्गरजोऽष्टमः ॥
एषामन्यतमंमूलं पुष्येणोद्धृत्ययत्नतः।
रक्तसूत्रेण संवेष्ट्य वद्धमैकाहिकं जयेत् ॥
अपामार्गजटा कव्यां लोहितैः सप्ततन्तुभिः।
वद्धा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ॥
उलुकस्यदक्षिणं पक्षं सितसूत्रेण वेष्टयेत्।
वद्धयेद् वामकर्णे तु हरत्यैकाहिकं ज्वरम्।
कर्कटस्य विलोद्भूत मृदा तत्तिलकं कृतम्।
ऐकाहिं ज्वरं हन्ति नात्र कार्य्या विचारणा ॥
कर्णस्य मलजालेन वर्त्तिं कृत्वा प्रयत्नतः।

ज्वालयेत्तिलतैलेन कज्जलं धारयेच्छनैः॥
अञ्जयेन्नेत्रयुगलं त्र्याहिकज्वरशान्तये।
गङ्गाया उत्तरे तीरे अपुत्रस्तापसो मृतः।
तस्मै तिलोदकं दद्यात् मुच्यत्वैकाहिको ज्वरः॥
एतन्मन्त्रेण अश्वत्थपत्रहस्तः प्रतर्पयेत्।
ओं बाणयुद्धे महाघोरे द्वादशार्कसमप्रभे॥
जातोऽसौ सुमहावीर्य्यो मुच्यत्वैकाहिकोज्वरः।
लिखित्वाश्वत्थपत्रे तु बाहौ मन्त्रं प्रधापयेत्॥
समुद्रस्योत्तरे तीरे द्विविदो नाम वानरः।
ऐकाहिकं ज्वरं हन्ति लिखितं यस्तु पश्यति॥
श्वेतार्ककरवीरस्य अश्विन्यां मूलमुद्धरेत्।
तण्डुलोदकपानेन पृथक् चातुर्थनाशनम्॥

शैलूषमण्डलरजः पुरुषानुरूपं
शुक्लाङ्गवत्ससुरभी पयसा निपीतम्।
आदित्यवारभवपालिदिने नराणां
चातुर्थकं हरति कष्टमपि क्षणेन॥

अथ धूपप्रयोगः।

कृष्टाम्बरदृढावद्धमग्गुलूलूकपुच्छजः।
धूपश्चातुर्थकं हन्ति तमः सूर्य्य इवोदितः॥
भृङ्गराजादि कृष्टोक्तत वस्त्रदृढ़ वद्ध।

अथ नस्यम्।

शिरीषपुष्पस्वरसो रजनीद्वयसंयुतः।
नस्यं सर्पिः समायोगाज्ज्वरं चातुर्थकं जयेत्॥
नस्यं चातुर्थकं हन्ति रसो वागस्त्यपत्रजः।

अक्षोटजसहस्रेण दलेन सुकृतां पिवेत्।
पेयां घृतसूतां जन्तुश्चातुर्थकहरीं त्र्यहम्॥
कर्म्म साधारणं जह्यां तृतीयकचतुर्थकौ॥
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे॥

भूतानुबन्धिनोस्तृतीयकचतुर्थकयोश्चिकित्सामाह कर्मे-त्यादि। दैवव्यपाश्रयं बलिमङ्गलहोमादि। युक्तिव्यपाश्रयं कषायादि। एतदुभयमपि चिकित्सितं साधारणशब्दे-नोच्यते जह्यादिति अन्तर्भूतणार्थमिदं तेन साधारणं कर्म्म चिकित्सितंकर्त्तृ। तृतीयकचतुर्थकौ कर्म्मरूपौ जह्यात् त्यज-येत् निराकुर्य्यादित्यर्थः। कथमित्याह आगन्तुर्भूतादिः। अत्र विषमज्वरशब्देन तृतीयक चतुर्थकावेव अभिमतौ तृती-यकचतुर्थकशब्देनात्र तद्विपर्य्ययस्यापि ग्रहणम्। अन्ये तु आगन्तु रनुबन्धोहीत्यादि वचनात् विषमज्वरमात्र एव दैवव्यपाश्रयं कर्म्म कर्त्तव्य मित्याहुः तथापि तृतीयकचतु-र्थकाविति यदुक्तं तद्विशेषार्थं तेन तृतीयक चतुर्थकयोः प्रायेण भूतानुबन्ध जन्यत्वात् तयोरेव विशेषेण दैवव्यपा-श्रयं कर्त्तव्यमिति शिवदासः। तृतीयक चतुर्थकौ प्रायोभू-ताभिसङ्गजौ भवतः तस्मात् साधारणं दैवयुक्ति व्यापाश्रयं कर्म्म कर्त्तृभूतं द्वौ ज्वरौ जह्यात् हन्यादित्यर्थः दैवं बलि-मङ्गलहोमादि। युक्तिः कषायादिः इति गोपालदासः।

मूलं जयन्त्याः शिरसि धृतं सर्वज्वरापहम्।
मूलकं केशराजस्य कृत्वा तत् सप्तखण्डकम्।
आर्द्रकैः सह भुञ्जीत सर्वज्वरविनाशनम्॥
काकमाचीभवं मूलं कर्णबन्धं निशाज्वरम्।

निहन्ति नात्र सन्देहो यथा सूर्य्योदयेस्तमः ॥

ओं नमो भगवते छिन्धि छिन्धि अमुकस्य ज्वरस्य शिरः प्रज्वलितपरशुपाणये पुरुषाय फट्। एतन्मन्त्रस्य धारणात् ज्वरः सर्वो विनश्यति ।

ओं विद्युदानन क्रूं फट् स्वाहा। एतन्मन्त्रं ताम्बूलोपत्रे चूर्णलिप्ते लिखित्वा तत्पत्रं संचर्व्य भक्षयित्वा दिनत्रयाभ्यन्तरे ज्वरशान्तिर्भवति।

सोमं सानुचरं देवं समातृगणमीश्वरम् ।
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥
विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम् ।
स्तुवन् नाम सहस्रेण ज्वरान् सर्वान् व्यपोहति ॥
ब्रह्माणमश्विनाविन्द्रं हुतभक्षं हिमाचलम् ।
गङ्गां मरुद्गणांश्चेष्टान् पूजयन् जयति ज्वरम् ॥
भक्त्या मातुः पितुश्चैव गुरूणां पूजनेन च ।
ब्रह्मचर्य्येण तपसा पुराणश्रवणेन च ॥
जपहोम प्रदानेन सत्येन नियमेन च ।
ज्वराद्विमुच्यते शीघ्रं साधूनां दर्शनेन च ॥

अथ धूपः ।

षडङ्गधूपः ।

पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ।
सयवाः सर्षपाः सर्पिर्धूपनं ज्वरनाशनं ॥

अपराजितधूपः

पुरध्यामवचासर्जनिम्बार्काগুरुदारुभिः ।
सर्वज्वरहरो धूपः कार्य्योऽयमपराजितः ॥

माहेश्वरधूपः ।

हिङ्गुलं देवकाष्ठञ्च श्रीवेष्टं घृतमेव च ।
गव्यास्थीनि तथा ध्यामं निर्म्माल्यं कटुरोहिणी ।
सर्षपं निम्बपत्राणि पिच्छाहिकञ्चुकं तथा ।
मार्जारविष्ठा गोशृङ्गं मदनस्य भलानि च ॥
द्वे बृहत्यौ वचा चैव कार्पासास्थि तुषास्तथा ।
छागगोमायुविट् चैव हस्तिदन्तस्तथैव च ।
एतत् सर्वं समाहृत्य छागमूत्रेण भावयेत् ।
उदूखले तु संकुट्य स्थापयेन्मृण्मये शुभे ॥
घ्राणमात्रेण धूमोऽयं दीयते यत्र वेश्मनि ।
न तत्र सर्पास्तिष्ठन्ति न पिशाचा न राक्षसाः ॥
एष माहेश्वरो धूपः सर्वज्वरविनाशनः ।
ऐकाहिकं द्व्याहिकञ्च त्र्याहिकञ्च चतुर्थकम् ॥
एवमादीन् ज्वरान् सर्वान् नाशयेन्नात्र संशयः ।
ओं नमो भगवते रुद्राय उमापतये सम्प्रदाय ।
नन्दिकेश्वराय । इति मन्त्रेणाभिमन्त्रयेत् ॥

ज्वरे घृतादि पान विधिः ।

ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः ।
रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम् ॥
निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम् ।
न सर्पिः पाययेत् प्राज्ञ शमनैस्तमुपाचरेत् ॥
यावल्लघुत्वमशनं दद्यान्मांसरसेन तु ।
बलं ह्यलं निग्रहाय दोषाणां बलकृच्च तत् ॥
मांसार्थमेणलावादीन् युक्त्या दद्याद्विचक्षणः ।

कुक्कुटांश्च मयुरांश्च तित्तिरिक्रौञ्चवर्त्तकान्॥
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः।
लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत्॥
भिषङ्मात्राविकल्पज्ञो दद्यात्तानपि कालवित्।

### अथ स्नेहपाकस्य साधारणो विधिः।

#### तत्र तैलमूर्च्छाविधिः।

#### तत्रादौ तिलतैलमूर्च्छा।

कृत्वा तैलं कटाहे दृढ़तरविमले मन्दमन्दानलैस्तत्।
तैलं निष्फेन भावं गतमिह यदा शैत्ययुक्तं तदैव।
मञ्जिष्ठा रात्रिलोध्रैर्जलधरनलिकैः सामलैः साक्षपथ्यैः
सूचीपत्राह्विनीरैरुपहितमथितैर्गन्धयोगं जहाति॥
तैलस्येन्दुकलांशिकैकविकसाभागोऽपि मूर्च्छाविधौ।
ये चान्ये त्रिफला पयोदरजनीह्रीवेरलोध्रान्विता।
सूचीपुष्पवटावरोहनलिकास्ताश्चापि पादांशिका॥
दुर्गन्धं विनिहन्ति तैलमरुणं सौरभ्यमाकुर्वते॥

#### कटुतैलमूर्च्छा।

वयःस्था रजनीमुस्त बिल्व दाड़िम केशरैः।
कृष्णजीरक ह्रीवेर नलिकैः सविभीतकैः॥
एतैः समांशैः प्रस्थे च कर्षमात्रं प्रयोजयेत्।
चरणाद्विपलं तत्र तोयञ्चाढ़कसंमितम्॥
कटुतैलं पचेत्तेन आमादोषहरं परम्।

#### एरण्डतैलमूर्च्छा।

विकसा मुस्तकं धान्यं त्रिफला वैजयन्तिका।
ह्रीवेर वनखर्जूर वटशुङ्गा निशायुगम्॥
नलिका भेषजं देयं केतकी च समं समम्।

प्रस्थे देयं माषमितं मूर्च्छने दधिकाञ्जिकम् ॥

अथ घृत मूर्च्छा विधिः ।

पथ्याधात्री विभीतैर्जलधर रजनीमातुलुङ्गद्रवैश्च
द्रव्यैरेतैः समस्तैः पलक परिमितै र्मन्दमन्दानलेन ।
आज्यप्रस्थं विफेनं परिचपलगतं मूर्च्छयेद् वैद्यराज-
स्तस्मादामोपदोषं हरति च सकलं वीर्यवत् सौख्यदायि ॥
क्वाथाच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् ।
स्नेहात् स्नेहसमं क्षीरं कल्कन्तु स्नेहपादिकः ॥
चतुर्गुणन्त्वष्टगुणं द्रव्ये द्वैगुण्यतो भवेत् ।
पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसम्विधौ ॥
तत्र स्नेहसमान्याहु रर्वाक् च स्याच्चतुर्गुणम् ।

पिप्पल्याद्यं घृतम् ।

पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ।
कलिङ्गकास्तामलकी शारिवातिविषा स्थिरा ॥
द्राक्षामलकविल्वानि त्रायमाणा निदिग्धिका ।
सिद्धमेतद्घृतं सद्यो ज्वरं जीर्णमपोहति ॥
क्षयं श्वासञ्च हिक्काञ्च शिरःशूलमरोचकम् ।
अङ्गाभितापमग्निञ्च विषमं संनियच्छति ॥
पिप्पल्याद्यमिदं क्वापि तन्त्रे क्षीरेण पच्यते ।
यत्राधिकरणेनोक्तिर्गणे स्यात् स्नेहसम्विधौ ॥
तत्रैव कल्कनिर्व्यूहाविष्येते स्नेहवेदिना ।
एतद्वाक्य बलेनैव कल्कसाध्यपरं घृतम् ॥
जलस्नेहौषधानाञ्च प्रमाणं यत्र नेरितम् ।
तत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणम् ॥

द्रवकार्य्येऽप्यनुक्ते च सर्व्वत्र सलिलं मतम्।
घृततैलगुड़ादींश्च नैकाहादवतारयेत्।
व्युषितास्तु प्रकुर्व्वन्ति विशेषेण गुणान् यतः॥
स्नेहकल्को यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत्।
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्द्दिशेत्॥
शब्दस्योपरमे जाते फेनस्योपरमे तथा।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत्॥

क्षीरषट्पलकं घृतम्।

पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा समम्।
सर्पिःप्रस्थं शृतं प्लीहविषमज्वरगुल्मनुत्॥
अत्र द्रवान्तरेऽनुक्ते क्षीरमेव चतुर्गुणम्।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत्॥

दशमूलषट्पलकं घृतम्।

दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः।
सक्षारैर्हन्ति तत्सिद्धं ज्वरकासाग्निमन्दताः॥
वातपित्तकफव्याधीन् प्लीहानञ्चापि पाण्डुताम्।
ज्वरे पेयाःकषायाश्च सर्पिः क्षीरं विरेचनम्।
षड़हे षड़हे देयं कालं वीक्ष्यामयस्य च॥
ज्वरिभ्यो बहुदोषेभ्य ऊर्द्धं चाधश्च बुद्धिमान्।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते॥
मदनं पिप्पलीभिर्व्वाकलिङ्गैर्मधुकेन वा।
युक्तमुष्णाम्बुना पेयं वमनं ज्वरशान्तये॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा।
त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिवेत्॥

ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।
कामन्तु पयसा तस्य निरूहैर्वा हरेन् मलान् ॥
प्रयोजयेत् ज्वरहरान् निरूहान् सानुवासनान् ।
पक्वाशयगते दोषे वक्ष्यन्ते येन सिद्धिषु ॥
गौरवे शिरसः शूले विवद्धेष्विन्द्रियेषु च ।
जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम् ॥

दुग्ध प्रकरणम् ।

जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ।
तदेव तरुणे पीतं विषवद्धन्ति मानवम् ॥
चतुर्गुणेनाम्भसा च शृतं ज्वरहरं पयः ।
धारोष्णं वा पयः शीतं पीतं सद्योज्वरंजयेत् ॥

भेषजसिद्धमपि । यदाह

जीर्णज्वराणां सर्वेषां पयः प्रशमनं परम् ।
पेयं तदुष्णं शीतं वा यथास्वमौषधैः शृतम् ॥
कासात् श्वासात् शिरःशूलात् पार्श्वशूलाच्चिरज्वरात् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥

अथ क्षीरपाक विधिः ।

द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् ।
क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥
त्रिकण्टकबलाव्याघ्री गुड़नागरसाधितम् ।
वर्चोमूत्रविबन्धघ्नं शोथज्वरहरं पयः ॥
वृक्षीरविल्ववर्षाभूपयश्चोदकमेव च ।
पचेत् क्षीरावशिष्टन्तु तद्धि सर्वज्वरापहम् ॥
शीतं वोष्णं ज्वरे क्षीरं यथास्वमौषधैः शृतम् ।

एरण्डमूलसिद्धं वा ज्वरे सपरिकर्त्तिके।

## अथ चूर्ण प्रकरणम्।

### सुदर्शन चूर्णम्।

कालीयकन्तु रजनी देवदारु वचा घनम्।
अभया धन्वयासश्च शृङ्गी क्षुद्रा महौषधम्॥
त्रायन्ती पर्पटं निम्बं ग्रन्थिकं वालकं शठी।
पौष्करं मागधी मूर्वा कुटजं मधुयष्टिका॥
शिग्रूत्पलं सैन्द्रयवं वरी दार्वी कुचन्दनम्।
पद्मकं सरलोशीरं त्वचं सौराष्ट्रिका स्थिरा॥
यमान्यतिविषा विल्वं मरिचं गन्धपत्रकम्।
धात्री गुडूची कटुकं सचित्रकं पटोलकम्॥
कलसी चैव सर्वाणि समभागानि कारयेत्।
सर्वद्रव्यस्य चार्द्धन्तु कैरातं संप्रकल्पयेत्।
पृथग्दोषांश्च विविधान् समस्तान् विषमज्वरान्।
प्राकृतं वैकृतञ्चैव सौम्य तीक्ष्णमथापिवा॥
अन्तर्गतं वहिःस्थञ्च निरामं साममेव च।
ज्वरमष्टविधं हन्ति साध्यासाध्यमथापिवा।
नानादेशोद्भवञ्चैव वारिदोषभवं तथा।
विरुद्धभेषजभवं ज्वरमाशु व्यपोहति॥
शोहानं यकृतं गुल्मं हन्त्यवश्यं न संशयः।
यथा सुदर्शनं चक्रं दानवानां निसूदनम्॥
तथा ज्वराणां सर्वेषामिदमेम निगद्यते।

### ज्वरभैरव चूर्णम्।

नागरं त्रायमाणा च पिचुमर्दं दुरालभा।

पथ्या मुस्तं वचा दारु व्याघ्री शृङ्गी शतावरी॥
पर्पटं पिप्पलीमूलं विशाला पुष्करं शठी।
मूर्वा कृष्णा हरिद्रे द्वे लोध्रचन्दनमुष्ककम्॥
कुटजस्य फलं वल्कं यष्टीमधुकचित्रकम्।
शोभाञ्जनं वला चातिविषा च कटुरोहिणी॥
मुषली पद्मकाष्ठञ्च यवानी शालपर्णिका।
मरिचं चामृता बिल्वं बालं पङ्कस्य पर्पटी॥
तेजपत्रं त्वचं धात्री पृश्निपर्णी पटोलकम्।
गन्धकं पारदं लौहमभ्रकञ्च मनःशिला॥
एतेषां समभागेन चूर्णमेव विनिर्दिशेत्।
तदर्द्धं प्रक्षिपेत्तत्र चूर्णं भूनिम्बसम्भवम्॥
मात्रामस्य प्रयुञ्जीत दृष्ट्वा दोषबलाबलम्।
चूर्णं भैरवसंज्ञन्तु ज्वरान् हन्ति न संशयः॥
पृथग्दोषांश्च विविधान् समस्तान् विषमज्वरान्।
द्वन्द्वजान् सन्निपातोत्थान् मानसानपि नाशयेत्॥
प्राकृतं वैकृतञ्चैव सौम्यं तीक्ष्णमथापिवा।
अन्तर्गतं वहिःस्थञ्च निरामं साममेवच॥
ज्वरमष्टविधं हन्ति साध्यासाध्यं न संशयः।
नानादेशोद्भवञ्चैव वारिदोषभवं तथा॥
विरुद्धभेषजभवं ज्वरमाशु व्यपोहति।
अग्निमान्द्यं यकृत्प्लीहपाण्डुरोग मरोचकम्॥
उदराण्यम्लवृद्धिञ्च रक्तपित्तं त्वगामयम्।
श्वयथुञ्च शिरःशूलं वातामयरुजापहम्॥
ज्वरभैरवसंज्ञन्तु भैरवेण कृतं शुभम्।

ज्वरनागमयूर चूर्णम्।

लौहाभ्रटङ्कनं ताम्रं तालकं वङ्गमेव च।
शुद्धसूतं गन्धकञ्च शिग्रुबीजं फलत्रिकम्॥
चन्दनातिविषा पाठा वचा च रजनीद्वयम्।
उशीरं चित्रकं देवकाष्ठञ्च सपटोलकम्॥
जीवकर्षभकाजाज्यस्तालीशं वंशलोचना।
कण्टकार्य्याः फलं मूलं शटी पञ्च कटुत्रयम्॥
गुडूचीसत्त्वधन्याकं कटुका चैत्रपर्पटी।
मुस्तकं वालकं विल्वं यष्टीमधु समं समम्॥
भागाश्चतुर्गुणं देयं कृष्णजीरस्य चुर्णकम्।
तत्समं तालपुष्पञ्च चूर्णं दग्धोत्पलाभवम्॥
कैरातं तत्समं देयं तत्समं चपलाभवम्।
एतच्चूर्णं समाख्यातं ज्वरनागमयूरकम्॥
प्रतिमर्षमितं खाद्यं युक्त्या वा भूटिवर्द्धनम्।
सन्ततादि ज्वरं हन्ति साध्यासाध्यं न संशयः॥
क्षयोद्भवञ्च धातुस्थं कामशोकोद्भवं रजम्।
भूतावेशज्वरश्चैवमभिचारसमुद्भवम्॥
दाहशीतज्वरं घोरं चातुर्थादिविपर्य्ययम्।
जीर्णञ्च विषमं सर्वं प्लीहानमूदरं तथा॥
कामलां पाण्डुरोगञ्च शोथं हन्ति न संशयः।
भ्रमं तृष्णाञ्च कासञ्च शूलानाहौ क्षयंतथा॥
यकृतं गुल्मशूलञ्च आमवातं निहन्ति च।
त्रिकपृष्ठकटीजानुपार्श्वानां शूलनाशनम्॥
अनुपानं शीतजलं न देयमुष्णवारिणा।

अथ तैल प्रकरणम्।

अभ्यङ्गांश्च प्रदेहांश्च सम्वेशान् सावगाहनाम्।
विभज्य शीतोष्णकृतान् तथाजीर्णे ज्वरे भिषक्।
तैराशु प्रशमं याति वहिर्मार्गगतो ज्वरः।
लभन्ते सुखमङ्गानि वलं वर्णश्च जायते॥

अङ्गारक तैलम्।

मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी।
वृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी॥
आरनालाढ़केनैव तैलप्रस्थं विपाचयेत्।
तैलमङ्गारकं नाम सर्वज्वरविनाशनम्॥

वृहदङ्गारक तैलम्।

शुष्कमूलादिकस्याङ्गैरङ्गैरङ्गारकस्य च।
पक्वं तैलं ज्वरहरं शोथपाण्डामयापहम्॥
वृहदङ्गारकं तैलं जलमत्र चतुर्गुणम्।
शुष्कमूलादि यथा, शुष्कमूलक वर्षाभूदारुरास्नामहौषधैः

लाक्षादि तैलम्।

लाक्षाहरिद्रामञ्जिष्ठाकल्कैस्तैलं विपाचितम्।
षड्गुणेनारनालेन दाहशीतज्वरापहम्॥

महालाक्षादि तैलम्।

लाक्षारसाढ़के प्रस्थं तैलस्य विपचेद् भिसक्।
मस्त्वाढ़क समायुक्तं पिष्ट्वा चात्र समावपेत्॥
शतपुष्पां हरिद्राञ्च मुर्वां कुष्ठं हरेणुकम्।
कटुका मधुकं रास्नामश्वगन्धाञ्च दारु च।
मुस्तकं चन्दनञ्चैव पृथगक्ष समानकैः।

द्रव्यैरेतैस्तु तत्सिद्धमभ्यङ्गान् मारुतापहम् ।
विषमाख्यान् ज्वरान् सर्वान् आश्वेव प्रशमं नयेत् ।
कासं श्वासं प्रतीश्यायं कण्डूदौर्गन्ध्य गौरवम् ॥
त्रिकपृष्ठकटीशूलं गात्राणां कुट्टनं तथा ।
पापालक्ष्मी प्रशमनं सर्वग्रह विनाशनम् ॥
अश्विभ्यां निर्मितं श्रेष्ठं तैलं लाक्षादिकं महत् ।
लाक्षायाः षड्गुणं तोयं दत्त्वैकविंशवारकम् ॥
परिस्राव्य जलं ग्राह्यं किंशा क्वाथ्यं यथोदितम् ॥

लाक्षा २ सेर, जल १८ सेर लाक्षांकुट्टयित्वा दोलायन्त्रेण एकविंशतिवारान् परिस्राव्य तज्जलं ग्राह्यं १६ सेर । यद्दवशिष्टं यत्त्याज्यमिति । यथोदित मिति

शुष्क द्रव्य मुपादाय स्वरसानामसम्भवे ।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादवशेषितम् ॥

लाक्षाः शं ८ जलं शं ६४, जलं शेषः १६ ।

कर्पूर तैलम् ।

सुवर्चिका नागर कुष्ठ मूर्वा-
लाक्षानिशालोहित यष्टिकाभिः ।
तैलं ज्वरे षड्गुणतक्रसिद्ध-
मभ्यञ्जनाच्छीत विदाहनुत् स्यात् ॥
दध्नः ससारकस्यात्र तक्रं कट्वरमिष्यते ।

वृहत् कर्पूर तैलम् ।

शुक्तारनाल दधिमस्तुतक्रैः
फलाम्बुभागेन समंहि तैलम् ।

कृष्णादि कल्कैर्मृदुवह्निसिद्ध-
मभ्यञ्जनं वातकफ ज्वराणाम् ॥
ऐकाहिक द्वित्रिचतुर्थकानां
मासार्द्ध मासद्वय मासिकानाम् ।
निवारणं तद्विषमज्वराणां
तैलन्तु षट्कट्वरकं महत् स्यात् ॥
कल्कः कृष्णादिगणो यथा
कृष्णाचित्रकषड्ग्रन्था वासकं विकसावनम् ।
ग्रन्थिकैले चातिविषा रेणुकञ्च कटुत्रयम् ॥
यमानी गोस्तनी व्याघ्री भूनिम्बं विल्वचन्दनम् ।
भार्गी श्यामा शिवा धात्री स्थिरा मूर्वा सजीरका ॥
सर्षपं हिङ्गुकटुकी विडङ्गञ्च समांशकम् ।
एष कृष्णादिको नाम गणो ज्वरविनाशनः ॥

वृहत् पिप्पल्याद्यं तैलम् ।

पिप्पली मुस्तकं धान्य सैन्धवं त्रिफला वचा ।
यमानी चाजमोदा च चन्दनं पुष्कराह्वयम् ॥
शटी द्राक्षा गवाक्षी च शालपर्णी त्रिकण्टकम् ।
भूनिम्बारिष्ट पत्राणि महानिम्बं निदिग्धिका ॥
गुडूची पृश्निपर्णी च वृहती दन्तिचित्रकौ ।
दार्वी हरिद्रा हृद्याम्लं पर्पटं गजपिप्पली ॥
एतेषां कर्षिकैः कल्कैस्तैल प्रस्थं विपाचयेत् ।
दधिकाञ्जिक तक्रैश्च मातुलुङ्गरसैस्तथा ॥
स्नेहमात्रा समैरेभिः शनैर्मृद्वग्निना पचेत् ।
सिद्धमेतत् प्रयोक्तव्यं जीर्णज्वरमपोहति ॥

ऐकजं द्वन्द्वजं चैव दोषत्रय समुद्भवम्।
सन्ततं सततान्येद्युस्तृतीयक चतुर्थकान्॥
मासजं पक्षजं चैव चिरकालानुबन्धिनम्।
सर्वांस्तान् नाशयत्याशु पिप्पल्याद्यमिदं शुभम्॥
रक्तकरवीरपुष्पं धात्रीफलं सधान्याम्लम्।
कल्कः सुखोष्णलेपा ज्वरेषु शिरसो रुजं जयति॥

अथागन्तुज्वर चिकित्सा।

अभिघात ज्वरो नश्येत् पानाभ्यङ्गेन सर्पिषः।
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया॥
औषधीगन्ध विषजौ विषपित्त प्रबाधनैः।
जयेत् कषायैर्मतिमान् सर्वगन्ध कृतैस्तथा॥
अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत्।
दानस्वस्त्ययनातिथ्यै रुत्पात ग्रहपीड़जौ॥
क्रोधजे पित्तजित् काम्या अर्थाः सद्वाक्यमेवच।
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च॥
हर्षणैश्च शमं यान्ति कामशोक भयज्वराः।
कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः॥
याति ताभ्यामुभाभ्यान्तु भयशोक समुद्भवः।
भूतविद्या समुद्दिष्टैर्बन्धावेशन ताड़नैः॥
जयेद्भूताभिषङ्गोत्थं मनः स्वान्तैश्च मानसम्।
व्यायामञ्च व्यवायञ्च स्नानं चंक्रमणानि च।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत्॥
देहो लघुर्व्यपगत क्लममोहतापः
पाको रुचि करणसौष्ठव मव्यथत्वम्।

स्वेदः क्लवः प्रकृतिगामि मनोऽन्नलिप्सा
कण्डूश्च मूर्द्धि विगतज्वर लक्षणानि ॥

अथ नवज्वरादौ रसप्रयोगः ।

न दोषाणां न रोगाणां न पुंसाञ्च परीक्षणम् ।
न देशस्य न कालस्य कार्य्यं रस चिकित्सिते ॥
सर्वशास्त्रार्थतत्त्वज्ञो न जानाति रसं यदा ।
सर्वं तस्योपहासाय धर्म्महीनो यथा बुधः ॥
संशोध्य विधिना धातूनुपधातून् विषाण्यपि ।
योजयेत् कर्म्मणि प्राज्ञो दोषः सञ्जायतेऽन्यथा ॥
शोधनोक्त्या यथातथं धात्वादीनं मारणस्यापि प्रतीतिः ।
रसोपरसानां धातूपधातुष्वन्तर्भावः ।
अपिशब्देन जयपालादीनां प्राप्तिः ॥

हिङ्गुलेश्वरः ।

तुल्यांशं मर्द्दयेत् खल्ले पिप्पली हिङ्गुलं विषम् ।
गुञ्जार्द्धं मधुना देयं वातज्वर निवृत्तये ॥
अनुपानै रसा योज्या देशकालानुसारिभिः ।
दोषघ्नैर्मधुना वापि केवलेन जलेन वा ॥
रसा इत्युपलक्षणम्, अन्यान्यपि भेषजानि योग्यानु-
पानैर्देयानि ।

शीतभञ्जीरसः ।

रसहिङ्गुल गन्धञ्च जैपालं मर्द्दितं त्रिभिः ।
दन्तीक्वाथेन संमर्द्य रसो ज्वरहरः परः ॥
आर्द्रकस्वरसेनाथ दापयेद्रक्तिकाद्वयम् ।
नवज्वरं महाघोरं नाशयेद् याममात्रतः ॥

शीततोयं पिबेच्चानु हन्युर्मुद्गरसो हितः।
शीभभञ्जीरसो नाम्ना सर्वज्वरकुलान्तकृत्॥

तरुणज्वरारिः।

जैपाल गन्धं विषपारदञ्च
तुल्यं कुमारीस्वरसेन मर्द्यम्।
अस्य द्विगुञ्जा हि सितोदकेन
ख्यातो रसोऽयं तरुणज्वरारिः॥
दातव्य एषोऽहनि पञ्चमे वा
षष्ठेऽथवा सप्तम एव वापि।
जाते विरेके विगत ज्वरः स्यात्
पटोल मुद्गान्न निषेवणेन॥

नवज्वरेभसिंहः।

शुद्ध सूतं तथा गन्धं लौहं ताम्रञ्च सीसकम्।
मरिचं पिप्पली विश्वं समभागानि कारयेत्॥
अर्द्धभागं विषं दत्त्वा मर्दयेद् वासरद्वयम्।
शृङ्गवेराम्बु पानेन दद्याद् गुञ्जाद्वयं भिषक्॥
नवज्वरे महाघोरे धातुस्थे ग्रहणीगदे।
नवज्वरेभसिंहोऽयं सर्वज्वरकुलान्तकृत्॥

त्रिपुरभैरवो रसः।

विषटङ्क बलिम्लेच्छ दन्तिविश्वं क्रमाद् बहु।
दन्त्यम्बुमर्दितं यामं रसस्त्रिपुरभैरवः॥
वल्लं व्योषेण चार्द्रस्य रसेन सितयाथवा।
दत्तो नवज्वरं हन्ति मान्द्यामानिलशोथहा॥
हन्ति शूलं सविष्टम्भ मर्शांसि क्रिमिजान् गदान्।

पथ्यं तक्रेण भोक्तव्यं रसेऽस्मिन् रोगहारिणि

ज्वरधूमकेतुः ।

भवेत्समं सूतसमुद्रफेन
हिङ्गुलगन्धं परिमर्द्य यत्नात् ।
नवज्वरे बल्लमितं त्रिघस्र
मार्द्राम्बुनायं ज्वरधूमकेतुः ॥

श्रीमत्युञ्जयो रसः ।

विषस्यैक स्तथाभागो मरिचं पिप्पली कणः ।
गन्धकस्य तथा भागो भागःस्यात् टङ्गनस्य वै ॥
सर्व्वत्र सम भागःस्यात् द्विभागं हिङ्गुलं भवेत् ।
जम्बिरस्य रसेनात्र हिङ्गुलं भावयेद् भिषक ॥
रसश्चेत् समभागःस्यात् हिङ्गुलं नेष्यते तदा ।
गोमुत्रशोधितत्वात्र विषं श्रोरविशोषितम् ॥
चुर्णयेत् खल्लमध्ये तु मुद्गमात्रं वटीं चरेत् ।
मधुना लेहनं प्रोक्तं सर्वज्वर निवृत्तये ॥
दध्युदकानुपानेन वातज्वरनिवर्हणः ।
आर्द्रकस्य रसैः पानं दारुणे सान्निपातिके ॥
जम्बिररसयोगेन अजिर्णं ज्वरनाशनः ।
अजाजीगुड़ संयुक्तो विषमज्वरनाशनः ॥
जीर्णंज्वरे महाघोरे पुरुषे यौवनान्विते ।
पूर्णमात्रा प्रदातव्या पूर्णं वटिचतुष्टयम् ॥
अतिक्षीणेऽतिवृद्धे च शिशौ चाल्पवयस्यपि ।
तूर्य्यमात्रा प्रदातव्या व्यवस्थासार निश्चिता ॥
नवज्वरे प्रदाने च यामैकान्नाशयेज्ज्वरम् ।

अजीर्णे च कफाभावे दाहे च वातपैत्तिके॥
सितां दद्यात् प्रयत्नेन नारिकेलाम्बु निर्भयम्।
अयं मृत्युञ्जयो नाम रसः सर्वज्वरापहः।
अनुपान प्रभेदेन निहन्ति सकलान् गदान्।

श्रीरामरसः।

गन्धकं पारदं तुल्यं मरिचञ्च त्रिभिः समम्।
विजं नैकुम्भकं मर्द्यं दन्तिक्वाथेन यामकम्॥
द्विगुञ्जः शूलविष्टम्भानिलमामज्वरं जयेत्।

नवज्वराङ्कुशः।

क्रमेण वृद्धान् रसगन्ध हिङ्गुलान्
नैकुम्भवीजान्यथ दन्तिवारिणा
पिष्टास्य गुञ्जाभिनवज्वरापहा
जलेन चाङ्गा सितया प्रयोजिता॥

प्रचण्डरसः।

अमृतं पारदं गन्धं मर्द्दयेत् प्रहरद्वयम्।
सिन्धुवार रसैः पश्चात् भावयेदेकविंशतिम्॥
तिल प्रमाणं दातव्यं नवज्वर विनाशनम्।
उद्गी मस्तके तैलं तक्रञ्चापि प्रदापयेत्।
अनुपानमार्द्ररसः प्रचण्ड रस संज्ञकः।

वैद्यनाथ वटी।

शाणं गन्धमथो रसस्य च तथा कृत्वा द्वयोः कज्जलीं
तिक्ताचूर्णमथाक्षमेव सकलं रौद्रे त्रिधा भावयेत्।
पश्चात् तत् सुषविरसेन नतुवा क्वाथेऽमले त्रैफले
संशोष्यागुड़िका कलायसदृशी कार्य्या वुधैर्यत्नतः

ज्ञात्वा दोषबलं रसेन सुषवीपत्रस्य पर्णस्य वा
एकद्वित्रिचतुःक्रमेण वटिकां दद्यात् कदुष्णाम्बुना॥
हन्तिशूल निचयं नवज्वरं पाण्डुतामरुचिशोथसञ्चयम्
रेचने च दधिभक्त भोजनं वैद्यनाथ सुकुमाररेचनम्॥

अग्निकुमार रसः।

मरिचोग्रा कुष्ठमुस्तैः सर्वैरेव समं विषम्।
पिष्ट्वा चाद्रर्रसेनैव वटिका रक्तिकामिता॥
आमज्वरे प्रथमतः शुण्ठ्या च मधुपिष्टया।
आद्रर्कस्य रसेनापि निर्गुण्ड्याश्च कफज्वरे॥
पीनसे च प्रतिश्याये आद्रर्कस्य च वारिणा।
अग्निमान्द्ये लवङ्गेन शोथे सदशमूलकः॥
ग्रहण्यां सह शुण्ठ्या च मुस्तकेनातिसारके।
सामे च धान्यशुण्ठीभ्यां पक्वे च कुटजं मधु॥
सन्निपात ज्वरारम्भे पिप्पल्याद्रर्क वारिणा।
कण्टकार्य्या रसैः कासे श्वासे तैल गुड़ान्वितम्॥
पीत्वा वटीद्वयं रोगी स्वास्थ्य समुपगच्छति।
सर्वेषामेव रोगाणा मामदोष प्रशान्तये॥
अग्निवृद्धिकरो नाम्ना विख्यातोऽग्निकुमारकः।

रत्नगिरिरसः।

शुद्धसूतं समं गन्धं मृत ताम्राभ्रहाटकम्॥
प्रत्येकं सूततुल्यं स्यात् सूतार्द्धं मृतलौहकम्॥
लौहार्द्धं मृत वैक्रान्तं मर्द्दयेद्भृङ्गजद्रवैः।
पर्पटीरसवत् पाच्यं चूर्णितं भावयेत् पृथक्॥
शिग्रु वासक निर्गुण्डी वचाग्निभृङ्गमुण्डिकैः।

सूद्राम्रता जयन्तोभिर्मुनिब्रह्मी स्तिन्नकैः॥
कन्यायाश्च द्रवैर्भाव्यं प्रतिवारं त्रिधा त्रिधा।
बद्धा लघुपुटे पाच्यं वालुका यन्त्रमध्यगम्॥
यन्त्रं निरुध्य यत्नेन स्वाङ्गशीतं समुद्धरेत्।
चूर्णं नवज्वरे देयं माषमात्रं रसस्य वै॥
कृष्णाधान्य समायुक्तं मुहूर्त्तान्नाशयेज्ज्वरम्।
अयं रत्नगिरिर्नाम रसो योगस्य वाहकः॥

प्रताप मार्त्तण्डो रसः।

विष हिङ्गुल जैपाल टङ्कनं क्रममर्दितम्।
रसः प्रतापमार्त्तण्डः सद्योज्वर विनाशनः॥

चन्द्रेश्वरो रसः।

रसं गन्धं विषं ताम्रं मर्दयेदेकयामकम्।
आर्द्रकस्वरसेनैव मर्दयेत् सप्तवारकम्।
निर्गुण्ड्याःस्वरसे पश्चान्मर्द्दयेत् सप्तवारकम्।
गुञ्जैकार्द्रसेनैव दत्ता हन्ति ज्वरं क्षणात्॥
वातजं पित्तजं श्लेष्मद्विदोषजमपि क्षणात्।
सुशीतल जले स्नान दध्यार्थं चारभोजनम्॥
आम्रञ्च पनसं चैव चन्दनागुरुलेपनम्।
एतत्समो रसो नास्ति वैद्यानां हृदयङ्गमः॥
एष चन्द्रेश्वरो नाम सद्यज्वर कुलान्तकृत्।

ज्वरकुम्भ रसः।

सूतो गन्धष्टङ्कनः सोषणः स्या-
देतैस्तुल्या शर्करा मत्स्यपित्तैः।

भूयो भूयो भावयेच्च चिरात्तं ।
वल्लो देयः शृङ्गवेरस्य वारा ॥
सम्यक् तापे वारिभक्तं सतक्रं
छागाकाद्यं पथ्यमत्र प्रदिष्टम् ।
मञ्जायोगं हन्ति सामं प्रभावात्
पित्ताधिक्ये मुद्गभिवारिप्रयोगः ॥

अचिन्त्यशक्ती रसः।

रसगन्धकयोर्ग्राह्यं प्रत्येकं माषकद्वयम् ।
भृङ्गकेशाख्य निर्गुण्डो मण्डुकीपत्रसुन्दरः ॥
श्वेतापराजिता मुलं शालिञ्च काथमारिषम् ।
सूर्य्यावर्त्तः सितश्चैषां चतुर्माषक संमितैः ॥
प्रत्येकं स्वरसैः खल्लशिलाया मवधानतः ।
स्वर्णमाचिकमाषञ्च दत्त्वा मरिच माषकम् ॥
नेपालताम्रखण्डेन हृष्ट्वा तत् कज्जलद्युति ।
वटी मुद्गोपमा कार्य्याच्छाया शुष्का तु रचिता
प्रथमे वटिकास्तिस्रः कृत्वा नवशरावके।
ततः खसर्पणं सूर्य्यं पूजयित्वा प्रणम्य च ॥
वारिणा गोलयित्वा तु पातुं देयञ्च रोगिणे ।
स्वेदोपवासरचिते क्लान्ते चात्यवले तथा ॥
द्वितीयेऽह्नि वटी युग्मं वटीमेकां तृतीयके।
यावन्तो वटका देया स्तावज्जल शरावकम् ॥
तृष्णायाञ्च रसं दद्यान्नाङ्गलानां जलं तृषि ।
खुलापदधि संयुक्तं भक्तं भोज्यं यथेप्सितम् ॥
लावपक्षिरसो देयः संस्कृतः सैन्धवादिभिः ।

पथ्यमग्निबलं विश्व वारिभक्तरसं तथा ॥
शिरश्चलन शूलादौ तैलं नारायणादि च ।

सान्निपातिक ज्वरादौ ।

मोहान्धसूर्यो रसः ।

गन्धेशौ लशुनाम्भोभिर्मर्द्दयेद् यामसात्रकम् ।
तस्योद्रकेन संयुक्तं नस्यं तत् प्रतिबोधयेत्॥
मरिचेन समायुक्तं हन्ति तन्द्राप्रलापकम् ।

कुलवधुः ।

शुद्धसूतं मृतं नागं मृतं ताम्रं मनःशिला ।
तुत्थकं तुल्यतुल्यांशं दिनमेकं विमर्द्दयेत् ॥
रसैर्श्चोत्तरवारुण्यास्त्रणमात्रा वटी कृता ।
सन्निपातं निहन्त्याशु नस्यमात्रेण दारुणम् ॥
एषा कुलवधूर्नाम जलैर्घृष्टा प्रदापयेत् ।

सौभाग्य वटी ।

सौभाग्य मृत जीर पञ्चलवण व्योषाभयाधामला
निस्वन्द्राभ्रक शुद्धगन्धकरसानेकीकृतान् भावयेत् ।
निर्गुण्डीयुग भृङ्गराजक वृषापामार्गपत्रोत्थसत्
प्रत्येक स्वरसेन सिद्धवटिका हन्ति त्रिदोषोदयम् ॥
येषां शीत मतीव दाह मखिलं स्वेदद्रवार्द्रीकृतं
निद्रां घोरतरां समस्तकरण व्यामोहमूढ़ं मनः ।
शूलश्वास वलास काश सहितं मूर्च्छारुचिं तृड़्ज्वरं
तेषां वै परिहृत्य जीवितमसौ गृह्णाति मृत्योर्मुखात् ॥

श्रीवेतालो रसः।

रसं गन्धं विषञ्चैव मरिचालं समांशिकम्।
मर्दयेच्छिलया तावद् यावज्जायेत कज्जलम्॥
गुञ्जामात्रप्रमाणेन हरेद्वादशसंज्ञकम्।
साध्यासाध्यं निहन्त्याशु सन्निपातं सुदारुणम्॥
स्नानेषु लिप्तदेहेषु मोहग्रस्तेषु देहिषु।
दातुमर्हति वेतालो यमदूत निवारकः॥

चक्री।

रसं गन्धं विषञ्चैव धुस्तूरं मरिचं तथा।
शोधितञ्च तथा तालं माक्षिकञ्च समांशिकम्॥
दन्तीक्वाथेन संभाव्य गुञ्जामात्रा तु चक्रिका।
साध्यासाध्यान् निहन्त्याशु सन्निपातांस्त्रयोदश॥

चक्री।

शम्भोःकण्ठविभूषणं समरिचं तालं तथा पारदं
द्वैविविजयुतं सुशोधित मितं जैपालवीजोत्तमम्।
दन्तिमुल युतं समागधिफलं सर्वं समांशं नयेत्
तत् सर्वं परिमर्द्य चार्द्रकरसैर्गुञ्जाप्रमाणंरसम्।
दद्याद्घोरतरे त्रयोदशविधे दोषे च चक्राह्वयं
तन्द्रादाह समन्वितं च तृषया सम्पीड़िते मानवे।

अघ्नारम्भ रसः।

रसाभ्र गन्धकं तालं हिङ्गुलं मरिचंतथा।
टङ्कनं सैन्धवोपेतं सर्वांशममृतं तथा॥
सर्वपाद समांपेत मर्हिषीपित्तमर्दितम्।

ब्रह्मरन्ध्रे प्रयोक्तव्यं सन्ध्यासन्धानसङ्क्रमे॥
सहस्र कलसैः स्नानं लेपनं चन्दनादिभिः।
इक्षुमुद्गरसं भोज्यं तक्रभक्तं यथेप्सितम्॥

आनन्द भैरवी वटी।

विषं त्रिकटुकं गन्धं टङ्कनं मृतशुल्वकम्।
धुस्तूरस्य च बीजानि हिङ्गुलं नवमं स्मृतम्॥
एतानि समभागानि दिनैकं विजयारसैः।
मर्दयेच्चणकाभा तु वटिकानन्दभैरवी॥
भक्षयित्वा पिबेच्चानु रविमूल कषायकम्।
सव्योषं हन्ति नो चित्रं सन्निपातं सुदारुणम्॥

मृतोत्थापनो रसः।

शुद्धसूतं द्विधागन्धं सिला च विषहिङ्गुलम्।
मृतकान्ताभ्रताम्राय स्तालकं माक्षिकं समम्॥
अम्लवेतसजम्बीर चाङ्गेरीणां रसेन च।
निर्गुण्डी हस्तिशुण्डीस्वद्रवैर्मर्द्यं दिनत्रयम्॥
कृत्वा तु भूधरे पाच्यं दिनान्ते तत्समुद्धरेत्।
चित्रकस्य कषायेण मर्दयेत् प्रहरद्वयम्॥
माषमात्रं प्रदातव्यं हिङ्गुव्योषार्द्रकद्रवैः।
सकर्पूरानुपानं स्यान्मृतस्योत्था पने रसे॥
पीड़ितं सन्निपातेन गतं वापि यमालयम्।
तत्क्षणाज्जीवयत्येष पथ्यं क्षीरैः प्रयोजयेत्॥
कान्तमिति अभ्र विशेषणम्।

मृतसञ्जीवनो रसः।

शुद्धसूतं द्विधा गन्धं खल्ले तं कज्जलीकृतम्।

अभ्रलौहकयोर्भस्म ताम्रभस्म समं समम् ।
विषताल वराटौ च शिलाहिङ्गुल चित्रकम् ।
हस्तिशुण्डी चातिविषा त्र्यूषणं हेममाक्षिकम् ॥
चूर्णं विमर्दयेद्द्रावैरार्द्रकस्य दिनत्रयम् ।
निर्गुण्डीविजयाद्रावे स्त्रिदिनं मर्दयेत् पुनः ॥
काचकूप्यां निवेश्याथ वालुकायन्त्रके पचेत् ।
द्वियामान्ते समुद्धृत्य मर्दयेदार्द्रकद्रवैः ॥
मृतसञ्जीवनो नाम रसोऽयं शङ्करोदितः ।
मृतोऽपि सन्निपातार्त्तो जीवत्येव न संशयः ॥
नातः परतरः कश्चित् सन्निपातहरो रसः ।

अघोरमन्त्रेण रस रक्षां पूजाञ्च कृत्वा प्रहरद्वयं ज्वाला देया अपर दिने शीतल माकृष्य पुनरार्द्रक द्रवेण संमर्द्य शोषयित्वा गुञ्जाद्वयं गुञ्जा त्रयं वा आर्द्रक रसेन देयं रसं लग्नं ज्ञात्वा अन्य रसवत् शीतोपचारं कुर्य्यात् अघोर मन्त्रो यथा ओं अघोरेभ्यश्च घोरेभ्यो घोरघोरतरेभ्यश्च सर्वतः सर्वेभ्योनमोऽस्तुरुद्ररूपेभ्यः इति मन्त्रेण रक्षणं पूजनञ्च । अघोर मन्त्रेण अन्यत्रापि रसकार्य्यं कर्त्तव्य मन्यथा दोषोऽस्ति ।

सन्निपातभैरवो रसः ।

हिङ्गुलस्य विशुद्धस्य सार्धतोलचतुष्टयम् ।
गन्धकस्य विषस्यापि प्रत्येकं तोलकत्रयम् ॥
समाषक द्वयञ्चैव कनकात्तोलकत्रयम् ।
माषैकाधिक तोलैकं टङ्कनस्य तथैव च ॥
संमर्द्य जम्बीररसैर्वटीश्छाया विशोषिताः ।

गुञ्जैक परिमाणास्तु कारयेत् कुशलो भिषक् ॥
एकान्तु भक्षयेत्तस्य गोलयित्वार्द्रकद्रवैः।
घोरे त्रिदोषे दातव्यः सन्निपातकभैरवः ॥

सूचिकाभरणो रसः।

रसगन्धक नागञ्च विषं स्थावरजङ्गमम्।
मात्स्य वाराह मायूर च्छाग पित्तैश्च भावयेत् ॥
सूचिकाभरणो नाम भैरवेण प्रकीर्त्तितः।
सूचिकाग्रेण दातव्यः सन्निपात कुलान्तकः ॥
मात्राया आर्द्रकरसेन पिवेत्।

सूचिकाभरणो रसः।

अमृतं गरलं दारु सर्वतुल्यञ्च हिङ्गुलम्।
पञ्चपित्तेन संमर्द्य सर्षपाभां वटीं चरेत् ॥
वटिका सूचिकाग्रेण सन्निपात कुलान्तकृत्।
तिलञ्च तिलतैलञ्च भोजनं दधिभक्तकम् ॥
सहस्रशो दृष्टफलेयं वटिका।

बृहत् सूचिकाभरणो रसः।

रस गन्धक नागाभ्रं विष स्थावर जङ्गमम्।
मात्स्य माहिष मायूर च्छागपित्तैर्विभावयेत् ॥
सूचिकाभरणो नाम भैरवेण प्रकीर्त्तितः।
दातव्यः सूचिकाग्रेण पयःपेटीजलेन च ॥
त्रयोदश सन्निपाते विसूच्यामतिसारके।
त्रिदोषजे तथा कासे दापयेत् कुशलो भिषक् ॥
पयःपेटीशतं दद्यात् भोजनं दधिभक्तकम्।

तथा शूभर्जितं मांसं लेपनं तिलचन्दनैः।
रोगिणो यत् प्रियं द्रव्यं तस्मै तच्च प्रदापयेत्।

पानीय वटिका।

रस माषक चत्वारि इष्टकागुण्डके ग्रहः।
शोषयित्वा ततः शोध्य तीक्ष्णपर्णे तथार्द्रके॥
स्वर्णधुस्तूरसत्त्वे च वृद्धदारद्रवे तथा।
कन्यका निजसत्त्वे च रसशोधन मुत्तमम्॥
गन्धकं रसतुल्यन्तु प्रक्षाल्य तण्डुलाम्बुना।
कृत्वा तैल समं दार्व्यां निर्वाप्य चित्रकद्रवे॥
ताभ्यां कज्जलिकां कृत्वा लौहचूर्णस्य माषकम्।
सुवर्णमाक्षिकमपि तत्र लौह समं ददेत्॥
कृत्वा कण्टक वेध्यन्तु ताम्रं कज्जल लेपितम्।
मुहूर्त्तमध्यतस्ताम्रं द्रुतं चूर्णत्वमाप्नुयात्॥
एकीकृत्य तु तत्सर्वं ततः प्रस्तरभाजने।
मर्द्दयेत्ताम्र दण्डेन दत्त्वा चैषां निजद्रवम्॥
प्रथमे केशराजश्च द्वितीये शोषसुन्दरः।
तृतीये भृङ्गराजश्च चतुर्थे भेकपर्णिका॥
पञ्चमे च निसुन्दारः षष्ठे च रसपूर्त्तिका।
सप्तमे पारिभद्रश्च अष्टमे रक्तचित्रकः॥
शक्राशनश्च नवमे दशमे काकमाचिका।
एकादशे तथा नीला द्वादशे हस्तिशुण्डिका॥
अमीषामोषधीनान्तु प्रत्येकन्तु पलद्रवम्।
मर्द्दयेत्तु प्रयत्नेन द्वादशाहेन साधकः॥
ततः पारद मानन्तु दत्त्वा त्रिकटुगुण्डकम्।

वटिकां राजिका तुल्यां छायाशुष्कां समाचरेत् ॥
ततः शम्बुकजे पात्रे कर्त्तव्या वटिकात्रियम् ।
शरावे शङ्खपात्रे वा कृत्वा सलिलगोलितम् ॥
अत्यन्तदोषदुष्टाय ज्ञानशून्याय रोगिणे ।
ऊर्द्ध्वयोनिं समभ्यर्च्य प्रदद्याद्वटिकाद्वयम् ॥
ढक्कयेत् तं ततः पश्चान्नरं स्थूलपटादिभिः ।
मलमूत्रागमात् सद्यः स साध्यो भवति द्रुतम् ॥
दध्यन्नन्तु ततो दद्यात् पिवेद्वारि यथेच्छया ।
दद्याद् वातहरं तैलमभ्यङ्गाय सदैव हि ॥
चिरज्वरे पिवेद्वारि पञ्चमूली प्रसाधितम् ।
ग्रहण्यां रक्तपाते च पिवेदतिविषां गदी ॥
पिवेत् पर्पटजं वारि घोरे कम्पज्वरे तथा ।
तथा ज्वरातिसारे च जीरकस्य जलं पिवेत् ।
मण्डाग्नौ कामलायाञ्च संग्रहग्रहणीगदे ।
कासे श्वासे सदा कार्य्या पानीयवटिका त्वियम् ॥

सिद्धफलायाः पानीयवटिकाया विधिः ।

अनाथनाथो जगदेकनाथः
श्रीलोकनाथः प्रथमः प्रसन्नः ।
जगाद पानीयवटीं सुपट्वीं
तामेव वक्ष्यामि गुरुप्रसादात् ॥

जयार्कस्वरसं चैव निगुण्डी वासकं तथा ।
वात्यालकं करञ्जञ्च सूर्य्यावर्त्तक चित्रकौ ॥
ब्राह्मीवनसर्षपञ्च भृङ्गराजं विनिक्षिपेत् ।
दन्ती च त्रिवृता चैव तथारग्वधपत्रकम् ॥

…देवामरं भण्डी तथा त्रिपुरभण्डिका।
मण्डूकपर्णी पिप्पल्यौ द्रोणपुष्पक वायसी।
गुञ्जाकिनो केशराजस्तथा योजन मल्लिका।
आसारणीति विख्यातो धुस्तूरः कनकस्तथा।
त्रैलोक्य विजया चैव तथा श्वेतापराजिता॥
प्रत्येकं कार्षिकञ्चैव रसमाक्रम्य भाजने।
एकैकञ्च रसं दत्त्वा मर्दयेल्लौह दण्डतः।
चण्डातपे च संशोष्य चौरं तत्र पुनः क्षिपेत्॥
स्नुहीचौरं चार्कदुग्धं वटदुग्धं तथैव च।
प्रत्येकं कार्षिकं दत्त्वा मर्दयेच्च पुनः पुनः॥
सुमर्दितञ्च तं ज्ञात्वा यदा पिण्डत्वमागतम्।
द्रव्याण्येतानि सञ्चूर्ण्य वस्त्र पुतानि कारयेत्॥
दग्धक्षीरं चातिविषां कोचिलामभ्रकं तथा।
पारदं शोधितञ्चैव गन्धकं विषमाधरम्॥
हरितालं विषञ्चैव माक्षिकञ्च मनःशिला।
प्रत्येकञ्च चतुर्माषं सर्वं चूर्णीकृतञ्च तत्॥
प्रक्षिप्य मर्दयेत् सर्वं शोषयित्वा पुनः पुनः।
सुमर्दितञ्च तं दृष्ट्वा चाङ्गेरोस्वरसेन च॥
उत्थाप्य भेषजं दृष्ट्वा यदा पिण्डत्वमागतम्।
तिल प्रमाणा गुड़िकाः कारयेन्मतिमान् भिषक्॥
त्रिदोषजनितो वैद्यमुक्तोऽपि बहुसम्मतः।
लङ्घनैर्वालुक स्वेदैः प्रक्रान्तो दीन दर्शनः॥
संपूज्य करुणाधारं प्रणम्य च खसर्पणम्।
प्रभावे वारिणा दृष्ट्वा विंशतिं वटिकाः पिबेत्॥

पीत तद्भेषजं पश्चाद् वस्त्रैराच्छादयेन्नरम् ।
रसलग्नं वपुर्ज्ञात्वा दद्याद् वारि सुशीतलम् ॥
शराव प्रमितं वारि पातव्यञ्च पुनः पुनः ।
सन्निपातज्वरञ्चैव दाहञ्चैव सुदारुणम् ॥
कासं श्वासञ्च हिक्काञ्च विड्ग्रहं चाश्मरीं जयेत् ।
मूत्ररोग विबन्धे तु दातव्यं क्षीरसंयुतम् ॥
पञ्चतृणकृतक्वाथं दातव्यञ्च पुनः पुनः ।
पानीय वटीका ह्येषा लोकनाथेन निर्मिता ॥
लोकानामुपकाराय सर्वसिद्धि प्रदायिनी ।

जयन्त्यादीनां श्वेतापराजिता पर्य्यन्तानां स्वरस प्रत्येकं कर्ष १ प्रस्तर भाजने लौह दण्डेन एकत्रां विमर्द्य तदनुशोषयेत् । तदनु शिशुक्षीरं अर्कक्षीरं प्रत्येकं कर्षं दत्वा पुनर्मर्दयेत् । पिण्डत्वे सति दग्ध ह्रीरकादीणां प्रति माः ४ कज्जली पूर्व्वकं सर्वमेकीकृत्य चाङ्गेरीरसेन मर्दयित्वा उत्थाप्य पिण्डीकृत्य तिल प्रमाणा वटिकाः कार्य्याः अस्य वटिका विंशतिं वृद्ध वैद्यापदेशात् आर्द्रक जलेन वारिणा वा गोलयित्वा शराविकया पाययेत् । मूत्रकृच्छ्रे सति पञ्चतृण साधितं क्षीरं पाययेत् ।

### चिन्तामणी रसः ।

सूतं गन्धकमभ्रकं समनवं सूतार्द्धभागं विषं
तत्त्र्यंशं जयपालमम्लमृदितं तद्गोलकं वेष्टितम् ।
पत्रैर्मञ्जुभुजङ्गवल्लिजनितैर्निक्षिप्य खाते पुटं
दत्वा कुक्कुट संज्ञकं सहदलैः संचूर्ण्य तत्र क्षिपेत् ॥

भागार्द्धं जयपालबीजममृतं तत्तुल्यमेकीकृतं गुञ्जा
त्र्यूषण सिन्धुचित्रक युता सर्वान् ज्वरान् नाशयेत्।
शूलं संग्रहणीगदं सजठरं दध्यन्न संसेविनां
तापे सेचन कारिणां गदवतां सूतस्य चिन्तामणिः॥
अयमेव रसो देयो मृतकल्पे गदातुरे।

रसराजेन्द्रः।

सूतस्य शुद्धस्य पल पलं ताम्रमयो रजः।
अभ्रं नागं पलं वङ्गं पल गन्धक तालकम्॥
पलं शुद्धविषं चूर्णं सर्वमेकत्र कारयेत्।
मर्दयेत् काकमाच्याश्च तत्र साररसेन च॥
मात्स्य वाराह मायुर च्छाग माहिष पित्तकैः।
मर्दयेद् भिन्नभिन्नश्च त्रिकटोरम्बुभिस्तथा॥
आर्द्रक स्वरसैः पश्चात् शतवारान् मुहुर्मुहुः।
सिद्धोऽयं रसराजेन्द्रो धन्वन्तरि प्रकाशितः॥
गुञ्जामात्रं रसं दद्यात् सुरसा रससंयुतम्।
मेघधारा प्रवाहेण धारितं वारि मस्तके॥
अनिवारो यदा दाहस्तदा देया च शर्करा।
भोजनं दधिसंयुक्तं वारमेकन्तु दापयेत्॥
ईश्वरेण हतः कामः केशवेन च दानवाः।
पावकेन हतं शीतं सन्निपाते रसस्तथा॥
ये रसाः पित्तसंयुक्ताः प्रोक्ताः सर्वत्र शम्भुना।
जलसेकावगाहाद्यैर्बलिनस्ते तु नान्यथा॥
रसजनित विदाहे शीत तोयाभिषेको
मलयज घनसारालेपनं मन्दवातः।

तद्वण दधि सिताढ्यं नारिकेलीफलाम्भो
मधुर शिशिरपानं शीतमन्यच्च शस्तम्॥

पञ्चवक्त्र रसः।

गन्धे शटङ्गनरिचं विषं धूस्तूरजेद्रवैः।
दिनं विमर्दितं शुष्कं पञ्चवक्त्रो भवेद्रसः॥
द्विगुञ्ज आर्द्रनीरेण त्रिदोष ज्वरहृत् परः।

सन्निपातसूर्य्यो रसः।

हिङ्गुलं गन्धकं ताम्रं मरिचं पिप्पली विषम्।
शुण्ठी कनकवीजञ्च श्लक्ष्मचूर्णानि कारयेत्॥
विजयापत्रतोयेन त्रिदिनं भावयेत् सुधीः।
द्विगुञ्जं पर्णखण्डेन अर्कक्काथं पिवेदनु॥
निहन्ति सन्निपतोत्थान् गदान् घोरान् सुदारुणा
वातिकं पैत्तिकञ्चैव श्लैष्मिकञ्च विशेषतः॥

चिन्तामणि रसः।

रसविषगन्धक टङ्कन ताम्र यवक्षारकं व्योषम्।
जयपालस्य वीजञ्च क्षौद्रं दत्त्वा शतवारान्॥
संमर्द्य रत्तिकमिता वटिकाः कुर्य्याद्भिषक् प्राज्ञः।
शुण्ठी पिष्टेण समसेका द्वे वाथवा तिस्रः॥
संप्राश्य नारिकेलीजलमनुपेयं प्रयुञ्जीत।
भेदानन्तरमेव प्रक्षालितभक्तं तक्रमुपयोज्यम्॥
शेषात् सैन्धवजीरं तक्रं भक्तं प्रयोक्तव्यम्।
प्रशमयति सन्निपातज्वरं तथाजीर्णं विषमञ्च॥
शोथानं चाध्मानं कासं श्वासञ्च वह्निमान्द्यम्।

चिन्तामणीरसोऽयं किल नियतं भैरवेण निर्दिष्टः॥

अघोरनृसिंहो रसः।

भागैकं मृतताम्रस्य द्विभागं मृतलौहकम्।
त्रिभागं मृतवङ्गस्य चतुर्भागं मृताभ्रकम्॥
माक्षिकं रसगन्धौ च तथाशुद्धा मनःशिला।
चत्वार्य्येतानि ताम्रस्य प्रत्येकं तुल्यमेव च॥
गरलं चाभ्रतुल्यं स्यात् त्रिकटुश्चाभ्रतुल्यकः।
एतत् सर्वसमं देयं विषमाख्यं तथैव च॥
एतत् सर्वस्य द्रव्यस्य द्विगुणं कालकूटकम्।
मात्स्यमाहिषमायूरच्छागपित्तैर्विभावयेत्॥
चित्रकस्य द्रवेणैव प्रत्येकं याममात्रकम्।
सर्षपाभा वटी कार्य्या शोषयेदातपे ततः॥
दापयेद् वटिकामेकां पयःपेटीरसेन च।
त्रयोदश सन्निपाते विसूच्यामतिसारके॥
त्रिदोषजे तथा कासे दापयेत कुशलो भिषक्।
पयःपेटी शतं दद्यात् भोजनं दधिभक्तकम्॥
अघोरनृसिंहनामा रसानामुत्तमो रसः।

प्रतापतपनो रसः।

गन्धकं ि[illegible]लं तालं सूतकं लौह टङ्कनम्।
खर्परं म[illegible]चकाक्षारं माञ्जिष्ठं हिङ्गुलं समम्॥
रसेन [illegible]तं पिण्डं निगुण्डी हस्तिशुण्डयोः।
अष्टयामं पचेत् कूप्यां निरुद्ध सिकताह्वये॥
ततः सिद्धं समादाय रक्तिकामार्द्रकेन च।

सन्निपातविनाशाय प्रतापतपनो रसः ॥
दधिभक्तं तथा दुग्धं छागमांसञ्च भोजयेत् ॥

प्राणेश्वरो रसः।

शुद्धसूतं तथा गन्धं मृताभ्रं विषसंयुतम्।
रसं संमर्द्दितं तालमूलीनीरैस्त्र्यहं बुधः ॥
पूरयेत् कूपिकान्ते च मुद्रयित्वा च शोषयेत्।
सप्तभिर्मृत्तिका वस्त्रैर्वेष्टयित्वा च शोषयेत् ॥
पुटेत् कुण्डप्रमाणेन स्वाङ्गशीतं समुद्धरेत्।
गृहीत्वा कूपिकामध्यान्मर्द्दयेच्च दिनं ततः ॥
अजाजीजीरकं हिङ्गु सर्ज्जिका टङ्कनं जगत्।
गुग्गुलुः पञ्चलवणं यवक्षारो यमानिका ॥
मरिचं पिप्पली चैव प्रत्येकं रसमानतः।
एषां कषायेण पुनर्भावयेत् सप्तधातपे ॥
नागवल्लीदल युतं पञ्चगुञ्जं रसेश्वरम्।
दद्यान्नवज्वरे तीव्रे शीतं वारि पिवेदनु ॥
प्राणेश्वरो रसो नाम सन्निपात प्रकोपनुत्।
शीतज्वरे दाहपूर्वे गुल्मशूले त्रिदोषजे ॥
वाञ्छितं भोजनं दद्यात् कुर्य्याच्चन्दनलेपनम्।
तापोद्रेकस्य शमनं वलाधिष्ठान कारकम् ॥
भवेच्च नात्र सन्देहः स्वास्थ्यञ्च लभते नरः।

द्वितीय सन्निपात भैरवः।

पारदं गन्धकं तालं वत्सनाभं त्रिभिः समम्।
दारुमूषञ्च गरलं सर्वस्य समहिङ्गुलम् ॥
मद्गप्रमाणां वटिकां कारयेत् कुशलो भिषक्।

सन्निपाते वटीमेका मार्द्रद्रावैः प्रदापयेत् ॥
रसो महाप्रभावोऽयं सन्निपातस्य भैरवः।

सन्निपातभैरवः।

रसं विषं गन्धकञ्च हरितालं फलत्रयम्।
जयपालं त्रिवृत् स्वर्णं ताम्रं मौसाभ्र लौहकम् ॥
अर्कक्षीरं लाङ्गली च स्वर्णमाक्षिकमेव च।
समं कृत्वा रसैरेषां त्रिंशद्वारञ्च मर्द्दयेत् ॥
अर्कश्वेतालम्बुषा च सूर्य्यावर्त्तश्च कारवी।
काकजङ्घा शोणकश्च कुष्ठं व्याघ्रविकङ्कतम् ॥
सूर्य्यमणिश्चन्द्रकान्ता निर्गुण्डीकद्रुजटापि च।
धुस्तूर दन्ति पिप्पल्यो दशाद्धाङ्गमिदं शुभम् ॥
रसतुल्यं प्रदातव्यं दत्त्वा तोयं चतुर्गुणम्।
शिष्टैकगुणतोयेन भावना विधिर्भविष्यति ॥
भावनायां भावनायां शोषणं मुहुरिष्यते।
ततश्च वटिकां कृत्वा भैरवाय बलिं हरेत् ॥
रसोऽयं श्रीसन्निपात भैरवो ज्वरनाशनः।
सर्व्वोपद्रव संयुक्तं ज्वरं हन्ति न संशयः ॥
सन्निपातज्वरं हन्ति जीर्णञ्च विषमं तथा।
ऐकाहिकं द्व्याहिकञ्च चातुर्थकमपि ध्रुवम् ॥
ज्वरञ्च जलदोषस्थं सर्व्वदोष समाकुलम्।
भैरवस्य प्रसादेन जगदानन्दकारजो ॥

सर्व्वचूर्णं समं कृत्वा अर्कमूलादि पिप्पली मूलान्तान् अष्टादशानां मिलित्वा रसादिसामग्रीतुल्यानां चतुर्गुण जलेक गुण शिष्ट क्वाथेन त्रिंशद्वारानातपे भावनीयं

प्रतिवार यत्नेन शोषयित्वा कलाय प्रमाणा वटिकाः कृत्वा व्याध्यनुरूप मार्द्रकरसेन ज्वरिणे दद्यात् विरेकादनन्तरं शुण्ठी जीरक तोय प्रक्षालितान्न दद्यात् अजाते विरेके पुनरपि रसं दद्यात् व्याधि निवृत्तौ कदाचित् वात पीड़ायां वात चिकित्सा कार्य्या। अत्र भैरव रुधिरवर्णं ध्यायेत्।

मृत्युञ्जयो रसः।

सूतं गन्धक टङ्कनं शुभविषं धुस्तूरवीजं कटु
नीत्वा भाग तथोत्तर द्विगुणितं चान्मत्तमूलाम्बुना।
कुर्य्यात्मात्रवटीं सुखाति सुखदां सर्व्वान् ज्वरान्नाशये-
देष योगिव शामनात् प्रजनितः सूतश्च मृत्युञ्जयः॥
नारिकेलऽसिता युक्तं वातपित्त ज्वरं जयेत्।
मधुना श्लेषपित्ताख्यं ज्वर सनाशयेद् ध्रुवम्॥
सन्निपात ज्वरं घोरं नाशयेदार्द्रनीरतः।

शीतसन्निपातमृत्युञ्जयो रसः।

विषं सूतक गन्धौ च पित्तं मत्स्य वराहयोः।
आज मायूर पित्ते च महिष्याश्चापि योजयेत्॥
हरितालञ्च सव्योषं वानरीवीजसंयुतम्।
अपामार्गं चित्रमूलं जयपालञ्च कल्कयेत्॥
एतत् सर्वं समांशेन अजामूत्रेन मर्दयेत्।
माषेण सदृशी कार्य्या वटिका सन्निपज्वरैः॥
महाज्वरं महाशीतं महाशीतज्वरेऽपि च।
भुजंगते सन्निपाते विसूच्यां विषमज्वरे॥
असाध्ये मानवे युञ्ज्यादैकाहाज्ज्वरनाशिनी।

जलोदरे शिथिलाङ्गे नासास्रावे च पीनसे॥
अजीर्णे मूर्च्छनाभावे श्लेष्मभावेऽति दुर्जये।
शोथ कामल पाण्ड्वादि सर्वरोगापहारकः॥
सन्निपात मृत्युञ्जयो ज्ञानज्योतिः प्रकाशितः।
भृङ्गराज रसेनायं रसराजः प्रदीयते॥
निर्वात निर्ज्जन स्थाने वहुवस्त्र समावृते।
प्रस्वेदः क्षणमात्रेण जायते चिह्नमीदृशम्॥
मूर्च्छितः पतितो भूमौ दह्यमानः पुनः पुनः।
एवं चिह्नं समालोक्य वदेन्नैकज्यमातुरे॥
पथ्यं यद् याचते रोगी तद् दातव्यं प्रयत्नतः।
दध्योदनं शीतजलं दातव्यं तद् विचक्षणैः॥
एवं महारसः श्रेष्ठः शम्भुना प्रेरितो भुवि।
कृपया सर्वभूतानां ज्ञानज्योतिः प्रकाशितः॥

प्रभाकरः।

रसेन गन्धं द्विगुणं क्रमानु-
रसैर्विमर्द्याष्टदिनं सुघर्म्मे।
रसाष्टभागं त्वमृतञ्च दद्याद्
विपाचयेत् वह्निरसेन किञ्चित्॥
पित्तैश्च सम्भावित एष देय-
स्त्रिदोषनीहार विनाश सूर्य्यः॥
अत्र भैरवं रुधिरवर्णं ध्यायेत्।

कालाग्नि भैरवो रसः।

शुद्धसूतं द्विधा गन्धं मर्दयेद् गोक्षुरद्रवैः।
भावितञ्च विशोष्याथ चूर्णयेदतिचिक्कणम्॥

चूर्णतुल्यं मृतं ताम्रं ताम्रादष्टांशिकं विषम्।
हिङ्गुलं रसभागश्च द्वौ भागौ कनकस्य च॥
बाणभागोऽत्र गोदन्तः काणभागा मनःशिला।
टङ्कनं नेत्रभागश्च ऋतुभागश्च खर्परम्॥
ब्रह्मभागश्च जैपालं नेत्रभागं हलाहलम्।
माक्षिकं चाग्निभागश्च लौहं वङ्गश्च भागकम्॥
सर्वान् खल्लोदरे क्षिप्त्वा चोरेणार्कस्य मर्दयेत्।
दशमूलकषायेण मर्दयेद् याममात्रकम्॥
पञ्चमूलकषायेण तथैव च विमर्दयेत्।
चणमात्रां वटीं कृत्वा बलं ज्ञात्वा प्रयोजयेत्॥
सर्वं त्रिदोषजं हन्ति सन्निपातं सुदारुणम्।
पूर्ववद् दापयेत्पथ्यं जलयोगश्च कारयेत्॥
पथ्यं शाल्योदनं ज्ञेयं दधिभक्त समन्वितम्।
कालाग्निभैरवो नाम रसोऽयं भूरिपूजितः॥

त्रैलोक्य चिन्तामणिः।

रसभस्म त्रयो भागा द्विभागश्च भुजङ्गमम्।
कालकूटश्च षड्भागं भागैकं तालकं तथा॥
गोदन्तं गगनं तुल्यं शिला गन्धक टङ्कनम्।
जयपालोन्मत्त दन्ती करवीरश्च लाङ्गली॥
पलाशमूलजैर्नीरैः सप्तधा भावितं दृढम्।
चित्रमूलकषायेण चार्द्रकस्य च वारिणा॥
मात्स्य माहिष मायूर च्छाग वाराह डुण्डुभम्।
प्रत्येकं दशधा मर्द्यं शिला खल्लेच संचयात्॥
धान्यद्वयां वटीं कुर्यात् शुष्क वस्त्रेण धारयेत्।

दातव्यं चानुपानेन नारिकेलोदकेन च ॥
ताम्बूलञ्च ततो दद्यात् भक्ष्यं शीतोपचारकम्
तिलतैले सदा स्नानं घृतमत्स्यादि भोजनम ॥
शीताम्लं दधि संयुक्तं पुराणान्नञ्च भक्षयेत् ॥

रसेश्वरः।

रसेन गन्धं द्विगुणं गृहीत्वा
तत्पाद गन्धं रविताल हेम।
भस्मीकृतं योजय मर्दयेत्तु
दिनत्रयं वह्निरसेन घर्मे ॥
विषञ्च दद्यात्‌ कलाप्रमाण
मजादिपित्तैः परिभावयेच्च।
रक्तिद्वयं चास्य ददीत वह्नि-
कटुत्रयेणार्द्र रसप्रयुक्तम् ॥
तैलेन चाभ्यक्तवपुश्च कुर्य्यात्
स्नानं जलेनैव सुशीतलेन।
यावद्भवेद् दुःसहमस्य शीतं
मूत्रं पुरीषञ्च शरीरकम्पः ॥
पथ्ये यदीच्छा परिजायतेऽस्य
मरीच खण्डं दधिभक्तकञ्च।
अल्पं ददीतार्द्रकमत्र शाकं
दिनाष्टकं स्नानमिदञ्च पथ्यम् ॥

बड़वानलः।

कान्तञ्च सूतं हरिताल गन्धं
समुद्रफेनं लवणानि पञ्च।

नीलाञ्जनं तुत्थकमेव रूप्यं
भस्म प्रवालानि वराटकाश्च ॥
वैक्रान्त अभ्रक समुद्रशुक्ति
सर्वाणि चैतानि समानि कुर्य्यात् ।
सूतं भवेद् द्वादश भागकञ्च
स्वह्यर्कदुग्धेन विमर्दयेच्च ॥
दिनत्रयं वह्निरसैस्ततश्च
निवेशयेत्ताम्रज सम्पुटे तत्
मृदा च संलिप्य रसं पुटेत्त-
द्रसस्ततः स्याद् वड़वानलाख्यः ॥
तत्पाद भागेन विषं नियोज्य
कृष्णानुतोयेन पचेत् चणं तत् ।
वात प्रधाने च कफ प्रधाने
तियोजयेत् त्र्यूषण चित्र युक्तम् ॥
दोषत्रयोत्थे ऽपि च सन्निपाते
वाताधिकत्वादिह सूतवोक्तः ।

अर्कमूर्त्ती रसः ।

त्रिदोषदावानलो रसश्च ।

लौहाष्टकं मारितमर्कभागं
सूतं द्विभागं द्विगुणञ्च गन्धम् ।
विमर्दयेद् वह्निरसेन तापि
दिनत्रयं चात्र विषं कलांशम् ॥
विक्षिप्य पित्तैः परिभावितोऽयं
रसोऽर्कमूर्त्तिर्भवति त्रिदोषे ।

ताम्रस्य पात्रे तु दिनैकमात्रं
निम्बूरसेनापि च पित्तवर्गैः॥
चुद्राद्रकोत्थेन रसेन सूत-
स्त्रिदोषदावानल एष सिद्धः।
गुञ्जाद्वयं चूर्णगुडूमस्य
दद्दीत चित्राद्ररसेन वापि॥
नासापुटे चापि नियोजनीया
गुञ्जास्य शुण्ठी मरिचेन युक्ता।

यदि ताम्रपात्रे जम्बीरादि रसैः पुनरपि भावयेत् तदा त्रिदोषदावानलो भवति।

त्रिदोषदावानल कालमेघः।

तालेन वङ्गं शिलया च नागं
रसैः सुवर्णं रवि तारपत्रम्।
गन्धेन लौहं दरदेन सर्वं
पुटे कृत योजय तुल्य भागम॥
तत्तुल्य सूतं द्विगुणञ्च गन्धं
तुल्यञ्च गन्धेन समान भागम्।
निम्बस्य तोयेन विमर्द्य सर्वं
गोलं प्रकृत्याथ मृदाविलिप्य॥
पुटञ्च दत्त्वाथ विमर्दयेनं
गन्धेन तुल्येन कृशानुनीरैः।
विषञ्च दत्त्वाथ कलाप्रमाणं
जी... क्रमानस्य रसैः पचेत्तत्॥

पित्तैस्तथा भावित एष सूत-
स्त्रिदोष दावानल कालमेघः।
वल्लं ददीतास्य च पूर्वयुक्त्या
दाहोत्तरे तं मधुपिप्पलीभिः।
मुद्गश्च शाल्यन्नमिह प्रशस्तं
पथ्यं भवेत् कोष्णमिदं दिवान्ते॥

रसेश्वरादि कालमेघान्ता रसा वातोल्वणे सन्निपाते प्रयोज्याः इति सारकौमुद्यां माधवः।

श्रीप्रतापलङ्केश्वरो रसः।

अपामार्गस्य मूलानां चूर्णं चित्रक मूलजैः।
वल्कलै मर्दयित्वाथ रसं वस्त्रेण गालयेत्॥
तेन सूतसमं गन्धमभ्रकं पारदं विषम्।
टङ्कनं तालकञ्चैव मर्दयेद्दिन सप्तकम्॥
त्रिदिनं मूषली कन्दैर्भावयेद् घर्म्मरञ्जितम्।
मूषाञ्च गोस्तनाकारामापूर्य्योपरि ढक्कयेत्॥
सप्तभिर्मृत्तिकावस्त्रैर्वेष्टयित्वा पुटेल्लघु।
रसतुल्यं लौहभस्म मृतवङ्ग महिस्तथा॥
मधूकसार जलदं रेणुकं गुग्गुलुं शिलाम्।
चाम्पेयञ्च समांशं स्यात् भागार्द्धं शोधितं विषम्॥
तत् सर्वं मर्दयेत् खल्ले भावयेद् विषनीरतः।
आतपे सप्तधा तीव्रे मर्दयेद् घटिकाद्वयम्॥
कटुत्रयकषायेण कनकस्य रसेन च।
फलत्रय कषायेण मुनिपुष्परसेन च॥
समुद्रफेननीरेण विजयापत्र वारिणा।

चित्रकस्य कषायेण ज्वालामुख्या रसेन च ॥
प्रत्येकं सप्तधा भाव्यं तद्दन्तिपत्रैश्च पञ्चभिः ।
सर्वस्य समभागेन विषेण परिधूपयेत् ॥
विमर्द्य स्त्रस्त्रयित्वा च रक्षयेत् कूपिकोदरे ।
गुञ्जैकं वङ्गिनीरेण शृङ्गवेर रसेन वा ॥
दद्याच्च रोगिणे तीव्रमोह्य विस्मृति शान्तये ॥
क्षुरेण तालुमाहत्य घर्षयेदार्द्र नीरतः ।
नोद्घटन्ते यदा दन्त स्तथा कुर्य्यादिमं विधिम् ॥
सेचयेन्मस्तकविद्वैद्यो वारां कुम्भशतेनरम् ।
भोजनेच्छा यदा तस्य जायते रोगिणः परम् ॥
दध्योदनं सिता युक्तं दद्यात्तक्र सजीरकम् ।
पाने पानं सिताजातं यदिच्छेत ददीत तत् ॥
एवं कृतेन शान्तिः स्यात् तापस्य च रुजस्य च ।
सचन्द्र चन्दन रसा लेपन कुरु शीतलम् ॥
यूथिका मल्लिका जाती पुन्नाग वकुलावृताम् ।
विधाय शय्यां तत्रस्थं लेपनैश्चन्दनैर्मुहुः ॥
हावभावविलासोक्तैः कटाक्ष चञ्चलेक्षणैः ।
पीनोत्तुङ्ग कुचापीडैः कामिनी परिरम्भणैः ।
रम्यवीणा निनादोक्तै गायने श्रवणामृतैः ।
पुण्यश्लोक कथाद्यैश्च सन्ताप हरणं कुरु ॥
दद्याद् वातेषु सर्वेषु निम्बुजैः सह वह्निभिः ।
दद्यात् कणा माक्षिकाभ्यां कासलाश्लेष्मरुक्षु ॥
तत्तद्रोगानुपानेन सर्वरोगेषु योजयेत् ।
अयं प्रतापलङ्केशः सन्निपात हरः परः ॥

कफकेतुः ।

टङ्कनं मागधो शङ्खं वत्सनाभं समं समम् ।
आर्द्रक स्वरसेनाथ दापयेद् भावनात्रयम् ॥
गुञ्जामात्रं प्रदातव्यमार्द्रक स्वरभैयुतम् ।
पिनसे श्वास कासे च शिरोरोगे गलग्रहे ॥
कफ रोगान् निहन्त्याशु कफकेतुरयं रसः ।

कफकेतुः ।

दग्ध शङ्खं त्रिकटुकं टङ्कनं समभागिकम् ।
विषञ्च पञ्चभिस्तुल्य मार्द्रतोयेण मर्दयेत् ॥
वारत्रय रक्तिकाञ्च वटीं कुर्य्याद्विचक्षणः ।
प्रातः सायञ्च वटिकाद्वय मार्द्रक वारिणा ॥
कफकेतुः कण्ठरोग शिरोरोगञ्च नाशयेत् ।
पीनसं कफ सङ्घातं सन्निपातं सुदारुणम् ॥

श्लेष्मकालानलो रसः ।

हिङ्गुल सम्भवं सूत गन्धकं मृत ताम्रकम् ।
तुल्यं मनोह्वा तालञ्च कटफलं धूस्तवीजकम् ॥
हिङ्गु मनःशिलक कुष्ठं त्रिवृद्दन्ती कटुत्रिकम् ।
व्याधिघातफलं वङ्गं टङ्कनं समभागिकम् ॥
सूचीयोग्या वटिकाः कारयेत् कुशलो भिषक् ।
विज्ञाय कोष्ठं कालञ्च योजयेद्रक्तिका क्रमात् ॥
वातश्लेष्मणि मन्देऽग्नौ पित्तश्लेष्माधिकेऽपि च ।
जीर्णज्वरे च श्वयथौ सन्निपाते कफोल्वणे ॥
वलास प्रवलं दृष्ट्वा धातुं वातात्मकं नयेत् ।

सेवनात् सर्वरोगघ्नः श्लेष्म कालानलो रसः॥

स्वल्प कस्तूरीभैरवो रसः।

हिङ्गुलञ्च विषं टङ्कं जातीकोष फलं तथा।
मरिचं पिप्पली चैव कस्तूरी च समांशिका॥
रक्तिद्वयं ततः खादेत् सन्निपाते सुदारुणे।

वृहत् कस्तूरीभैरवो रसः।

मृगमद शशिसूर्य्यौ धातकी शूकशिम्बी
रजतकनकमुक्ता विद्रुमं लौहपाठाः।
क्रिमिरिपुघनविश्वा वारितालाभ्रधात्री
रविदल रसपिष्टं कस्तूरी भैरवोऽयम्॥
कस्तूरीभैरवः ख्यातः सर्वज्वर विनाशनः।
आर्द्रकस्य रसैः पेशो विषमज्वर नाशनः॥
द्वन्द्वजान् भौतिकान् वापि ज्वरान् कामादिसम्भवान्।
अभिचार कृतांश्चैव तथा शत्रु कृतान् पुनः॥
निहन्याद् भक्षणादेव डाकिन्यादि युतां स्तथा।
विल्वचूर्ण नोरकाभ्यां मधुना सह पानतः॥
आमातीसारं ग्रहणीं ज्वरातीसारमेव च।
अग्निदीप्तिकरः शान्तः कासरोग निकृन्तनः॥
क्षपयेद् भक्षणादेव मेहरोगं हलीमकम्।
जीर्णज्वरं नूतनं वा द्विकालीनञ्च सन्ततम्॥
प्रक्षिप्तं भौतिकं वापि हन्ति सर्वान् विशेषतः।
ऐकाहिकं द्वाहिकं वा त्र्याहिकं चातुराहिकम्॥
पाक्षाहिकं षष्ठसंस्थं पाक्षिकं मासिकं पुनः।
सर्वान् ज्वरान् निहन्त्याशु भक्षणादार्द्रकद्रवैः॥

श्रीकालानल रसः ।

रसं गन्धं मृताभ्रञ्च टङ्कनञ्च मनःशिला ।
हिङ्गुलं गरलं दारु विषं ताम्रञ्च तत्समम् ॥
विड़ालपदमात्रन्तु सर्वं शुद्धं विचूर्णयेत् ।
भावनाय च दातव्यं लाङ्गलीमूलकं तथा ॥
घोषामूलं तथा देयं मूलं लोहित चित्रजम् ।
अपुष्पफल भूधात्री मूलं भ्रमररुद्रकम् ॥
छागवराह मयूरा महिषी मत्स्य एव च ।
एतेषाञ्च दद्देत् पित्त मार्द्रकस्य रसेन च ॥
प्रत्येकं मर्हितं शुष्कं कणामात्रा प्रमाणतः ।
अत्र भ्रमरः भ्रमरेष्टा भार्गीत्यर्थः ।

मृतसञ्जीवनी ।

गुड़ं द्रोणसमं ग्राह्यं वर्षादूर्द्धं पुरातनम् ।
धातकीत्वच मादाय दापयेत् पलविंशतिम् ॥
दाड़िमी वृष मोचञ्च वराक्रान्ताऽरणा तथा ।
अश्वगन्धा देवदारु विल्व श्योनाक पाटलाः ॥
शालपर्णी पृश्निपर्णी वृहतीद्वय गोक्षुरम् ।
वदरीन्द्रवारुणी चित्रं स्वयंगुप्ता पुनर्नवा ॥
एषां दशपलान् भागान् कुट्टयित्वा उदूखले ।
सुणभीरे च मृद्भाण्डे तोयमष्टगुणं क्षिपेत् ॥
गुड़मञ्जीलनं कृत्वा एतैः संपूरयेद्बुधः ।
मुखे शरावकं दत्त्वा रक्षयेद्दिन विंशतिम् ॥
षोड़शाहिवसादूर्द्धं द्रव्याणीमानि दापयेत् ।

पूगप्रस्थद्वयं चात्र कुट्टयित्वा विनिक्षिपेत् ॥
धुस्तूरं देवपुष्पञ्च पद्मकोशीर चन्दनम् ।
शतपुष्पा यमानी च मरीचं जीरकद्वयम् ॥
शठी मांसी त्वगेला च सजातीफल मुस्तकम् ।
ग्रन्थिपर्णी तथा शुण्ठी मेथी मेषी च चन्दनम् ॥
एषां द्विपलिकान् भागान् कुट्टयित्वा विनिक्षिपेत् ।
मृण्मये मोचिका यन्त्रे मयूराख्येऽपि यन्त्रके ॥
यथाविधि प्रकारेण चालनं दापयेद्बुधः ।
बुद्धिमान् सौजलं कृत्वा उद्धरेद् विधिवत् सुराम् ॥
एतन्मद्यं पिबेन्नित्यं यथाधातु वयक्रमम् ।
देहदार्ढ्यकरं पुष्टि बलवर्णाग्नि वर्द्धनम् ॥
सन्निपात ज्वरे घोरे विसूच्याञ्च मुहुर्मुहुः ।
शीतदेहे प्रयोज्येयं मृतसञ्जीवनी सुरा ॥

मृगमदासवः ।

मृतसञ्जीवनी ग्राह्या पञ्चाशत्पल संमिता ।
तदर्द्धं मधु संग्राह्यं तोयं मधुसमं तथा ॥
कस्तूरीकुडवं तत्र मरीचं देवपुष्पकम् ।
जातीफलं पिप्पलीत्वग् भागान् द्विपलिकान् क्षिपेत् ।
भाण्डे संस्थाप्य रुद्धा च निदध्यान्मासमात्रकम् ।
विसूचिकायां हिक्कायां त्रिदोष प्रभवे ज्वरे ॥
वीक्ष्य कोष्ठं बलञ्चैव भिषङ्मात्रां प्रयोजयेत् ।

अथ मध्यज्वरादौ ।

ज्वरमातङ्गकेशरी रसः ।

पारदं गन्धकं चैव हरितालं समांशिकम् ।

कटुत्रयं तथा पथ्या क्षारौ द्वौ सैन्धवं तथा ॥
निम्बस्य विषमुष्टेश्च वीजं चित्रकमेव च।
एषां माषमितं भागं ग्राह्यं प्रति सुसंस्कृतम् ॥
द्विमाषं कानकफलं विषञ्चापि द्विमाषिकम्।
निर्गुण्डीस्वरसेनैव शोषयेत्तत् प्रयत्नतः ॥
सार्द्धरत्ति प्रमाणेन वटी कार्य्या सुशोभना।
सर्वज्वरहरी चैषा भेदिनी दोषनाशिनी ॥
आमाजीर्णं प्रशमनी कामला पाण्डुरोगहा।
वह्निदीप्ति करी चैषा जठरामयनाशनी ॥
उष्णोदकानुपानेन दातव्या हितकारिणी
भाषिता लोकनाथेन ज्वरमातङ्गकेशरी ॥

रसमङ्गलोक्तो ज्वरमुरारी रसः।

शुद्धसूतं शुद्ध गन्धं विषञ्च दरदं पृथक्।
कर्षप्रमाणं कर्षार्द्धं लवङ्गं मरिचं पलम् ॥
शुद्धं कनकवीजञ्च पलद्वयमितं तथा।
त्रिवृता कर्षमेकञ्च भावयेद्दन्तिकाद्रवैः ॥
सप्तधा च ततः कार्य्या गुडी गुञ्जामिता शुभा।
ज्वरमुरारि नामायं रसो ज्वरकुलान्तकः ॥
अत्यन्ताजीर्णपूर्णे च ज्वरेविष्टम्भसंयुते।
सर्वाङ्गग्रहणी गुल्मे चामवातेऽम्लपित्तके ॥
कास श्वासे यक्ष्मरोगेऽप्युदरे सर्वसम्भवे।
गृध्रस्यां सन्धिमज्जस्थे वाते शोथे च दुस्तरे ॥
वध्नाति प्लीहरोगे च वातरोगे चिरोत्थिते।

अष्टादश कुष्ठरोगे सिद्धो गहन निर्म्मितः ॥

शीघ्रज्वरसुरारिः ।

हिङ्गुलञ्च विषं व्योषं टङ्कनं नागराभया ।
जयपालसमायुक्तं सद्योज्वर निवारणम् ॥

सर्वचूर्ण समं जयपाल चूर्णम् सर्वं पिष्ट्वा कलाय प्रमाणा वटी कार्य्या ।

ज्वरकेशरी ।

शुद्धसूतं विषं व्योषं गन्धं त्रिफल मेव च ।
जयपाल समं कृत्वा भृङ्गतोयेन मर्द्दयेत् ॥
गुञ्जामात्रा वटो कार्य्या बालानां सर्षपाकृतिः ।
सितया च समं पीता पित्तज्वर विनाशिनी ॥
मरिचेन प्रयुक्ता सा सन्निपात ज्वरापहा ।
पिप्पली जीरकाभ्याञ्च दाहज्वर विनाशिनी ॥
ज्वरकेशरि नामायं रसाज्वर विनाशनः ।

ज्वरभैरवो रसः ।

त्रिकटु त्रिफला टङ्क विष गन्धक पारदम् ।
जैपालञ्च समं मर्द्यं द्रोणपुष्पी रसैर्द्दिनम् ॥
ताम्बुलेन समं प्रति खादेद गुञ्जामितां वटीम् ॥
मुद्गयूषं शिखरिणी पथ्यं देयं प्रयत्नतः ॥
नवज्वरं त्रिदोषोत्थं जीर्णञ्च विषमज्वरम् ।
दिनैकेन निहन्त्याशु रसोऽयं ज्वरभैरवः ॥

विद्याधरो रसः ।

रसो गन्धस्ताम्रं त्रिकटु कटुका ठङ्कन वरा

त्रिवृद्दन्तीहेमद्युतिमणि विषमेतत् सममिदम्।
समस्तैस्तुल्यं स्याद् विमल जयपालोद्भवरजः
ततः स्नुक्क्षीरेण प्रगुणमृदितं दन्ति सलिलैः॥
द्विगुञ्जास्य प्रौढ़ं जयति वटिका साममखिलं
ज्वरं पाण्डुं गुल्मं ग्रहणीगुदकीलोद्भवरुजः।
मरुच्छूना जीर्णं प्रबलमपि सामं क्रिमिगदं
विबन्धं श्लीहानं यकृतमपि विद्याधरो रसः॥

पञ्चाननो रसः।

शम्भोःकण्ठविभूषणं समरिचं दैत्येन्द्र रक्तं रविः
पक्षौ सागर लोचनं शशियुगं भागोऽर्कसंख्यान्वितः।
खल्ले तत् परिमर्द्दितं रविजलैर्गुञ्जैक मात्रं ददेत्
सिन्धोऽयं ज्वरदन्ति दर्पदलनः पञ्चाननाख्यो रसः॥

पथ्यञ्च देयं दधिभक्तकञ्च
सिन्धूत्थ पथ्या मधुना समेतम्।
गन्धानुलेपो हिमतोय पानं
दुग्धञ्च देयं शुभ दाड़िमञ्च॥

चन्द्रशेखरो रसः।

शुद्धसूतं द्विधा गन्धं मरिचं टङ्गनं तथा।
चतुस्तुल्या सिता योज्या मत्स्यपित्तेन भावयेत्॥
त्रिदिनं मर्द्दयेत्तेन रसोऽयं चन्द्रशेखरः।
द्विगुञ्ज मार्द्रक द्रावैर्देयं शीतोदकं ह्यनु॥
तक्रभक्तञ्च हन्ताक पथ्यं तत्र प्रदापयेत्।
त्रिदिनात् श्लेष्म पित्तोत्थ मत्युग्रं नाशयेज्ज्वरम्॥

### अर्द्धनारीश्वरो रसः।

रस गन्धामृतञ्चैव समं शुद्धञ्च टङ्कनम्।
मर्द्दयेत् खल्लमध्ये तु यावत् स्यात् कज्जलप्रभम्॥
नकुलारि मुखे चिप्त्वा मृदा सवेष्टयेद्बहिः।
स्थापयेन्मृण्मये पात्रे ऊर्द्धाधो लवणं क्षिपेत्॥
भाण्डवक्त्रं निरुध्याथ चतुर्यामं हठाग्निना।
साङ्गशैत्यं समुद्धृत्य खल्ले कृत्वा तु कज्जलीम्॥
गुञ्जामात्रं प्रदातव्यं नस्यकर्म्मणि योजयेत्।
वामभागे ज्वरं हन्ति तत्क्षणाल्लोककौतुकम्॥
कुर्य्याद्दक्षिणभागेन चारोग्यं निश्चितं भवेत्।
गोप्याद्गोप्यतमं प्रोक्तं गोपनीयं प्रयत्नतः॥
अर्द्धनारीश्वरो नाम रसोऽयं कथितो भुवि।

### मृतसञ्जीवनो रसः।

हिङ्गुल भागाश्चत्वारो जैपालस्य त्रयो मताः।
द्वौ भागौ टङ्कनस्यापि भागैकममृतस्य च॥
तत् सर्वं मर्द्दयेत् श्लक्ष्णं शुष्कं यामं भिषग्वरः।
शृङ्गवेराम्बुना मर्द्यं व्योष चित्रक सैन्धवैः॥
यामद्वयमितस्तापं हरत्येष न संशयः।
घनसार समायेण चन्दनेन विलेपनम्॥
विदध्यात् कांस्यपात्रेण वीजयेद्रोगिणं भिषक्।
शाल्यन्नं तक्र सहितं भोजयेदिन्दु संयुतम्॥
सन्निपाते महाघोरे त्रिदोषे विषमज्वरे।
आमवाते वात गुल्मे शूले प्लीह्नि जलोदरे।

शीत पूर्वे दाह पूर्वे विषमे सन्ततज्वरे ।
अग्निमान्द्ये च वाते च प्रयोज्योऽयं रसोत्तमः
मृतसञ्जीवनो नाम विख्यातो रससागरे ।

क्षीररसराजः ।

भागैकं रसराजस्य भागश्च हेममाक्षिकात् ।
भागद्वयं शिलायाश्च गन्धकस्य त्रयो मताः ॥
तालकाष्टा दशभागाः शुल्वं स्याद भागपञ्चकम् ।
भल्लातकात् त्रयो भागाः सर्वमेकत्र चूर्णयेत् ॥
वज्रीक्षीर प्लुतं कृत्वा दृढे मृण्मयभाजने ।
विधाय सुदृढां मुद्रां पचेद् याम चतुष्टयम् ॥
स्वाङ्गशीतं समुद्धृत्य खल्लयेत् सुदृढं पुनः ।
गुञ्जा चतुष्टयं चास्य पर्णखण्डेन दापयेत् ॥
रसराजः प्रसिद्धोऽयं ज्वरमष्टविधं जयेत् ।

मृद्राघोटको रसः ।

पारदो गन्धकश्चैव त्रिक्षारं लवणत्रयम् ।
गुग्गुलुर्वत्सनाभश्च प्रत्येकन्तु द्विमाषिकम् ॥
कृष्णोन्मत्तजटानीरैर्भावयेत् सप्तवारकम् ।
गोक्षुरेन्द्रकुमारीष करञ्ज चित्र तेजिका ॥
भूकुरवक लताभिश्च त्रिफला बृहतीरसैः ॥
मर्दिता वटिका कार्य्या कुष्टलाफल सन्निभा ॥
ततो वटीद्वयं दत्त्वा यत्नैः पाद्यादिभिर्व्रतः ।
रसः सर्वज्वर हन्ति चणमात्रान्न संशयः ॥

शीतारि रसः ।

पारदं गन्धकं टङ्कं शुल्वं चूर्णं समं समम्
पारदाद् द्विगुणं देयं जैपालं तुषवर्ज्जितम् ॥
सैन्धवं मरिचं चिञ्चा त्वग्भस्म शर्करापि च ।
प्रत्येकं सूततुल्यं स्याज्जम्बीरैर्मर्दयेद्दिनम् ॥
द्विगुञ्जं तप्ततोयेन वातश्लेष्मज्वरापहः ।
रसः शीतारिनामायं शीतज्वरहरः परः ॥

पर्णखण्डेश्वरः ।

समांशं मर्द्दयेत् खल्ले रसं गन्धं शिला विषम् ।
निर्गुण्डीस्वरसैर्भाव्यं त्रिवारं चार्द्रकद्रवैः ॥
गुञ्जैकं भक्षयेत् पर्णे ज्वरं हन्ति महाद्भुतम् ॥

शीतभञ्जी रसः ।

पारदं रसकं तालं तुत्थं टङ्कन गन्धकम् ।
सर्वमेतत् समं शुद्धं कारवेल्ल्या रसै र्दिनम् ॥
मर्द्दयेत्तेन कल्केन ताम्र पात्रोदरं लिपेत् ।
अङ्गुलार्द्धप्रमाणेन तं पचेत् सिकताह्वये ।
यन्त्रे यावत् स्फुटन्त्येव व्रीहयस्तस्य पृष्ठतः ।
ताम्र पात्रं समुद्धृत्य चूर्णयेन्मरिचैः समम् ॥
शीतभञ्जी रसो नाम द्विगुञ्जा वातिके ज्वरे ।
दातव्यः पर्णखण्डेन मूर्च्छितांश्चाशयेज्ज्वरम् ॥

अत्र रसकं खर्परम् । शुद्धताम्रं षट्तोलकं तेन निर्म्मितं ताम्रखल्लं प्रत्येकं तोलकमितेन पारदादि षड्-

द्रव्येण लिप्तं अधोमुखं कृत्वा स्थाल्यां संस्थाप्य पात्रान्तरेणाच्छाद्य उपरिवालुकाभिः स्थालीं परिपूर्य्य तदुपरि व्रीहिन् दत्त्वा चूल्लयां निवेश्य तावदग्निज्वाला दातव्या यावद् व्रीहयो न स्फुटन्ति स्फुटितेषु तेषु व्रीहिषु रसः सिद्धो भवति।

पश्चात् मरिच चूर्णं षट्तोलकं सर्व्वमेकीकृत्य चूर्णयित्वा अस्य द्विगुञ्जं पर्णखण्डेन सह भक्षयेदित्युपदेशः।

अल्प ज्वराङ्कुशो रसः।

शुद्धसूतं विषं गन्धं धूर्त्तवीजं त्रिभिः समम्।
चतुर्णां द्विगुणं व्योषं चूर्णं गुञ्जाद्वयं हितम॥
जम्बीरस्य च मज्जाभिराद्रकस्य रसैर्युतम्।
ज्वराङ्कुशो रसो नाम्ना ज्वरान् सर्व्वान् प्रणाशयेत्॥
व्योषं मिलित्वा द्विगुणम्।

मध्यम ज्वराङ्कुशो रसः।

शुद्धसूतं तथा गन्धं कर्षमानं नयेद्बुधः।
महौषधं टङ्कनञ्च हरितालं तथा विषम्॥
रसार्द्धं मर्द्दयेत् खल्ले भृङ्गराज रसेन तु।
त्रिदिनं भावनां दत्त्वा चतुर्थे वटिकां ततः॥
कुर्य्याच्चणक मात्राञ्च पिप्पली मधु संयुतः।
एष ज्वराङ्कुशो नाम विषमज्वरनाशनः॥
महौषधादीनां चतुर्णां प्रत्येक रसार्द्धम्।

सर्व्वज्वराङ्कुश वटी।

शुद्ध सूतं तथा गन्धं मरिचं नागरं कणा।

त्वचं जैपालकं कुष्ठं भूनिम्बं मुस्तकं पृथक्॥
चूर्णयित्वा समांशन्तु कन्यया सह मेलयेत्।
निर्गुण्ड्याः स्वरसे वापि आर्द्रकस्य रसे तथा॥
भावनां कारयित्वा तु वटीकां कारयेद्भिषक्।
वटिकां भक्षयित्वा तु वस्त्रवेष्ट्य कारयेत्॥
एषा ज्वराङ्कुशवटी सर्वज्वर विनाशिनी।
पृथक् दोषांश्च विविधान् समस्तान् विषमज्वरान्॥
प्राकृतं वैकृतं वापि वातश्लेष्म कृतञ्च यम्।
अन्तर्गतं वहिःस्थञ्च निरामं साममेव वा॥
ज्वरमष्ट विधं हन्ति वृक्षमिन्द्राशनिर्यथा।

बृहज्ज्वराङ्कुशः।

पारदं गन्धकं ताम्रं हिङ्गुलं तालमेध च।
लौहं वङ्गं माक्षिकञ्च खर्परञ्च मनःशिला॥
स्वर्णमभ्रं गैरिकञ्च टङ्कनं रूप्यमेव च।
सर्वाण्येतानि तुल्यानि चूर्णयित्वा विभावयेत्॥
जम्बीर तुलसी चित्र विजया तिन्तिड़ी रसैः।
* एभिर्दिनत्रयं रौद्रे निर्ज्जने खल्ल गह्वरे॥
चणमात्रां वटीं कृत्वा च्छायाशुष्कान्तु कारयेत्।
महाग्निजननी चैषा सर्वज्वरविनाशिनी॥
एकजं द्वन्द्वजञ्चैव चिरकाल समुद्भवम्।
ऐकाहिक द्व्याहिकञ्च त्रिदोष प्रभवं ज्वरम्॥
चातुर्थकं तथात्युग्रं जलदोष समुद्भवम्।

---

* प्रत्येकं दिनत्रयमितिकपाठान्तरः।

सर्वान् ज्वरान् निहन्त्याशु भास्करस्तिमिरं यथा ॥
नातः परतरं किञ्चिज्ज्वरनाशाय भेषजम्।
महाज्वराङ्कुशो नाम रसोऽयं मुनिभाषितः॥

ज्वराङ्कुशः।

शुद्धसूतं तथा गन्धं वीजं कनकसम्भवम्।
महौषधं टङ्कनञ्च हरितालं तथा विषम्॥
भृङ्गराजाम्भसा सर्वं मर्दयित्वा वटीं चरेत्।
गुञ्जाप्रमाणां खादेत् तां यथा दोषानुपानतः॥
एष ज्वराङ्कुशो नाम्ना विषमज्वरनाशनः।
ज्वरातिसारं मन्दाग्निं नाशयेच्चाविकल्पतः॥

चिन्तामणिरसः।

रसं गन्धं मृतं ताम्रं मृतमभ्रं फलत्रिकम्।
कूषणं दन्तिवीजञ्च समं खल्ले विमर्दयेत्॥
द्रोणपुष्पीरसैर्भाव्यं शुष्कं तदुपपालितम्।
चिन्तामणि रसो ह्येष त्वजीर्णे शस्यते सदा॥
ज्वरमष्टविधं हन्ति सर्वशूल निसूदनः।
गुञ्जैकं वा द्विगुञ्जं वा देयमार्द्रकवारिणा॥

त्र्याहिकारी रसः।

रसगन्धशिलातालं सर्वैरतिविषा समा।
रसस्य द्विगुणं लौहं रौप्यं लौहार्द्धसम्मितम्।
पिचुमर्दरसेनापि विष्णुक्रान्तारसेन च।
सर्वं संमर्द्य वटिकाः कुर्य्याद् गुञ्जात्रयोन्मिताः॥
हन्यादतिविषा क्वाथ संयुतोऽयं रसोत्तमः।
त्र्याहिकादीन् ज्वरान् सर्वान् रक्षांसीव रघूद्वहः।

चातुर्थकारी रसः।

रसगन्धक लौहाभ्र हरितालं समांशिकम्।
रसार्द्धं प्रमितं हेम सर्वं खल्लोदरे क्षिपेत्॥
कृष्णधुस्तूर पयसा मुनिपुष्प रसेन च।
भावयित्वा वटी कार्य्या द्विगुञ्जाफलमानतः॥
चम्पक द्रव योगेन सेवितोऽयं रसेश्वरः।
चातुर्थकादीन् निखिलानिन् हन्या द्विमज्वरान्॥
वत्राहिकारिश्चातुर्थकारिश्च रसो ज्वरविरतौ प्रयोज्य
इति वृद्धवैद्याः।

विश्वेश्वरो रसः।

पारदं रसकं गन्धं तुल्यांशं मर्दयेद्रसे।
अश्वत्थजे त्र्यहं पश्चाद्रसे कोलक मूलजे॥
निदिग्धिका रसे काकमाचिकाया रसे तथा।
द्विगुञ्जां वा त्रिगुञ्जां वा गोक्षीरेण प्रदापयेत्॥
रात्रि ज्वरं निहन्त्याशु नाम्ना विश्वेश्वरो रसः।
रात्रिज्वरे प्रशस्तोऽयं रसः।

विक्रमकेशरी रसः।

शुल्बमेकं द्विधा तारं मर्दयेद्विधिवद्भिषक्।
पश्चाद् विषं रसं गन्धं मेलयित्वा तु भावयेत्॥
एकविंशति वारांश्च निम्बाकवल्कलद्रवैः।
रसः सिद्धः प्रदातव्यो गुञ्जामात्रो ज्वरान्तकृत्।
सर्वज्वरहरः ख्यातो रसो विक्रमकेशरी।

ज्वरकालकेतु रसः।

रसं विषं गन्धक ताम्रकञ्च।
मनःशिलारुष्कर तालकञ्च।
विमर्द्य वत्सोपयसा समांशं
गजाह्वयं तत्र पुटं विदध्यात्॥
द्विगुञ्जमस्यैव मधुप्रयुक्तं
ज्वरं निहन्त्यष्टविधं महोग्रम्
पुरा भवान्यै कथितो भवेन
नृणां हिताय ज्वरकालकेतुः॥

त्रिपुरारी रसः।

हुताशमुखसंशुद्धं रसं ताम्रञ्च गन्धकम्।
लोहमभ्रं विषञ्चैव सर्वं कुर्य्यात् समांशकम्॥
रसार्द्धं मृतरूप्यञ्च शृङ्गवेराम्बुमर्दितम्।
द्विगुञ्जं मधुना देयं सितयार्द्ररसेन वा॥
ज्वरमष्टविधं हन्ति वारिदोषभवं तथा।
प्लीहानमुदरं शोथमतीसारं विनाशयेत्॥
रोगानेतान्निहन्त्याशु शङ्करस्त्रिपुरं यथा।

मेघनादो रसः।

तारं कांस्यं मृतं ताम्रं त्रिभिस्तुल्यञ्च गन्धकम्
क्वाथेन मेघनादस्य पिष्ट्वा रुद्ध्वा पुटेपचेत्॥
षड्भिः पुटैर्भवेत् सिद्धो मेघनादो ज्वरापहः।
भक्षयेत् पर्णखण्डेन विषमज्वरनाशनम्॥
अस्यमात्रा द्विगुञ्जा स्यात् पथ्यं दुग्धौदनं हितम्।

नागरातिविषा-मुस्त-भूनिम्बामृत वत्सकैः ॥
सर्वज्वरातिसारघ्नं क्वाथ मस्यानुपाययेत् ।
तरुणं वा ज्वरं जीर्णं तृष्णां दाहञ्च नाशयेत् ॥

शीतारी रसः ।

तालकं दरदोद्भूतः पारदो गन्धकः शिला ।
क्रमाद्भागार्द्ध रहितं कारवेल्लाम्बुमर्द्दितम् ॥
इदमस्य प्रमाणेन ताम्रपात्रीं प्रलेपयेत् ।
अधोमुखीं दृढ़ेभाण्डे तां निरुध्याथ पूरयेत् ॥
चूल्ल्यां वालुकया घस्रमेकं प्रज्वालयेद्दृढ़म् ।
शीते संचूर्ण्य गुञ्जास्य नागवल्लीदले स्थिता ॥
भक्षिता मरिचैः सार्द्धं समस्तान् विषमज्वरान्
दाहशीतादिकं हन्यात् पथ्यं शाल्योदनं पयः ॥

स्वच्छन्दभैरवो रसः ।

समभागांश्च संगृह्य पारदामृतगन्धकान् ।
जातीफलस्य भागार्द्धं दत्त्वा कुर्य्याच्च कज्जलीम् ॥
सर्वार्द्धं पिप्पलीचूर्णं खल्लयित्वा निधापयेत् ।
गुञ्जैकं वा द्विगुञ्जं वा नागवल्लीदलैः सह ॥
आर्द्रकस्य रसेनापि द्रोणपुष्पीरसेन वा ॥
शीतज्वरे सन्निपाते विसूच्यां विषमज्वरे ॥
पीनसे च प्रतिश्यायेज्वरेऽजीर्णे तथैव च ।
मन्देऽग्नौ वमने चैव शिरोरोगे च दारुणे ।
प्रयोज्यो भिषजा सम्यग् रसः स्वच्छन्दभैरवः ।

पथ्यं दध्योदनं दद्याद्दोषदोषबलाबलम् ॥

ज्वरारी रसः।

दरदबलिरसानां शुल्वनागाभ्रकाणां
शुभगविटखिलानां सर्वमेकत्र योज्यम्।
विपिनतृपदलोत्थैर्भावितं शोषयेत्तं
दिवस दश समाप्तौ रक्तिकैकाश्च कुर्य्यात्॥
एकैकां भक्षयेदस्य चार्द्रकस्य रसैर्युताम्।
दत्तमात्रं ज्वरं हन्ति ज्वरारिः स निगद्यते॥
सर्वशूल विनाशी च कफपित्तविनाशनः।
सर्वमारग्वध पत्र रसेन दशदिनं भावयित्वा गुञ्जा
मात्रमार्द्रकरसेन देयम्।

ज्वराशनी रसः।

रसं गन्धं सैन्धवञ्च विषं ताम्रं समं भवेत्।
सर्वचूर्णं समं लौहं तत्समं चूर्णमभ्रकम्।
लौहे च लौहदण्डे च निर्गुण्ड्याः स्वरसेन च।
मर्दयेद् यत्नतः पश्चान्मरिचं सूत तुल्यकम्॥
पर्णेन सह दातव्यो रसो रक्तिकसम्मितः।
कासं श्वासं महाघोरं विषममाख्यं ज्वरं वमिम्॥
धातुस्थं प्रबलं दाहं ज्वरदोषं चिरोद्भवम्।
यकृद्गुल्मोदरप्लीहश्वयथुञ्च विनाशयेत्॥

ज्वरान्तको रसः।

भास्करो गन्धकः सर्वो देवो विहङ्ग लौह्यकम्।

शोधितं गगनञ्चैव पुष्पकञ्च महेश्वरम्॥
भूनिम्बादि गणैर्भाव्यं मधुना गुड़िका दृढ़ा।
चातुर्थकं तृतीयञ्च ज्वरं सन्ततकं तथा॥
आमज्वर भूतकृतं सर्वंज्वरमपोहति।

अत्र सर्वो रसः देवी सौराष्ट्रमृत्तिका विहङ्ग खणमाक्षिकम् पुष्पकं रसाञ्जनम् महेश्वरं सुवर्णम् अन्यत् सुगमम्। ताम्रादीनां समभागचूर्णं भूनिम्बादि क्वाथेन भावयेत्। भूनिम्बाद्यष्टादश द्रव्याणि सर्वद्रव्यतुल्यानि अष्टावशिष्टं क्वाथं कृत्वा दिनत्रयं विभाव्य विशोष्य मधुना विमर्द्य अनुरूपं लिहेत्।

श्रीजयमङ्गलो रसः।

हिङ्गुलसम्भवं सूतं गन्धकं टङ्कनं तथा।
ताम्रं वङ्गं माक्षिकञ्च सैन्धवं मरिचं तथा॥
समं सर्वं समाहृत्य द्विगुणं स्वर्णभस्मकम्।
तदर्द्धं कान्तलौहञ्च रूप्य भस्मापि तत्समम्॥
एतत्सर्वं विचूर्ण्याथ भावयेत् कनकद्रवैः।
शेफालीदलजैश्चापि दशमूल रसेन च॥
किराततिक्तक क्वाथे त्रिवारं भावयेत् सुधीः।
भावयित्वा ततः कार्य्या गुञ्जाद्वयमिता वटी॥
अनुपानं प्रयोक्तव्यं जीरकं मधु संयुतम्।
जीर्णज्वरं महाघोरं चिरकालसमुद्भवम्।
ज्वरमष्टविधं हन्ति साध्यासाध्यमथापि वा।
पृथग्दोषांश्च विविधान् समस्तान् विषमज्वरान्॥

मेदोगतं मांस गत मस्थिमज्जगतं तथा।
अन्तर्गतं महाघोरं बहिःस्थञ्च विशेषतः॥
नानादोषोद्भवञ्चैव ज्वरं शुक्रगतं तथा।
निखिलं ज्वरनामानं हन्ति श्रीशिवशासनात्॥
जयमङ्गल नामायं रसः श्रीशिवनिर्मितः।
वलपुष्टि करश्चैव सर्वरोग निवर्हणः॥

ज्वरकुञ्जरपारीन्द्र रसः।

मूर्च्छितं रस कर्षैकं द्वदं जारिताभ्रकम्।
वारं ताप्यञ्च रसजं रसकं ताम्रकं तथा॥
मौक्तिकं विद्रुमं लौहं गिरिजं गैरिकं शिला।
गन्धकं हेमसारञ्च पलार्द्धञ्च पृथक् पृथक्॥
क्षीरारी सुरवल्ली च शोथघ्नी गणिकारिका।
झाटामला ज्योत्स्निका च मतिक्ता तु सुदर्शना॥
अग्निजिह्वा पूतितैला शूर्पपर्णी प्रसारिणी।
प्रत्येक स्वरसं दत्त्वा मर्दयेत् त्रिदिनावधि॥
भक्षयेत् पर्णखण्डेन चतुर्गुञ्जा प्रमाणतः।
महाग्निकारको रोगसङ्करघ्नः प्रयोगराट्॥
सन्ततं सतताम्येद्युस्तृतीयक चतुर्थकान्।
ज्वरान् सर्वान् निहन्त्याशु भास्करस्तिमिरं यथा॥
कासं श्वासं प्रमेहञ्च सशोथां पाण्डुकामलाम्।
ग्रहणीं क्षयरोगञ्च सर्वोपद्रव संयुतम्॥
ज्वरकुञ्जरपारीन्द्रः प्रथितः पृथिवीतले।

विद्यावल्लभो रसः।

रस म्लेच्छ शिला तालाश्चन्द्रहरग्न्यर्कभागिकाः।

पिष्ट्वा तान् सुषवीतोयैस्ताम्र पात्रोदरे क्षिपेत् ॥
न्यस्तं शरावे संरुध्य वालुका यन्त्रगं पचेत् ।
स्फुटन्ति व्रीहयो यावत्तच्छिरःस्थाः शनैःशनैः ॥
संचुर्ण्य शर्करा युक्तं द्विवल्लं भक्षयेत्ततः ।
विषमाख्यान् ज्वरान् हन्ति तैलाम्लादि विवर्ज्जयेत् ॥

शीतारि रसः ।

कुष्माण्डक्षारचूर्णोदकतिलज पृथक् पाचितं शुद्धतालं
तुल्यं सूतेन पिष्ट्वा त्रिदिवस मसकृत् कारवेल्लद्रवेण ।
क्षिप्त्वा तत् खर्परान्त र्दिनपति पिहितं रन्ध्रमप्यन्ययेत
नीरन्ध्रं चर्ण पथ्यागुड़लवणखटी मृद्भिरप्यन्तरालम् ॥
तद्वालुका पूर्णघटे विदध्या-
च्छनैः पचेत्तावदुपर्य्यमुष्य ।
व्रीहिर्विवर्णत्वमुपैति यावत्
ततस्तु शीतं विदधीत चूर्णम् ॥
सिद्धं तच्च समाददीत तुलसीतोयेन वल्लोन्मितं
पश्चात् चौद्रकणा सिताज्य पयसा कृत्वानुपानं गदी ।
भुञ्जीताथ पयोऽन्नमुद्ग सहितं साज्यञ्च हन्यान्नृणां
तापं कालवशेन सञ्चितमयं शीतारिनामा रसः ॥

ज्वरम्मूलहरो रसः ।

रस गन्धकयोः कृत्वा कज्जलीं भाण्ड मध्यगाम् ।
तत्राधोवदनां ताम्रपात्रीं संरुध्य शोषयेत् ।
पादाङ्गुष्ठ प्रमाणेन चुल्लयां ज्वालेन तां दहेत् ।

माषद्वयं ततस्तत्स्थं रसपालं समाहरेत् ॥
चूर्णयेद्रक्तियुगलं तृतीयं वा विचक्षणः।
ताम्बूलीदलयोगेन दद्यात् सर्वज्वरेष्वमुम्।
जीरसैन्धव संलिप्त वक्त्राय ज्वरिणे हितम्।
स्वेदोद्गमो भवत्येव देवि सर्वेषु पाप्मसु ॥
चातुर्थकादीन् विषमान्नवमागामिनं ज्वरम्।
साधारणं सन्निपातं जयत्येष न संशयः।

षड़ाननो रसः।

मारं कांस्यं मृतं ताम्रं दरदं पिप्पली विषम्।
तुल्यांशं मर्दयेत् खल्वे यामञ्च गुडूचो रसैः॥
गुञ्जामात्रं रसं देयं गुञ्जामात्रं लिहेत्सदा।
ज्वरे मन्दानले चैव वातपित्त ज्वरेषु च॥
ज्वरे वैषम्य तरुणे ज्वरेजीर्णे विशेषतः।
मद्गान्नं मुद्गयुषं वा तक्रभक्तञ्च केवलम्।
नारिकेलोदकं देयं मुद्गपथ्यं विशेषतः।
षड़ाननो रसो नाम सर्वज्वर कुलान्तकृत्।

कल्पतरु रसः।

रसं गन्धं विषं ताम्रं समभागं विचूर्णयेत्।
भावयेत् पञ्चभिः पित्तैः क्रमशः पञ्चवासरम्॥
निर्गुण्डी स्वरसेनैव मर्दयेत् सप्तवासरम्।
आर्द्रकस्य रसेनैव भावयेच्च त्रिधा पुनः॥
सर्षपाभा वटी कार्य्या छायया परिशोषिता।
ततः सप्तवटीयोज्या यावन्न त्रिगुणा भवेत्॥

वयोऽग्नि दोषकं बुद्धा प्रयोज्या भिषजां वरैः।
अनुपानं चोष्णजलं कज्जली पिप्पली युतम्॥
पानावशेषे प्रस्वाप्य वस्त्रैराच्छादयेद्वरम्।
घर्म्माभ्यागमनं यावत्ततो रोगात् प्रमुच्यते॥
रोगिणं स्नापयित्वा तु भोजयेत् ससितं दधि।
एष कल्पतरुर्नाम रसः परम दुर्लभः॥
असाध्यं चिरकालोत्थं जीर्णञ्च विषमं ज्वरम्।
हन्ति ज्वरातिसारौ च ग्रहणीं पाण्डुकामलाम्॥
न देयः श्वासकासे च शूलयुक्ते नरे तथा।
गोपनीयः प्रयत्नेन न देयो यस्य कस्य चित्॥

तालाङ्को रसः।

तालकस्य च भागौ द्वौ भागं तुत्थस्य शुक्तिका।
चूर्णकानां चतुर्भागं मर्दयेत् कन्यकाद्रवैः॥
यामैकेन ततः पश्चात् कृत्वा गजपुटे पचेत्।
अस्य गुञ्जाद्वयं हन्ति वातिकं पैत्तिकं तथा॥
शीतज्वरं विशेषेण तृतीयक चतुर्थकौ।

ज्वरार्य्यभ्रम्।

अभ्रं ताम्रं रसं गन्धं विषञ्चेति समं समम्।
द्विगुणं धूर्त्तबीजञ्च व्योषं पञ्चगुणं मतम्॥
जलेन वटिकां कुर्य्याद् यथा दोषानुपानतः।
अभ्रं ज्वरारि नामादं सर्वज्वरविनाशनम्॥
वातिकान् पैत्तिकांश्चैव श्लैष्मिकान् सान्निपातिकान्।
विषमाख्यान् द्वन्द्वजांश्च धातुस्थान् विषमज्वरान्॥

नाशयेन्नात्र सन्देहो वृषमिन्द्राशनिर्यथा।
प्लीहानं यकृतं गुल्ममग्निमान्द्यं सशोथकम्॥
कासं श्वासं तृषां कम्पं दाहं शीतं वमिं भ्रमिम्॥

जीवनानन्दाभ्रम्।

वज्राभ्रं मारितं कृत्वा कर्षयुग्मं विचूर्णितम्।
जीरं कनकवीजञ्च कर्षं वासारसेन च॥
कण्टकारी रसेनैव धात्रीमुस्त रसेन च।
गुड़ूच्याः स्वरसेनैव पलांशेन पृथक् पृथक्॥
मर्दयित्वा वटी कार्य्या गुञ्जामात्रा प्रयोजिता।
विषमाख्यान् ज्वरान् सर्वान् प्लीहानं यकृतं वमिम्॥
रक्तपित्तं वातरक्तं ग्रहणीं श्वासकासकौ।
अरुचिं शूलहृल्लासावर्शांसि च विनाशयेत्॥
जीवनानन्द नामेदमभ्रं वृष्यं बलप्रदम्।
रसायनमिदं श्रेष्ठमग्निसन्दीपनं परम्॥

चन्दनादि लौहम्।

रक्तचन्दन ह्रीवेर पाठोशीर कणा शिवा।
नागरोत्पलधात्रीभि स्त्रिमटेन समन्विताः॥
लौहो निहन्ति विविधान् समस्तान् विषमज्वरान्।
त्रिमदं मुस्तक चित्रक विड़ङ्गम्। सर्वसमं लौहम्।
ओं अमृतोद्भवाय स्वाहा इति मन्त्रेण मर्दनम्।
ओं अमृते हुम् इति मन्त्रेण भक्षणम्॥
द्वादश द्रव्य समं लौहम्। रक्तिद्वयं मधुना लिह्येत्
पश्चात् मुस्तकानुचर्वणं कर्त्तव्यं वृद्धोपदेशात्।

वसन्तमालती रसः ।

सुवर्णं मुक्ता दरद मरिचं भागवृद्ध्या प्रदिष्टम् ।
खर्पराष्टौ प्रथममखिलं मर्दयेत् म्रक्षणेन ॥
यावत् स्नेहो व्रजति विलयं निम्बुनीरेण तावत् ।
गुञ्जाद्वन्द्वं मधुचपलया मालती प्राग्वसन्तः ॥
सेवितेयं हरेत्तूर्णं जीर्णञ्च विषमज्वरम् ।
व्याधीनन्यांश्च कासादीन् प्रदीप्तं कुरुतेऽनलम् ॥

श्लेष्मशैलेन्द्र रसः ।

गन्धकं पारदं चाभ्रं त्र्यूषणं जीरकद्वयम् ।
शटी शृङ्गी यमानी च पुष्करं रामठं तथा ॥
सैन्धवं यावशूकञ्च टङ्कनं गजपिप्पली ।
जातीकोषाजमोदा च लौहं यासलवङ्गकम् ॥
धुस्तूरबीजं जैपालं कट्फलं चित्रकं तथा ।
प्रत्येकं कार्षिकञ्चैषां श्लक्ष्णचूर्णं प्रकल्पयेत् ॥
पाषाणे विमले पात्रे घृष्टं पाषाण मुद्गरैः ।
विल्वमूलरसं दत्त्वा चार्कचित्रक दन्तिका ।
शिखरी काञ्जिका वासा निर्गुण्डी गणिकारिका ।
धुस्तूर कृष्णजीरञ्च पारिभद्रक पिप्पली ॥
कण्टकार्य्यार्द्रयोश्चैव मूलान्येतानि दापयेत् ।
एषां मूलरसं दत्त्वा घृष्ट मातपशोषितम् ॥
गुञ्जाप्रमाणां गुटिकां कारयेत् कुशलो भिषक् ।
चतुर्विधवटीं खादेन्नित्यमार्द्रकवारिणा ॥
उष्णतोयानुपानेन श्लेष्मव्याधिं व्यपोहति ।

विंशतिं श्लैष्मिकांश्चैव शिरोरोगांश्च दारुणान्।
प्रमेहान् विंशतिञ्चैव पञ्चगुल्मनिसूदनम्।
उदराण्यष्टसङ्ख्याप्यामवात विनाशनम्॥
पञ्चपाण्ड्वामयान् हन्ति क्रिमिस्थौल्यामयापहम्।
सोदावर्त्तं ज्वरं कुष्ठं गात्रकण्ड्वामयापहम्॥
यथाशुष्के स्वने वह्निस्तथा वह्निविवर्द्धनः।
श्लेष्मामयि कृपाहेतो रसेन्द्रो मुनिभाषितः॥
श्लेषमशैलेन्द्रकोनाम रसेन्द्रगुड़िका स्मृता।

लक्ष्मीविलासो रसः।

पलं कृष्णाभ्रचूर्णस्य तदर्द्धौ रसगन्धकौ।
तदर्द्धं चन्द्रसंज्ञस्य जातीकोषफले तथा॥
वृद्धदारक वीजञ्च वीजं धुस्तूरकस्य च।
त्रैलोक्यविजयावीजं विदारीमूलमेवच॥
नारायणी तथा नागबला चातिबला तथा।
वीजं गोक्षुरकस्यापि नैचुलं वीजमेव च॥
एतेषां कार्षिकं चूर्णं पर्णपत्ररसैः पुनः।
निष्पिष्य वटिका कार्य्या त्रिगुञ्जाफलमानतः॥
निहन्ति सन्निपातोत्थान् गदान् घोरांश्चतुर्विधान्।
वातोत्थान् पैत्तिकांश्चैव नास्यत्र नियमः क्वचित्॥
कुष्ठमष्टादशाख्यञ्च प्रमेहान् विंशतिं तथा।
नाड़ीव्रणं व्रणं घोरं गुदामयभगन्दरम्॥
श्लीपदं कफवातोत्थ रक्तमांसाश्रितञ्च यत्।
मेदोगतं धातुगत चिरजं कुलसम्भवम्॥

गलशोथमन्त्रवृद्धिमतीसारं सुदारुणम् ।
आमवातं सर्व्वरूपं जिह्वास्तम्भं गलग्रहम् ॥
उदरं कर्णनासाक्षि मुखवैजात्यमेव च ।
कासपीनस यक्ष्मार्शः स्थौल्यदौर्गन्ध्यनाशनः ॥
सर्व्वशूलं शिरःशूलं स्त्रीणां गर्द्दनिसूदनम् ।
वटिकां प्रातरेकैकां खादेन्नित्यं यथाबलम् ॥
अनुपानमिह प्रोक्तं मांसपिष्टं पयोदधि ।
वारिभक्त सुरासीधु सेवनात् कामरूपधृक् ॥
वृद्धोऽपि तरुणस्पर्द्धी न च शुक्रस्य संचयः ।
न च लिङ्गस्य शैथिल्यं न केशायान्ति पक्वताम् ॥
नित्यं स्त्रीणां शतं गच्छन्मत्तवारणविक्रमः ।
द्विलक्षयोजनीदृष्टिर्जायते पौष्टिकः परः ॥
प्रोक्तः प्रयोगराजोऽयं नारदेन महात्मना ।
रसो लक्ष्मीविलासस्तु वासुदेवे जगत्पतौ ॥
अभ्यासाद्यस्य भगवान् लक्ष्मनारीषु वल्लभः ।

रसगन्धककर्पूरजातीकोष जातीफलानां पञ्चानां प्रत्येकं पलार्द्धं वृद्धदारकवीजादीनां नव द्रव्याणां प्रत्येकं कर्षं इति भट्टादिव्यवहारः। राढ़ीयास्तु रस गन्धकयोर्मिलित्वा पलार्द्धं कर्पूरस्य रसगन्धकार्द्धं कर्षः जातीकोषफलयोर्मिलित्वा कर्षः वृद्धदारक वीजादि नव द्रव्याणि मिलित्वा कर्षं इत्याहुः ।

### विषमज्वरान्तक लौहः ।

पारदं गन्धकं तुल्यं सूतार्द्धं जीर्णताम्रकम् ।

ताम्रतुल्यं माक्षिकञ्च लौहं सर्वसमं नयेत् ॥
जयन्त्याः स्वरसेनैव कोकिलाक्षरसेन च।
वासकार्द्रपर्णरसैः पञ्चधा च विमर्द्दयेत् ॥
पृथक्कलायमानान्तु वटिकां कारयेद्भिषक्।
विषमज्वरान्तनामायं विषमज्वरनाशनः ॥
वह्निदीप्तिकरो हृद्यः प्लीहगुल्मविनाशनः।
चक्षुष्यो वृंहणो हृद्यः श्रेष्ठः सर्वरुजापहः ॥

## विषमज्वरान्तक लौहः।

(पुटपक्वः।)

हिङ्गुल सम्भवं सूतं गन्धकेन सकज्जलम्।
पर्पटीरसवत्पाच्यं सूताद्धि हेमभस्मकम् ॥
लौहं ताम्रमभ्रकञ्च रसस्य द्विगुणं तथा।
वङ्गकं गैरिकञ्चैव प्रवालञ्च रसार्द्धकम् ॥
मुक्ता शङ्खं शुक्तिभस्म प्रदेयं रसपादिकम्।
मुक्तागर्भे च संस्थाप्य पुटपाकेन साधयेत् ॥
भक्षयेत्प्रातरुत्थाय द्विगुञ्जाफलमानतः।
अनुपानं प्रयोक्तव्यं कणा हिङ्गु ससैन्धवम् ॥
ज्वरमष्टविधं हन्ति वातपित्तकफोद्भवम्।
प्लीहानं यकृतं गुल्मं साध्यासाध्यमथापि वा ॥
सन्ततं सतताख्यञ्च विषमज्वर नाशनम्।
कामलां पाण्डुरोगञ्च शोथं मेहमरोचकम् ॥
ग्रहणीमामदोषञ्च कासं श्वासञ्च तत्‌ तत्।
मूलकृच्छ्रातिसारञ्च नाशयेदविकल्पतः ॥

अग्निञ्च कुरुते दीप्तं बलवर्ण प्रसादनः।
विषमज्वरान्तको नाम्ना धन्वन्तरि प्रकाशितः॥

सर्वज्वरहरलौहम्।

चित्रकं त्रिफला व्योषं विडङ्गं मुस्तकं तथा।
श्रेयसी पिप्पलीमूलसुशीरं देवदारु च॥
किराततिक्तकं बालं कटुकी कण्टकारिका।
शोभाञ्जनस्य वीजञ्च मधुक वत्सकं समम्॥
लौहतुल्य गृहीत्वा तु वटिकां कारयेद्भिषक।
सर्वज्वरहरो लौहः सर्वज्वरकुलान्तकृत्॥
वातिकं पैत्तिक श्लेषद्वन्दजं सान्निपातिकम्।
जीर्णज्वरञ्च विषमं रोगसङ्करमेव च।
प्लीहानमग्रमांसञ्च यकृतञ्च विनाशयेत्।

वृहत् सर्वज्वरहरलौहम्।

द्विपलं जारितं लौहं रसं गन्धं द्वितोलकम्।
तोलकं त्रिफला व्योषं विडङ्गं मुस्तकं तथा॥
श्रेयसी पिप्पलीमूलं हरिद्रे द्वे च चित्रकम्।
आर्द्रकस्य रसेनैव वटिकां कारयेद्भिषक्॥
गुञ्जाद्वयं वटीं कृत्वा भक्षयेदार्द्रकद्रवैः।
सर्वज्वरहरं लौहं सर्वज्वरविनाशनम्॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्।
विषमज्वरभूतोत्थ ज्वरं प्लीहानमेव च॥
मासजं पक्षजञ्चैव तथा सम्वत्सरोत्थितम्।

सर्व्वान् ज्वरान्निहन्त्याशु भास्करस्तिमिरं यथा॥

बृहत् सर्व्वज्वरहर लौहम्।

पारदं गन्धकं शुद्धं ताम्रमभ्रञ्च माक्षिकम्।
हिरण्यं तारतालञ्च कर्षमेकं पृथक् पृथक्॥
मृत कान्तं पलं देयं सर्व्वमेकीकृतं शुभम्।
वक्ष्यमाणौषधैर्भाव्यं प्रत्येकं दिन सप्तकम्॥
कारवेल्ल रसेनापि दशमूल रसेन च।
पर्पटस्य कषायेण क्वाथेन त्रैफलेन च॥
गुड़ूच्याः स्वरसेनापि नागवल्लीरसेन च।
काकमाचीरसेनैव निर्गुण्ड्याः स्वरसेन च॥
पुनर्नवार्द्रकीम्भोभिर्भावनां परिकल्प्य च।
रक्तिकाद्वि क्रमेनैव वटिकां कारयेद्भिषक्॥
पिप्पलीगुड़संयुक्ता वटिका वीर्य्यवर्द्धिनी।
ज्वरमष्टविधं हन्ति चिरकालसमुद्भवम्॥
विविधं वारिदोषोत्थं नानादोषोद्भवं तथा।
सततादि ज्वरं हन्ति साध्यासाध्यमथापि वा॥
क्षयोद्भवञ्च धातुस्थं कामशोकभवं तथा।
भूतावेश ज्वरञ्चैव ऋक्षदोषभवं तथा॥
अभिघात ज्वरञ्चैवमभिचार समुद्भवम्।
अभिन्यासं महाघोरं विषमञ्च त्रिदोषजम्॥
शीतपूर्व्वं दाहपूर्व्वं विषमं शीतलं ज्वरम्।
प्रलेपकज्वरं घोरमर्द्धनारीश्वरं तथा॥
प्लीहज्वरं तथा कासं चातुर्थक विपर्य्ययम्।

पाण्डुरोगगणान् सर्वानग्निमान्द्य महागदम् ॥
एतान् सर्वान्निहन्त्याशु पथ्यार्थे नात्र संशयः ।
शाल्यन्नं तक्रसहितं भोजयेद्दिज संयुतम् ॥
ककारपूर्वकं सर्वं वर्जनीयं विशेषतः ।
मैथुनं वर्जयेत्तावद्यावन्न बलवान् भवेत् ॥
सर्वज्वरहरं श्रेष्ठमनुपानं प्रकल्पयेत् ।

गन्धककज्जली विधिः ।

कण्टकारी सिन्धुवारस्तथा पूतिकरञ्जकम् ।
एतेषां रसमादाय कृत्वा खर्परखण्डके ॥
प्रक्षिप्य गन्धकं तत्र ज्वालं मृदग्निना दहेत् ।
गन्धके स्नेहतापन्ने तत्समं पारदं क्षिपेत् ॥
मिश्रीकृत्य ततो हाभ्यां द्रुतं तमवतारयेत् ।
आमर्दयेत्तथा तत्तु यथा स्यात् कज्जलप्रभम् ॥
ततस्तु रत्तिकामस्य माषकं जीरकस्य च ।
माषेकं लवणस्यापि पर्णे कृत्वा निधापयेत् ॥
ज्वरे त्रिदोषजे घोरे जलमुष्णं पिवेदनु ।
छर्द्यां शर्करया दद्यात्सामे दद्यात्तथा गुड़म् ॥
क्षये छागभवं क्षीरं प्रदद्यादनुपानकम् ।
रक्तातिसारे कुटजमूलवल्कलजं रसम् ॥
रक्तवान्तौ तथा दद्यादुड़ुम्बर भवं जलम् ।
सर्वव्याधिहरश्चायं गन्धक कज्जलीकृतः ॥
आयुर्वृद्धिकरश्चैव मृतस्यापि प्रबोधयेत् ।

कण्टकारी रसं सिन्धुवार रसं नाटाकरञ्जरसं

खर्परे कृत्वा गन्धकं तत्र निक्षिप्य मृदुज्वालां दद्यात् गन्धके द्रवीभूते तत्तुल्यं शोधितरसं दत्त्वा द्वयं मिश्रीकृतमालोक्य शीघ्रमवतारयेत्। ततो लौहदण्डेन मर्दयित्वा कज्जलप्रभं कृत्वा जह्नुयोनिं संपूज्य बलिं दत्त्वा पर्णखण्डे रक्तिकां जीरकचूर्णमाषकं सैन्धव माषकमेकीकृत्य भक्षयित्वा ज्वरे उष्णजलम्। छर्द्यां शर्कराजलम्। सामे पुरातनगुड़ कर्षं जल पलम्। क्षये छागदुग्ध पलम्। रक्तातिसारे कूटज क्वाथपलम्। रक्त-वान्तौ पक्वोड़ुम्बुररस पलम् अनुपिबेत्।

मकरध्वजः।

स्वर्णदलं पलञ्चैव रसेन्द्रस्य पलाष्टकम्।
रसस्य द्विगुणं गन्धं तेनैव कज्जलीकृतम्॥
कुमारिकारसैर्भाव्यं काचपात्रे निधापयेत्।
वालुयन्त्रे च संस्थाप्य क्रमाद्दिनत्रयं पचेत्॥
स्वाङ्गशीतं समादाय पुष्पारुणरजः समम्।
यवमात्रं प्रदातव्यं मल्लिवल्लीदलेन च॥
एतदभ्यासतश्चैव जरामरणनाशनम्।
अनुपान विशेषेण करोति विविधान् गुणान्॥
ज्वरं त्रिदोषजं घोरं मन्दाग्नित्वमरोचकम्।
अन्यांश्च विविधान् रोगान्नाशयेन्नात्र संशयः॥

लौहासवः।

लौहचूर्णं त्रिकटुकं त्रिफलञ्च यमानिका।

विड़ङ्गं मुस्तकं चित्रं चतुःसंख्यपलं क्षिपेत्॥
चूर्णीकृत्य ततः क्षौद्रं चतुःषष्टिपलं पृथक्।
दद्याद्गुड़तुलां तत्र जलद्रोणद्वयं तथा॥
घृतभाण्डे विनिक्षिप्य निदध्यान्मासमात्रकम्।
लौहासवममुं मर्त्यः पिवेद्वह्निकरं परम्॥
पाण्डुश्वयथुगुल्मानि जठराण्यर्शसां रुजम्।
प्लीहामयं ज्वरं जीर्णं कासं श्वासं भगन्दरम्॥
अरोचकञ्च ग्रहणीं हृद्रोगञ्च विनाशयेत्।

अमृतारिष्टः।

अमृतायाः पलशतं दशमूलीशतं तथा॥
चतुर्द्रोणे जले पक्त्वा कुर्य्यात्पादावशेषितम्॥
शीते तस्मिन् रसे पूते गुड़स्य त्रितुलाः क्षिपेत्।
अजाजीषोड़शपलं पर्पटस्य पलद्वयम्॥
सप्तपर्णं त्रिकटुकं मुस्तकं नागकेशरम्।
कटुकातिविषे चेन्द्रयवञ्च पलसम्मितम्॥
एकीकृत्य क्षिपेद्भाण्डे निदध्यान्मासमात्रकम्।
अमृतारिष्ट इत्येष सर्वज्वरकुलान्तकृत्॥

किरातादि तैलम्।

मूर्वा लाक्षा दरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी।
क्षीरेवं पुष्करं रास्ना कपिवल्ली कटुत्रयम्॥
पाठाचेन्द्र यवश्चैव लवणत्रयसंयुतम्।
वासकार्कश्यामदारुमहाकालफलं तथा॥

दधिमस्त्वारनालेन कैरातेन च संपचेत्।
प्रस्थं प्रस्थं समादाय तैलप्रस्थे विपाचयेत्॥
लिप्तभुक्तज्वरश्चैव सन्ततं सततं तथा।
धातुस्थमस्थिमज्जस्थं ज्वरं सर्वं व्यपोहति॥
कामलां ग्रहणीञ्चैव अतिसारं हलीमकम्।
प्लीहपाण्डुक्षयघ्नञ्च नाशयेन्नात्र संशयः॥
नास्ति तैलवरञ्चास्मात् ज्वरदर्पकुलान्तकम्।

इत्यत्र किरातादि तैलम्।

कैरातस्य तुलामानं जलद्रोणे विपाचयेत्।
कटुतैलस्य पात्रार्द्धं तेनैव साधयेद्भिषक्॥
मूर्वा लाक्षा हरिद्रे द्वे काथो काञ्जिकं दधिमस्तु च।
एतानि तैलतुल्यानि कल्कानेतांश्च सम्पचेत्॥
भूनिम्बः श्रेयसी रास्ना कुष्ठं लाचेन्द्रवारुणी।
मञ्जिष्ठा च हरिद्रे द्वे मूर्वा मधुकमुस्तकाम्॥
वर्षाभू सैन्धवं मांसी तङ्गतो च तथा विड़म्।
ह्रीवेरं शतमूली च चन्दनं कटुरोहिणी॥
हयगन्धा शताह्वा च रेणुका सुरदारु च।
उशीरं पद्मकं धान्यं पिप्पली च वचा शठी॥
फलत्रिकं यमान्यौ द्वे भृङ्गी गोक्षुर एव च।
पर्ण्यौ द्वे तरुणीमूलं विड़ङ्गं जीरकद्वयम्॥
महानिम्बश्च हवुषा यवक्षारो महौषधम्।
एषां कर्षद्वयं क्षिप्ता साधयेन्मृदुवह्निना॥
यथाहि वर्गं विनिहन्ति तार्क्ष्यो
यथा च भास्वां स्तिमिरस्य सङ्घम्।

तथैव सर्वं ज्वरवर्गमेत-
दभ्यङ्गमात्रेण निहन्ति तैलम्॥
सन्ततं सततादींश्च निखिलान् विषमज्वरान्।
प्लीहाश्रितान् सशोथान् वा प्रमेहज्वरमेव च॥
अग्निञ्च कुरुते दीप्तं बलवर्णकरं परम्।
पाण्ड्वादीन् हन्ति रोगांश्च किराताद्यमिदं बृहत्॥

अथ ज्वर बलिः।

ज्वरामय गृहीतस्य मुष्टिभिर्नवभिः कृतम्।
तण्डुलैरोदनं तेन कुर्य्यात् पुत्तलकं शुभम्॥
तं हरिद्रावलिप्ताङ्गं चतुःपीत ध्वजान्वितम्।
हरिद्रा रसपूर्णाभिः पुटिकाभिश्चतसृभिः॥
मण्डितं गन्धपुष्पाद्यैरवकीर्य्य विसर्ज्जयेत्।
एवं दिनत्रयं कुर्य्यात् ज्वररोगोपशान्तये॥

ओदनेन पुत्तलं निर्म्माय वीरणचाचिकायां संस्थाप्य हरिद्राभिरवलिप्य चतुःपीतपताकाभिरलङ्कृत्य गन्धपुष्पाद्यैरवकीर्य्य हरिद्रारस पूर्णाश्चतस्रः पुटिकाश्चतुः-कोणे संस्थाप्य। पुटिका अश्वत्थ पत्ररचित ठोङ्गा।

विष्णुर्नमोऽद्येत्यादिना संकल्प्य ज्वरं ध्यात्वा समावाह्य नव कपर्द्दक क्रोड़ गन्ध पुष्प धूप दीपादिभिः सम्पूज्य सन्ध्यासमये ज्वरितं निर्मञ्छ्य मन्त्रमिमं पठित्वा दिनत्रयं बलिं दद्यात्। मन्त्रो यथा—ओँ नमो भगवते गरुड़ासनाय त्र्यम्बकाय स्वस्त्यस्तु स्वस्तु रस्तुतः स्वाहा ओँ कं टं पं

ग्रं वैनतेयाय नमः ओं ह्रीं चः क्षेत्रपालाय नमः ओं ह्रीं ठठ भोभो ज्वर शृणु शृणु हल हल गर्ज गर्ज ऐकाहिकं द्व्याहिकं त्र्याहिकं चातुर्थकं अर्द्धमासिकं मासिकं नैमेषिकं मौहूर्त्तिकं फट् फट् ह्रीं फट् फट् हल हल हल मुञ्च मुञ्च भूम्यां गच्छ स्वाहा इति पठित्वा एकवृक्षे श्मशाने चतुष्पथे वा विसर्जयेत्। एतत् कर्म्म वास्तुर्याच-दक्षिणप्रदेशे कुर्य्यात्।

### अथ नक्षत्ररोगजन्म फलम्।

कृत्तिकायां यदा व्याधिरुत्पन्नो भवति स्वयम्।
नवरात्रं भवेत् पीड़ा त्रिरात्रं रोहिणीषु च॥
मृगशीर्षे पञ्चरात्र मार्द्रायां मुच्यतेऽसुभिः।
पुनर्वसौ तथा पुष्ये सप्तरात्रेण मोचनम्॥
नवरात्रं तथा श्लेषे श्मशानान्तं मघासु च।
द्वौ मासौ पूर्वफल्गुण्यामुत्तरासु त्रिपञ्चकम्॥
हस्ते च सप्तमे मोक्षश्चित्रायामर्द्धमासकम्।
मासद्वयं तथा स्वात्यां विशाखे दिनविंशतिः॥
मित्रे चैव दशाहानि ज्येष्ठायामर्द्धमासकम्।
मूलेन जायते मोक्षः पूर्वाषाढ़े त्रिपञ्चकम्॥
उत्तरे दिनविंशत्या द्वौ मासौ श्रवणे तथा।
धनिष्ठायामर्द्धमासो वारुणे च दशाहकम्॥
पूर्वभाद्रपदे देवि जनविंशति वासरम्।
त्रिपञ्चाहिर्बुध्ने च रेवत्यां दशरात्रकम्॥
अहोरात्रं तथाश्विन्यां भरण्यान्तु गतायुषः।

एवं क्रमेण जानीयान्मन्त्रेषु यथोचितम्॥

इति गौरीकञ्चुलिकायाम्।

अथ सूर्यार्घ्यदान विधिः।

हंसो भानुः सहस्रांशु स्तपनस्तापनो रविः।
विकर्त्तनो विवस्वांश्च विश्वकर्म्मा विभावसुः॥
विश्वरूपी विश्वकर्त्ता मार्त्तण्डो मिहिरोऽंशुमान्।
आदित्यश्चोष्णगुः सूर्य्योऽर्य्यमा ब्रध्नो दिवाकरः॥
द्वादशात्मा सप्तहयो भास्करोऽहस्करः खगः।
सूरः प्रभाकरः श्रीमान् लोकचक्षुर्ग्रहेश्वरः॥
लोकेशो लोकसाक्षी च तमोऽरिः शाश्वतः शुचिः।
गभस्तिहस्त स्तीव्रांशु स्तरणिः सुमहोरणिः॥
द्युमणिर्हरिदश्वोऽर्को भानुमान् भयनाशनः।
छन्दोऽश्वो वेदवेद्यश्च भास्वान् पूषा वृषाकपिः॥
एकचक्ररथो मित्रो मन्देहारि स्तमिस्रहा।
दैत्यहा पापहर्त्ता च धर्म्मोऽधर्म्म प्रकाशकः॥
हेलिकश्चित्रभानुश्च कलिघ्नस्तार्क्ष्यवाहनः।
दिक्पतिः पद्मिनीनाथः कुशेशयकरो हरिः॥
घर्म्मरश्मिर्दुर्निरीक्ष्यश्चण्डांशुः कश्यपात्मजः।
एभिः सप्ततिसंख्याकैः पुण्यैः सूर्य्यस्य नामभिः॥
प्रणवादिचतुर्थ्यन्तैर्नमस्कार समायुतैः।
प्रत्येकमुच्चरन्नाम दृष्ट्वा दृष्ट्वा दिवाकरम्॥
विधृत्य पाणियुग्मेन ताम्रपात्रं सुनिर्म्मलम्।
जानुभ्यामवनीं गत्वा परिपूर्य्य जलेन च॥
करवीरादि कुसुमै रक्तचन्दनमिश्रितैः।

दूर्वाङ्कुरैरक्षतैश्च मिश्रितैः पात्रमध्यतः ॥
दद्यादर्घ्यमनघाय सवित्रे ध्यानपूर्वकम् ।
उपमीलि समानीय तस्मात् नान्यदिक्षनाः ॥
प्रतिमन्त्रं नमस्कुर्य्यादुदयास्तमिते रवौ ।
अनया नामसप्तत्या महामन्त्ररहस्यया ॥
एवं कुर्वन् नरो याति न दारिद्र्यं न शोकभाक् ।
व्याधिभिर्मुच्यते घोरैरपि जन्मान्तरार्ज्जितैः ॥
विनौषधैर्विना वैद्यैर्विना पथ्यपरिग्रहैः ।
कालेन निधनं प्राप्य सूर्य्यलोके महीयते ॥

अथ प्रयोगः । अद्येत्यादि वाक्यान्ते अमुकस्य झटिति ज्वरादिरोगप्रशमन कामनया हंसादिसप्ततिनामभिः श्रीसूर्य्याय सप्तत्यर्घ्य दानमहं करिष्यामि इति सङ्कल्प्य भूतशुद्धिमङ्गन्यासादिकं कृत्वा सामान्यार्घ्यं कल्पयित्वा ध्यात्वा समावाह्य पाद्यादिभिः सम्पूज्य प्रणमेत् । ततो यथोक्तविधिना प्रत्येक नाम्ना अर्घ्यं दद्यात् शालग्रामे घटे जले वा । इति सूर्य्यार्घ्यदान विधिः ।

### माहेश्वर कवचम् ।

ओं नमो भगवते रुद्राय । राजोवाच ।
अङ्गन्यासं यदुक्तं भो महेशाचरसंयुतम् ।
विधानं कीदृशं तस्य कर्त्तव्यं केन हेतुना ॥
तद्वदस्व महाभाग विस्तरेण ममाग्रतः ।
तपोधन इति पाठान्तरम् । भृगुरुवाच ।
कवचं माहेश्वरं राजन् देवैरपि सुदुर्लभम् ॥

यः करोति स्वगात्रेषु पूतात्मा स भवेन्नरः ।
कृत्वा न्यासमिमं यस्तु संग्रामं प्रविशेन्नरः ॥
न शरास्तोमरास्तस्य खड्गशक्तिपरश्वधाः ।
प्रभवन्ति रिपोः क्वापि भवेच्छिवपराक्रमः ॥
व्याधिग्रस्तस्तु यः कश्चित् कारयेच्चैव मार्ज्जनम् ।
एकादशकुशैः सार्धैर्मुक्तो भवति नान्यथा ॥
न भूतान पिशाचाश्च कुष्माण्डा न विनायकाः ।
शिवस्मरणमात्रेण न विशन्ति कलेवरे ॥

ओं नमः पञ्चवक्त्राय शशिसोमाकनेत्राय भयार्त्तानामभयाय मम सर्वगात्ररक्षार्थे विनियोगः ।
ओं ह्रीं ह्रां ह्रं । मन्त्रेणानेन वृषगोमयभस्मनाम्
आमन्त्र्य ललाटे तिलकमादाय पठेत् ॥
त्राहि मां देव दुष्प्रेक्ष्य शत्रुणां भयवर्द्धन ।
ओं स्वच्छन्दभैरवः प्राच्यामाग्नेय्यां शिखिलोचनः ॥
भूतेशोः दक्षिणे भागे नैरृत्यां भीमदर्शनः ।
वारुणे वृषकेतुश्च वायौ रक्षतु शङ्करः ॥
दिग्वासाः सौम्यतो नित्यमैशान्यां मदनान्तकः ।
वामदेव ऊर्द्ध्वतो रक्षेदधो रक्षेत् त्रिलोचनः ॥
पुरारिः पुरतः पातु कपर्द्दी पातु पृष्ठतः ।
विश्वेशो दक्षिणे भागे वामे कालीपतिः सदा ॥
महेश्वरः शिरोभागे भवो भाले सदैव तु ।
भ्रुवोर्मध्ये महातेजास्त्रिनेत्रो नेत्रयोर्द्वयोः ॥
पिनाकी नासिकादेशे कर्णयोर्गिरिजापतिः ।
उग्रः कपोलतो रक्षेन्मुखदेशे महाभुजः ॥

जिह्वायामन्धकध्वंसी दन्तान् रक्षतु मृत्युजित् ॥
नीलकण्ठः सदा कण्ठे पृष्ठे कामाङ्गनाशनः ॥
त्रिपुरारिः स्कन्धदेशे बाह्वोश्च चन्द्रशेखरः।
हस्तिचर्म्मधरो हस्ते नखाङ्गुलिषु शूलभृत् ॥
भवानीशः पातु हृदयं पातूदरं कटीं मृडः।
गुदे लिङ्गे च मेढ्रे च नाभौ च प्रमथाधिपः॥
जङ्घोरुचरणे भीम सर्वाङ्गे केशवप्रियः।
रोमकूपे विरूपाक्षः शब्दस्पर्शे च योगवित् ॥
रक्तमज्जवसामांसशुक्रे वसुगणार्चितः।
प्राणापानसमानेषूदानव्यानेषु धूर्ज्जटिः॥
रक्षाहीनन्तु यत् स्थानं वर्जितं कवचेन यत्।
तत् सर्व्वं रक्ष मे देव व्याधि दुर्ग ज्वरादितः॥
कार्य्यं कर्म्मत्विदं प्राज्ञैर्दीपं प्रज्वाल्य सर्पिषा।
निवेद्य शिखिनेताय वारयेच्चोत्तरं मुखम् ॥
ज्वरदाहपरिक्रान्तं तथान्यव्याधि संयुतम्।
कुशैः संमार्ज्य संमार्ज्य क्षिपेद्दीपशिखे ज्वरम् ॥
ऐकाहिकं द्व्याहिकं वा तृतीयक चतुर्थकम्।
वातपित्त कफोद्भूतं सन्निपातोग्रतेजसम् ॥
अन्यं दुःखदुराधर्षं कर्म्मजञ्चाभिचारिकम्।
धातुस्थं कफसंमिश्रं विषमं कामसम्भवम् ॥
भूताभिषङ्गसंसर्गं भूतचेष्टादि संस्थितम्।
शिवाज्ञां घोर मन्त्रेण पूर्ववृत्तं स्वयं स्मर।
जहि देहं मनुष्यस्य दीपं गच्छ महाज्वर।
कृत्वा तु कवचं दिव्यं सर्वव्याधि भयार्द्दनम्॥

न बाधन्ते व्याधयस्तं बालग्रहभयाश्च ये।
लूता विस्फोटकं घोरं शिरोर्त्तिच्छर्द्दि विग्रहम्॥
कामलां क्षयकासञ्च गुल्माश्मरीभगन्दरान्।
शूलोन्मादञ्च हृद्रोगं यकृतं पाण्डुविद्रधिम्॥
अतीसारादयो रोगा डाकिनीग्रहपीड़ितान्।
पामा विचर्चिका दद्रु कुष्ठव्याधि विषार्द्दनम्॥
स्मरणान्नश्यत्याशु कवचं शूलपाणिनः।
यस्तु स्मरति नित्यं वै यस्तु धारयते नरः॥
स मुक्तः सर्वपापेभ्यो वसेच्छिव पुरे चिरम्।
संख्या व्रतस्य दानस्य यज्ञस्यास्तीह शास्त्रतः।
न संख्या विद्यते शम्भोः कवच स्मरणाद्यतः॥
तस्मात् सम्यगिदं सर्वैः सर्वकामफलप्रदम्॥
श्रोतव्यं सततं भक्त्या कवचं सर्वकामिकम्॥
लिखितं तिष्ठते यस्य गृहे सम्यगनुत्तमम्।
न तत्र कलहोद्वेगं नाकाल मरणं भवेत्॥
नाल्पप्रजाः स्त्रियस्तत्र न दौर्भाग्यसमाश्रिताः।
तस्मान्माहेश्वरं नाम कवचं सुरगणार्च्चितम्॥
श्रोतव्यं पठितव्यञ्च मन्तव्यं भावुकप्रदम्।
इति श्रीमाहेश्वरकवचं सर्वव्याधिनिसूदनम्।
यः पठेत्त नरो नित्यं स व्रजेच्छाङ्करं पुरम्।
इति श्रीमाहेश्वरकवचं समाप्तम्। ओँ तत्सत्

ज्वर सत्रस्य वचनम्।

स्वेदोद्गमत्वं शिरसः कण्डुः पाकौ मुखस्य च।

क्षवथुश्चान्नलिप्सा च ज्वरमुक्तस्य लक्षणम्॥
देहोलघु र्व्यपगतक्लम मोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम्॥
स्वेदः क्षवः प्रकृतिगामिमनोऽन्नलिप्सा
कण्डूश्च मूर्द्धि विगतज्वर लक्षणानि॥
व्यायामञ्च व्यवयाञ्च स्नानं चंक्रमणानि च।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत्॥

आरोग्यस्नान विधिः।

धनिष्ठा श्रवणा स्वाती ज्येष्ठा शतभिषा तथा।
रविमन्दभौमवाराश्चन्द्रोऽशुभविवर्जितः॥
केन्द्रस्थाश्चाशुभाः शस्ता व्यतीपातादि वासराः।
तिथिर्नशस्ता प्रतिपत्तृतीया नवमी तथा॥
स्नानाय रोगमुक्तानां दशमी च त्रयोदशी।
बुधेन्दु गुरु शुक्राणां वाराः स्नानेन शोभनाः॥
रोगाम्मुक्तस्य नाम्नै षा रोहिणी भद्रदायिनी।

इति भैषज्यरत्नावल्यां ज्वरचिकित्सा समाप्ता।

# ज्वरातीसाराधिकारः ।



पित्तज्वरे पित्तभवोऽतिसार-
स्तथातिसारे यदि वा ज्वरः स्यात् ।
दोषस्य दूष्यस्य समानभावा-
ज्ज्वरातिसारः कथितो भिषग्भिः ॥

ज्वरातिसारयोरुक्त मन्योन्यं भेषजं पृथक् ।
नतन्मिलितयोः कुर्य्यादन्योन्यं वर्द्धयेद्यतः ॥
प्रायोज्वरहरं भेदि स्तम्भनन्त्वतिसारनुत् ।
यतोऽन्योन्य विरुद्धत्वाद्वर्द्धनं तत्परस्परम् ॥
ज्वरातीसारिणामादौ कुर्य्याल्लङ्घन पाचने ।
प्रायस्तावाम सम्बद्धं विना न भवतो यतः ॥
ज्वरातिसारे पेयादिक्रमः स्याल्लङ्घते हितः ।
ज्वरातिसारी पेयां वा पिवेत्साम्लाश्रृतां नरः ॥

ह्रीवेरादिः ।

ह्रीवेरातिविषा मुस्त विल्वनागर धान्यकैः ।
पिवेत् पिच्छा विवन्धघ्नं शूलदोषामपाचनम् ॥
सरक्तं हन्त्यतीसारं सज्वरं वाथ विज्वरम् ।

उशीरादिः ।

उशीरं वालकं मुस्तं धन्याकं विश्वभेषजम् ।
समङ्गा धातकी लोध्रं विल्वं दीपन पाचनम् ॥

हन्त्यरोचक पिच्छाम विबद्धं सातिवेदनम् ।
सशोणितमतीसारं सज्वरं वाथ विज्वरम् ॥

गुड़ूच्यादिः ।

गुड़ूच्यतिविषा धान्य शुण्ठी बिल्वाब्द वालकैः ।
पाठा भूनिम्ब कुटज चन्दनोशीर पद्मकैः ॥
कषायः शीतलः पेयो ज्वरातीसार शान्तये ।
हल्लासारोचक च्छर्दि पिपासा दाह शान्ति कृत् ॥

पञ्चमूल्यादिः ।

पञ्चमूली वला बिल्व गुड़ूची मुस्त नागरैः ।
पाठा भूनिम्ब ह्रीवेर कुटजत्वक् फलैः शृतम् ॥
हन्ति सर्वानतीसारान् ज्वरदोषं वमिं तथा ।
सशूलोपद्रवं कासं श्वासं हन्यात्सुदारुणम् ॥
पञ्चमूली तु सामान्या योज्या पैत्ते कनीयसी ।
महती पञ्चमूली तु वातश्लेष्मातुरे हिता ॥

बृहत्पञ्चमूल्यादिः ।

पञ्चमूली शृङ्गवेर शृङ्गाटकघटं घनम् ।
जम्बूदाड़िमपत्रञ्च बलावालं गुड़ूचिका ॥
पाठा विल्वं समङ्गा च कुटजत्वक् फलं तथा ।
धान्यकं धातकी क्वाथं विषाजीरक संयुतम् ॥
पिबेत् ज्वरातिसारे च सरक्ते वाप्यरक्तके ।
अपि योगशतैस्त्यक्ते चासाध्ये सर्वरूपके ॥

धान्यशुण्ठी।

धन्याकं विश्वसंयुक्तमामघ्नं वह्निदीपनम्।
वातश्लेष्मज्वरहरं शूलातीसारनाशनम्॥
प्रथमतो धान्यशुण्ठी देया।

विल्वपञ्चकम्।

शालपर्णी पृश्निपर्णी वला विल्वं सदाडिमम्।
विल्वपञ्चकमित्येतत् क्वाथं कृत्वा प्रदापयेत्॥
अतीसारे ज्वरे च्छर्द्यां शस्यते पिल्वपञ्चकम्।

कलिङ्गादि गुड़िका।

कलिङ्गविल्व निम्बाम्र कपित्थं सरसाञ्जनम्।
लाक्षा दरिद्रे ह्रीवेरं कट्फलं शुकनासिकाम्॥
लोध्रं मोचरसं शङ्खं धातकीं वटशुङ्गकम्।
पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्॥
छायाशुष्कान् पिवेत् क्षिप्रं ज्वरातीसारशान्तये।
रक्तप्रसाधना ह्येते शूलातीसार नाशनाः॥

व्योषादि चूर्णम्।

व्योषं वत्सकवीजञ्च निम्बभूनिम्बमार्कवम्।
चित्रकं रोहिणीं पाठां दार्वीमतिविषां समाम्॥
श्लक्ष्णचूर्णीकृतं सर्वं तत्तुल्या वत्सकत्वचः।
सर्वमेकत्र संयुज्य पिवेत्तण्डुलवारिणा॥
सक्षौद्रं वा लिहेदेतत्पाचनं ग्राहि भेषजम्।

तृष्णारुचिप्रशमनं ज्वरातीसारनाशनम् ॥
प्रमेहं ग्रहणीदोषं गुल्मं प्लीहानमेव च ।
कामलां पाण्डुरोगश्च श्वयथुञ्च विनाशयेत् ॥

सर्वचूर्णसमं कुटजमूलवल्कल चूर्णं मिलित चूर्णम् अनुरूपं चतुर्गुणेन तण्डुलजलेन पिवेत्। अथवा द्विगुणेन मधुना लिहेत् ।

बृहत् कुटजावलेहः ।

कुटजत्वक् पलशतं जलद्रोणे विपाचयेत् ।
तेन पादावशेषेण शर्करापलविंशतिम् ॥
दत्त्वा पक्वा लेहपाके चूर्णानीमानि निक्षिपेत् ।
पाठा समङ्गा विल्वञ्च धातकी मुस्तकं तथा ॥
दाड़िमातिविषालोध्रं शाल्मलीवेष्टसंज्ञकम् ।
रसाञ्जनं धान्यकञ्च उशीरं वालकं तथा ॥
प्रत्येकमेषां कर्षांशं निक्षिपेत् पाकविद्भिषक् ।
शीते च मधुनस्तत्र कुड़वार्द्धं विनिक्षिपेत् ।
सर्वरूपमतीसारं ग्रहणीं सर्वरूपिणीम् ॥
रक्तस्रुतिं ज्वरंशोथं वमिमर्शोगदं तृषाम् ॥
अम्लपित्तं तथा शूलमग्निमान्द्यं नियच्छति ।
अतीसारे ग्रहण्याञ्च दृष्टफलोऽयम् ।

तन्त्रान्तरोक्तो बृहत् कुटजावलेहः ।

कुटजत्वक्पलशतं जलद्रोणे विपाचयेत् ।
तेन पादावशेषेण शर्कराप्रस्थकं पचेत् ॥

ततो लेहे घनीभूते चूर्णानीमानि दापयेत्।
लवङ्गं जीरकं मुस्तं धातकी विल्व वालकम्॥
एला पाठा त्वचं शृङ्गी जातीफलमधूरिका।
शक्राह्वातिविषासारं काकोली च रसाञ्जनम्॥
शाल्मलीवेष्टकं यष्टी समङ्गा रक्तचन्दनम्।
वटशृङ्गं खादिरञ्च जम्बाम्रपल्लवं तथा॥
एषामच्च समं चूर्णं प्रक्षिपेत् पाकविद्भिषक्।
सिद्धऽवतारिते शीते मधुनः कुड़वं न्यसेत्॥
खादयेत्कर्षमात्रन्तु अनुपानविधिं शृणु।
अनुपानं प्रदातव्यं दधिमस्तुलवजापयः॥
चम्पककदलीमूल स्वरसं कर्षमानतः।
भक्षयेत्प्रातरुत्थाय संग्रहग्रहणीं जयेत्॥
रोगं रक्तातिसारञ्च चिरकाल समुद्भवम्।
पक्वापक्वमतीसारं नानावर्णं सवेनदम्॥
शोथातीसार सहितं ज्वरमाशु व्यपोहति।

अन्यत्राय ग्रहणीगजेन्द्रावलेहः। आमरक्तातिसारे केवले वातिसारे ग्रहण्याञ्च दृष्ट फलोऽयम्।

## अथ रसप्रयोगः।

### सिद्धप्राणेश्वरो रसः।

गन्धेशाभ्रं पृथग्वेद भागमन्यच्च भागिकम्।
सर्ज्जिटङ्क यवक्षाराः पञ्चैव लवणानि च॥
वरांव्योषेन्द्रबीजानि द्विजीराग्नि यमानिकाः।
सहिङ्गु बीजसारञ्च शतपुष्पा सुचूर्णिता॥

सिद्धप्राणेश्वरः सूतः प्राणिनां प्राणदायकः।
माषैकं भक्षयेदस्य नागवल्लीदलैर्युतम्॥
उष्णोदकानुपानञ्च दद्यात्तत्रपलत्रयम्।
ज्वरातिसारेऽतिस्रुतौ केवले वा ज्वरेऽपि च॥
घोरे त्रिदोषजे रोगे ग्रहण्यामस्रगामये।
क्षतरोगे च शूले च शूले च परिणामजे॥

कनकसुन्दरो रसः।

हिङ्गुलं मरिचं गन्धं पिप्पली टङ्कनं विषम्।
कनकस्य च बीजानि समांशं विजयाद्रवैः॥
मर्दयेद्याम मात्रन्तु चणमात्रा वटी कृता।
भक्षणाद्ग्रहणीं हन्ति रसः कनकसुन्दरः॥
वह्निमान्द्यं ज्वरं तीव्रमतीसारञ्च नाशयेत्।
पथ्यं दध्योदनं दद्याद्यद्वा तक्रौदनं चरेत्॥

गगनसुन्दरो रसः।

टङ्कनं दरदं गन्धमभ्रकञ्च समं समम्।
दुग्धिकाया रसेनैव भावयेच्च दिनत्रयम्॥
द्विगुञ्जं मधुना देयं श्वेतसर्जस्य वल्कम्।
विविधं नाशयेद्रक्तं ज्वरातीसारमुल्वणम्॥
पथ्यं तक्रं पयश्छागमामशूलं विनाशयेत्।
अग्निवृद्धिकरो ह्येष रसो गगनसुन्दरः॥

कनकप्रभा वटी।

सुवर्णबीजं मरीचं मराल-
पादं कणा टङ्कनकं विषञ्च।

गन्धं जयाह्निर्दिवसं विमर्द्य
गुञ्जाप्रमाणां वटिकां विदध्यात्॥
एषातिसार ग्रहणीं ज्वराग्नि
मान्द्यं निहन्यात् कनकप्रभेयम्।
दध्योदनं पथ्यमनुष्णवारि
मांसं भजेत्तित्तिरि लावकानाम्॥

इति भैषज्यरत्नावल्यां ज्वरातिसाराधिकारः।

## प्लीहयकृदधिकारः।

यमानिकादि चूर्णम्।

यमानिकाचित्रक यावशूक
षड्ग्रन्थि दन्ती मगधोद्भवानाम्।
प्लीहानमेतद्विनिहन्ति चूर्ण
मुष्णाम्बुना मस्तुसुरासवैर्वा॥
तालपुष्पोद्भवः क्षारः सगुड़ः प्लीहनाशनः।
चित्रस्य मूलकं पिष्ट्वा कृत्वा तु वटिकात्रयम्।
कदली पक्वमध्येन भक्षणात् प्लीहनाशनम्॥
गुड़ैश्चित्रकमूलं वा रजन्यर्कदलं तथा।

धा.।की पुष्पचूर्णं वा प्रत्येकं प्लीहनाशनम् ॥

रसेन जम्बीरफलस्य शङ्ख-
नाभीरजः पीतमशेषमेव ।
कर्षप्रमाणं शमयेत् समूलं
प्लीहामयं कूर्म्मसमानमाशु ॥

अर्कलवणम् ।

अर्कपत्रं सलवणमन्तर्धूमं दहेन्नरः ।
मस्तुना तत्पिवेत् क्षारं प्लीहगुल्मोदरापहम् ॥
प्लीहोद्दिष्टां क्रियां सर्वां यकृन्नाशाय योजयेत् ।
दध्ना भुक्तवतो वामबाहुमध्ये शिरां भिषक् ॥
विध्येत् प्लीहविनाशाय यकृन्नाशाय दक्षिणे ।
प्लीहानं मर्दयेद्गाढं दुष्टरक्तं प्रवर्त्तयेत् ॥

दध्ना भुक्तवता वाम बाहोः कुर्परसन्धौ अभ्यन्तरतः शिरां विध्येत ।

लशुनं पिप्पलीमूलमभयाञ्चैव भक्षयेत् ।
पिवेद्गोमूत्रगण्डूषं प्लीहरोग निवृत्तये ॥
प्लीहजित् शरपुङ्खायाः कल्कस्तक्रेण सेवितः ।

मानकादि गुड़िका ।

माणमार्गामृता वासा स्थिरा सैन्धव चित्रकम् ।
नागरं तालपुष्पञ्च प्रत्येकञ्च त्रिकार्षिकम् ॥
विटसौवर्चल क्षार पिप्पल्यश्चापि कार्षिकाः ।
एतच्चूर्णीकृतं सर्वं गोमूत्रस्याढ़के पचेत् ।

सान्द्रीभूते गुड़ीकुर्य्याद्दत्त्वा त्रिपल माक्षिकम्।
यकृत् प्लीहोदरहरो गुल्मार्शो ग्रहणीहरः।
योगः परिकरो नाम्नाह्यग्निसन्दीपनः परः।

एतत्सर्वचूर्णं प्रक्षिप्य गोमूत्राढ़के पचेत्ततो गुड़वत् पाकः शीतं मधु प्रक्षिप्य गुड़िका कार्य्या। परिकार विरेकसत्कारकत्वात् परिकरः सङ्के समारम्भ विरेकयोरिति।

### हपुषाद्याद्याद्यकादि गुड़िका।

माणमार्गस्थिरा वह्नि स्नुही नागरसैन्धवम्।
तालरख्डं क्रिमिघ्नञ्च हबुषं चविका वचा॥
विड़सौवर्चल क्षारपिप्पली शरपुङ्खकम्।
जीरकं पारिभद्रञ्च प्रत्येकं कर्षकद्वयम्॥
सार्द्धाढ़के गवां मूत्रे पचेत्सर्वं सुचूर्णितम्।
सान्द्रीभूते क्षिपेदेषां चूर्णकं कर्षसम्मितम्॥
अजाजी त्र्यूषणं हिङ्गु यमानी पुष्करं शटी।
त्रिवृद्दन्ती विशाला च दत्त्वा त्रिपल माक्षिकम्॥
खादेदग्निबलापेक्षी वृद्धा चानुपिवेन्नरः।
यकृत् प्लीहोदरानाह गुल्मं पाण्डुं सकामलम्॥
कुक्षिशूलञ्च हृच्छूलं पार्श्वशूलमरोचकम्।
शोथञ्च श्लीपदं हन्ति जीर्णञ्च विषमज्वरम्॥

### चित्रकादि लौहम्।

चित्रकं नागरं वासा गुड़ूची शालपर्णिका।
तालपुष्प मपामार्गो माणकं कार्षिकत्रयम्॥

लौहमभ्रकणा ताम्रं चारको लवणानि च।
पृथक्कर्षांशमेतेषां चूर्णमेकत्र चिक्कणम्॥
चतुःप्रस्थे गवांमूत्रे पचेन्मन्देन वह्निना।
सिद्धशीतं समुद्धृत्य माचिकं द्विपलं चिपेत्॥
चित्रकादिरयं लौहो गुल्मप्लीहोदरामयम्।
यकृतं ग्रहणीं हन्ति शोथं मन्दानलं ज्वरम्॥
कामलां पाण्डुरोगञ्च गुदभ्रंशं प्रवाहिकाम्।

अभयालवणम्।

पारिभद्रपलाशार्कस्नुह्यपामार्गचित्रकान्।
वरुणाग्निमन्थवसुकश्वदंष्ट्राबृहतीद्वयम्॥
पूतिकास्फोतकूटजकोषातक्यः पुनर्नवा।
समूलपत्रशाखाश्च खोदयित्वा उदूखले॥
तिलनालप्रदीप्ताग्नि सुदग्धं भस्मशीतलम्।
चारप्रस्थं गृहीत्वा तु न्यसेत्पात्रे दृढे नवे॥
जलद्रोणे विपक्तव्यं ग्राह्यं पादावशेषितम्।
पूर्ववत् चारकल्केन स्रावयीतविचक्षणः॥
प्रस्थमेकञ्च लवणं तदर्द्धाञ्च हरीतकीम्।
तुल्याम्बुभागं गोमूत्रं साधयेन्मृदुना ग्निना॥
किञ्चित् सवाप्यसान्द्रे च सम्यक् सिद्धेऽवतारिते।
अजाजीचूर्णं हिङ्गु यमानी पौष्करं शटी॥
एतैरर्द्धपलैर्भागैश्चूर्णीं कृत्वा प्रदापयेत्।
अभयालवणं नाम भक्षयेच्च यथाबलम्॥
व्याधिञ्च वीक्ष्य मतिमान अनुपानं यथाहितम्।

ये च कोष्ठगतारोगास्तान्निहन्ति न संशयः ॥
यकृत् प्लीहोदरानाह गुल्माष्ठीलाग्निसादजित् ।
हन्यार्च्छिरोऽर्त्तिं हृद्रोग शर्कराश्मरिनाशनम् ॥

गुड़पिप्पली ।

विड़ङ्गं त्र्यूषणं कुष्ठं हिङ्गुलवणपञ्चकम् ।
विक्षारं फेनकं वह्निः श्रेयसी चोपकुञ्चिका ॥
तालपुष्पोद्भवं क्षारं नाड्याः कुष्माण्डकस्य च ।
अपामार्गस्य चिञ्चायाश्चूर्णानि चिक्कणानि च ॥
सर्वचूर्णसमं देयं चूर्णमत्र कणोद्भवम् ।
एतस्माद्द्विगुणाच्चूर्णात् पुराणो द्विगुणो गुड़ः ॥
मर्दयित्वा दृढ़े पात्रे मोदकानुपकल्पयेत् ।
भक्षयेदुष्णतोयेन प्लीहानं हन्ति दुस्तरम् ॥
यकृतं पञ्च गुल्मञ्च उदरं सर्वरूपकम् ।
जीर्णज्वरं तथाशोथं कासं पञ्चविधं तथा ॥
अश्विभ्यां निर्म्मिताश्रेष्ठा बालानां गुड़पिप्पली ।

गुड़ूच्यादिचूर्णम् ।

गुड़ूच्यतिविषाशुण्ठी भूनिम्बोयवतिक्तकम् ।
मुस्तकृष्णा यवक्षारः कासीसं भ्रमरातिथिः ॥
एतेषां समभागेन चूर्णमेव विनिर्द्दिशेत् ।
यकृत् प्लीहपाण्डुरोगमग्निमान्द्यमरोचकम् ॥
ज्वरमष्टविधं हन्ति साध्यासाध्यमथापि वा ।
नानादेशोद्भवञ्चैव वारिदोष भवं तथा ॥

विरुद्धभेषजभवं ज्वरमाशुव्यपोहति ।

पिप्पलीवर्द्धमानानि ।

क्रमवृद्धयाद्दशाहानि दशपिप्पलिकं दिनम् ।
वर्द्धयेत्पयसा सार्द्धं तथैवापनयेत्पुनः ॥
जीर्णेऽजीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनः ॥
दशपैप्पलीकः श्रेष्ठो मध्यमः षट् प्रकीर्त्तितः ।
यस्त्रिपिप्पली पर्य्यन्तः प्रयोगः सोऽवरः स्मृतः ॥
बृंहणं वृष्यमायुष्यं प्लीहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥
पञ्चपिप्पलिकश्चापि दृश्यते वर्द्धमानकः ।
पिष्टा च बलिभिः पेयाः शृतामध्यबलैर्नरैः ॥
शीतीकृत्य ह्रस्वबलैर्देहदोषामयान् प्रति ।

चित्रकपिप्पलीघृतम् ।

पिप्पली चित्रकान्मूलं पिष्टासम्यग्विपाचयेत् ।
घृतं चतुर्गुणं क्षीरं यकृत् प्लीहोदरापहम् ॥

पिप्पलीघृतम् ।

पिप्पली कल्कसंयुक्तं घृतं क्षीरं चतुर्गुणम् ॥
पचेत् प्लीहाग्निसादादि यकृद्रोगहरं परम् ॥

चित्रकघृतम् ।

चित्रकस्य तुलाक्वाथे घृत प्रस्थं विपाचयेत् ।

आरनालं तद्द्विगुणं दधिमण्डं चतुर्गुणम् ॥
पञ्चकोलकतालीशक्षारैलवणसंयुतैः।
द्विजीरक निशायुग्ममरिचं तत्र दापयेत् ॥
प्लीहगुल्मोदराध्मानपाण्डुरोगारुचिज्वरान्।
वस्तिहृत्पार्श्वकट्युरुशूलोदावर्त्तपीनसान् ॥
हन्यात्पीतं तदर्शांसि शोथघ्नं वह्निदीपनम्।
बलवर्णकरञ्चापि भस्मकञ्च नियच्छति ॥

रोहीतकघृतम्।

रोहीतकत्वचः श्रेष्ठा पलानां पञ्चविंशतिः।
कोल द्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥
पलिकैः पञ्चकोलैश्च तैः सर्वैश्चापितुल्यया।
रोहीनक त्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥
प्लीहाभिवृद्धिं शमयेदेतदाशु प्रयोजितम्।
तथा गुल्मज्वरश्वासक्रिमिपाण्डुत्वकामलाः ॥

महारोहीतकघृतम्।

रोहितकात्पलशतं चोदयेद्बदराढ़कम्।
साधयित्वा जलद्रोणे चतुर्भागावशेषितम् ॥
घृतप्रस्थं समावाप्य च्छागक्षीरं चतुर्गुणम् ॥
तस्मिन्दद्यादिमान् कल्कान् सर्वांस्तानक्षसंमितान्।
व्योषं फलत्रिकं हिङ्गुयमानी तुम्बुरु विडम्।
अजाजी कुष्टलवणं दाड़िमं देवदारु च ॥
पुनर्नवा विशाला च यवक्षारं सपौष्करम्।

विड़ङ्गं चित्रकञ्चैव हवुषा चविका वचा॥
एभिर्घृतं विपक्वन्तु स्थापयेद्भाजने शुभे।
पाययेत् त्रिफलां मात्रां व्याधिं बलमवेक्ष्य च।
रसकेनाथ यूषेण पयसा वापि भोजयेत्।
उपयुक्ते घृते त्वस्मिन् व्याधीन् हन्यादिमान् बहून्॥
यकृत् प्लीहोदरञ्चैव प्लीहशूलं यकृत्तथा।
कुक्षिशूलञ्च हृच्छूलं पार्श्वशूलमरोचकम्॥
विबन्धशूलं शमयेत् पाण्डुरोगं सकामलम्।
छर्द्यतीसारशूलघ्नं तन्द्रीज्वरविनाशनम्॥
महारोहीतकं नाम प्लीहानं हन्ति दारुणम्।

अत्र वदराढ़कं त्यक्त्वा जलद्रोणे इति ज्ञेयं तेन जलद्रोण द्वयेन रोहीतक पलशतस्य वदरचूर्णाढ़कस्य च क्वाथोयुक्तः अन्यथा जलस्य अल्पत्वात्तथाविधः पाको न स्यात्। केचिदिह गृह्णन्ति तन्त्रान्तरसंवादात् क्षारद्वयं पञ्चलवणञ्च। रोहितवदराभ्यां मिलित्वा क्वाथः कर्त्तव्य इति वृद्धाः।

प्लीहारिरसः।

पारदं गन्धकं टङ्कं विषं व्योषं फलत्रिकम्।
तोलकस्य समोपेतं जैपालञ्च तदर्द्धकम्॥
किंशुकस्य रसेनैव याममात्रन्तु मर्दयेत्।
गुञ्जामात्रां वटीं कृत्वा छायायां शोषयेत्ततः॥
वटिकैका प्रदातव्या शृङ्गवेर रसेन च।
गुदाङ्कुरे गुल्मशूले प्लीहशोथे कफात्मके॥

उदावर्त्ते वातशूले श्वासकासज्वरेषु च ।
रसः प्लीहारिनामायं कोष्ठामयविनाशनः ।
आमवातगदच्छेदी श्लेष्मामयविनाशनः ।
अत्र सर्व्वेषामर्द्धं जयपालम् ।

वासुकिभूषणोरसः ।

सूतेन वङ्गन्तु समं नियोज्य
तत्तुल्य शुल्वेन च गन्धकेन ।
विमर्द्दयेदर्करसेन यामं
मृदा च संलिप्य पुटं ददीत ॥
वासारसैस्तं परिभावयेच्च
रसो भवेद्वासुकी भूषणोऽयम् ।
प्लीहस्य गुल्मस्य च शान्तयेऽस्य
वल्लञ्च दद्याद्वसुचूर्णयुक्तम् ॥

वसु सैन्धवम् ।

विद्याधरोरसः ।

गन्धकं तालकं ताप्यं मृतं ताम्रमनःशिला ।
शुद्धं सूतञ्च तुल्यांशं मर्द्दयेद्भावयेद्दिनम् ॥
पिप्पल्याश्च कषायेन वज्रीक्षीरेण भावयेत् ।
वल्लञ्च भक्षयेत् क्षौद्रैर्गुल्मप्लीहादिकं जयेत् ॥
रसो विद्याधरो नाम गोदुग्धञ्च पिवेदनु ।

रसराजः ।

गन्धकेन मृतं ताम्रं शुद्धगन्धकतुल्यकम् ।

द्वयोः पादं शुद्धरसं मर्दयेच्चूर्णद्रवैः॥
पुटेद्गजपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत्।
गुञ्जाद्वयं लिहेत् क्षौद्रैः प्लीहगुल्मनाशनम्
यकृच्छूलं ज्वरं हन्ति कान्तिपुष्टिविवर्द्धनः।
रसराज इति ख्यातो रोगवारणकेशरी॥

प्लीहान्तकोरसः।

हतशुल्वञ्च तारञ्च गगनायस मुक्तिका।
दरदं पुष्पकं सूतं गन्धकं नवमं तथा॥
गुग्गलु त्रिकटु रास्ना तथा जैपालवीजकम।
त्रिफला कटुका दन्ती देवदारो तु सैन्धवम्॥
निवृता तु,यवक्षारं वातारितैलमर्द्दितम्।
अष्टादशापि पाण्डुत्व मनाहं विषमज्वरम्॥
अजीर्णमामं कफञ्च क्षयञ्च सर्वशूलकम्।
कासं श्वासञ्च शोथञ्च सर्वमाशु व्यपोहति॥
प्लीहान्तको रसो नाम प्लीहोदरविनाशनः।

लोकनाथरसः।

पारदं गन्धकञ्चैव समभागं विमर्दयेत्।
मृताभ्रं रसतुल्यञ्च पुनस्तत्रैव मर्द्दयेत्॥
रस त्रिगुणलौहञ्च लौहतुल्यञ्च ताम्रकम्।
वराटिकाया भस्माथ पारदात्रिगुणं कुरु॥
नागवल्लीरसेनैव मर्दयेद्यत्नतो भिषक्।
पुटेद्गजपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत्॥

मधुना पिप्पलीचूर्णं सगुड़ां वा हरीतकीम्।
अजाजीं वा गुड़ेनैव भक्षयेदनुपानतः॥
यकृत्प्लीहोदरहरः प्लीहश्वयथुनाशनः।
जीर्णज्वरं तथा पाण्डुं कामलाञ्च विनाशयेत्॥
अग्निमान्द्यञ्च शमयेल्लोकनाथो रसोत्तमः।
प्रसिद्धोऽयम्।

लोकनाथोरसः।

रसगन्धौ समौ कृत्वा मर्दयेदर्द्धयामकम्।
रसतुल्यं मृतञ्चाभ्रं द्विगुणं लौहताम्रकम्॥
ताम्रस्य द्विगुणं भस्मकपर्दकसमुद्भवम्।
नागवल्लीरसैर्यामं मर्दयेदतिनिर्जने॥
ततो लघुपुटं दत्त्वा सुशीतं ग्राहयेत्तथा।
द्विगुञ्जमार्द्रकद्रावैः खादिरत्वग्रसं पिवेत्।
यकृत् प्लीहोदरं शोथमग्निमान्द्यादिकं जयेत्।
लोकनाथो रसो नाम सर्वज्वरविनाशनः॥

लौहं ताम्रञ्च प्रत्येकं रसद्विगुणम्। आर्द्रकरसेन वटीं भक्षयित्वा खदिरं जले संस्थाप्य तज्जलं पश्चात् पेयमिति वृद्ध व्यवहारः।

वृहल्लोकनाथोरसः।

शुद्धसूतं द्विधा गन्धं खल्लेकुर्य्याच्च कज्जलम्।
सूततुल्यं जारिताभ्रं मर्दयेत्कन्यकाम्बुना
ततो द्विगुणितं दद्यात्ताम्रं लौहं प्रयत्नतः।

सूतावध गुणं देयं वराटीसम्भवं रजः ॥
अर्ककमाचीरसैनैव सर्वं तच्चोलकीकृतम ।
ततो गजपुटे पश्चात् स्वाङ्गशीतं समुद्धरेत् ॥
शिवं सम्पूज्य यत्नेन द्विजातीन् परितोष्य च ।
भक्षयेदस्य चूर्णस्य द्विगुञ्जं मधुना सह ॥
प्लीहानमग्रमांसञ्च यकृतं सर्वरूपिणम् ।
जीर्णज्वरं तथा गुल्मं कामलां हन्ति दारुणाम् ॥

रोहीतकलौहम् ।

रोहीतकसमायुक्तं त्रिकत्रययुतन्त्वयः ।
प्लीहानमग्रांसञ्च शोथं हन्ति न संशयः ॥

यकृत् प्लीहारिलौहम् ।

हिङ्गुलसम्भवं सूतं गन्धकं लौहमभ्रकम् ।
तुल्यं द्विगुणताम्रन्तु शिला च रजनी तथा ॥
जयपालं टङ्कनञ्च शिलाजतु समं रमात् ।
एतत्सर्वं समाहृत्य चुर्णीकृत्य विमिश्रयेत् ॥
दन्तीत्रिवृच्चित्रकञ्च निर्गुण्डी त्र्यूषणं तथा ।
आर्द्रकं भृङ्गराजञ्च रसैरेषां पृथक् पृथक् ॥
भावयित्वा वटीं कुर्य्याद्वदराास्थिमितां भिषक् ।
प्लीहानं यकृतञ्चैव चिरकालानुबन्धिनम् ॥
एकजं द्वन्द्वजञ्चैव सर्वदोषभवं तथा ।
हन्यादष्टोदरागोह ज्वरं पाण्डुञ्च कामलाम् ॥
शोथं हलीमकं हन्ति मन्दाग्नित्वमरोचकम् ।

यकृत् प्लीहारिनामेदं लौहं जगतिदुर्लभम् ॥

### यकृदरिलौहम्।

द्विकर्षं लौहचूर्णस्य गगनस्य पलार्द्धकम्।
कर्षं शुद्धं मृतं ताम्रं लिम्पाकाङ्घ्रित्वचः पलम्
मृगाजिनभस्म पलं सर्वमेकत्र कारयेत्।
नवगुञ्जा प्रमाणेन वटिकां कारयेद्भिषक् ॥
यकृत् प्लीहोदरञ्चैव कामलाञ्च हलीमकम्।
कासं श्वासं ज्वरं हन्ति बलवर्णाग्निवर्द्धनम् ॥
यकृद्दरिनाम लौहं सर्वव्याधिनिसूदनम्।

### महामृत्युञ्जयलौहम्।

शुद्धसूतं समं गन्धं जारिताभ्रं समं तथा।
गन्धस्य द्विगुणं लौहं मृतताम्रं चतुर्गुणम् ॥
द्विक्षारं सैन्धवं वीटं वराटीभस्म शङ्खकम्।
चित्रकं कुनटी तालं रामठं कटुका तथा ॥
रोहितं त्रिवृता चिञ्चा विशाला धवलङ्कठम्।
अपामार्गं तालखण्डमल्लिकाच निशाद्वयम् ॥
प्रियङ्गिन्द्रयवं पथ्याअजमोदायमानिका।
तुल्यक शरपुङ्खा च यक्कृद्दरीरसाञ्जनम्।
प्रत्येकं शाणमानेन भावयेदार्द्रक द्रवैः।
गुड़ूच्याः स्वरसेनापि मधुनः कुड़वार्द्धकम् ॥
वटिकां कारयेद्वैद्यो गुञ्जाषट् प्रमितां पुनः।
अनुपानं प्रदातव्यं बुद्धादोषानुसारतः ॥

भक्षयेत्प्रातरुत्थाय सर्व्वरोग कुलान्तकम्।
प्लीहानं ज्वरमुग्रञ्च कासञ्च विषमज्वरम्॥
आमवातं यकृच्छूल श्वासमर्शः शिरोरुजम्।
गुल्मशोथोदरानाहमग्रमांसं यकृत् क्षयम्॥
सकामलं पाण्डुरोगमुदरञ्च सुदारुणम्।
रोगानीक विनाशाय केशरीकरिणो यथा॥
मृत्युञ्जयो महालौहः प्लीहगुल्मविनाशनः।
प्राणिनान्तु हितार्थाय शम्भुनापरिकीर्त्तितः॥

सर्व्वेश्वरलौहम्।

शुद्धसूतं पलं गन्धं द्विगुणन्तु मृताभ्रकम्।
त्रिपलं मृतताम्रञ्च पलार्द्धं स्वर्णमाक्षिकम्॥
जैपालं चित्रकं माणं शूरणं वराटकर्णकम्।
ग्रन्थिकं त्रिफला व्योषं त्रिवृता खरमञ्जरी॥
दण्डोत्पलाग्निशिखालोकुलिशं नागदन्तिका।
सूर्य्यावर्त्तञ्च सञ्चूर्ण्य कर्षमात्रं विमर्दयेत्॥
आर्द्रकस्य रसेनैव चूर्णयित्वा पुनः क्षिपेत्।
त्रिपलं लौहचूर्णस्य ततः खादेत् शुभेऽहनि॥
सम्पूज्य भास्करं विष्णुं गणनाथं द्विजोत्तमम्।
माषमात्रञ्च मधुना कृत्वा शीतजलं पिबेत्॥
चूर्णं सर्व्वेश्वरं नाम सर्व्वरोगहरं भवेत्।
कठोरप्लीहनाशाय गुल्मोदरहरं तथा॥
कामलात् पाण्डुमानाहं यकृत् क्रिमिकृतामयाम्।
विचर्चीमस्रपित्तञ्च कण्डूं कुष्ठं विनाशयेत्॥

प्लीहानमम्लपित्तञ्चाप्यग्निमान्द्यं सुदुस्तरम्।
श्रीकरं कान्तिजननं शुक्रायुबलवर्द्धनम्॥

यकृत्प्लीहारिलौहम्।

लौहाद्धमभ्रकं शुद्धं सूतमप्यर्द्धभागिकम्।
द्विगुणामयसश्चूर्णात्त्रिफलां सामुद्रकात्तथा॥
द्विरष्ट वारिणोभागमष्टांशिष्टन्तु कारयेत्।
तेन चाष्टावशिष्टेन समेनाज्येन यत्नतः॥
रसेन वहुपुत्राया द्विगुण क्षीर संयुतम्।
लौहपात्रे पचेद्दर्व्या लौहपात्राभिधानतः॥
अभ्रकं निहितं शुद्धं पारदञ्च सुमूर्च्छितम्
अयसोऽर्द्धमितं चूर्णमादौ पाके विनिक्षिपेत्॥
कन्दं कापालिका चव्यं विड़ङ्गं स वृहद्दलम्।
शरपुङ्खा च पाठा च चित्रकं समहौषधम्॥
लवणानि च सर्वाणि सक्षारं वृद्धदारकम्।
दीप्यकञ्च तथा सोभ्जुं लौहाभ्रक समं क्षिपेत्॥
प्लीहोदर यकृद्गुल्मान् हन्ति शस्त्राग्निभिर्विना।
प्रयोज्योऽयं यहावीर्य्यो लौहो लौहविदाम्बरैः॥
प्लीहोदर विनाशाय दद्याद्द्वे द्वे पुटे पृथक्।
माणेन घण्टकर्णेन शूरणेन पृथक् पृथक्॥

यकृत्प्लीहोदरलौहम्।

लौहार्द्धमभ्रकं शुद्धं सूतमभ्राद्धभागिकम्।
त्रिगुणामयसश्चूर्णात्त्रिफलां मभ्रसंयुतात्॥

द्विरष्ट वारिणो भाग मष्टशेषन्तु कारयेत्।
तेन चाष्टावशेषेण समेनाज्येन यत्नतः॥
रसेनबहुपुत्नाया द्विगुणक्षीर सम्मितम्।
लौहमय्या पचेद्दर्व्या पात्ने चायसिसृण्मये॥
दिव्यौषधिहत लौहं पुटितं पुटनौषधैः।
पचेत्पाकविधिज्ञस्तु वह्निना मृदुना शनैः॥
अभ्रकं निहतं शुष्टं सूतकं विधिमूर्च्छितम्।
अयसश्चार्द्ध भागेस्तु आदौ पाके विनिक्षिपेत्॥
कन्दकापालिका च्व्यं विडङ्ग सहहरलम।
शरपुङ्खा च पाठा च चित्रकञ्च महौषधम्॥
लवणानि च सर्वाणि सक्षारं हरदारकम्।
दीप्यकञ्च तथा सिक्थं लौहा भ्रसमं क्षिपेत्॥
प्लीहोदर यकृद्गुल्मान् हन्ति क्षाराग्निभिर्विना।
प्रयोगोऽयं महावीर्य्यो लौहो लौहविदाम्बर॥
प्लीहोदर विनाशाय दद्याद्वे द्वे पुटे पृथक्।
माणेनघण्टकर्णेनशूरणेनाधिकं पुनः॥

रोहीतकाद्यं चूर्णम्।

रोहीतकं यवक्षारो भूनिम्बः कटुरोहिणी।
मुस्तकं नरसारञ्च वीरा विश्वं सुचूर्णितम्॥
माषमात्रं ततः खादेच्छीत तोयानुपानतः।
यकृद्रोगं निहन्त्याशु भास्करस्तिमिरं यथा॥

महाद्रावकम्।

तृषचित्रमपामार्गं चिञ्चाकुष्माण्डनाडिका।

स्नूहीतालस्यपुष्पञ्च वर्षाभूर्वेतसं तथा ॥
एतेषां चारमाहृत्य लिम्पाक स्वरसेन च ।
चालयित्वा चारतोयं वस्त्रपूतञ्च कारयेत् ॥
चण्डातपेन संशोष्य ग्राह्यं तद्द्रवशोचितम् ।
एतस्य द्विपलं ग्राह्यं यवचारपलद्वयम् ॥
स्फटिकारि पलञ्चैव नरसार पलस्तथा ।
पलार्द्धं सैन्धवं ग्राह्यं टङ्कणं तोलकद्वयम् ॥
कासीसं तोलकञ्चैव मुद्राशङ्खञ्च तोलकम् ।
टाकमोचं कर्षकञ्च तोलं समुद्रफेनकम् ॥
सर्व्वमेकत्र सञ्चूर्ण्य वकयन्त्रेण साधयेत् ।
महाद्रावकमेतद्धि योज्यञ्च रसजारणे ।
हन्ति गुल्मादिकान्रोगान् यकृत् प्लीहोदराणि च ।

शङ्खद्रावकः ।

अर्कः स्नुही तथा चिञ्चातिलारग्वधचित्रकम् ।
अपामार्गं भस्मसमं वस्त्रपूतं जलं हरेत् ॥
मृद्वग्निना पचेत्तत्तु यावल्लवणतां गतम् ।
लवणेन समौ ग्राह्यौ द्वौ चारौ टङ्कनं तथा ॥
समुद्रफेनगोदन्ता कासीसं सोरका तथा ।
द्विगुणं पञ्चलवणं मातुलुङ्गरसेन च ॥
काचकूप्यान्तु सप्ताहं वासयेदम्लयोगतः ।
शङ्खचूर्णपलं दत्त्वा वारुणीयन्त्रमुद्धरेत् ॥
सर्वधातून् हरेच्छीघ्रं वराटीशङ्खकादिकान् ।
उदरादिकरोगाणां सद्यो नाशकरः परः ॥

शङ्खद्रावकोरसः ।

योगिनी भैरवाभ्याञ्च वलिमादौ प्रदापयेत् ।
पश्चाद्यन्त्रञ्च कर्त्तव्यमेवाह परमेश्वरी ॥
रसः शङ्खद्रवोनाम शम्भुदेवेन भाषितः ।
गुह्याद् गुह्यतमं गुह्यमिदानीं कथ्यते मया ॥
शङ्खचूर्णं यवक्षारं सर्जिक्षारं सटङ्कनम् ।
समञ्च पञ्चलवणं स्फटिकारि नृसादरः ॥
काचकूप्यां ततः क्षिप्रा वारुणीयन्त्रमुद्धरेत् ।
यामार्द्धं द्रावयत्येष शङ्खशुक्ति वराटकान् ॥
अर्शांसि नाशयेत् षट् च मूत्रकृच्छ्राश्मरीस्तथा ।
उदराष्टविधं हन्ति गुल्मप्लीहोदराणि च ॥
अजीर्णं नाशयेच्छीघ्रं ग्रहणीञ्च विसूचिकाम् ।
भुक्तशेषे च भोक्तव्यो माधमात्रो रसोत्तमः ॥
क्षणमात्राद्भवेद्यस्य पुनर्भोजनमिच्छति ।
प्रत्यहं भोजनान्ते च सेव्योऽयं रसोत्तमः ॥
न रुजायां भयं क्वापि सत्यं सत्यं वदाम्यहम् ।
न देयं यस्यकस्यापि सदागोप्यञ्च कारयेत् ॥
रसः शङ्खद्रवोनाम वैद्यानामुपकारकः ।

महाद्रावकरसः ।

शुद्धं काञ्चनमाक्षिकं मृदुतरं कांस्याभिधं तत्तथा
सिन्धुत्थं विमलं रसाञ्जनवरं फेनः स्रवन्तीपतेः ।
क्षारौसर्जिक साम्भलौ सुविमलौ भागास्त्वमीषां समाः
सप्तानां सदृशन्तु टङ्कनमिहाप्यार्द्धं नृसारः सितः ॥

तत्तुल्या स्फटिकारिका विमलया: शुक्लो यवक्षारजः
कासीसं त्रितयं यवाग्रज समं सञ्चूर्ण्य सर्वं न्यसेत्।
पात्रेकाचमये मृदम्बरवृते यन्त्रे बकाख्ये भिषग्
ज्वालेन क्रमवह्निनात्यवहितोऽमीषां रसं पातयेत्॥
योद्राग्भस्मवराटिकां प्रकुरुते सोऽयं महाद्रावकः
को वक्तुं प्रभवेदमुष्य नितरां सम्यग्गुणान् भूतले।
एतद्बल्लचतुष्टयं सह गिलेत् शुण्ठ्या लवङ्गेन वा
तत्पश्चात्परिवासितं बहुगुणं ताम्बूलकं भक्षयेत्।
प्रासङ्गात्कथयामि तान् शृणु गुणान् अस्यैव कांश्चित्परान्
निःशेषं विनिहन्त्यसौ चिर भवान्यष्टोदराणि ध्रुवम्।
गुल्मं पाण्डुहलीमकं सुकठिनामष्ठीलिकां कामलां
मन्दाग्निं विषमाग्नितां बहुविधान् शोथांश्च शूलानपि॥
सर्वांशांसिभगन्दरान् क्रिमिगदान् पञ्चैव कासांस्तथा
हिक्काश्लीपदकोषवृद्धिमरुचिं व्याधिं महादारुणम्।
नव्यं वा चिरजं ज्वरं बहुविधं छर्दिं क्रिमीन् विंशतिं
यक्ष्माणं चिरजामवातपिडका वीसर्पं विस्फोटकम्॥
उन्मादं स्वरभेदमर्बुदमपि स्वेदञ्च हृत्पाणिजं
जिह्वास्तम्भगलग्रहं चिरभवं ग्रीवारुजा मुत्त्वणाम्।
नासाकर्णशिरोऽक्षिवक्त्रजगदान् क्षुद्रामयां श्चापरान्
हन्यादेव चिरोत्थितान् बहुविधानन्यांश्च रोगानपि॥
एकःस्याद्परो हि टङ्कनमुखैर्द्रवैः परैः सप्तकै
रन्यस्तु स्फटिकारि टङ्कन यवक्षाराग्रकाशीशकैः।
जानीयाद्द्रुतो विभागमनयोर्यन्त्रादिकं चापरं
निर्दिष्टास्त्रय एव भेषजवराः सर्व्वोमहाद्रावकः॥

टङ्कनादि कासीसान्तैः समद्रव्यैर्मध्यमः। स्फटिकादि कासीसान्त चतुर्द्रवैः स्वल्पः। स्वर्णमाक्षिकादिकासीस वितयान्तैर्महान्।

महाशङ्खद्रावकः।

चिञ्चाश्वत्थःस्नुहीह्यर्कोपामार्गश्च हि पञ्चमः।
पृथग्भस्म जलं कृत्वा तूद्धृत्य लवणानि च॥
टङ्कनञ्च यवक्षारं स्वर्जं लवणपञ्चकम्।
रामठं तालकञ्चैव लवङ्गं नरसादरम्॥
जातीफलञ्च गोदन्ता ताप्यं गन्धरसं तथा।
विषं समुद्रफेनञ्च सोहरा फटकरी तथा॥
शङ्खचूर्णं शङ्खनाभि चूर्णं पाषाणसम्भवम्।
मनःशिला च कासीसं समभागञ्च कारयेत्॥
भाव्यान्ते वेतसरसैः काचकूप्यां क्षिपेत्ततः।
अत्र द्रव्यञ्च तद्दत्त्वा उष्णस्थाने च धारयेत्॥
वस्त्रेणाच्छादित स्तावत्यावत् स्यात्सप्तवासरम्।
पश्चान्मन्दाग्निना देयं वारुणीयन्त्रमुद्धरेत्॥
काचकूप्यां जलं धार्यं रक्षयेद्यत्नतः सुधीः।
गुञ्जैकं पर्णखण्डेन प्रत्यहं भक्षयेन्नरः॥
कासं श्वासं क्षयं प्लीहमजीर्णं ग्रहणीगदम्।
रक्तपित्तं क्षतं गुल्ममर्शांसि च विनाशयेत्॥
अश्मरीं मूत्रकृच्छ्रञ्च शूलमष्ट विधं तथा।
आमवातं वातरक्तं खञ्जवातं धनुस्तथा॥
उदरामयमामञ्च स्थूलतां क्रिमिकोष्ठताम्।
वातपित्तकफान् सर्वान्नाशयेन्नात्र संशयः॥

भुक्त्वाच कण्ठपर्य्यन्तं गुञ्जैकं रसं लिहेत् ।
तत्क्षणात्कारयेद्भस्म क्षणराशिमिवानलः ॥
यामार्द्धं द्रावयेत् सर्वं शङ्खशुक्तिवराटकम् ।
पूर्वोक्त विधिना तत्र दद्यान्निशि चतुष्पथे ।
योगिनीभैरवाभ्याञ्च वलिं माष तिलानथ ।
महाशङ्खद्रवोनाम्ना शम्भुदेवेन भाषितः ।
गुह्याद्गुह्यतमं गोप्यं पुत्रस्यापि न कथ्यते ।
लोकानां कौतुकात्कर्त्ता प्रकाश्यं राजसन्निधौ ॥

रोहीतकारिष्टः ।

रोहीतक तुलामेकाञ्चतुर्द्रोणे जले पचेत् ।
पादशेषे रसे पूते शीते पलशतद्वयम् ॥
दद्याद्गुडस्य धातक्याः पलषोड़शिका मता ।
पञ्चकोलं त्रिजातञ्च त्रिफलाञ्च विनिक्षिपेत् ॥
चूर्णयित्वा पलांशेन ततो भाण्डे निधापयेत् ।
मासादूर्द्धञ्च पिवतां सर्वोदररुजां जयेत् ॥
प्लीहगुल्मोदराष्ठीला ग्रहण्यर्शांस कामलाम् ।
कुष्ठशोफारुचिहरा रोहीतारिष्टसंज्ञितः ॥

इति भैषज्यरत्नावल्यां प्लीहयकृदधिकारः समाप्तः ।



# पाण्डुरोगाधिकारः।



साध्यन्तु पाण्डूामयिनं समीक्ष्य
स्निग्धं घृतेनोर्द्धमधश्च शुद्धम्।
सम्पादयेत् चौद्रघृतप्रगाढ़ै-
र्हरीतकीचूर्णमयैः प्रयोगैः॥
पिवेद्घृतं वा रजनीविपक्वं
यत्त्रैफलं तैल्वकमेव वापि।
विरेचनद्रव्यकृतं पिवेद्वा
योगांश्च वैरेचनिकान् घृतेन॥

विधिः स्निग्धस्तु वातोत्थे तिक्तशीतस्तु पैत्तिके।
श्लैष्मिके कटुरुक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके॥
पाण्डुरोगी सदा सेव्या सगुड़ा च हरीतकी।
सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः।
पाण्डुरोग प्रशान्त्यर्थं पयसाथ पिवेन्नरः॥
अयोमलन्तु सन्तप्तं भूयो गोमूत्रशोधितम्।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत्॥
दीपनं चाग्निजननं शोथपाण्डूामयापहम्।
रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत्।
ततः प्रशमनी कार्य्या क्रिया वैद्येन जानता॥
त्रिफलाया गुड़ूच्या वा दार्व्या निम्बस्य वा रसः।

प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ॥

सशर्करा कामलिनां त्रिभण्डी
हिता गवाक्षी सगुड़ा च शुण्ठी।
दग्ध्वाक्षकाष्ठैर्मलमायसन्तु
गोमूत्रनिर्वापित मष्टवारान्।
विचूर्ण्य लीढ़ं मधुनाचिरेण
कुम्भाह्वयं पाण्डुगदं निहन्ति ॥

लौहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजनः।
पिवेत्पाण्डामयी शोषी ग्रहणीदोषपीड़ितः ॥
अञ्जनं कामलार्त्तस्य द्रोणपुष्पीरसः स्मृतः।
निशागैरिकधात्रीणां चूर्णंवा संप्रकल्पयेत् ॥
नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम्।
पाण्डुरोगक्रियां सर्वां योजयेच्च हलीमके।
कामलायाञ्च या दिष्टा सापि कार्य्या भिषग्वरैः ॥

नवायसलौहम्।

त्र्यूषणत्रिफलामुस्त विड़ङ्गचित्रकाः समाः।
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा ॥
भक्षयेत् पाण्डुहृद्रोग कुष्ठार्शः कामलापहम्।

त्रिफलाद्यं लौहम्।

पलं लौहस्य किट्टस्य पलं गव्यस्य सर्पिषः
सितायाश्च पलञ्चैकं मधुनश्च पलं तथा ॥
तोलैकं कान्तलौहस्य त्रिफलाय समन्वितम्।

ततः पात्रे विधातव्यं लौहे वा मृण्मये तथा।
भावितं मधुसर्पिर्भ्यां रौद्रे शिशिर एव च।
भोजनादौ तथा मध्ये चान्ते चैव प्रयोजयेत्।
कामलां पाण्डुरोगञ्च हलीमकमथापि च।
अम्लपित्तं तथा शूलं शूलञ्च परिणामजम्।
कासं पञ्चविधञ्चैव प्लीहश्वासज्वरानपि।
अपस्मारं तथोन्मादमुदरं गुल्ममेव च॥
अग्निमान्द्यमजीर्णञ्च श्वयथुञ्च सुदारुणम्।
निहन्ति नात्र सन्देहो भास्करस्तिमिरं यथा॥

वज्रवटकमण्डूरम्।

पञ्चकोलं समरिचं देवदारु फलत्रिकम्।
विडङ्गमुस्त युक्ताश्च भागास्त्रिपल सम्मिताः॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः।
पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत्॥
ततोऽक्षमात्रान् वटकान् पिबेत्तक्रेन तक्रभुक्।
पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम्।
अर्शांसि ग्रहणीदोषमुरुस्तम्भमथापि च।
क्रिमिं प्लीहानमुदरं गलरोगञ्च नाशयेत्॥
मण्डूरो वज्रनामायं रोगानीक विनाशनः।
निर्वाप्य बहुशो मूत्रे मण्डूरं ग्राह्यमिष्यते॥
ग्राहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णतः।

पुनर्नवादिमण्डूरम्।

पुनर्नवा त्रिवृच्छुण्ठी पिप्पली मरिचानि च।

विड़ङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम् ॥
त्रिफला द्वे हरिद्रे च दन्ती च चविका तथा।
कुटजस्य फलं तिक्ता पिप्पलीमूलमुस्तकम् ॥
एतानि समभागानि मण्डूरं द्विगुणं ततः।
गोमूत्रेऽष्टगुणे पक्त्वा स्थापयेत् स्निग्धभाजने ॥
पाण्डुशोथोदरानाह शूलार्शः क्रिमिगुल्मनुत्।

पञ्चाननलौहमण्डूरम्।

लौहं ताम्रं गन्धमभ्रं पारदञ्च समांशिकम्।
त्रिकटुत्रिफलामुस्तं विड़ङ्गं चित्रकं तथा ॥
किरातं देवकाष्ठञ्च हरिद्राद्वय पुष्करम्।
यमानी जीरयुग्मञ्च शटीधान्यञ्च चव्यकम् ॥
प्रत्येकं लौहभागञ्च कृत्वा चूर्णन्तु कारयेत्।
सर्वचूर्णस्य चार्द्धांशं सुशुद्धं लौहकिट्टकम् ॥
गोमूत्रे पाचयेद्वैद्यो लौहकिट्टं चतुर्गुणे ॥
पुनर्नवाष्टगुणितं क्वाथं तत्र प्रदापयेत् ॥
सिद्धेऽवतारिते चूर्णं मधुनः पलमात्रकम्।
भक्षयेत्प्रातरुत्थाय कोकिलाक्षानुपानतः ॥
ग्रहणीं चिरजां हन्ति सशोथां पाण्डुकामलाम्
अग्निञ्च कुरुते दीप्तं ज्वरं जीर्णं व्यपोहति ॥
प्लीहानं यकृतं गुल्ममुदरञ्च विशेषतः।
कासंश्वासं प्रतिश्यायं कान्तिपुष्टिविवर्द्धनम् ॥

, अत्र सर्वचूर्णसमांशं मण्डूरचूर्णमिति वृद्धाः गोमूत्र पुनर्नवाक्वाथ मण्डूराणां पाकः च र्णानां प्रक्षेपः शीते च मधुनः।

चन्द्रसूर्य्यात्मकोरसः।

सूतकं गन्धकं लौहमभ्रकञ्च पलं पलम्।
शङ्खटङ्कवराटञ्च प्रत्येकार्द्धपलं हरेत्॥
गोक्षुरवीजचूर्णञ्च पलैकं तत्प्रदीयते।
सर्व्वमेकीकृते चूर्णं वाष्पयन्त्रे विभावयेत्॥
पटोलं पर्पटं भार्गी विदारी शतपुष्पिका।
कुण्डलीदर्भकुण्डनीवासाकाकमाचीन्द्रवारुणी॥
वर्षाभूः केशराजश्च शालिञ्चो द्रोणपुष्पिका।
प्रत्येकार्द्धपलैर्द्रावैर्भावयित्वा वटीं कुरु॥
चतुर्द्दश वटीः खादेच्छागीदुग्धानुपानतः।
गहनानन्दनाथोक्तश्चन्द्रसूर्य्यात्मको रसः॥
हलीमकं निहन्त्याशु पाण्डुरोगञ्च कामलाम्।
जीर्णज्वरं सविषमं रक्तपित्तमरोचकम्॥
शूलं प्लीहोदरानाहमष्ठीलागुल्म विद्रधीन्।
शोथं मन्दानलं कासं श्वासं हिक्कां वमिं भ्रमिम्॥
भगन्दरोपदंशौ च दद्रूकण्डूव्रणापचीः।
दाहं तृष्णामुरस्तम्भमामवातं कटीग्रहम्॥
युक्त्यामद्येन मण्डेन मूत्रयूषेण वारिणा।
गुड़ूची त्रिफलावासाक्काथ नीरेण वा क्वचित्॥

प्राणवल्लभोरसः।

हिङ्गुलसम्भवं सूतं गन्धं काश्मीरसम्भवम्।
लौहं ताम्रं वराटीञ्च तुल्यं हिङ्गुफलत्रयम्॥
चुह्रीमूलं यवक्षारं नेपालं टङ्कनं त्रिवृत्।

प्रत्येकन्तु समं भागं छागीदुग्धेन भावयेत्॥
चतुर्गुञ्जां वटीं खादेद्वारिणा मधुना सह।
प्राणवल्लभनामायं गहनानन्दभाषितः॥
सेव्यदोषञ्च संवीक्ष्य युक्त्या वा त्रुटिवर्द्धनम्।
निहन्ति कामलां पाण्डुमानाहं श्लीपदं तथा॥
गलगण्डं गण्डमालां कृच्छ्राणि च हलीमकम्।
शोथं शूलमूत्रस्तम्भं संग्रहं ग्रहणीं तथा॥
हन्ति मूर्च्छां वमिं हिक्कां कासंश्वासं गलग्रहम्।
असाध्यं सन्निपातञ्च जीर्णज्वरमरोचकम्॥
जलदोषभवं शोथं महोग्रञ्च जलोदरम्।
नातः परतरं श्रेष्ठं कामलार्त्ति रुजापहम्॥

पञ्चाननवटी।

शुद्धसूतं समं गन्धं मृतताम्राभ्रगुग्गुलु।
जैपालवीजतुल्यञ्च घृतेन गुडकीकृतम्॥
भक्षयेद्बदराण्डाभं शोथपाण्डुप्रशान्तये।
पञ्चाननवटी ख्याता पाण्डुरोगकुलान्तिका॥

अत्र सर्वसमं जैपालम्। घृतेन प्रहरं संमर्द्य स्निग्ध भाण्डे संस्थाप्य बदराण्डप्रमाणं भक्षयेत्। द्रोणपुष्पीरस मनुपिवेत्।

पाण्डुसूदनीरसः।

रसं गन्धं मृतं ताम्रं जयपालञ्च गुग्गुलु।
समांशमाज्य संयुक्तां गुडिकां कारयेद्भिषक्॥

एकैकां खादयेद्वैद्यः पाण्डुशोथ प्रशान्तये।
शीतलञ्च जलञ्चान्नं वर्जयेत्पाण्डुसूदने॥

पाण्डुपञ्चानन रसः।

लौहाभ्रकञ्च ताम्रञ्च पलिकानि पृथक् पृथक्।
त्रिकटु त्रिफला दन्ती चविकं कृष्णजीरकम्॥
चित्रकञ्च निशे द्वे च त्रिवृता माणमूलकम।
कुटजस्य फलं तिक्तादेवदारुवचाघनम्॥
प्रत्येकमेषां कर्षन्तु निःक्षिपेत्पार्कविद्भिषक्।
सर्वस्य द्विगुणं देयं शुद्धमण्डूरचूर्णकम्॥
गोमूत्रेऽष्टगुणे पक्त्वा सिद्धशीतं प्रदापयेत्॥
भक्षयेत्प्रातरुत्थाय उष्णतोयानुपानतः॥
हलीमकं शोथपाण्डुमूत्रकृच्छ्रञ्च नाशयेत्।
रसायनवरश्चैव बलवर्णाग्निकारकः।
यकृतं श्लीहगुल्मञ्च सर्वरोगहरः परः॥

त्र्यूषणादि मण्डूरम्।

त्र्यूषणं त्रिफलामुस्तं विड़ङ्गं चव्यचित्रकौ।
दार्वीत्वङ्माक्षिकोधातुर्ग्रन्थिकं देवदारु च॥
एषां द्विपलिकान् भागान् चूर्णान् कृत्वा पृथक् पृथक्।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम्॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत् ततः।
उडुम्बर समान् कृत्वा वटकांस्तान् यथाग्नि तु॥
उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम्।

मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम्॥
कुष्ठान्यजरकं शोथमूरुस्तम्भं कफामयान्।
अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति च॥
निर्वाप्य बहुशो मूत्रे मण्डूरं शाल्मिष्यते।
आहयन्त्यष्ट गुणितं मूत्रं मण्डूर चूर्णतः॥

## पुनर्नवातैलम्।

पुनर्नवा पलशतं जलद्रोणे विपाचयेत्।
तेन पादावशेषेण तैलप्रस्थं विपाचयेत॥
त्रिकटु त्रिफला शृङ्गी धन्याक कट्फलं तथा।
शटीदारुप्रियङ्गुश्च देवदारुहरेणुभिः॥
कुष्ठं पुनर्नवामूलं यमानी कारवी तथा।
एलात्वचं पद्मकञ्च पत्रं नागरकेशरम्॥
एषाञ्च कार्षिकैः कल्कैः पेषयित्वाविनिक्षिपेत्।
कामलां पाण्डुरोगञ्च हलीमकमथापि वा॥
रक्तपित्तं प्रमेहांश्च कासं श्वासं भगन्दरम्।
प्लीहानमुदरञ्चैव ज्वरं जीर्णं व्यपोहति॥
कुरुते च परां कान्तिं प्रदीप्तरुचिरानलम्।
तैलं पौनर्नवं नाममलव्याधीन् नियच्छति॥

## हरिद्राद्यं घृतम्।

हरिद्रा त्रिफला निम्ब बला मधुक साधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम्॥

## मूर्वाद्यं घृतम्।

मूर्वा तिक्ता निशा यास कृष्णाचन्दन पर्पटैः।

त्रायन्ती वत्सभूनिम्ब पटोलाम्बुद दारुभिः।
अक्षमात्रैः घृतप्रस्थं सिद्धं क्षीरं चतुर्गुणम्।
प्राण्डुताज्वरविस्फोट शोथार्शोरक्तपित्तनुत्॥

### व्योषाद्यं घृतम्।

व्योषं बिल्वं हरिद्रे द्वे त्रिफलाद्विपुनर्नवम्।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतं घृतम्।
सर्वान् प्रशमयन्त्येतद्विकारान् मृत्तिकाकृतान्॥

### आनन्दोदय रसः।

पारदं गन्धकं लौहमभ्रकं विषमेव च।
समांशं मरिचं चाष्ट टङ्कनञ्च चतुर्गुणम्॥
भृङ्गराजरसैः सप्त भावनाश्चाम्लदाडिमैः
गुञ्जाद्वयं पर्णखण्डे खादेत्सायं निहन्ति च॥
वातश्लेष्मभवान् रोगान्मन्दाग्निं ग्रहणीं ज्वरान्।
अरुचिं पाण्डुताञ्चैव जयेच्चिरसेवनात्॥
नष्टमग्निं करोत्येष कालभास्करतेजसम्।
पर्वतोऽपि हि जीर्य्येत प्राशनादस्य देहिनः।
गुर्वन्नमम्लमाषञ्च भक्षणादेव जीर्य्यति॥

इति भैषज्यरत्नावल्यां पाण्डुरोगाधिकारः समाप्तः।

## शोथाधिकारः।



लङ्घनं पाचनं शोथे शिरःकायविरेचनम्॥
वमनञ्च यथासत्त्वं यथादोषं प्रकल्पयेत्॥
स्नेहोऽथ वातिके शोथे बद्धविट्के निरूहणम्।
पयोघृतं पैत्तिके तु कफजे रूक्षणक्रमः॥

आमजं लङ्घनपाचनक्रमै-
र्विशोधनैरुल्वणदोषमादितः।
शिरोगतं शीर्षविरेचनैरधो-
विरेचनैरूर्द्ध्वहरैस्तथोर्द्ध्वगम्।
उपाचरेत् स्नेहभवं विरूक्षणैः
प्रकल्पयेत् स्नेहविधिञ्च रूक्षिते॥

दशमूलं सदा शस्तं वातशोथे विशेषतः।
वातजे तैलमेरण्डं विड्ग्रहे पयसा पिबेत्॥
गोमूत्रस्य प्रयोगो वा शोथं क्षयगुनाशनः।
यवागूर्माषकल्कस्य प्राशयत्ताति शोथजित्॥

### सिंहास्यादिः।

सिंहास्यामृतभण्टाकी क्वाथं कृत्वा समाक्षिकम्।
पीत्वा शोथं जयेज्जन्तुः श्वासं कासं ज्वरं वमिम्॥

पुनर्नवाष्टकः।

पुनर्नवानिम्ब पटोल शुण्ठी
तिक्तामृतादार्वभया कषायः।
सर्वाङ्गशोथोदर पार्श्वशूल
श्वासान्वितं पाण्डुगदं निहन्ति॥

निम्बपत्ररसं पातुं शोषणं श्वयथौ विजे।
विट्सङ्गे चैव दुर्नाम्नि विदध्यात् कामलासु च॥

भूनिम्ब दारुचूर्णं जग्ध्वा पेयः पुनर्नवाक्वाथः।
अपहरति नियतमाशु शोथं सार्वाङ्गिकं नृणाम्॥

शोथनुत्कोकिलाचस्य भस्ममूत्रेण वाम्भसा।
स्थलपद्ममयं कल्कं पयसालोड्य पाययेत्।
शोफामयश्चरश्चैव सर्वाङ्गैकाङ्ग शोथजित्॥

माणमण्डः।

पुराणं मानकं पिष्ट्वा द्विगुणीकृततण्डुलम्।
साधितं क्षीरतोयाभ्यां भक्षयेत् पाययन्तु तत्॥
हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि।
सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं निरत्ययः॥

पुनर्नवा निम्बपत्रं निष्पाव पारिभद्रके।
एतैश्च पुटसं स्वेदःशोथं हन्ति सुदारुणम्।
अपामार्गः कोकिलाचो निर्गुण्डी विजया तथा।
एतैरपि पुटस्वेदं शोथं हन्ति सुदारुणम्॥

पुनर्नवादिचूर्णम्।

पुनर्नवादार्वभया पाठाविल्वं श्वदंष्ट्रिका।

बृहत्यौ द्वे रजन्यौ द्वे पिप्पल्यौ चित्रकं वृषः॥
समभागानि सञ्चूर्ण्य गवां मूत्रेण वा पिबेत्।
बहुप्रकारं श्वयथुं सर्वगात्रविसारिणम्॥
हन्ति शोथोदराख्यष्टौ व्रणांश्चैवोद्धतानपि।
बिल्वस्य मूलम्।

## शोथारिचूर्णम्।

शुष्कमूलमपामार्गस्त्रिकटु त्रिफला तथा।
दन्ती च त्रिमदश्चैव प्रत्येकञ्च समं समम्॥
भक्षयेत्प्रातरुत्थाय बिल्वपत्ररसेन च।
पाण्डुरोगं निहन्त्याशु शोथञ्चैव सुदारुणम्॥

## शोथोदरे पुनर्नवादि गुग्गुलुः।

पुनर्नवा दार्वभया गुडूचीं
पिबेत्समूत्रां महिषाक्षयुक्ताम्।
त्वग्दोषशोथोदरपाण्डुरोग
स्थौल्यप्रसेकोर्द्ध्व कफामयेषु॥

सर्वचूर्णसमो गुग्गुलुः एरण्डतैलेन पिष्टयित्वा एकीकृत्य स्थाप्यम्। अनुरूपं गोमूत्रेण पेयम्।

## पुनर्नवादि लेहः।

पुनर्नवामृतादारु दशमूलरसाढके।
आर्द्रकस्वरसप्रस्थे गुडस्य च तुलां पचेत्॥
तस्मिन् व्योषपत्रैला त्वक्चव्यैः कार्षिकैः पृथक्।

चूर्णीकृतैः क्षिपेत् शीते मधुनः कुड़वं लिहेत्॥
लेहः शौनर्मबोनाम शोथशूल निसूदनः।
कासश्वासारुचिहरो बलवर्णाग्निवर्द्धनः॥

## शोथारिमण्डूरम्।

गोमूत्र शुद्धमण्डूरं निर्गुण्डी रसभावितम्।
माणकार्द्रकक्रन्दानां रसेष्वपि च भावयेत्॥
त्रिफला व्योषचव्यानां चूर्णं कर्षद्वयं पृथक्।
चूर्णाद्द्विगुण मण्डूरं गोमूत्रेऽष्टगुणे पचेत्।
सिद्धे चूर्णं क्षिपेत् शीते मधुनश्च पलद्वयम्॥
निहन्ति सर्वजं शोथं सर्वाङ्गोत्थं न संशयः॥

## अग्निमुखमण्डूरम्।

पलद्वादश मण्डूरं गोमूत्रेऽष्टगुणे पचेत्।
पञ्चकोलं देवदारुमुस्तं व्योषं फलत्रयम्॥
विड़ङ्गं पलमात्रन्तु पाकान्ते चूर्णितं क्षिपेत्।
पाययेदक्षमात्रन्तु तक्रेण सह बुद्धिमान्॥
असाध्यं श्वयथुं हन्ति पाण्डुरोगं चिरोद्भवम्
ख्यमग्निमुखं नाम सर्पिःक्षौद्रेण मर्दयेत्॥

## रसाभ्रमण्डूरम्।

गन्धकाम्बरसूतानां प्रत्येकं शुक्तिसम्मितम्।
संशोध्य चूर्णितं कृत्वा मण्डूरं मुष्टिकाद्वयम्॥
प्रसृतञ्च हरीतक्याः पाषाणजतुनः पिचूम्।
तोलकत्र्यान्तताङ्ख्य सर्वं रौद्रे विभावयेत्॥

भृङ्गराजरसप्रस्थे केशराजरसे तथा।
निर्गुण्डीमाणकन्दाना मार्द्रकस्य रसेष्वपि॥
त्रिकटु त्रिफला चव्य मुस्तकानां पृथक् पृथक्।
कर्षं कर्षं चिपेच्चूर्णं मर्दयेन्मधुसर्पिषा॥
भक्षयेत्प्रातरुत्थाय मात्रया युक्तितः पुमान्।
निहन्ति सर्वजं शोथं सर्वाङ्गैकाङ्ग संश्रयम्॥
कासश्वास तृषा दाह मोह च्छर्दि युतं तथा।
अम्लपित्तं निहन्त्येव शूलमष्ट विधं जयेत्॥
अग्निवृद्धिकरं हृद्यं हृद्यं वातानुलोमनम्।
कामलां पाण्डुरोगञ्च श्लेष्मकुष्ठारुचिज्वरम्॥
प्लीहगुल्मोदरं हन्ति ग्रहणीं सप्रवाहिकाम्।

निर्गुण्ड्यादीनां रसैः प्रत्येकं मर्द्दीकरणमेभाव-यित्वा किञ्चिद्दार्द्रतायां त्रिकट्वादीनां चूर्णं प्रति क १ दत्वा पुनः पिष्ट्वा कोलप्रमाणा वटिकाः कृत्वा एकैकां घृतमधुभ्यां मर्दयित्वा भक्षयेत् पुनर्नवा क्वाथं प्रक्षिप्य यवक्षारमनु-पिबेत्।

## शुष्कमूलाद्यं तैलम्।

शुष्कमूलक वर्षाभू दारुरास्ना महौषधैः।
पक्कमभ्यञ्जनात्तैलं समूलं श्वयथुं जयेत्॥

## बृहत् शुष्कमूलाद्यं तैलम्।

मूलकं दशमूलञ्च कणामूलं पुनर्नवा।
प्रत्येकं प्रस्थमाहृत्य वारिण्यष्टगुणे पचेत्॥

तेन पादावशेषेण तैलस्यार्द्धाढ़कं पचेत्।
दापयेत्तैल तुल्यञ्च गोमूत्रं कुशलो भिषक्॥
मूलकं चामृता शुण्ठी पटोलं चपलाबला।
पाठा पुनर्नवामूलं वालोशीरञ्च शिग्रुजम्॥
निर्गुण्डीन्द्राशनं श्यामा करञ्जं वासकं तथा।
कणा हरीतकी चैव वचा पुष्करमूलकम्॥
रास्ना विड़ङ्गं चव्यञ्च द्वे हरिद्रे च धान्यकम्।
द्विक्षारं सैन्धवञ्चैव देवदारु सपद्मकम्॥
शटी करिकणा विल्वं मञ्जिष्ठा च ततः क्रमात्।
प्रत्येकार्द्धपलञ्चैषां पेषयित्वा विनिक्षिपेत्॥
अभ्यङ्गेनास्य तैलस्य ये गुणास्तांस्ततः शृणु।
नानाशोथः विनश्यन्ति वातपित्तकफोद्भवाः॥
मलोद्भवाश्च ये केचिद्विशेषेण जलाश्रयाः।
अवश्यं निर्जरा देहा भविष्यन्ति न संशयः॥

बृहत् शुष्कमूलाद्यं तैलम्।

शुष्कमूलरसप्रस्थं शिग्रुधुस्तूरयोस्तथा।
सिन्धुवाररसप्रस्थं दशमूलरसं तथा॥
पारिभद्ररसप्रस्थं वर्षाभू प्रस्थ मेव च।
करञ्जस्य रस प्रस्थं प्रस्थं वरुणकस्य च॥
तैलप्रस्थं समादाय भिषग्यत्नाद्विपाचयेत्।
कल्कैरर्द्धपलैरेतैः शुण्ठीमरिचसैन्धवैः॥
पुनर्नवाकाकमाची शेलुत्वक् पिप्पली युगैः।
कट्फलं पौष्करं शृङ्गी रास्ना यासश्च कारवी।

हरिद्राद्वय पूतीक इयानन्तायुगैः पृथक ।
तं सम्यगुसिद्ध विज्ञाय शुभे भाण्डे निधापयेत् ॥
वातश्लेष्मकृतं दोषं सन्निपातभवं तथा ।
निहन्ति सर्वजं शोथमुदरश्वासनाशनम् ॥
विरुद्धभेषजभव शोथमाशु व्यपोहति ।
व्रणशोथान्त्रिशूलघ्नं कामलापाण्डुनाशनम् ॥
ये चान्ये व्याधयः सन्ति श्लेष्मजाः सन्निपातजाः ।
तान् सर्वान्नाशयत्याशु सूर्य्यस्तम इवोदितः ॥

## शोथशार्दूलतैलम् ।

धुस्तूरो दशमूलञ्च सिन्धुवारं जयन्तिका ।
पुनर्नवाकरञ्जश्च षट्पलानि प्रगृह्य च ॥
जलद्रोणे विपक्तव्यं ग्राह्यं पादावशेषितम् ।
प्रस्थञ्च कटुतैलस्य कल्कान्येतानि दापयेत् ॥
रास्नापुनर्नवादारुमूलकं नागरं कणा ।
सिद्धं तैलवरं ह्येतन्नाशयत्यस्य सेवनात् ॥
शोथं सुदारुणं घोरं वातपित्तकफोद्भवम् ।
असाध्यं सर्वदेहस्थं सन्निपातसमुद्भवम् ॥
शोपदश्च ज्वरं पाण्डुं क्रिमिदोषं विनाशयेत् ।
क्लिन्नव्रण प्रशमनं नाड़ीदुष्टव्रणापहम् ।
शोथशार्दूलकतैलं वलवर्णप्रसादनम् ॥

## पुनर्नवादितैलम् ।

पुनर्नवा पलशतं जलद्रोणे विपाचयेत् ।

तेन पादावशेषेण तैलप्रस्थं पचेद्भिषक्।
त्रिकटु त्रिफला शृङ्गी धान्यकं कट्फलं तथा।
शटी दार्वी प्रियङ्गुश्च पद्मकाष्ठं हरेणुकम्॥
कुष्ठं पुनर्नवा चैव यमानी कारवी तथा।
एलात्वचं सलोध्रञ्च पत्रकं नागकेशरम्॥
वचाग्रन्थिकमूलञ्च चव्यं चित्रकमूलकम्।
शतपुष्पाम्बु मञ्जिष्ठा रास्नायामस्तथैव च॥
एतेषां कार्षिकैर्भागैः पेषयित्वा विनिक्षिपेत्।
कामलां पाण्डुरोगञ्च हलीमकमथारुचिम्।
रक्तपित्तं महावीरं कासंश्वासं भगन्दरम्।
प्लीहानमुदरञ्चैव जीर्णज्वरमपोहति॥
कुरुते परमां कान्तिं प्रदीप्तं जठरानलम्।
तैलं पुनर्नवाख्यातं सर्वान् व्याधीन् व्यपोहति॥

## पुनर्नवाद्य घृतम्।

पुनर्नवा तुलां गृह्य जलद्रोणे विपाचयेत्।
चतुर्भागावशेषेण घृतप्रस्थं विपाचयेत्।
भूनिम्ब विडया शुण्ठी शोथघ्नामरदारुभिः।
कासंश्वासंज्वरं हन्ति शोथञ्चापि सुदारुणम्॥

## माणघृतम्।

माणकक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
एकजं द्वन्द्वजं शोथं त्रिदोषजमपोहति॥

## त्रिनेत्राख्योरसः :

टङ्कनं शोधितं गन्धं मृतशुल्वायसं रसम्।

दिनैकमार्द्रकद्रावैर्मर्द्य लघुपुटे पचेत् ॥
त्रिनेत्राख्यो रसो नाम चासाध्यं श्वयथुं जयेत् ।
वल्लमात्रं पिबेच्चानु एरण्डमूलशरीरसम् ॥

## त्रिकट्वादि लौहम् ।

त्रिकटु त्रिफला दन्ती विडङ्गं कटुका तथा ।
चित्रको देवकाष्ठञ्च त्रिवृद्दारुणपिप्पली ॥
चूर्ण्येतानि तुल्यानि द्विगुणं स्यादयोरजः ।
क्षीरेण पिष्टं शीतं वै परं श्वयथुनाशनम् ॥

## शोथारि लौहम् ।

अयोरजस्त्र्यूषण यावशूकं
चूर्णञ्च पीतं त्रिफला रसेन ।
शोथं निहन्यात् सहसा नरस्य
यथाशनिर्वृक्षमुदग्रवेगः ॥
सर्व्वं समं लौहम् ।

## शोथभस्म लं

त्रिकटु त्रिफला द्राक्षा पौष्करं सजलं शटी ।
लौहं वचा लवङ्गञ्च शृङ्गीत्वक् शतपुष्पिका ॥
विभीतकं विडङ्गञ्च धातकीपुष्पमेव च ।
एतानि समभागानि श्लक्ष्ण चूर्णानि कारयेत् ॥
सर्वद्रव्य समञ्चात्र शुद्धं लौहकिट्टकम् ।
कुटजस्य रसेनापि भावयेत्परियत्नतः ॥

वेष्टितं जम्बुपत्रेण पङ्केन परिलेपयेत्।
ततो गजपुटे पक्वा स्वाङ्गशीतं समुद्धरेत्॥
प्रातःकाले शुचिर्भूत्वा भक्षयेत् शक्तिमानतः।
निहन्ति सर्वजं शोथं ग्रहणीञ्च विशेषतः॥
उदरेषु च सर्वेषु शोथेषु च विधानतः।
विविधा व्याधयश्चान्ये सेवनाद्यान्ति साध्यताम्॥

शोथकालानलरसः।

चित्रं कुटजवीजञ्च श्रेयसी सैन्धवं तथा।
पिप्पली देवपुष्पञ्च सजातीफलटङ्कनम्॥
लौहमभ्रं तथा गन्धं पारदेनैव मिश्रितम्।
एतेषां कर्षमात्रेण वटीं गुञ्जामितां शुभाम्॥
भक्षयेत्प्रातरुत्थाय कोकिलाक्षरसेन तु।
ज्वरमष्टविधं हन्ति साध्यासाध्यमथापि वा।
कासं श्वासं तथा शोथं प्लीहानं हन्ति दुस्तरम्।
मेहं मन्दानलं शूलं संग्रहग्रहणीं तथा॥
अवश्यं नाशयेच्छोथं कर्द्दमं भास्करो यथा।
शोथकालानलो नाम रोगानीकविनाशनः॥

शोथाङ्कुशोरसः।

रसेन्द्रगन्धं मृतलौहताम्रं
नागं तथाभ्रं समसंख्यकञ्च।
निर्गुण्डिकास्फोतककपित्थचिञ्चा
पुनर्नवा श्रीफलकेशराजम्॥

एषां रसैर्भावितमेकशश्च
कोलप्रमाणा वटिका विधेया।
शोथ ज्वरारोचकपाण्डुरोगं
सर्वाङ्गशोथं विनिवारयेच्च॥
पित्तान्वितान्वातभवान् कफोत्थान्।
शोथाङ्कुशो नाम निहन्ति रोगान्॥

## पञ्चामृतरसः।

शुद्धसूतं समादाय गन्धकं भागतः समम्।
त्रिभागं टङ्गनं देयं विषभागत्रयं तथा॥
भागत्रयं तथा देयं मरिचस्य प्रयत्नतः।
चूर्णीकृतं जलेनापि पिष्ट्वा रक्तिमितां वटीम्॥
शृङ्गवेररसेनैव भक्षयेद्वटिकामिमाम्।
जलदोषोद्भवे शोथे घोरेऽप्युग्रे जलोदरे॥
सन्निपातेषु घोरेषु विंशतिश्लेष्मिके गदे।
ज्वरातिसारसंयुक्ते शोथे चैव गलग्रहे॥
शिरःशूलगदे घोरे नासारोगे सपीनसे।
पञ्चामृतरसो ह्येष सर्वरोगोपशान्तिकृत्॥

## दुग्धवटी।

अमृतं सूर्य्यगुञ्जं स्यादहिफेनं तथैव चः।
पञ्चरक्तिकलौहञ्च षष्टिरक्तिकमभ्रकम्।
दुग्धेगुञ्जाद्वयमिता वटीकार्य्या भिषग्विदा।
दुग्धानुपानं दुग्धञ्च भोजनं सर्वथा हितम्॥
शोथ नानाविधं हन्ति ग्रहणीं विषमज्वरम्।

मन्दाग्निं पाण्डुरोगञ्च नाम्ना दुग्धवटी परा ॥
वर्जयेल्लवणं वारि व्याधिनिःशेषतावधि ॥

दुग्धवटी ।

अमृतं धूर्त्तवीजञ्च हिङ्गुलञ्च समं समम् ।
धूर्त्तपत्ररसेनैव मर्द्दयेद्यामभात्रकम् ॥
मुद्गोपमां वटीं कृत्वा दुग्धेन सह पाययेत् ।
दुग्धेन भोजयेदन्नं वर्जयेल्लवणं जलम् ॥
शोथं नानाविधं हन्ति पाण्डुरोगं सकामलम् ।
सेयं दुग्धवटी नाम्ना गोपनीया प्रयत्नतः ॥

ग्रहणीयुक्तशोथे ।

कल्पलतावटी ।

अमृतं हिङ्गुलं धूर्त्तवीजं द्वादशरक्तिकम् ।
प्रत्येकमहिफेनञ्च षट्त्रिंशद्रक्तिकं नयेत् ॥
पिष्ट्वा दुग्धेन गुञ्जैकां वटीं दुग्धेन पाययेत् ।
दुग्धं पाने भोजने च देयं न लवणं जलम् ॥
ग्रहणीं चिरकालीनां हन्ति शोथं सुदुर्जयम् ।
चिरज्वरं पाण्डुरोगं नाम्ना कल्पलता वटी ॥

क्षेत्रपालरसः ।

हिङ्गुलञ्च विषं ताम्रं लौहं तालकटङ्कनम् ।
जीरमाक्षरफेनञ्च समभागं विमर्द्दयेत् ॥
यवाभा वटिका कार्य्या पथ्यं दुग्धौदनं हितम् ।

अलवणं वारिहीनं दातव्यं भिषजां वरैः॥
गुरुशोथमग्निमान्द्यं ग्रहणीमतिदुस्तराम्।
ज्वरञ्च विषमं जीर्णं नाशयेन्नात्र संशयः॥

### वैद्यनाथवटी।

### (दधिवटी।)

पक्वेष्टका हरिद्राभ्यामगारधूमकेन च।
शोधितं सूतकं ग्राह्यं तोलकं तुलया धृतम्॥
भृङ्गराजरसैः शुद्धं गन्धकं सूततुल्यकम्।
हरितालं विषं तुल्यमेलवालुकताम्रकम्॥
खर्परं माक्षिकं कान्तं सर्वमेकत्र कारयेत्।
सर्वार्द्धा कज्जली ग्राह्या भावयेच्च पुनः पुनः॥
सिन्धुवाररसे चैव ज्योतिष्मत्या रसे तथा।
रसेऽपराजितायाश्च जयन्त्याः स्वरसे तथा॥
रक्तचित्रकमूलोत्थे रसे च परिभावयेत्।
वटिकां सर्षपाकारां योजयेत्कुशलो भिषक्॥
ततः सप्तवटीर्दद्यादुष्णेण वारिणा सह।
अनुपानञ्च कर्त्तव्यं कज्जल्याः कणया सह॥
सन्निपातज्वरे चैव सशोथे ग्रहणीगदे॥
पाण्डुरोगेऽग्निमान्द्ये च विविधे विषमज्वरे॥
शुक्रमज्जगते दद्यान्नतु कासे कदाचन।
नित्यं दध्ना च भोक्तव्यं सिता नित्यं तथैव च॥
स्नातव्यं ह्यभयान्नित्यं वयोदोषानुसारतः।
अलवणं वारिहीनं दधिपथ्यं सदा भवेत्॥

वैद्यनाथवटीनाम्ना वैद्यनाथेन निर्म्मिता ॥
इयं ग्रहण्यां शोथे च प्रयुज्यते ।

सुधानिधिः ।

धान्यकं बालकं मुस्तं विश्वं सिन्धुं समांशकम्
मण्डूरं द्विगुणं दत्वा भावयेत्तु चतुर्द्दश ॥
गोमूत्रे केशराजश्च शोथघ्नो भृङ्गराजकः ।
निर्गुण्डी मेकपर्णी च रसैरेषां विभाव्य च ॥
निष्कं चूर्णं प्रयुञ्जीत तक्रेन सह बुद्धिमान् ।
केशराजरसेवाऽपि भोजनं लवणं विना ॥
तक्रेन भोजयेदन्नं पाने तक्रञ्च दापयेत् ।
कामलाज्वरशोथघ्नो वह्निसन्दिपनः परः ॥
ग्रहणीपाण्डुरोगघ्नः सर्वव्याधिविनाशनः ॥

पाण्डुशोथे तक्रमण्डुरम् ।

सप्तधा गोमूत्र शुद्धस्नग्धमण्डुर चूर्ण पल ४ भावनार्थं गोमूत्र पल ८ बिल्वपत्ररस गणिकारीपत्ररस पुनर्नवा रस कोकिलाक्ष रस केशराज रस भृङ्गराज रस एभिः प्रत्येकं वारत्रयं भावयेत् । अस्य दशरत्तिकं तक्रेण पिवेत् । तक्रेण भोजनं तक्रपानं लवणजलं वर्जयेत् ।

तक्रवटी ।

रसस्य माषकं ग्राह्यं गन्धकस्य च माषकम् ।
द्विमाषकं विषस्यापि ताम्रं माषचतुष्टयम् ।

तोलकं पिप्पलीचूर्णं मण्डूरस्य च तोलकम् ।
क्वाथेन छागक्षीरस्य भावयेत्सप्तवासरम् ॥
वल्लप्रमाणां वटिकां तक्रेण सह पाययेत् ।
तक्रेण भोजनं पानं लवणाम्भो विवर्जितम् ॥
निहन्ति शोथं ग्रहणीं मन्दाग्निपाण्डुतामपि ॥

### कटुकाद्यं लौहम् ।

कटुकं त्र्यूषणं दन्तिविडङ्गं त्रिफला तथा ।
चित्रको देवदारुश्च त्रिवृद्दारणपिप्पली ॥
चूर्णान्येतानि तुल्यानि द्विगुणं स्यादयो रजः ।
क्षीरेण तुल्यमेतच्च श्रेष्ठं श्वयथुनाशनम् ॥
सर्वचूर्णाद्द्विगुणं लौहम् ।

### कंसहरीतकी ।

द्विपञ्चमूलस्य पचेत् कषाये
कंसेऽभयानाञ्च शतं गुड़ाच्च ।
लेहे सुशीते च विनीयचूर्णं
व्योषं त्रिसौगन्ध्यमुपास्थिते च ॥
किञ्चिच्च चूर्णादपि यावशूकात्
प्रस्थार्द्धमानं मधुनश्च दद्यात् ।
एकाभयां प्राश्य ततश्च लेहात्
शुक्तिं निहन्ति श्वयथुं प्रवृद्धम् ॥
श्वासज्वरारोचकमेहगुल्म-
शोषत्रिदोषोदरपाण्डुरोगान् ॥

कार्श्यंसवातः कफरक्तपित्तं
वैवर्ण्यंमूलानिलसङ्गदोषाम् ॥
कांचे भाद्रवे ।

चौरवटिका ।

गृहीत्वा दरदात् कर्षं तदर्द्धं देवपुष्पकम् ।
फणिफेनं विषं जातीफलं धुस्तूरबीजकम् ॥
संमर्द्य विजयाद्रावैर्मुद्गमात्रां वटीञ्चरेत् ।
अनुपानं प्रदातव्यं शोथे चौरं भिषग्वरैः ॥
ग्रहण्यां विजया क्वाथः पथ्यं दुग्धान्नमेव हि ।
जलञ्च लवणञ्चापि वर्जनीयं विशेषतः ।
प्रबलायामुदन्यायां सलिलं नारिकेलजम् ।
पातव्यं वटिका चैषा शोथं हन्ति न संशयः ।
ग्रहणीमतिसारञ्च ज्वरं जीर्णं निहन्ति च ॥

इति भैषज्यरत्नावल्यां शोथाधिकारः समाप्तः ।

# उदराधिकारः ।

सर्वमेवोदरं प्रायो दोषसङ्घातजं यतः ।
अतो वातादिशमनी क्रिया सर्वत्र शस्यते ॥

उदरे दोषसम्पूर्णे कुक्षौ मन्दो यतोऽनलः।
तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च॥
रक्तशालीन् यवान्मुद्गान् जाङ्गलान् मृगपक्षिणः।
पयोमूत्रासवारिष्ट मधु सीधु च शीलयेत्॥
दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात्
संभवत्युदरं तस्मान्नित्यमेनं विरेचयेत्॥
पाययेत्तैलमैरण्डं समूत्रं सपयोऽपि वा॥
वातोदरं बलवतः स्नेहस्वेदैरुपाचरेत्।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्निग्धं विरेचनम्॥
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम्।
यथास्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः॥
परिम्लानं विरेचनेन नम्रीकृतम्।

विरिक्ते च यथा दोषहरैः पेया स्मृता हिता॥
वातोदरी पिबेत्तक्रं पिप्पली लवणान्वितम्।
शर्करा मरिचोपेतं स्वादु पित्तोदरी पिबेत्
यमानी सैन्धवाजाजी व्योषयुक्तं कफोदरी।
त्र्यूषणक्षारलवणैर्युक्तं तु दोषिकोदरी।
गौरवारोचकार्त्तानाममृतत्वाय कल्पते॥
वातोदरे पयोऽभ्यासो निरूहो दशमूलिकः।

सामुद्राद्यं चूर्णम्।

सामुद्रसौवर्च्चल सैन्धवानि
क्षारं यमानीमजमोदकञ्च।

सपिप्पली चित्रक शृङ्गवेरं
हिङ्गुं विड़ञ्चेति समानि कुर्य्यात् ॥
एतानि चूर्णानि घृतप्लुतानि
भुञ्जीतपूर्वं कवलं प्रशस्तम्।
वातोदरं गुल्ममजीर्णभक्तं
वातास्रकोपं ग्रहणीं प्रदुष्टाम् ॥
अर्शांसि दुष्टानि च पाण्डुरोगं
भगन्दरं चापि निहन्ति सद्यः ॥

स्नुक् पयसा सुभाविततण्डुलचूर्णैं विनिर्म्मितःपूपः।
उदर मुदारं हिंस्याद्योगोऽयं सप्तरात्रेण ॥
सक्षीरं माहिषं मूत्रं निराहारः पिबेन्नरः।
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः ॥

विन्दुघृतम्।

अर्कक्षीरपले द्वे च स्नुहीक्षीरपलानि षट्।
पथ्या कम्पिल्लकं श्यामा शम्पाकं गिरिकर्णिका ॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकं तथा।
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
अथास्य मलिने कोष्ठे विन्दुमात्रं प्रदापयेत्।
यावतोऽस्य पिवेद्विन्दूंस्तावद्वारान् विरिच्यते ॥
कुष्ठगुल्ममुदावर्त्तं श्वयथुं सभगन्दरम्।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनि र्यथा ॥
एतद्विन्दुघृतं नाम येनाभ्यक्तो विरिच्यते ॥
जलं चतुर्गुणं देयं पाकार्थं विन्दुसर्पिषः।

## महाबिन्दु घृतम् ।

स्नुहीक्षीरपले कल्के प्रस्थार्द्धञ्चैव सर्पिषः ।
कम्पिल्लकं पलञ्चैकं पलार्द्धं सैन्धवस्य च ॥
त्रिवृतायाः पलञ्चैकं कुड़वं धात्रिकारसात् ।
तोयप्रस्थेन विपचेच्छनैर्मृद्वग्निना भिषक् ॥
कर्षप्रमाणं दातव्यं जठरे प्लीहगुल्मयोः ।
तथा कच्छपरोगेषु युञ्जीत मतिमान् भिषक ॥
एतद्गुल्मान् सनिचयान् सशूलान् सपरिग्रहान् ।
निहन्त्येष प्रयोगो हि वायुर्जलधरानिव ॥
पञ्चगुल्मवधार्थाय वज्रो मुक्तः स्वयम्भुवा ।
महाबिन्दुघृतं नाम सिद्धं सिद्धैश्च पूजितम् ॥

## नाराचघृतम् ।

स्नुक्क्षीरदन्तीत्रिफलाविड़ङ्ग
सिंही त्रिवृच्चित्रककल्कयुक्तम् ।
घृतं विपक्वं कुड़वप्रमाणं
तोयेन तस्याक्षमथार्द्धमक्षम् ॥
पीत्वोष्णमम्भोऽनुपिवेत् विरिक्तः
पेयां सुखोष्णां प्रपिवेद्विधिज्ञः :
नाराचमेतज्जठरामयानां
युक्त्योपयुक्तं शमनं प्रदिष्टम् ॥

## वृहन्नाराचघृतम् ।

लोध्रचित्रक चव्यानि विड़ङ्गं त्रिफला त्रिवृत् ।

अग्निव्यतिविषाव्योष मजमोदा निशाद्वयम्।
दन्ती च कार्षिकं सर्वं गोमूत्रस्य पलाष्टकम्।
चतुःपलं स्नुहीचीरं राजवृक्षफलं तथा॥
एतैश्चतुर्गुणितोये घृतप्रस्थं विपाचयेत्।
उदरञ्चामवातञ्च गुल्मप्लीह भगन्दरान्॥
निहन्त्यचिरयोगेन गृध्रसीं श्लेष्ममूत्रजम्।
बृहन्नाराचकं नाम घृतमेतद्यथामृतम्॥

श्रीवैद्यनाथादेशवटिका।

त्रिकटुक पारदपथ्या समभागं कानकफलं द्विगुणम्।
माषप्रमाणावटिका कार्य्या स्वरसेनाम्ललोणिकायाः॥
प्रबलजलोदरगुल्मज्वरपाण्डुामयनाशिनी प्रोक्ता।
तिमिरार्णं पटल विद्रधि प्रबलोदावर्त्तशूलहरौ॥
क्रिमिकोठ कुष्ठ कण्डू पिड़काश्च निहन्ति रोगचयम्।
सिद्धगुड़ी प्रथिता भुवने श्रीवैद्यनाथपादाज्ञा॥

अतिसरणे सति हस्तपादप्रक्षालन पूर्वकं दधि भक्तेन भोजयेत्। पथ्यं स्वल्पं देयम्।

इच्छाभेदीरसः।

शुण्ठीमरिचसंयुक्तं रसगन्धकटङ्कनम्।
जैपालास्त्रिगुणाः प्रोक्ताः सर्वमेकत्र पेषयेत्॥
इच्छाभेदी द्विगुञ्जः स्यात् सितया सह पाययेत्।
यावच्च चुल्लकं पीत्वा तावद्वेगान्विरेचयेत्॥
तक्रौदनञ्च दातव्यमिच्छाभेदी यथेच्छया।
चुल्लकं सितोदकगण्डूषम्।

## इच्छाभेदी रसः।

शुद्धसूतस्य माषैकं गन्धकान्माषकत्रयम्।
विभीतकस्य माषैकं धात्र्याश्चैवतु माषकम्॥
माषद्वयञ्च पिप्पल्याः शुण्ठीनां माषकत्रयम्।
जैपालवीजमज्जाया गुड़कं विंशतिं तथा॥
अम्ललोणीरसैः पिष्ट्वा वटिकां कारयेद्बुधः।
कलाय परिमाणान्तु भक्षयेद्रेचनार्थकम्॥
अम्ललोणीरसैः सार्द्धं तोयमुष्णं पिवेद्बुधः।
तावद्विरिच्यते वेगाद्यावत् शीतं न सेवते॥

## अभयावटी।

अभया मरिचं कृष्णा टङ्गनञ्च समां शिकम्।
सर्वचूर्णसमं भागं दद्यात् कानकजं फलम्॥
स्नुहीक्षीरेण संकुर्य्याद्वटीं स्विन्नकलायवत्।
वटीद्वयं शिवाभिकां पिष्ट्वा तण्डुलवारिणा॥
उष्णाद्विरेचयेदेषा शीते स्वास्थ्यमुपैति च॥
जीर्णज्वरं प्लीहरोगं हन्त्यष्टावुदराणि च॥
वातोदरे प्रशस्तोऽयं सर्वाजीर्णं व्यपोहति।
कामलां पाण्डुरोगञ्च तथैव कुम्भकामलाम्॥

## नाराचरसः।

सूतं टङ्गनतुल्यांशं मरिचं सूततुल्यकम्।
गन्धकं पिप्पली शुण्ठी द्वौ द्वौ भागौ विचूर्णयेत्
सर्वतुल्यं क्षिपेद्दन्तीवीजं निस्तुषमेव च।

हिगुञ्जो रेचने सिद्धो नाराचोऽयं महारसः ॥
गुल्मप्लीहोदरं हन्ति पिबेत्तच्छृतवारिणा।

इच्छाभेदीरसः।

सूतं गन्धञ्च मरिचं टङ्कनं नागराभया।
जैपालवीजसंयुक्तं क्रमोत्तरगुणं भवेत् ॥
सर्वतुल्यो गुड़ो देय इच्छाभेदी स्वयं रसः।
द्वित्रिगुञ्जा परिमिता वटीकार्य्याविचक्षणैः ॥

चूलिकावटी।

रसो गन्धो विषं तालं त्रिकटु त्रिफला तथा।
टङ्कनं समभागञ्च जयपालश्चतुर्गुणम् ॥
भृङ्गराजरसेनाथ केशराजरसेन वा।
मधुना वटिका कार्य्या गुञ्जाद्वयमिता शुभा ॥
चूलिकाख्या वटी ख्याता शोथोदरविनाशिनी।
कामलां पाण्डुरोगञ्च आमवातं हलीमकम् ॥
हन्याद्भगन्दरं कुष्ठं प्लीहानं गुल्ममेव च।

भेदिनीवटी।

त्रिकण्टकस्य कृपयसा पिप्पल्या वटिका कृता।
भेदिनीयं सिद्धमता महागदनिसूदनी ॥

शोथोदरारिलौहम्।

पुनर्नवामृतावह्नि गवाक्षी मानसौरकः।
सूर्य्यावर्त्तार्कमूलञ्च पृथगष्टपलं जले ॥

पारदस्येह मृतं द्रोणे सुपूते वस्त्रगालिते।
लौहचूर्णाष्टपलकं पचेदाज्यसमं भिषक्॥
पर्कस्य द्विपलं क्षीरं स्नुहीक्षीरं चतुःपलम्।
पलद्वयं कौशिकस्य गन्धकस्य पलं तथा॥
पलार्द्धं पारदं क्षिप्त्वा वज्रमध्यन्तु निक्षिपेत्।
जयपालं ताम्रमभ्रं शुल्बमत्र प्रदापयेत्॥
कटुत्रिकत्रिवृद्दन्तीनां शरपुङ्खात् चणकपत्रकात्।
पलाशस्य च बीजानि कट्फलं तालमूलिका॥
त्रिफलायाः क्रिमिरिपोस्त्रिवृद्दन्ती भवं तथा।
सूर्य्यावर्त्तगवाक्ष्योश्च वर्षाभूर्वञ्चवल्लिका॥
एषां लौहसमां मात्रां स्निग्धभाण्डे निधापयेत्।
अतोऽस्य भक्षयेन्मात्रामनुपानञ्च युक्तितः॥
हन्ति सर्व्वोदरं शीघ्रं नात्रकार्य्या विचारणा।
ये च शोथाः सुदुर्व्वाराश्चिरकालानुबन्धिनः॥
तान् [illegible] नाशयत्याशु तमः सूर्य्योदये यथा।
नातःपरतरं किञ्चित् शोथोदरविनाशनम्॥
उदराणि पाण्डुरोगं कामलाञ्च हलीमकम्।
अर्शो भगन्दरं कुष्ठं ज्वरं गुल्मञ्च नाशयेत्॥

## जलोदरारिरसः।

रसेन गन्धं द्विगुणं शिला च
निशा च बीजं जयपालकस्य।
पलत्रयं त्र्यूषणकञ्च चित्रं
सर्वं विचूर्ण्यापि विभावयेच्च॥

दन्तीस्नुही मूलरसे पृथक् च
संभाव्य संशोष्य च सप्तवारान् ।
वयो बलं वीक्ष्य तथा ददीत
जाते विरेके च ददीत पथ्यम् ॥
स्वल्पं सतक्रं शिशिराम्बुपायिं
जाते बले तत्पुनरेव दद्यात् ।
तस्मिंश्च रोगः समुपैति शान्तिं
सिद्धो रसो नाम जलोदरारिः ॥

इति भैषज्यरत्नावल्यामुदराधिकारः समाप्तः ।

## क्लोमरोगाधिकारः ।

प्लीहक्षुद्रान्त्रयोर्मध्यमन्नपक्वादि कर्म्मणि ।
सहायभूतमध्यास्ते क्लोमतच्च तिलाभिधम् ॥
गुर्वतिस्निग्धभोज्यैश्चाप्यभिघातादिभिस्तथा ।
दुष्टिस्तस्य मृदुत्वञ्च तत्र शोणितसञ्चयः ।
विद्रधिर्वा भवेत्तत्र व्याधयोऽन्ये च दारुणाः ।
एवं विकृतिमापन्ने तिलके वह्निसङ्क्षयः ॥
उत्क्लेशो वमनं कार्श्यं पाण्डुतासदनं भ्रमः ।
वामोदरे व्यथा तीव्रा काठिन्यमपि चोष्णता ।

शूलाध्मानप्रसेकाश्च विद्रधी महती च दृढ़ ।
शिला चाप्यष्ठीलातुल्या सुकष्टाप्यत्र जायते ॥

तस्य चिकित्सा ।

यदग्नेर्दीपनं यच्च मारुतस्यानुलोमनम् ।
अन्नपानौषधं सर्वं तत्तत् क्लोमातुरे हितम् ॥

अभयादिक्काथः ।

अभयामलकं दारु धन्याकं विश्वभेषजम् ।
द्राक्षा च शारिवेत्येषां क्वाथः क्लोमगदापहः ॥

सुरेन्द्रमोदकः ।

देवपुष्पारुणा श्यामाः शतपुष्पोऽकुशीशयम् ।
यमानीं मागधीं शृङ्गीं द्राक्षां मधुरिकाभये ॥
सञ्चर्य मधुना विद्वान् मोदकं परिकल्पयेत् ।
तं यथाग्निबलं खादेत् क्लोमरोगनिवृत्तये ॥
मोदकोऽयं सुरेन्द्राख्यः पुष्टिकृद्बलवर्द्धनः ।
वह्निसन्दीपनो हृद्यो रसायनवरः स्मृतः ॥

शशिशेखररसः ।

रसगन्धाभ्रहेमानि मौक्तिकं विद्रुमं तथा ।
कन्याग्निमर्दयेद्वस्त्रं ततः सिद्धो भवेद्रसः ॥
सर्वान् क्लोमगदान् हन्ति ह्याशोति मारुतोद्भवान् ।
पैत्तिकाश्लैष्मिकांश्चापि सन्निपातभवं ध्रुवम् ॥

## सुरेन्द्राभ्रवटी ।

अभ्रं सहस्रशो दग्धं रसं दरदसम्भवम् ।
केशराजाम्भसा शुद्धं गन्धकं हीरकं तथा ॥
विद्रुमं मौक्तिकं हेम रौप्यं माक्षिकमेव च ।
कान्तलोहञ्च सम्मर्द्य विधिना वह्निवारिणा ॥
वल्लमात्रां वटीं कृत्वाच्छायायाम्परिशोषयेत् ।
एकैकां योजयेत्प्राज्ञो यथादोषानुपानतः ॥
क्लोमरोगविनाशाय वह्नेः सन्धुक्षणाय च ।
न सोऽस्ति रोगो लोकेऽस्मिन्यमियं न विनाशयेत् ॥
यो यः समाश्रयेद्व्याधिः क्लोम्नितं तमवेक्ष्य च ।
क्रियां संसाधयेद्वैद्यो यथादोषं यथाबलम् ॥
अनुग्राण्यन्नपानानि क्लोमामयनिपीड़ितः ।
सेवेतोग्राणि सर्व्वाणि यत्नतः परिवर्जयेत् ॥

इति भैषज्यरत्नावल्यां क्लोमरोगचिकित्सा समाप्ता ।



## मेदोऽधिकारः ।

श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः ।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनैः ।

अस्वप्नञ्च व्यवायञ्च व्यायामञ्चिन्तनानि च।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणातिप्रवर्द्धयेत्॥
प्रातर्मधुयुतं वारिसेवितं स्थौल्यनाशनम्।
उष्णमन्नस्य मण्डं वा पिवन् कृशतनुर्भवेत्॥
सचव्यजीरकव्योषहिङ्गुसौवर्चलानलाः।
मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः॥
समभागेन समुदितचूर्णात् षोड़शगुणाः शक्तवः।
विड़ङ्गनागरक्षारकान्तलौहरजो मधु।
यवामलकचूर्णन्तु प्रयोगः स्थौल्यनाशनः॥

व्योषाद्यशक्तुप्रयोगः।

व्योषविड़ङ्गशिग्रूणि त्रिफलां कटुरोहिणीम्।
वृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम्॥
हिङ्गुकेवुकमूलानी यमानीधान्यचित्रकम्।
सौवर्चलमजाजीञ्च हवुषाञ्चेति चूर्णयेत्॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः।
शक्तूनां षोड़शगुणोभागः सन्तर्पणं पिवेत्॥
प्रयोगात्तस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः।
प्रमेहा मूढ़वाताश्च कुष्ठान्यर्शांसि कामलाः॥
प्लीहा पाण्डामयः शोथो मूत्रकृच्छ्रमरोचकाः।
हृद्रोगो राजयक्ष्मा च कासः श्वासो गलग्रहः॥
क्रिमयो ग्रहणीदोषाः श्वैत्यं स्थौल्यमतीव च।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्द्धते॥
वदरीपत्रकल्केन पेया काञ्जिकसाधिता॥

श्वौत्यगुल्माश्मिमन्थरसं वापि शिलाजतु ।

## अमृताद्यागुग्गुलुः ।

अमृता त्रुटिवेल्ल वत्सकं
कलिङ्गपथ्यामलकानि गुग्गुलुम् ।
क्रमवृद्धमिदं मधुप्लुतं
पिड़का श्वौत्यभगन्दरं जयेत् ॥

## नवकगुग्गुलुः ।

व्योषाग्नि त्रिफला मुस्तविड़ङ्गैर्गुग्गुलुं समम् ।
खादन् सर्वाञ्जयेद्व्याधीन्मेदः श्लेष्मामवातजान् ॥

## लौहरसायनम् ।

गुग्गुलुस्तालमूली च त्रिफला खदिरं वृषम् ।
त्रिवृतालम्बुषा चैव निर्गुण्डी चित्रकं स्नुही ॥
एषां दशपलान् भागान्तोये पञ्चाढ़के पचेत् ।
पादशेषन्ततः कृत्वा कषायमवतारयेत् ॥
पलद्वादशकं देयं तीक्ष्णलौहस्य चूर्णितम् ।
पुराणसर्पिषः प्रस्थं शर्कराष्टपलानि च ॥
पचेत्ताम्रमये पात्रे सुशीते चावतारिते ।
प्रस्थार्द्धं माक्षिकन्देयं शिलाजतु पलद्वयम् ।
एलात्वचोः पलार्द्धञ्च विड़ङ्गानि पलद्वयम् ।
मरिचञ्चाञ्जनं कृष्णा द्विपलं त्रिफलान्वितम् ॥
पलद्वयन्तु कासीसं श्लक्ष्णचूर्णीकृतं बुधैः ।
चूर्णं दत्त्वाथ मथितं स्निग्धे भाण्डे निधापयेत् ।

ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम् ।
अनुपानं पिबेत् क्षीरं जाङ्गलानां रसं तथा ॥
वातश्लेष्महरं श्रेष्ठं कुष्ठ मेह ज्वरापहम् ।
कामलां पाण्डुरोगञ्च श्वयथुं सभगन्दरम् ॥
मूर्च्छामोहविषोन्मादङ्गराणि विविधानि च ।
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम् ॥
कर्षयेच्चातिमात्रेण कुक्षिं पातालसन्निभम् ।
बल्यं रसायनं मेध्यं वाजीकरणमुत्तमम् ॥
श्रीकरं पुत्रजननं वलीपलितनाशनम् ।
नाश्नीयात् कदलीकन्दं काञ्जिकं करमर्द्दकम् ॥
करीरङ्गारवेल्लञ्च षट्ककारादिवर्जयेत् ॥

त्रिफलाद्यन्तैलम् ।

त्रिफलातिविषा मूर्वा त्रिवृच्चित्रकवासकैः ।
निम्बारग्वधषड्ग्रन्था सप्तपर्णनिशाद्वयैः ॥
गुडूचीन्द्रसुरी कृष्णा कुष्ठसर्षपनागरैः ।
तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम् ॥
पानाभ्यञ्जनगण्डूष नस्यवस्तिषु योजितम् ।
स्थूलतालस्य कण्ड्वादीन् जयेत्कफकृतान् गदान् ॥
शिरीषलामज्जकहेमलोध्रै-
स्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलोहाभयचन्दनानि
शरीरदौर्गन्ध्यहरः प्रदेहः ॥
वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः ।

विल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः॥

हरीतकी लोध्रमरिष्टपत्रं
चूतत्वचो दाड़िमवल्कलञ्च।
एषोऽङ्गरागः कथितोऽङ्गनानां
जङ्घाकषायश्च,नराधिपानाम्॥

जङ्घोद्वर्त्तनार्थं कल्कः प्रायेण हि राजादीनां गज-वाहनात् जङ्घा विवर्णता भवति तत् सवर्ण करणार्थं जङ्घासवर्णकषाय विधिः।

गोमूत्र पिष्टं विनिहन्ति कुष्ठं
वर्णोज्ज्वलं गोपयसा च युक्तम्।
कच्चादि दौर्गन्ध्यहरं पयोभिः
शस्तं वशीकृद्रजनीद्वयेन।

चिञ्चापत्रस्वरसम्नपित कच्चादि योजितं जयति।
दुग्ध हरिद्रोद्वर्त्तन मरिचादि देहस्य दौर्गन्ध्यम्॥

चिञ्चापत्र स्वरसेनादौ स्नपनं कार्य्यं तदनन्तरं दुग्ध हरिद्रां पिष्ट्वा उद्वर्त्तनं कार्य्यम्।

दलजल लघु मलयाभय
विलेपो हरति देहदौर्गन्ध्यम्।
विमलारनाल सहितं पीतमिवालम्बुषा चूर्णम्॥

इति भैषज्यरत्नावल्यां मेदोऽधिकारः समाप्तः।



# आमाशयरोगाधिकारः।

आमाशये बहुविधा हेतुभिर्बहुभिर्नृणाम्।
बहुलक्षणसम्पन्ना जायन्ते बहवो गदाः॥
सामान्यं लक्षणं तेषां वह्निर्बल परिक्षयः।
प्रायश्चोत्क्लेश वमने दौर्बल्य सदनं भ्रमः॥
शूलदाहौ विवर्णत्वं कृशत्वञ्च ज्वरोऽरुचिः।
इन्द्रियाणाञ्च शैथिल्यं भवेन्मूर्च्छा च दारुणा॥

## तेषां चिकित्सा।

आमाशयिक रोगेषु हेतुदोषानुसारतः।
विदध्याद्दीपनं वह्नेः पाचनञ्चानुलोमनम्॥

### पिप्पल्यादि क्वाथः।

पिप्पली शारिवा श्यामा अभयामलकं शटी।
क्वाथमेषां पिबेत्प्रातः सक्षौद्रञ्च सशर्करम्॥
आमाशयिकरोगांश्च वह्निमान्द्यं बलक्षयम्।
शूलारोचक हृल्लासान् क्षपयेदेष निश्चितम्॥

### अमृतार्णवः।

अमृतं रसगन्धौ च लौहमभ्रं समांशकम्।
भावयेद्वह्निनीरेण सप्तकृत्वः पृथक्पृथक्॥
रक्तिद्वयमतो खादेद् यथादोषानुपानतः।

आमाशयिक रोगेषु ज्वरेषु विषमेषु च॥

त्रिपुरसुन्दरी रसः।

सिन्दूरमभ्रकञ्च हेममाक्षिकं
मुक्ताफलं हेम च तुल्यभागिकम्।
कन्याम्बुना मर्द्दय सप्तवासरं
गुञ्जाप्रमाणां वटिकां विधेहि च॥
रसोत्तमस्यास्य निषेवणान्नर
आमाशयोत्थामय रोग सङ्कुतः।
गत्वा विमुक्तिं वलवीर्य्य संयुतो
मेधान्वितः सौम्यवपुश्च जायते॥
अन्नपानादिकं सर्वं सुजरं यच्च पोषणम्।
आमाशयगदे सेव्यं दुर्जरञ्च विवर्जयेत्॥

इति भैषज्यरत्नावल्यां आमाशयरोगाधिकारः समाप्तः।



## छर्द्यधिकारः।



आमाशयोत् क्लेशभवा हि सर्वा-
श्छर्द्योमता लङ्घनमेव तस्मात्।
प्राक्कारयेन्मारुतजां विमुच्य
संशोधनं वा कफपित्तहारि॥

अत्र लङ्घनमल्पदोष विषयं संशोधनं बहुदोष विषयमिति व्यवस्था। संशोधनमत्र विरेचनम्।

चन्दनेनाक्ष मात्रेण संयोज्यामलकीरसम्।
पिबेन्माक्षिकसंयुक्तं छर्द्दिस्तेन निवर्त्तते॥

चन्दनमत्र श्वेतमिति भानुदासः।

क्काथः पर्पटजः पीतः सक्षौद्रश्छर्द्दिनाशनः॥
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम्।
अधोभागीकृते दोषे क्षिप्रं वान्तिर्निवर्त्तते॥
कषायो भृष्टमुद्गस्य सलाज मधुशर्करः।
छर्द्यतीसार तृड्दाह ज्वरघ्नः संप्रकाशितः॥
जातीरसः कपित्थस्य पिप्पली मरिचान्वितः।
क्षौद्रेण युक्तः शमयेल्लेहोऽयं छर्द्दिमुल्बणाम्॥

अत्र जाती आमलकी।

लाजा कपित्थ मधुमागधिकोषणानां
क्षौद्राभया त्रिकटुधान्यक जीरकाणाम्।
पथ्यामृता मरिच माक्षिक पिप्पलीनां
लेहास्त्रयः सकल वम्यरुचि प्रशान्त्यै॥

एलादि चूर्णम्।

एला लवङ्ग गजकेशर कोलमज्ज
लाजप्रियङ्गु घन चन्दन पिप्पलीनाम्।
चूर्णानि माक्षिकसिता सहितानि लीढ्वा
च्छर्द्दिं निहन्ति कफमारुतपित्तजाञ्च॥

अश्वत्थवल्कलं शुष्कं दग्धा निर्वापितं जले
तज्जलं पानमात्रेण च्छर्द्दिमाशु व्यपोहति॥

रसेन्द्रः।

अजाजी धान्यकणाभिः सयोद्राभिः कटुत्रिकैः।
एभिः सार्द्धं भक्षसूतः सेव्योवाग्नि प्रशान्तये॥

इति भैषज्यरत्नावल्यां छर्द्यधिकारः समाप्तः।



# दाहाधिकारः।



यत्पित्तज्वरदाहोक्तं दाहे तत्सर्वमिष्यते।
चन्दनाम्बुकणास्यन्दि तालवृन्तोपवीजितः।
सुप्याद्दाहार्दितोऽम्भोज कदलीदलसंस्तरे।
परिषेकावगाहेषु व्यजनानाञ्च सेवने॥
शस्यते शिशिरं तोयं तृष्णादाहोपशान्तये।
फलिनी लोध्र सेव्याम्बु हेमपत्रं कुटन्नटम्॥
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम्।
ह्रीवेर पद्मकोशीर चन्दनक्षोद वारिणा॥
संपूर्णामवगाहेत द्रोणीं दाहार्दितो नरः।
अवगाहेताम्बुपूर्णां द्रोणीं दाहार्दितो नरः।

इति भैषज्यरत्नावल्यां दाहाधिकारः समाप्तः।



## तृष्णाधिकारः ।



तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ।
रसाश्च बृंहणाः शीता गुडूच्या रस एव वा ॥
पित्तजायान्तु तृष्णायां पक्वोडुम्बरजो रसः ।
तत्क्वाथो वा हिमस्तद्वच्छारिवादिगणाम्बुना ॥
लाजोदकं मधुयुतं शीतं गुडविमर्दितम् ।
काश्मर्य्यशर्करायुक्तं पिबेत्तृष्णार्दितो नरः ॥

बिल्वाढकी धातकि पञ्चकोल
दर्भेषु सिद्धं कफजां निहन्ति ।
हितं भवेच्छर्दनमेव चात्र
तप्तेन निम्बप्रसवोदकेन ॥
क्षतोत्थितां रुग्विनिवारणेन
जयेद्रसानामसृजश्च पानैः ।
क्षयोत्थितां क्षीरजलं निहन्यात्
मांसोदकं वाथ मधूदकं वा ॥
गुर्व्वन्नजामुल्लिखनैर्जयेत्तु
क्षयादृते सर्वकृताञ्च तृष्णाम् ॥

अतिरूक्ष दुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः ।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥
गोस्तनेक्षुरसक्षीर यष्टीमधुमधूत्पलैः ।
नियतं नस्यतः पीतैस्तृष्णा शाम्यति दारुणा ॥

क्षीरेक्षुरसमाध्वीक क्षौद्र सीधुगुड़ोदकैः।
वृक्षाम्लाम्लैश्च गण्डूषास्तालुशोष निवारणाः॥
आम्र जम्बुकषायं वा पिवेन्माक्षिकसंयुतम्।
छर्दिं सर्वां प्रणुदति तृष्णाञ्चैवापकर्षति॥
वटशुङ्ग सिता लोध्र दाड़िमं मधुकं मधु।
पिवेत्तण्डुलतोयेन छर्दितृष्णा निवारणम्॥
केशरं मातुलुङ्गस्य सक्षौद्रं दाड़िमीयुतम्।
क्षणमात्रेण दुर्वारां तृष्णां कवलतो जयेत्॥
दाहतृष्णाप्रशमनं मधुगण्डूष धारणम्॥
असञ्चार्य्यां तु या मात्रा गण्डूषे सा प्रकीर्त्तिता।
सुखं सञ्चर्य्यते या तु सा मात्रा कवले हिता॥
वटशुङ्गामय क्षौद्र लाजनीलोत्पलैर्दृढ़ा।
गुड़िकावदनन्यस्ता क्षिप्रं तृष्णामुदस्यति॥
ओदनं रक्तशालीनां शीतमाक्षिकसंयुतम्।
भोजयेत्तेन शाम्येत छर्दिस्तृष्णाचिरोत्थिता॥
वारिशीतं मधुयुतमाकण्ठाद्वा पिपासितम्।
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति॥
मूर्च्छाच्छर्दि तृषा दाह स्त्रीमद्य भृशकर्षिताः।
पिवेयुः शीतलं तोयं रक्तपित्तमदात्यये॥
पूर्वामयातुरः सन् दीनस्तृष्णार्दितो जलं याचन्।
लभते न चेज्जलाद्यं मरणं प्राप्नोति दीर्घरोगं वा॥
तृषितो मोहमायाति मोहात्प्राणान् विमुञ्चति।
तस्मात्सर्वास्ववस्थासु न क्वचिद्वारि वार्य्यते॥
अन्नेनापि विनाजन्तुः प्राणान् धारयते चिरम्।

तोयाभावे पिपासार्त्तः क्षणात्प्राणैर्विमुच्यते ॥

अत्यम्बुपानान्न भवन्ति रोगा

निरम्बुपानाच्च स एव दोषः।

तस्माद्बुधः प्राणविवर्द्धनार्थं

मुहुर्मुहुर्वारि पिबेदभूरि ॥

सक्षौद्रमाम्रजम्बूत्थं पिबेत् क्वाथं रसान्वितम्।

सतृष्णो मधुना कुर्य्याद्गण्डूषान् शीतले स्थितः ॥

यत्र केवल एव रसस्तत्र मत्स्यसूतो बोध्यः।

इति भैषज्यरत्नावल्यां तृष्णाधिकारः समाप्तः।



## रक्तपित्ताधिकारः।



नोद्रिक्तमादौ संग्राह्यं बलिनोऽप्यश्नतश्च यत्।

हृत्पाण्डुग्रहणीरोगप्लीहगुल्मज्वरादिकृत् ॥

ऊर्द्ध्वं प्रवृद्धदोषस्य पूर्वं लोहितपित्तिनः।

अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ॥

ऊर्द्ध्वगे तर्पणं पूर्वं कर्त्तव्यञ्च विरेचनम्।

प्रागधोगमने पेया वमनञ्च यथाबलम् ॥

ऊर्द्ध्वगे अक्षीण बलमांसेन जनेन तर्पणं पूर्वं प्रय·

मतः कार्य्यम्। प्रतिप्रवृत्ते जङ्गे रक्तपित्ते विपुलबल-
मांसेन विरेचनमित्याशयः।

शालिषष्टिक नीवार कोरदूष प्रसातिकाः।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम्॥
मसूरमुद्गचणकाः समकुष्ठाढ़कीफलाः :
प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम्॥
शाकं पटोलवेत्राग्र तण्डुलीयादिकं हितम्।
मांसं लावकपोतादि शशैण हरिणादिजम्॥
क्षीणमांसबलं वृद्धं बालं शोषानुवर्द्धिनम्।
अवम्यमविरेच्यञ्च स्तम्भनैः समुपाचरेत्॥
वृषपत्राणि निष्पीड्य रसं समधुशर्करम्।
पिबेत्तेन शमं याति रक्तपित्तं सुदारुणम्॥
वासकपत्रं पुटेन पक्वा इति वृद्धोपदेशात्।
समाक्षिकः फल्गुफलोद्भवो वा
पीतो रसः शोणितमाशु हन्ति।
अभया मधुसंयुक्ता पाचनी दीपनी मता।
श्लेष्माणं रक्तपित्तञ्च हन्ति शूलातिसारनुत्।
वासकस्वरसे पथ्या सप्तधा परिभाविता।
कृष्णा वा मधुना लीढ़ा रक्तपित्तं द्रुतं जयेत्॥
पक्वोडुम्बर काश्मर्य्य पथ्या खर्जूरगोस्तनाः।
मधुना घ्नन्ति संलीढ़ा रक्तपित्तं पृथक् पृथक्॥

उडुम्बरादीनां पक्वानि फलानि ततः शुष्काणि
ततस्तेषां सूक्ष्मचूर्णानां मधुना लेहः। अत्र पथ्याचूर्णं
मधुना लीढ़मतीव फलप्रदमिति भानुः।

खदिरस्य प्रियङ्गूनां कोविदारस्य शाल्मलेः।
पुष्पं चूर्णन्तु मधुना लिह्वारोग्यमश्नुते॥
लाक्षाचूर्णं सुकृतं क्षौद्राज्यसमन्वितं समालीढ़म्।
शमयति सोष्णवमनं सरक्तपित्तस्य सिद्धमिदम्॥

उशीरादिचूर्णम्।

दाहतृष्णादौ।

उशीरं तगरं शुण्ठी कक्कोलं चन्दनद्वयम्।
लवङ्गं पिप्पलीमूलं कृष्णैला नागकेशरम्॥
मुस्ता मधूककर्पूरं तुगाक्षीरी च पत्रकम्।
कृष्णागुरुसमं चूर्णं सिताचाष्टगुणा तथा॥
रक्तवान्तिश्च तापश्च नाशयेन्नात्र संशयः॥

एलादिगुड़िका।

एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा।
सितामधुकखर्जूरमृद्वीकाश्च पलान्विताः॥
सञ्चूर्ण्य मधुनायुक्ता गुड़िकाः कारयेद्भिषक्।
अक्षमात्रां ततश्चैकां भक्षयेच्च दिने दिने॥
श्वासं कासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदंभ्रमम्।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम्।
शोषप्लीहामवातांश्च स्वरभेदं क्षतक्षयम्।
गुड़िका तर्पणी हृष्या रक्तपित्तं विनाशयेत्॥
घ्राणप्रवृत्ते जलमाशु देयं
सशर्करं नासिकया पयो वा।

द्राक्षारसं क्षीरघृतं पिबेद्वा
सशर्करं चेक्षुरसं हितं वा ॥

नस्यं दाड़िमपुष्पोत्थोरसो दूर्व्वाभवोऽथवा।
आम्रास्थिजः पलाण्डोर्व्वा नासिकास्रुतरक्तजित् ॥
रसो दाड़िमपुष्पस्य दूर्व्वारससमन्वितः।
अलक्तकरसोपेतः पथ्यया वा समन्वितः ॥
यजितो नस्यतः चिप्रं त्रिदोषमपि देहिनाम्।
नासाप्रवृत्तं रक्तन्तु हन्यादेव न संशयः ॥
नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम।
सेतुरिव तोयवेगं रुणद्धि मूर्द्ध्नि प्रलेपेन ॥

आमलकं घृते भृष्ट्वा काञ्जिकेन पिष्ट्वा मूर्द्ध्नि लेपः इति नीलकण्ठः आमलकं श्लक्ष्णं पिष्ट्वा घृतेन वटवत् भृष्ट्वा शिरसि लेपो देयः इति आनन्दामादयः।

मेढ़गेऽति प्रवृत्ते तु वस्तिकृत्तरमंशितः।
शृतं क्षीरं पिवेद्वापि पञ्चमूल्या तृणाह्वया ॥

कुष्माण्डखण्डः।

कुष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम्।
पचेत्तत्ये घृतप्रस्थे शनैस्ताम्रमये दृढ़े ॥
यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत्।
पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च ॥
त्वगेलापत्र मरिच धान्यकानां पलार्द्धकम्।
न्यसेच्चूर्णीकृतं तत्र दार्व्या संघट्टयेत्पुनः ॥
तत्पक्वं स्थापयेद्भाण्डे दत्त्वा क्षौद्रं घृतार्द्धकम्।

तद्यथाग्नि बलं खादेद्रक्तपित्ती चतक्षयी ॥
कासश्वास तमश्छर्द्दि तृष्णाज्वर निपीड़ितः।
हृष्यं पुनर्नवकरं बलवर्णप्रसादनम् ॥
उरः सन्धानकरणं वृंहणं स्वरबोधनम्।
अश्विभ्यां निर्म्मितं श्रेष्ठं कुष्माण्डकरसायनम्
खण्डामलकमानानुसारात् कुष्माण्डकद्रवात्।
पात्रं पाकाय दातव्यं यावान्नत्र रसो भवेत् ॥

## वासाकुष्माण्डखण्डः।

पञ्चाशच्च पलं ग्राह्यं कुष्माण्डात् प्रस्थमाज्यतः।
ग्राह्यं पलशतं खण्डं वासाक्वाथाढ़के पचेत ॥
मुस्ता धात्री शुभाभार्गी त्रिसुगन्धैश्च कार्षिकैः।
शैलेय विश्वधन्याक मरिचैश्च पलांशिकैः ॥
पिप्पली कुड़वञ्चैव मधुमानीं प्रदापयेत्।
कासंश्वासं चयं हिक्कां रक्तपित्तं हलीमकम् ॥
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥

## वासाखण्डः।

तुलामादाय वासायाः पचेदष्टगुणे जले।
तेन पादावशेषेण पाचयेदाढ़कं भिषक् ॥
चूर्णानामभयानाञ्च खण्डाच्छतशतं न्यसेत्।
द्विपलं पिप्पलीचूर्णात् सिद्धे शीते च माक्षिकात्
कुड़वं पलमानन्तु चातुर्जातं सचूर्णितम्।
क्षिप्त्वा विलोड़ितं खादेद्रक्तपित्ती चतक्षयी ॥

कासश्वासपरीतश्च यक्ष्मणा च प्रपीड़ितः॥

वासकमूलस्य शतपलमार्द्रमेवग्राह्यं जलं श १००, शेषः श २५ हरीतकी चूर्णं श १६, शर्करा श १००, पिप्पलीचूर्णं श २, मधुनः कुड़वमष्टपलं, इति गुरुखादिति भानुदासः, चातुर्जातस्य प्रत्येकं पलम्। वासाक्काथे शर्करा पलशतं गोलयित्वा दार्व्यालोड़येत् आसन्नपाके पिप्पलीचूर्णं चातुर्जातचूर्णञ्च प्रक्षेप्य शीतीभूते मधु प्रक्षिपणीयम्।

## वासाघृतम्।

वासां सशाखां सपलाशमूलां
कृत्वा कषायं कुसुमानि चास्याः।
प्रदाय कल्कं विपचेद्‌घृतञ्च
चौद्रेण पानाद्धिनिहन्ति रक्तम्॥

शणस्य कोविदारस्य वृषस्य ककुभस्य च।
कल्काच्चलात् पुष्पकल्कं प्रस्थे पलचतुष्टयम्॥

## दूर्वाद्यंघृतम्।

दूर्वासोत्पल किञ्जल्का मञ्जिष्ठा सैलवालुका।
सितासितमुशीरञ्च मुस्तं चन्दन पद्मके॥
विपचेत्कार्षिकैरेतैः सर्पिराजं सुखाग्निना।
तण्डुलाम्बु तथा चीरं दत्त्वा चैव चतुर्गुणम्॥
तत्पानं वमतो रक्तं नीवनं नासिकागते।
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत्॥

श्लथःक्लाविद्धि रक्ते च पूरयेच्च च चक्षुषी ।
मेढ्रपायु प्रवृत्ते तु वस्ति कर्मसु तद्धितम् ॥
रोमकूप प्रवृत्ते तु तदभ्यङ्गः प्रशस्यते ॥

तण्डुलोदकच्छागदुग्धयोः प्रत्येकं धातुगुण्यं रक्तशालितण्डुल श ४, जल श १६ संमर्द्य वस्त्रपूतं ग्राह्यम् ।

## समशर्करंलौहम् ।

लौहाच्चतुर्गुणं क्षीरमाज्यं द्विगुणमुत्तमम् ।
चूर्णं पादन्तु वैडङ्गं दद्यान्मधुसिते समे ।
ताम्रपात्रे शुभे पक्त्वा स्थापयेद् घृतभाजने ।
माषकादि क्रमेणैव भक्षयेद्विधिपूर्वकम् ॥
अनुपानं प्रयुञ्जीत नारिकेलजलादिकम् ।
रक्तपित्तं जयेत्तीव्रमम्लपित्तं क्षतक्षयम् ॥
पुष्टिदं कान्तिजननमायुष्यं वृष्यमुत्तमम् ॥

मधुसिते प्रत्येक लौहसमे मुद्रया पाके जाते लौहात्पादिकं विडङ्गचूर्णं प्रक्षेप्यं शीते मधु देयम् ।

## शतमूल्यादिलौहम् ।

शतमूली सिता धान्य नागकेशरचन्दनैः ।
त्रिकत्रय तिलैर्युक्तं लौहं सर्वगदापहम् ॥
तृष्णादाह ज्वरच्छर्दिं रक्तपित्त हरं परम् ॥

## खण्डकाद्यं लौहम् ।

शतावरी छिन्नरुहा वृषमुण्डितिकाबला: ।

तालमूली च गायत्री त्रिफलाऽग्रस्त्वचस्तथा ।
भार्गी पुष्करमूलञ्च पृथक् पञ्चपलानि च ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥
पलद्वादशकं देयं कान्तलौहस्य चूर्णितम् ।
दिव्यौषधि हतस्यापि माक्षिकस्य हतस्य वा ।
खण्डतुल्यं घृतं देयं पलषोड़शिकं बुधैः ।
पचेत्ताम्रमये पात्रे गुड़पाकोमते यथा ॥
प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकं त्वचम् ।
शृङ्गी विड़ङ्गं कृष्णा च शुण्ठी जातीफलं पलम् ॥
त्रिफला धान्यकं पत्रं द्रावं मरिचकेशरम् ।
चूर्णं दत्त्वा समुत्थितं स्निग्धे भाण्डे निधापयेत् ॥
यथाकालं प्रयुञ्जीत विड़ालपदकं ततः ।
गव्यक्षीरानुपानञ्च सेव्यो मांसरसः पयः ॥
गुरुवृष्यानुपानानि स्निग्धं मांसादि बृंहणम् ।
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ॥
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्लमम् ।
श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा ॥
आनाहं शोणितस्रावमम्लपित्तं निहन्ति च ।
चक्षुष्यं बृंहणं हृद्यं माङ्गल्यं प्रीतिवर्द्धनम् ॥
आरोग्यपुत्रदं श्रेष्ठं कायाग्निबलवर्द्धनम् ।
श्रीकरं लाघवकरं खण्डकाद्यं प्रकीर्त्तितम् ॥

रक्तपित्तान्तकलौहम् ।

धात्री च पिप्पलीचूर्णं तुल्यायः सितया सह ।
रक्तपित्तहरं लौहमम्लपित्तं विनाशयेत् ॥

### सुधानिधीरसः।

गन्धं माक्षिकं लौहचूर्णं
त्रैफलेनोदकेन।
मूषा मध्ये भूधरे तत्पुटित्वा
दद्याद्गुञ्जां त्रैफलेनोदकेन॥
लौहपात्रे गोपयः पाचयित्वा
रात्रौ दद्याद्रक्तपित्तप्रशान्त्यै॥

### ह्रीवेराद्यं तैलम्।

ह्रीवेरं नलदं लोध्रं पद्मकाश्मीर पत्रकम्।
नागपुष्पञ्च विल्वञ्च भद्रमुस्ता तथा शटी॥
चन्दनञ्चैव पाठा च कुटजस्य फलत्वचम्।
त्रिफला शृङ्गवेरञ्च भूतवासत्वचस्तथा॥
आम्रास्थि जम्बुसारास्थि मूलं रक्तोत्पलस्य च
एतेषां कार्षिकै र्भागैस्तैलप्रस्थं विपाचयेत्॥
लाचारसाढ़कञ्चैव चीरं स्नेहसमं भवेत्।
रक्तपित्तञ्च त्रिविधं नाशयेदविकल्पतः॥
कासं पञ्चविधं हन्ति तथा श्वासमुरःचतम्।
ह्रीवेराद्यमिदं तैलं बलवर्णाग्निवर्द्धनम्॥
श्रीमद्गहननाथेन निर्म्मितं विश्वसम्पदे।

### उशीरासवः।

उशीरं वालकं पद्मं काश्मीरं नीलमुत्पलम्।
प्रियङ्गुं पद्मकं लोध्रं मञ्जिष्ठाधन्वयासकम्॥

पाठां किराततिक्तञ्च न्यग्रोधोडुम्बरं शठीम् ।
पर्पटं पुण्डरीकञ्च पटोलं काञ्चनारकम् ॥
जम्बूशाल्मलिनिर्यासं प्रत्येकं पल संमितम् ।
सर्वं सुचूर्णितं कृत्वा द्राक्षायाः पलविंशतिम् ॥
धातकीं षोड़शपलां जलद्रोणद्वये क्षिपेत् ।
शर्करायास्तुलां दत्त्वा क्षौद्रस्यार्द्धतुलां तथा ॥
मासं संस्थापयेद्भाण्डे मांसीमरिचधूपिते ।
उशीरासव इत्येष रक्तपित्तविनाशनः ॥
पाण्डुकुष्ठ प्रमेहार्शः कृमिशोथहरस्तथा ।

इति भैषज्यरत्नावल्यां रक्तपित्ताधिकारः समाप्तः

## अग्निमान्द्याधिकारः ।

सारमेतच्चिकित्सायाः परमग्नेश्च पालनम् ।
तस्माद्यत्नेन कर्त्तव्यं वह्नेस्तु प्रतिपालनम् ॥
अस्तु दोषशतं क्रुद्धं सन्तु व्याधिशतानि च ।
कायाग्निमेव मतिमान् रक्षन् रक्षति जीवितम् ॥
समस्य रक्षणं कार्य्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥

## सैन्धवादिचूर्णम्।

सिन्धूत्थ पथ्या मगधोद्भव वह्निचूर्णं
मुष्णाम्बुना पिबति यः खलु नष्टवह्निः।
तस्यामिषेण सघृतेन वरं नवान्नं
भस्मीभवत्यचिरमात्रमिह क्षणेन॥

## हिङ्ग्वष्टकं चूर्णम्।

त्रिकटुक मजमोदा सैन्धवं जीरके द्वे
समधरण धृतानामष्टमो हिङ्गुभागः।
प्रथम कवल भुक्तं सर्पिषा चूर्णमेत-
ज्जनयति जठराग्निं वातरोगांश्च हन्ति॥

अजमोदात्र यमानी अग्नेरत्यन्त दीपनत्वादिति भानुदास गोपालदासौ। चूर्णं भक्तोपरिनत्वा घृतेन सन्धीय ग्रासत्रयं भोजनीयमितिभानुदासः।

## स्वल्पाग्निमुखचूर्णम।

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्।
पिप्पली त्रिगुणा प्रोक्ता शृङ्गवेरं चतुर्गुणम्॥
यमानिका पञ्चगुणा षड्गुणा च हरितकी।
चित्रकं सप्तगुणितं कुष्ठमष्टगुणं भवेत्॥
एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया।
पिबेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा॥
सोदावर्त्त मजीर्णञ्च प्लीहान मुदरं तथा।
अङ्गानि यस्य शीर्य्यन्ति विषं वा येन भक्षितम्॥

अर्शोहरं दीपनञ्च शूलघ्नं गुल्मनाशनम्।
कासं श्वासं निहन्त्याशु तथैव क्षयनाशनम्॥
चूर्णमग्निमुखं नाम न क्वचित् प्रतिहन्यते।

## वृहदग्निमुखचूर्णम्।

द्वौ क्षारौ चित्रकं पाठा करञ्जं लवणानि च।
सूक्ष्मैला पत्रकं भार्गी क्रिमिघ्नं हिङ्गुपुष्करम्॥
शटीदार्वीत्रिवृन्मुस्तं वचा चेन्द्रयवस्तथा।
धात्रीजीरक वृक्षाम्लं श्रेयसी चोपकुञ्चिका॥
अम्लवेतसमम्लीका यमानी सुरदारु च।
अभयातिविषा श्यामा हवुषारग्वधं समम्॥
तिलमुष्कक्षुरिग्रूणां कोकिलाक्ष पलाशयोः।
क्षाराणि लौहकिट्टञ्च तप्तं गोमूत्रसेचितम्॥
समभागानि सर्व्वाणि सूक्ष्मचूर्णानि कारयेत्।
मातुलुङ्ग रसेनैव भावयेच्च दिनत्रयम्॥
दिनत्रयन्तु शुक्तेन आर्द्रकस्य रसेन च।
अत्यग्निकारकं चूर्णं प्रदीप्ताग्नि समप्रभम्॥
उपयुक्तं विधानेन नाशयत्यचिराद्दटान्।
अजीर्णकमयो गुल्मान् प्लीहानं गुदजानि च॥
उदराण्यन्त्रवृद्धिञ्च अष्ठीलां वातशोणितम्।
प्रणुदत्युल्वणान् रोगानष्ट मग्निं प्रदीपयेत्॥
समस्त व्यञ्जनोपेतं भक्तं कृत्वा सुभाजने।
टापयेदस्य चूर्णस्य विडालपदमात्रकम्॥
यदाह मात्रात्तत्सर्व्वं द्रवीभवति सोष्मकम्।

भास्करलवणम्।

पिप्पली पिप्पलीमूलं धान्यकं कृष्णजीरकम्।
सैन्धवञ्च विड़ञ्चैव पत्रं तालीशकेशरम्॥
एषां द्विपलिकान् भागान् पञ्च सौवर्चलस्य च।
मरिचाजाजीशुण्ठीनामेकैकस्य पलं पलम्।
त्वगेला चार्द्धभागेन सामुद्रात्कुड़वद्वयम्।
दाड़िमात्कुड़वञ्चैव द्वे पले चाम्लवेतसात्॥
एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम्।
लवणं भास्करं नाम भास्करेण विनिर्म्मितम्॥
जगतस्तु हितार्थाय वातश्लेष्मामयापहम्।
वातगुल्मं निहन्त्याशु वातशूलानि यानि च॥
तक्रमस्तु सुरासीधु तक्र काञ्जिक योजितम्।
जाङ्गलानाञ्च मांसेन रसेन विविधेन च।
मन्दाग्नेरश्नतो नित्यं भवेदाश्वेव पावकः॥
अर्शांसि ग्रहणीदोषं कुष्ठामय भगन्दरान्।
हृद्रोगमामदोषञ्च विबद्धानुदरे स्थितान्॥
प्लीहानमश्मरीञ्चैव श्वासकासोदरक्रिमीन्।
विशेषतः शर्कराद्दीन् रोगान् नानाविधांस्तथा॥
पाण्डुरोगांश्च विविधान् नाशयत्यश्निर्यथा॥

पत्रतालीशादियोगादेवगन्धाढ्यं न पुनरपरचातुर्जातादि प्रक्षेपः।

क्षारलवणतोयेन वाश्विरामे प्रशस्यते।
अन्नं विदग्धं हि नरस्य शीघ्रं
शीताम्बुना वै परिपाकमेति।

तत्रस्य शैत्येन निहन्ति पित्त-
माक्लेदिभावाच्च नयत्यधस्तात्॥
हरीतकी धान्यतुषोदसिद्धा
सपिप्पली सैन्धव संप्रयुक्ता।
सोद्गार धूमं भ्रममप्यजीर्णं
विभज्य सद्यो जनयेत् क्षुधाञ्च॥

विष्टब्धे स्वेदनं पथ्यं पेयञ्च लवणोदकम्।
रसशेषे दिवास्वप्नं लङ्घनं वातवर्जनम्॥

व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीड़ितान्।
क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धान् रसाजीर्णिनो
रात्रौ जागरितांस्तथा निरशनान् कामं दिवा स्वापयेत्॥

आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषण सैन्धवैः।
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णविनाशनम्॥

पथ्यापिप्पलीसंयुक्तं चूर्णं सौवर्चलं पिबेत्।
मस्तुनोष्णोदकेनाथ बुद्ध्वा दोषगतिं भिषक्॥
चतुर्विधमजीर्णञ्च मन्दानलमरोचकम्।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति॥

विसूचिकायां वमितं विरिक्तं
सुलङ्घितं वा मनुजं विदित्वा।
पेयादिभिर्दीपनपाचनैश्च
सम्यक्क्षुधार्त्तं समुपक्रमेत॥

जलपीतमपामार्गमूलं हन्ति विसूचिकाम्।
कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम्।

विसूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम् ॥

व्योषं करञ्जस्य फलं हरिद्रां
मूलं समावाप्य च मातुलुङ्गाः।
छाया विशुष्का गुड़िकाः कृतास्ता
हन्युर्विसूचीं नयनाञ्जनेन ॥

गुड़पुष्पाग्रखरीतण्डुलगिरिकर्णिका हरिद्राभिः।
अञ्जन गुड़िका विनयति विसूचिकां त्रिकटुसंयुक्ता ॥

त्वक्पत्र रास्नागुरु शिग्रुकुष्ठै-
रम्लप्रपिष्टैः सवचाशताह्वैः।
उद्वर्त्तनं खल्लिविसूचिकाघ्नं
तैलं विपक्वञ्च तदर्थकारि ॥

वमनं त्वलसे पूर्वं लवणेनाम्बुवारिणा।
स्वेदो वर्त्तिर्लङ्घनञ्च क्रमश्चान्तोऽग्निवर्द्धनः ॥

सरुक् चानद्ध मुदरमम्लपिष्टैः प्रलेपयेत्।
दारुहैमवती कुष्ठशताह्वा हिङ्गुसैन्धवैः ॥

तक्रेण युक्तं यवचूर्णमुष्णं
सक्षारमर्त्तिं जठरे निहन्यात्।
स्वेदो घटैर्वा बहुवाष्पपूर्णै-
रुष्णैस्तथान्यैरपि पाणितापैः ॥

तक्रेण सन्धीय यवचूर्णं सयवक्षारं स्थालके तप्तं कृत्वा उदरे स्वेदो दातव्यः लेपो वा इति भानुः। अम्लघोल शं ४ यवचूर्ण श्ल २ यवक्षार श्ल १ सर्वं स्थाल्यां पक्तव्यम्। अति तप्ते सति अपर घटिकायां किञ्चिद्दत्त्वा तां घटीमुदरे भ्रामयेदिति त्रिपुरारिः।

तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम्।
दोषच्छन्नोऽनलो नालं पक्तुं देहौषधाशनम्॥

## लवङ्गाद्यं मोदकम्।

लवङ्गं पिप्पली शुण्ठी मरिचं जीरकद्वयम्।
केशरं तगरञ्चैव एला जातीफलं तुगा॥
कट्फलं तेजपत्रञ्च पद्मबीजं सचन्दनम्।
कक्कोलमगुरुश्चैव उशीरमभ्रकं तथा॥
कर्पूरं जातिकोषञ्च मुस्तं मांसी यवस्तथा।
धान्यकं शतपुष्पा च लवङ्गं सर्वतुल्यकम्॥
सर्वचूर्णं द्विगुणितां शर्करां विनियोजयेत्।
सर्वरोगं निहन्त्याशु अम्लपित्तं सुदारुणम्॥
अग्निमान्द्यमजीर्णञ्च कामलापाण्डुरोगनुत्।
बलपुष्टिकरञ्चैव विशेषात् शुक्रवर्द्धनम्॥
ग्रहणीं सर्वरूपाञ्च अतिसारं सुदुर्जयम्।
अश्विभ्यां निर्मितं हन्ति लवङ्गाद्यमिदं शुभम्॥

## वाताजीर्णे सुकुमारमोदकम्।

पिप्पली पिप्पलीमूलं नागरं मरिचं शिवा।
धात्री चित्रकमभ्रञ्च गुडूची कटुरोहिणी॥
प्रत्येकमेषां कर्षांशं चूर्णं दन्त्यास्त्रिकार्षिकम्।
द्विपलं त्रिवृताचूर्णं शर्करायाः पलत्रयम्॥
मधुना मोदकं कार्य्यं सुकुमारकमोदकम्।
वाताजीर्णप्रशमनं विष्टम्भे परमौषधम्॥

उदावर्त्तानाहहरं सर्व्वाजीर्ण विनाशनम्।

## वाताजीर्णे हरीतकीप्रयोगः।

हरीतक्याः शतं ग्राह्यं तक्रैः स्विन्नञ्च कारयेत्।
यत्नाद्बीजं समुद्धृत्य चूर्णानीमानि पूरयेत्॥
षडूषणं पञ्चपटु यमानीद्वयमेव च।
त्रिक्षारं हिङ्गु टिण्डिञ्च कर्षद्वयमितं पृथक्॥
सूक्ष्मचूर्णीकृतं सर्व्वं जम्बीराम्लेनापि भावयेत्।
निम्बाम्लस्वरसेनापि भावयेच्च दिनत्रयम्॥
खादयेदभयामेकां सर्व्वाजीर्णविनाशनम्।
चतुर्व्विधमजीर्णञ्च वह्निमान्द्यं विसूचिकाम्॥
गुल्मशूलादिरोगांश्च नाशयेदविकल्पतः।

## विष्टम्भे त्रिवृतादिमोदकम्।

त्रिवृद्दन्ती कणामूलं कणावह्नि पलं पलम्।
सर्व्वतुल्यात्तया शुण्ठी गुडेन सह मोदकम्॥
कर्षकं भक्षयेन्नित्यं दीप्ताग्निः कुरुते जनात्।

## अग्निमुख लवणम्।

चित्रकं त्रिफला दन्ती त्रिवृता पुष्करं समम्।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु सैन्धवम्॥
भावयित्वा स्नुहीक्षीरैस्तत्काण्डे निक्षिपेत्ततः।
मृदुपङ्केनानुलिप्तं प्रक्षिपेज्जातवेदसी॥
सुदग्धन्तु समुद्धृत्य संचूर्ण्योष्णाम्बुना पिवेत्।
एतदग्निमुखं नाम लवणं वह्निकृत्परम्॥

यक्षत् प्लीहोदरानाह गुल्मार्शः पार्श्वशूलनुत्।

सर्वं चूर्णमेकीकृत्य अस्य पञ्चरत्तिकमुष्णजलेन पिबेत्।

## विष्टम्भे शार्दूलकाञ्जिकम्।

पिप्पली शृङ्गवेरञ्च देवदारु सचित्रकम्।
चविकां विल्वपेशीञ्च अजमोदां हरीतकीम्॥
महौषधं यमानीञ्च धन्याक मरिचं तथा।
जीरकञ्चापि हिङ्गुञ्च काञ्जिकं साधयेद्भिषक्॥
एष शार्दूलको नाम काञ्जिकोऽग्निबलप्रदः।
सिद्धार्थ तैल सम्भृष्टो दृष्यरोगान् व्यपोहति॥
कास श्वासमतीसारं पाण्डुरोगं सकामलम्।
आमञ्च गुल्मरोगञ्च वातशूल सवेदनम्॥
अर्शांसि श्वयथुञ्चैव भुक्ते पीते च सात्म्यतः।
चीरपाक विधानेन काञ्जिकस्यापि साधनम्॥
सर्वचूर्णापेक्षया अष्टगुणं काञ्जिकं चतुर्गुणजलेन
शेषा काञ्जिकशेषमवतारयेत्। बुद्धामात्रया दद्यात्।

## सैन्धवाद्यं चूर्णम्।

सैन्धवं चित्रकं पथ्या लवङ्गं मरिचं कणा।
टङ्कनं नागरं चव्यं यमानी मधुरी वचा॥
द्रव्याणि द्वादशैतानि समभागानि चूर्णयेत्।
भावयेन्निम्बुकद्रावैस्त्रिसप्ताहं प्रयत्नतः॥
ततो माषद्वयं चूर्णं वारिणोष्णेन पाययेत्।

सैन्धवेन सतक्रेन मस्तुना काञ्जिकेन वा॥
सैन्धवाद्य मिदं चूर्णं सद्यो वह्निं प्रदीपयेत्

### रसप्रयोगः।

### श्रीरामवाणरसः।

पारदामृत लवङ्ग गन्धकं
भागयुग्ममरिचेन मिश्रितम्।
जातीफलमथार्द्ध भागिकं
तिन्तिड़ीम्बरसेन मर्द्दितम्॥
माषमात्र मनुपान योगतः
सद्य एव जठराग्नि दीपनः।
संग्रह ग्रहणी कुम्भकर्णकं
सामवात खरदूषणं जयेत्॥
वह्निमान्द्यदशवक्त्रनाशनो
रामवाण इव विश्रुतो रसः॥

### अग्नितुण्डी वटी।

शुद्धसूत विष गन्धमजमोदा फलत्रयम्।
सर्ज्जिक्षार यवक्षारं वह्नि सैन्धव जीरकम्॥
सौवर्चल विड़ङ्गानि सामुद्रं टङ्कनं समम्।
विषमुष्टि सर्वतुल्यं जम्बीराम्लेन मर्द्दयेत्।
मरिचाभां वटीं खादेदग्निमान्द्यं प्रशान्तये॥

### अग्निरसः।

मरिचाब्द वचा कुष्ठं समांशं विषमेव च।

आर्द्रकस्य रसैः पिष्ट्वा मुद्गमात्रन्तु कारयेत् ॥
स्वयमग्निरसो नाम सर्वाजीर्णं प्रशान्तये ॥

सर्वसमं विषम्।

## अमृतवटी।

अमृत वराटक मरिचैर्द्विपञ्चनव भागिकैः क्रमशः।
वटिका मुद्गसमाना कफपित्ताग्निमान्द्यहारिणी ॥

इयमग्नितुण्डीनाम्ना च ख्याता।

## सुधासागरो रसः।

त्रिकटु त्रिफला चैव तथा लवणपञ्चकम्।
क्षारत्रयं रसं गन्धं भागैकं पूर्ववद्विषम् ॥
गुञ्जामात्रां वटीं कुर्य्याल्लवङ्गैः पञ्चभिः सह।
सुधासागर नामायं रसः सूर्य्येण निर्म्मितः ॥

पूर्ववद्विषमित्यमृतवत्युक्त भागवत् तेनात्र विषस्य भागद्वयम्।

## टङ्कनादिवटी।

टङ्कन नागर गन्धक पारद-
गरलं मरिचं समभाग युतम्।
लकुच स्वरसैश्चणक प्रतिमा
गुड़िका जनयत्यचिरादनलम् ॥

## लवङ्गादिवटी।

लवङ्ग शुण्ठी मरिचानि भृष्ट-
सौभाग्य चूर्णानि समानि कृत्वा।

भाव्यान्यपामार्ग हुताश वारा
प्रभूत मांसादिक जारणाय ॥

अजीर्णकण्टको रसः ।

शुद्ध सूतं विषं गन्धं समं सर्वं विचूर्णयेत् ।
मरिचं सर्वतुल्यं स्यात् कण्टकार्य्याः फलद्रवैः ॥
मर्द्दयेत् भावयेत्सर्वमेकविंशति वारकम् ।
गुञ्जामात्रां वटीं खादेत् सर्वाजीर्ण प्रशान्तये ॥
अजीर्ण कण्टकः सोऽयं रसो हन्ति विसूचिकाम् ।

महोदधिः ।

एकैकं विषसूतौ च जाती टङ्कं द्विकं द्विकम ।
कृष्णात्रयं विश्वषटकं दग्धं कपर्दकं तथा ॥
देवपुष्पं वाणमितं सर्वं संमर्द्दयत्नतः ।
महोदधिवटी नाम्ना नष्टमग्निं प्रदीपयेत् ॥

अग्निकुमारो रसः ।

रसेन्द्र गन्धौ सह टङ्कनेन
समं विषं योज्यमिह त्रिभागम् ।
कपर्द शङ्खाविह वसुभागौ
मरिच मत्राष्ट गुणं प्रदेयम् ॥
सुपक्कजम्बीर रसेन घृष्टः
सिद्धो भवेदग्निकुमार एषः ।
विसूचिकाजीर्ण समीरणार्त्ते
दद्याद् द्विवल्लं ग्रहणीगदे च ।

अत्र सर्वमेकभागापेक्षया वचनान्तर सम्वादात् ।

हुताशनोरसः ।

गन्धेश टङ्कनैकैकं विषमत्र त्रिभागिकम् ।
अष्टभागन्तु मरिचं जम्बाम्भो मर्दितं दिनम् ॥
तद्वटीं मुद्गमानेन कृत्वार्द्रेण प्रयोजयेत् ।
शूलारोचकगुल्मेषु विसूच्यामग्निमान्द्यके ॥
अजीर्णे सन्निपातादौ शैत्यजाड्योग्ररोगहे ॥

भास्करोरसः ।

विषं सूतं फलं गन्धं त्र्यषणं टङ्कजीरकम् ॥
एकैकं द्विगुणं लौहं शङ्खमभ्रवराटकम् ।
सर्वतुल्यं लवङ्गञ्च जम्बीरैर्भावयेद्भिषक् ।
सप्तवासरपर्य्यन्तं ततः स्याद्भास्करो रसः ॥
गुञ्जाद्वयप्रमाणेन वटीं कुर्य्याद्विचक्षणः ।
ताम्बूलीदलयोगेन वटीं संचर्व्य भक्षयेत् ॥
शूलरोगेषु सर्वेषु विसूच्यामग्निमान्द्यके ।
सद्योवह्निकरो ह्येष तन्त्रनाथेन भाषितः ॥

अग्निसन्दीपनोरसः ।

षड् षणं पञ्चपटु त्रिक्षारं जीरकद्वयम् ।
अम्लदर्भाग्रगन्धे च मधुरीहिङ्गुचित्रकम् ॥
जातीफलं तथा कुष्ठं जातीकोषं त्रिजातकम् ।
चिञ्चाग्रे त्वग्रिकक्षारमन्दृतं रसगन्धकौ ॥
लौहमभ्रञ्च वङ्गञ्च लवङ्गञ्च हरीतकी ।

समभागानि सर्वाणि भागौ द्वावम्लवेतसात् ॥
शङ्खस्य भागाश्चत्वारः सर्वमेकत्र भावयेत् ।
क्वाथेन पञ्चकोलस्य चित्रापामार्गयोस्तथा ॥
अम्ललोणीरसेनैव प्रत्येकं भावयेत्त्रिधा ।
त्रिःसप्तकृत्वो निम्बाकरसैः पश्चाद्विभावयेत् ॥
बदराभा वटी कार्य्या योक्तव्या सन्ध्ययोर्द्वयोः
अनुपानं प्रदातव्यं बुद्ध्वा दोषानुसारतः ॥
अग्निसन्दीपनो नाम रसोऽयं भुवि दुर्लभः ।
दीपयत्याशु मन्दाग्निमजीर्णञ्च विनाशयेत् ॥
अम्लपित्तं तथा शूलं गुल्ममाशु व्यपोहति ॥

शङ्खवटी । महाशङ्खवटी ।

दग्धशङ्खस्य चूर्णं हि तथा लवणपञ्चकम् ।
चिञ्चिकाक्षारकञ्चैव कटुकत्रयमेव च ॥
तथैव हिङ्गुकं ग्राह्यं विषगन्धकपारदम् ।
अपामार्गस्य वह्नेश्च क्वाथैर्लिम्पाकजे रसैः ॥
भावयेत्सर्वचूर्णं तदम्लवर्गैर्विशेषतः ।
यावत्तदम्लतां याति गुडिकामृतरूपिणी ॥
सद्यो वह्निकरी चैव भस्मकञ्च नियच्छति ।
भुक्ताकण्ठन्तु तस्यान्ते खादेच्च गुडिकामिमाम्
तत्क्षणाज्जारयत्याशु सर्व्वाजीर्णविनाशिनी ।
ज्वरं गुल्मं पाण्डुरोगं कुष्ठं शूलं प्रमेहकम् ॥
वातरक्तं महाशोथं वातपित्तकफानपि ।
दुर्नामारिरियञ्चाशु दृष्टो वारसहस्रशः ॥

निर्मूलं दहति शीघ्रं तूलकं वह्निना यथा ॥
लौहवङ्गयुता चेयं महाशङ्खवटी स्मृता।
प्रभाते कोष्णतोयानुपानमेव प्रशस्यते ॥
जम्बीरं बीजपूरञ्च मातुलुङ्गञ्च शुक्रकम्।
चाङ्गेरी तिन्तिड़ी चैव बदरी करमर्द्दकम्॥
अष्टावम्लस्य वर्गोऽयं कथितो मुनिसत्तमैः॥

सिद्धफला।

शङ्खवटी।

चिञ्चाक्षार पलं पटुव्रजपलं निम्बूरसे कल्कितं
तस्मिन् शङ्ख पलं प्रतप्तमसकृत् संस्थाप्य शोषावधि।
हिङ्गुव्योषपलं रसामृतबली निःक्षिप्य निष्कांशिकान्
बद्धा शङ्खवटी चय ग्रहणिकारुक्पक्तिशूलादिषु॥

पटुव्रजपलं पञ्चलवणं मिलित्वा पलं हिङ्गुशुण्ठी पिप्पली मरिचानामपि मिलित्वा पलं रसविषगन्धकानां प्रत्येकं निष्कं माषचतुष्टयं शङ्ख गेंड़ुयां वह्नौ ध्मात्वा निम्बुरसे तप्तां निक्षिपेत् यावच्चूर्णीभूय तद्रसे पतति सर्व्वं चूर्णमेकीकृत्य निम्बुरसेन रौद्रे तावद्भावयेत् यावद्मृता भवति।

शङ्खवटी।

द्वौ क्षारौ रसगन्धकौ सलवणौ व्योषञ्च तुल्यं विषं
चिञ्चाभस्मचतुर्गुणं रसवरे लिम्पाक जाते कृतम्।
वारंवारमिदं सुपाकचरितं लौहं क्षिपेच्छिङ्गुकं

भृष्टं वङ्गसमं सुमर्द्दितमिदं गुञ्जाप्रमाणा भवेत् ॥
ख्याता शङ्खवटी महाग्निजननी शूलान्तकृत् पाचनी
कासश्वासविनाशिनी क्षयहरी मन्दाग्निसन्दीपनी ।
वातव्याधिमहोदरादिशमनी तृष्णाश्मरीच्छेदनी
सर्व्वव्याधि विनाशिनी क्रिमिहरी दुष्टामयध्वंसिनी ॥

महाशङ्खवटी ।

पटुपञ्चक हिङ्गुशङ्ख चिञ्चा-
भसित व्योष वलीश्वरा मृतानि ।
शिखिशेखरिकाम्लवर्ग निम्बु-
तृशभाव्यानि यथाम्लतां व्रजन्ति ॥
महाशङ्खवटी ख्याता भोजनान्ते प्रकीर्त्तिता ।
दीपनी परमा हन्ति महाशोग्रहणीमुखान् ॥

महाशङ्ख वटी ।

कणामूलं वह्निदन्ती पारदं गन्धकं कणा ।
विचारं पञ्चलवणं मरिचं नागरं विषम् ॥
अजमोदामृता हिङ्गु चारं तिन्तिड़िकाभवम् ।
सञ्चूर्ण्य समभागन्तु द्विगुणं शङ्खभस्मकम् ॥
अम्लद्रवेण संभाव्य वटी कोलास्थिसम्मिता ।
अम्लदाड़िमतोयेन निम्बाकम्बरसेन च ॥
भक्षयेत्प्रातरुत्थाय नाम्ना शङ्खवटी शुभा ।
तक्रमस्तु सुरासीधु काञ्जिकोष्णोदकेन वा ॥
शस्येषादि रसेनैव रसेन विविधेन च ।

मन्दाग्निं दीपयत्याशु वड़वाग्निं समप्रभम् ॥
अर्शांसि यक्ष्मरोगं कुष्ठमेहभगन्दरम् ।
प्लीहानमश्मरीं श्वासकासं महोदरक्रिमीन् ॥
हृद्रोगं पाण्डुरोगञ्च विबन्धानुदरे स्थितान् ।
तान् सर्व्वान्नाशयत्याशु भास्करस्तिमिरं यथा ॥

क्रव्यादरसः ।

पलं रसस्य द्विपलं बलेः स्या-
च्छुल्वायसी चार्द्धपलप्रमाणे ।
विचूर्ण्य सर्व्वं द्रुतवह्नियोगा-
देरण्डपत्रेऽथ निवेशनीयम् ॥
कृत्वाथ तां पर्पटिकां विदध्या-
ल्लौहस्य पात्रे वरपूत मस्मिन् ।
जम्बीरजं पक्करसं पलानि
शतं नियोज्याग्निं महाल्पमात्राम् ॥
जीर्णे रसे भावितमेतदेतैः
सुपञ्चकोलोद्भववारिपूरैः ॥
सवेतसाम्लैः शतमत्र देयं
समं रजष्टङ्कनजं सुभृष्टम् ॥
विड़ं तदर्द्धं मरिचं समञ्च
तत्सप्तधार्द्रां चणकाम्लवारा
क्रव्यादनामा भवति प्रसिद्धो
रसस्तु मन्थानक भैरवोक्तः ।
माषद्वयं सैन्धव तक्रपीत-
मेतस्य घनैः खलु भोजनान्ते ।

गुरूणि मांसानि पयांसि पिष्टी-
कृतानि सेव्यानि फलानि चैव।
मात्रातिरिक्तान्यपि सेवितानि
यामद्वयाज्जारयति प्रसिद्धः॥

कार्श्यस्थौल्य निवर्हणो गरहरः सामातिनिर्नाशनो
गुल्मप्लीह जलोदरादि शमनः शूलार्त्ति मूलापहः।
वातश्लेष्म निवर्हणो ग्रहणिकातीसार विध्वंसनो
वातग्रन्थि महोदरापहरणः क्रव्यादनामा रसः॥

रस १ पल गन्धक २ पल ताम्र ४ तोला लौह ४ तोला सर्वं चूर्णयित्वा लौहपात्रे मृदुवह्निना पर्पटीवत् कार्य्यं ततो जम्बीररस पलशतेन शनैः शनैः पक्तव्यं रसे शुष्के पुनर्भावना दातव्या पञ्चकोल क्वाथेन ५० अम्लवेतस क्वाथेन ५० ततः सर्वद्रव्यसमं भृष्टटङ्कनचूर्णं ४ पल तस्यार्द्धं विटलवणं २ पल सर्वद्रव्यसमं मरिचचूर्णं १० पल ततश्चणकक्षारेण सप्तभावना दातव्या इति कविचन्द्र प्रभृतयः।

## विश्वोद्दीपकाभ्रम्।

अभ्रं निर्म्मलमारितं पलमितं चूर्णीकृतं यत्नत-
स्तव्यं चित्रकमिन्द्रसूर कनकं मालूर पत्रार्द्रकम्।
मूलं पिप्पलिसम्भवं मधुरिका गोपोऽर्कमूलं पृथक्
चैषां सत्वपले विमर्द्दितमिदं कर्षं क्षिपेट्टङ्कनम्॥
गुञ्जासम्मितमेतदेव वलितं तत्पारिभद्रद्रवै-
र्मन्दाग्निं चिरजातगुल्मनिचयं शूलाम्लपित्तं ज्वरम्।

छर्दिं दुष्टमसूरिका मलसकं श्वासञ्च कासं तृषां
प्लीहानं यकृतं चयं स्वरहितं कुष्ठं महारोचकम्।
दाहं मोहमशेष दोषजनितं कृच्छ्रञ्च दुर्नामकं-
मामं वातविमिश्रितं नृगनजं रोगं समस्तं जयेत्।
विश्वोद्दीपकनाम रोगहरणे प्रोक्तं पराशम्भुना
सर्व्वेषां हितकारकं गदवतां सर्व्वामय ध्वंसनम्॥
पाषाणं यदि भक्षितं तदपि तं कुर्य्यात्सुजीर्णं पुन-
र्बल्यं वृष्यतरं रसायनवरं मेधाकरं कान्तिदम्।

वीरभद्राभ्रकम्।

अभ्रकं पुटसहस्र मारितं
कर्षयुग्ममतिनिर्म्मलीकृतम्।
वासराणि नवतिं विमर्द्दितं
चित्रक स्वरससाधसितकम्॥
शृङ्गवेररसमर्द्दिता वटी-
कारिता सकलरोगनाशिनी॥
भक्षिता भुजगवल्लिपल्लवैः
शृङ्गवेर शकलेन वा पुनः॥
वह्निमान्द्यमभिनाश्य सत्वरं
कारयेत्प्रखर पावकोत्तरम्।
श्वासकास व मशोथ कामला
प्लीह गुल्म जठरारुचिभ्रमान्॥
रक्तपित्त यकृदम्लपित्तकं
शूलकोपजगदान् विसूचिकाम्।

आमवात बहुवात शोषितं
दाहशीत बलह्रासकार्श्यकम् ॥
विद्रधिं ज्वरगरं शिरोगदं
नेत्ररोगमखिलं हलीमकम्।
हन्ति हृष्यतममेतदभ्रकं
वीरभद्र मतिवल्यमुत्तमम् ॥
भक्षितं विविध भक्ष्य मागतं
काष्ठसङ्घमपि भस्मतां नयेत्।

मुस्तकारिष्टः।

मुस्तकस्य तुलाद्वन्द्वं चतुर्द्रोणेऽम्भसः पचेत्।
पादशेषे रसे तस्मिन् क्षिपेद्गुड़ तुलात्रयम् ॥
धातकीं षोड़शपलां यमानीं विश्वभेषजम्।
मरिचं देवपुष्पञ्च मेथीं वह्निञ्च जीरकम् ॥
पलयुग्ममितं क्षिप्ता घृतभाण्डे निधापयेत्।
संस्थाप्य मासमात्रन्तु ततः संस्रावयेद्भिषक् ॥
अजीर्णमग्निमान्द्यञ्च विसूचीमपि दारुणाम्।
ग्रहणीं विविधां हन्ति नात्र कार्य्या विचारणा ॥

इति भैषज्यरत्नावल्यामग्निमान्द्याधिकारः समाप्तः



# अरोचकाधिकारः।

बस्तिं समीरणे पित्ते विरेकं वमनं कफे।
कुर्य्याद्धृद्यानुकूलानि हर्षणञ्च मनोघ्नजे॥
कुष्ठ सौवर्च्चलाजाजी शर्करा मरिचं विड़म्।
धात्र्येला पद्मकोशीर पिप्पल्यश्चन्दनोत्पलम्॥
लाध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम्।
आर्द्रदाड़िम निर्य्यासश्चाजाजी शर्करा युतः॥
सतैल माक्षिकास्त्वेते चत्वारः कवड़ग्रहाः।
चतुरोऽरोचकान् हन्यु र्वातादोकज सर्वजान्॥
त्वङ्मुस्तमेला धान्यानि मुस्तमामलक त्वचः।
त्वक् च दार्वी यमान्यश्च पिप्पल्यस्तेजोवत्यपि।
यमानी तिन्तिड़ीकश्च पञ्चैते मुखशोधनाः।
श्लोकपादैरभिहिताः सर्वारोचकनाशनाः॥
अम्लिकागुड़तोयञ्च त्वगेला मरिचान्वितम्।
अभक्तच्छन्दरोगेषु शस्तं कवड़धारणम्॥
कारव्यजाजी मरिचं द्राक्षा वृक्षाम्ल दाड़िमम्।
सौवर्च्चलं गुड़ः क्षौद्रं सर्वारोचकनाशनम्॥
विट्चूर्णं मधुसंयुक्तो रसो दाड़िम सम्भवः।
असाध्यामपि संहन्यादरुचिं वक्त्रधारितः॥

### यमानीषाड़वः।

यमानी तिन्तिड़ीकञ्च नागरञ्चाम्ल वेतसम्।

दाड़िमं वदरश्चाम्लं कार्षिकाण्युपकल्पयेत् ॥
धान्य सौवर्चलाजाजी वराङ्गञ्चार्द्ध कार्षिकम् ।
पिप्पलीनां शतञ्चैव द्वे शते मरिचस्य च ॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वा विशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥
हृत्प्लीहापार्श्वशूलघ्नं विवन्धानाह नाशनम् ।
काशश्वास हरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥

## कलहंसः ।

अष्टादश शिग्रुफलानि दश
मरिचानि विंशतिः पिप्पल्यश्च ।
आर्द्रकपलं गुड़पलं प्रस्थद्वयमारनालस्य च ॥
एतद्धिङ्लवणसहितं खजाहतं सुरभिगन्धाढ्यम् ।
व्यञ्जन सहस्र घाति ज्ञेयं कलहंसकं नाम ॥

खजाहतं मन्थानदण्ड मथितम् । सुरभिगन्धाढ्यं चातुर्जात गन्धाढ्यं चतुर्जातस्य मिलित्वा पलं, प्रत्येकमिति केचित् । कलहंसवत् स्वर कर्त्तृत्वादस्य कलहंस संज्ञा ।

## तिन्तिड़ीपानकम् ।

भागास्तु पञ्चचिञ्चायाः खण्डस्यापि चतुर्गुणाः ।
धान्यकार्द्रकयोर्भागं चातुर्जातार्द्ध भागिकम् ॥
द्विगुणं जलमेतेषामेकपात्रे विलोड़ितम् ।
पिहितं तमदुग्धेन ततो वस्त्र परिस्रुतम् ।

विधिना धूपिते पात्रे कृत्वा कर्पूरवासितम्।
वृषयोग्य मिदं पानं भवेद् युक्त्या सुयोजितम्॥

## रसाला।

अर्द्धाढ़कं सुचिरपर्य्युषितस्य दध्नः
खण्डस्य षोड़शपलानि शशिप्रभस्य।
सर्पिः पलं मधुपलं मरिचद्विकर्षं
शुण्ठ्याः पलाद्धमपि चार्द्धपलं चतुर्णाम्॥
शुक्लोपले ललनया मृदुपाणि घृष्टा
कर्पूरचूर्ण सुरभीकृत भाण्डसंस्था।
एषा वृकोदर कृता सुरसा रसाला
यास्वादिता भगवता मधुसूदनेन॥
रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा॥
अत्र दध्नो न द्वैगुण्यमिति केचित्।

## रसकेशरी।

रसगन्धौ समौ शुद्धौ दन्तीक्वाथेन मर्द्दयेत्।
देवपुष्पं वाणमितं रसपादं तथामृतम्॥
माषमात्रञ्च तत्सर्वं नागरेण गुड़ेन वा।
सर्व्वारोचक शूलार्त्तिमामवातं विनाशयेत्॥
विसूचीमग्निमान्द्यञ्च भक्तद्वेषं सुदारुणम्।
रसो निवारयत्येष केशरी करिणं यथा॥

इति भैषज्यरत्नावल्यामरोचकाधिकारः समाप्तः।

## ग्रहण्यधिकारः।



ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत्।
अतीसारोक्त विधिना तस्यामञ्च विपाचयेत्
शरीरानुगते सामे रसे लङ्घन पाचनम।
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम्॥
दद्यात्पेयादि लघ्वन्नं पुनर्योगांश्च दीपनान।
ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात्।
पथ्यं मधुर पाकित्वान्नच पित्तप्रकोपणम्॥
कषायोष्ण विकाशित्वाद्रौक्ष्याच्चैव कफे हितम्
वाते स्वाद्वम्ल सान्द्रत्वात्सद्यश्च मविदाहितत्॥

### चित्रकगुड़िका।

चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च।
व्योषं हिङ्गुजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत्॥
गुड़िका मातुलुङ्गस्य दाडिमस्य रसेन वा।
कृता विपाचयत्यामं दीपयत्याऽऽशु चानलम्॥
सौवर्चल सैन्धवञ्च बिटमौद्भिदमेव च।
सामुद्रेण समं पञ्चलवणान्यत्र योजयेत्॥

### नागराद्यं चूर्णम्।

नागरातिविषा मुस्तं धातकी च रसाञ्जनम्।
वत्सकत्वक् फलं पाठा बिल्वं कटुकरोहिणी॥
पिवेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना।

पैत्तिके ग्रहणीदोषे रक्तं यश्चोपवेश्यते।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम्।
शीत कषायमानेन तण्डुलोदक कल्पना॥
केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावनाम्

पाटाद्यं चूर्णम्।

पाटा विल्वानल व्योष जम्बूदाड़िम धातकी।
कटुकातिषा मुस्ता दार्व्वीभूनिम्ब वत्सकैः॥
सर्वैरेभिः समं चूर्णं कौटजं तण्डुलाम्बुना।
सक्षौद्रेण विवेच्छर्द्दि ज्वरातिसार शूलवान्॥
हृद्रोगग्रहणीदोषारोचकानलमाद्दजित्।

वार्त्ताकुगुड़िका।

चतुःपलं सुहीकाण्डात्त्रिपलं लवणत्रयात्।
वार्त्ताकुकुडवश्चार्कादष्टौ द्वे चित्रकात्पले॥
दग्धानि वार्त्ताकुरसे गुड़िका भोजनोत्तराः।
भक्तं भुक्तं पचत्याशु कासश्वासार्शसां हिताः॥
विसूचिका प्रतिश्याय हृद्रोगशास्त्र ता मताः॥

स्वल्पगङ्गाधरचूर्णम्।

मुस्तसैन्धव शुण्ठीभिर्धातकीलोध्रवत्सकैः।
बिल्वमोचरसाभ्याञ्च पाठेन्द्रयववालकैः॥
आम्रबीज मतिविषा लज्जा चेति सुचूर्णितम्।
क्षौद्रतण्डुलतोयाभ्यां जयेत्पीत्वा प्रवाहिकाम्
सर्व्वातिसारशमनं सर्व्वशूल निसूदनम्।

संग्रह ग्रहणीं हन्ति सूतिकातङ्कमेव च॥
एतद्गङ्गाधरं चूर्णं सरिद्वेगावरोधनम्॥

मध्यम गङ्गाधरचूर्णम्।

बिल्वं शृङ्गाटकदलं दाड़िमं दलमेव च।
समुस्तातिविषा चैव सर्ज्जश्वेतश्च धातकी॥
मरिचं पिप्पली शुण्ठी दार्व्वी भूनिम्बनिम्बकम्।
जम्बूरसाञ्जनञ्चैव कूटजस्य फलं तथा॥
पाठा समङ्गा ह्रीवेरं शाल्मलीवेष्टमेव च।
शक्राशनं भृङ्गराजचूर्णं देयं समं समम्॥
कुटजस्य त्वचश्चूर्णं सर्व्वचूर्णसमं मतम्।
एतद्गङ्गाधरं नाम महच्चूर्णं महागुणम्॥
नानावर्णमतीसारं चिरजं बहुरूपिणम्।
दुर्व्वारां ग्रहणीं हन्ति तृष्णां कासञ्च दुर्ज्जयम्॥
ज्वरञ्च विविधं हन्ति शोथञ्चैव सुदारुणम्।
अरुचिं पाण्डुरोगञ्च हन्यादेव न संशयः॥
छागीदुग्धेन मण्डेन मधुना वाथ लेहयेत्।

वृहद्गङ्गाधरचूर्णम्।

बिल्वं मोचरसं पाठा धातकी धान्यमेव च।
समङ्गा नागरं मुस्तं तथैवातिविषा समम्॥
अहिफेनं लोध्रकञ्च दाड़िमं कुटजं तथा।
पारदं गन्धकञ्चैव समभागं विचूर्णयेत्॥
क्षौद्रेण खादयेत्प्रातश्चूर्णं गङ्गाधरं महत्।

ज्वरमष्टविधं हन्यादतीसारं सुदुस्तरम्॥
ग्रहणीं विविधाञ्चैव कोष्ठव्याधिहरं परम्॥

स्वल्पलवङ्गाद्यं चूर्णम्।

लवङ्गातिविषा मुस्तं बिल्वं पाठा च शाल्मली।
जीरकं धातकीपुष्पं लोध्रेन्द्रयव वालकम्॥
धान्य सर्ज्जरसं शृङ्गी पिप्पली विश्वभेषजम्।
समङ्गा यावशूकश्च सैन्धवं सरसाञ्जनम्॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत्।
शमयेद् ग्निमान्द्यञ्च संग्रहग्रहणीं जयेत्॥
नानावर्णमतीसारं सर्व्वार्शं पाण्डुकामलाम्।
हृदमष्ठीलिकां हन्ति कासंश्वासं ज्वरं वमिम्।
हृल्लासमम्लपित्तञ्च सशूलं सान्निपातिकम्।
सर्व्वरोगं निहन्त्याशु भास्करस्तिमिरं यथा॥

बृहल्लवङ्गाद्यं चूर्णम्।

लवङ्गातिविषा मुस्तं पिप्पली मरिचानि च।
सैन्धवं हवुषा धान्यं कटफल पुष्करं तथा॥
जातीकोषफलाजाजी सौवर्च्चलरसाञ्जनम्।
धातकी मोचक पाठा पत्रं तालीश केशरम्॥
चित्रकञ्च विड़ञ्चैव तुम्बुरुर्बिल्वमेव च।
त्वगेला पिप्पलीमूलमजमोदा यमानिका॥
समङ्गा वल्कलं शुण्ठी दाड़िमं यावशूकजम्।
निम्बं सर्ज्जरसं क्षारं सामुद्रं टङ्कनं तथा॥

ह्रीवेरं कुटजश्चैव जम्बाम्रं कटुरोहिणी।
अभ्रकं पुटितं लौहं शुद्धगन्धकपारदम्॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत्।
मधुना वा लिहेच्चूर्णं पिबेत्तण्डुलवारिणा॥
सर्वदोषहरश्चैव ग्रहणीं हन्ति दुस्तराम्।
वातिकीं पैत्तिकीञ्चैव श्लैष्मिकीं सान्निपातिकीम्॥
पक्वापक्वमतीसारं नानावर्णं सवेदनम्।
कृष्णारुणञ्च पीतञ्च मांसधावन सन्निभम्॥
ज्वरारोचक मन्दाग्निं कासंश्वासं वमिं तथा।
अम्लपित्तं तथा हिक्कां प्रमेहञ्च हलीमकम्॥
पाण्डुरोगञ्च विष्टम्भमर्शांसि विविधानि च।
प्लीहगुल्मोदरानाहशोथातीसार पीनसान्॥
आमवातं तथा जीर्णं सग्रहग्रहणीं जयेत्।
उदरं प्रदरश्चैव लवङ्गाद्यमिदं शुभम्॥

तस्मान्तरोक्तं बृहल्लवङ्गाद्यं चूर्णम्।

लवङ्गं जीरकं कौन्ती सैन्धवं त्रिसुगन्धिकम्।
अजमोदा यमानी च मुस्तकं सकटुत्रयम्॥
त्रिफला शतपुष्पा च पाठा भूनिम्बगोक्षुरम्।
जातीकोषफले दार्वी नलदं चन्दनं मुरा॥
शटी मधुरिका मेथी टङ्गनं कृष्णजीरकम्।
क्षारद्वयं वालकञ्च विल्वं पौष्करकं तथा॥
चित्रकं पिप्पलीमूलं विडङ्गं सधनीयकम्।
रसाभ्रगन्धकं लौहं समं सर्वं विचूर्णितम्॥

उष्णोदकानुपानेन मन्दाग्ने र्दीपनं परम् ॥
शीततोयानुपानैर्वा बुद्धा दोषगतिं भिषक् ।
आमातिसारग्रहणीं चिरकालोत्थितामपि ।
शूलं विष्टम्भमानाहं विसूचीं शोथकामले ॥
हलीमकं पाण्डुरोगं हन्ति कासं विशेषतः ।
लवङ्गाद्यं महच्चूर्णं शर्करा सहितं पिबेत् ॥
आध्मानं शमयेच्छीघ्रं लवङ्गस्यानुपानतः ।
अश्विभ्यां निर्म्मितं ह्येतल्लोकानुग्रहहेतवे ॥

स्वल्पनायिका चूर्णम् ।

त्रिशानं पञ्चलवणं प्रत्येकं त्र्यूषणं पिचु ।
गन्धकाभ्मापक्वानष्टौ चत्वारो माषका रसात् ॥
इन्द्राशनात्पलं शानत्रितयाधिक मिष्यते ।
खादे न्मश्रीकृताच्छान मनुपेयञ्च काञ्जिकम् ॥
माषकादि क्रमेणैव मनुयोज्यं रसायनम् ।
अत्यन्ताग्निकरञ्चैतद्भोजनं सर्वकामिकम् ॥
प्रसिद्धा योगिनो वारो तथा प्रोक्तं रसायनम् ।
ग्रहणीनाशनं ह्येतदग्निसन्दीपनं परम् ॥

बृहन्नायिकाचूर्णम् ।

चित्रक त्रिफला व्योषं विडङ्गं रजनीद्वयम् ।
भल्लातक यमानो च हिङ्गुलवण पञ्चकम् ॥
गृहधूमो वचाकुष्ठं घनमभ्रक गन्धकम् ।
क्षारत्रयं चाजमोदा पारदो गजपिप्पली ॥

अमीषां चूर्णकं ग्रावसावच्चाशनस्य च।
अभ्यर्च्य नायिकां प्रातर्योगिवीं क्षामरूपिणीम्॥
विड़ालपदमात्रन्तु भक्षयेदस्य गुग्गुलम्।
मन्दाग्नि कास दुर्नाम श्लोहपाण्डुचिरज्वरान्॥
प्रमेहशोथविष्टम्भ संग्रह ग्रहणीं जयेत्।
सर्वातीसारहरण: सर्वशूल निसूदन:॥
आमवात गदोच्छेदी सूतिकातङ्कनाशन:।
नच ते व्याधय: सन्ति वातपित्त कफोद्भवा:॥
मान्द्यं हन्यादसौ सिद्धो गुग्गुलो नायिकाह्वत:।
वार्य्यंच माषमभ्यङ्ग स्नानं पिशित भोजनम्॥
काञ्जिक ग्लानस्य पथ्यं दग्धमीनस्तथा दधि।
काष्ठमप्युदरे तस्य भक्षणाद् याति जीर्णताम्।
कलिङ्गातिविषा धान्यं नव्यं जातीफलं समम्। इत्य-
धिक: पाठ: क्वचित्।

## ग्रहणीशार्दूलचूर्णम्।

रसगन्धक लौहाभ्रं हिङ्गुलवण पञ्चकम्।
हरिद्रे पाकलञ्चैव वचा मुस्ता विड़ङ्गकम्॥
त्रिकटु त्रिफला चित्रमजमोदा यमानिका।
गजोपकुल्या दारागि तथैव वृद्धधूमकाः॥
एतेषां कार्षिकं चूर्णं विजया चूर्णकं समम्।
माषद्वयमिदं चूर्णं शालितण्डुल वारिणा॥
भक्षयेत्प्रातरुत्थाय ग्रहणीगदनाशनम्।
अग्निञ्च कुरुते दीप्तं वड़वानल सन्निभम्॥

सर्व्वातीसारशमनं तृष्णाज्वरविनाशनम् ।
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ॥
आमातिसारमखिलं निःशेषाच्छ्वयथुं जयेत् ।
असाध्यां ग्रहणीं हन्ति पाण्डुप्लीहचिरज्वरान् ॥
ग्रहणीशार्दूलचूर्णं सर्व्वरोगकुलान्तकम् ॥

## जातीफलादिचूर्णम् ।

जातीफलं विड़ङ्गानि चित्रकं तगरं तथा ।
तालीशं चन्दनं शुण्ठी लवङ्गञ्चोपकुञ्चिका ॥
कर्पूरञ्चाभया धात्री मरिचं पिप्पली तुगा ॥
एषामक्ष समान् भागान् चातुर्जातकसंहितान् ।
पलानि सप्तभङ्गस्य सिता सर्व्वसमा तथा ।
एतच्चूर्णं जयेत्कासक्षयं श्वासमरोचकम् ॥
ग्रहणीमतिसारञ्च अग्निमान्द्यं सपीनसम् ।
वातश्लेष्मभवान् रोगान् प्रतिश्यायांश्च दुःसहान् ॥

## जीरकाद्यचूर्णम् ।

जीरकं टङ्कनं मुस्तं पाठा बिल्वं सधान्यकम् ।
वालकं शतपुष्पा च दाड़िमं कुटजं तथा ॥
समङ्गा धातकीपुष्पं श्योषञ्चैव त्रिजातकम् ।
मोचरसः कलिङ्गञ्च व्योमगन्धकपारदौ ।
यावन्त्येतानि चूर्णानि तावज्जातीफलानि च ।
एतत्प्राशितमात्रेण ग्रहणीं दुस्तरां जयेत् ॥
अतीसारं निहन्त्याशु सामं नानाविधं तथा ।

कामलां पाण्डुरोगञ्च मन्दाग्निञ्च विशेषतः ॥
जीरकाद्यमिदं चूर्णमगस्त्येन प्रकाशितम् ॥

### मार्कण्डेयचूर्णम् ।

शुद्ध सूतञ्च गन्धञ्च हिङ्गुलं टङ्कनं तथा ।
व्योषं जातीफलञ्चैव लवङ्गं तेजपत्रकम् ॥
एलाबीजं चित्रकञ्च मुस्तकं गजपिप्पली ।
नागरं सजलञ्चाभ्रं धातक्यतिविषा तथा ॥
शिग्रुजं शाल्मलञ्चैवमहिफेनं पलांशकम् ।*
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥
खादेदस्मात्प्रतिदिनं माषकं सितया सह ।
संग्रहग्रहणीं हन्ति मन्दाग्निञ्च विनाशयेत् ॥
धातुवृद्धिं वयोवृद्धिं बलपुष्टिं करोत्यपि ।
मार्कण्डेयमिदञ्चूर्णं महादेवेन निर्म्मितम् ॥

### कञ्चटावलेहः ।

प्रस्थे पचेत् कञ्चटतालमूल्योः
सितार्द्धप्रस्थं शृत पादशेषे ।
ततोऽक्षमात्राणि समानि दद्या-
च्चूर्णानि धीरो विधिवत्तदेषाम् ॥
समङ्गा धातकी पाठा बिल्वं मुस्ताश्च पिप्पली ।
शतुकातिविषाक्षार सौवर्चल-रसाञ्जनम् ॥

* पञ्चाङ्गकमिति पाठे प[redacted]ब्धम् ।

शाल्मलीवेष्टकञ्चैव सर्व्वं सिद्धे निधापयेत् ॥
शीते च मधुनश्चात्र कुड़वार्द्धं विनिक्षिपेत् ॥
अस्य मात्रां प्रयुञ्जीत यथाकाल प्रमाणतः ।
सर्व्वातिसारं शमयेत्सग्रहग्रहणीं तथा ॥
अम्लपित्तकृतं दोषमुदरं सर्वरूपिणम् ।
विकारान् कोष्ठजान् हन्ति हन्याच्छूलमरोचकम् ॥

कञ्चटतालमूल्योः प्रत्येकं श ८ जल श १६ शेष श ४ सिताष्टपलं दत्त्वा पक्त्वा समङ्गादिचूर्णं प्रक्षेपः शीते मधुपल चतुष्टयमिति गोपालदासः मधुनः पलद्वय मित्यन्ये ॥

दशमूलगुड़ः ।

दशमूली पलशतं जलद्रोणे विपाचयेत् ।
तेन पादावशेषेण पचेद्गुड़तुलां भिषक् ॥
आर्द्रक स्वरसप्रस्थं दत्त्वा मृदग्निना ततः ।
लेहीभूते प्रदातव्यं चूर्णमेषां पलं पलम् ॥
पिप्पली पिप्पलीमूलं मरिचं विश्वभेषजम् ।
हिङ्गु भल्लातकञ्चैव विड़ङ्गं मजमोदकम् ॥
द्वौ चारौ चित्रकं चव्यं पञ्चैव लवणानि च ।
दत्त्वा समुत्थितं ज्ञात्वा स्निग्धे भाण्डे निधापयेत् ॥
कालमात्रं ततः खादेत्प्रातः प्रातर्विचक्षणः ।
हन्ति मन्दानलं शोथमामजां ग्रहणीमपि ॥
आमं सर्व्वभवं शूलं प्लीहानमुदरं तथा ।
मन्दानलभवं रोगं विष्टम्भं गुदजानि च ॥

ज्वरं चिरन्तनं हन्ति तमिस्रं भानुमानिव ॥

## बिल्वतैलम्।

तुलार्द्धं शुष्कबिल्वस्य तुलार्द्धं दशमूलतः।
जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम् ॥
आर्द्रकस्य रसप्रस्थमारनालं तथैव च।
तैलप्रस्थं समादाय क्षीरप्रस्थं तथैव च ॥
धातकी बिल्वकुष्ठञ्च शटी रास्ना पुनर्नवा।
त्रिकटुः पिप्पलीमूलं चित्रकं गजपिप्पली ।
देवदारु वचा कुष्ठं मोचकं कटुरोहिणी।
तेजपत्राजमोदे च जीवनीयगणस्तथा ॥
एषामर्द्धपलान् भागान् पाचयेन्मृदुनाग्निना।
एतद्धि बिल्वतैलाख्यं मन्दाग्नीनां प्रशस्यते ॥
ग्रहणीं विविधां हन्ति अतीसारमरोचकम्।
संग्रहग्रहणीं हन्ति अर्शसामपिनाशकम् ॥
श्लीपदं विविधं हन्ति अन्त्रवृद्धिञ्च नाशयेत्।
कफवातोद्भवं शोथं ज्वरमाशु व्यपोहति ॥
कासं श्वासञ्च गुल्मञ्च पाण्डुरोग विनाशनम्।
मक्कल्लशूलशमनं सूतिकातङ्क नाशनम् ॥
मूढ़गर्भे च दातव्यं मूढ़वातानुलोमनम्।
शिरोरोग हरञ्चैव स्त्रीणां गर्दानसूदनम् ॥
रजोदुष्टाश्च या नार्य्यो रेतोदुष्टाश्च ये नराः।
तेऽपि तारुण्यशुक्राढ्या भविष्यन्ति महाबलाः ॥
बन्ध्यापि लभते पुत्रं शूरं पण्डितमेव च।

बिल्वतैलमिति ख्यातं मात्रेयेण विनिर्म्मितम्॥

## ग्रहणीमिहिरं तैलम्।

धन्याकं धातकी लोध्रं समङ्गातिविषा शिवा।
उशीरं वारिवाहञ्च जलं मोचं रसाञ्जनम्॥
बिल्वं नीलोत्पलं पत्रं केशरं पद्मकेशरम्।
गुड़ूचीन्द्रयवश्यामा पद्मकं कटुरोहिणी॥
तगरं नलदं भृङ्गं केशराजः पुनर्नवा।
आम्रजम्बूकदम्बानां त्वचः कुटजवल्कलम्॥
यमानी जीरकश्चैषां कार्षिकाणि प्रकल्पयेत्।
तैलप्रस्थं पचेत्सम्यक् तक्रेणाम्लतमेन वा।
कुटजत्वक्कषायेण धान्यक क्वथितेन वा॥
बुद्धा दोष गतिं तत्तत्तथान्यौषध वारिणा॥
एतद्रसायनवरं वलीपलितनाशनम्।
हन्ति सर्वानतीसारान् ग्रहणीं सर्वरूपिणीम्॥
ज्वरं तृष्णां तथा कासं हिक्कां श्वासं वमिं भ्रमिम्।
सोपद्रवं कोष्ठकजं नाशयेत् सत्यमेवहि॥
अर्शांसि कामलां मेहं श्वयथुं शूलमूल्वणम्।
एतद्धि वृंहणं वृष्यं सर्वरोगनिवर्हणम॥
वशीकरण मेतद्धि पथ्या योगे विपाचयेत्।
सायं स्त्रीषु प्रकर्त्तव्यं प्रत्यूषे राजसंसदि॥
विवाहादिषु माङ्गल्यं विवादे विजयप्रदम्।
गर्भस्य चलितस्यापि स्थापनं परमं शुभम्।
गर्भारम्भे प्रकर्त्तव्यमेतद् गर्भविवर्द्धनम्।

ग्रहणीमिहिरं नाम तैलं भुवनमङ्गलम्॥

## बृहत् ग्रहणीमिहिरतैलम्।

तैलं प्रस्थमितं ग्राह्यं तक्रं दद्याच्चतुर्गुणम्।
कुटजं धन्यकञ्चैव ग्राह्यं पलशतं पृथक्॥
तयोः क्वाथं पचेद्द्रोणे चाम्बुपादावशेषितम्।
एकीकृत्य पचेद्द्रव्यैः कल्कैः कर्षमितं पृथक्॥
धान्यकं धातकी लोध्रं समङ्गातिविषा शिवा।
लवङ्गं वालकञ्चैव शृङ्गाटकं रसाञ्जनम्॥
नागपुष्पं पद्मकञ्च गुडूचीन्द्रयवं तथा॥
प्रियङ्गुकट्‌की पद्मकेशरं तगरं तथा॥
शरमूलं भृङ्गराजः केशराजः पुनर्नवा।
आम्रजम्बुकदम्बानां वल्कलानि च दापयेत्॥
ग्रहणीं हन्ति तच्छीघ्रं बलीपलितनाशनम्।
हन्ति सर्वानतीसारान् ग्रहणीं सर्वरूपिणीम्॥
ज्वरं तृष्णां तथा श्वासं कासं हिक्कां वमिं भ्रमिम्।
सोपद्रवं कोष्टरजं नाशयेत्सद्य एव हि॥
वशीकरणमेतद्धि पुष्ययोगेन पाचयेत्।
ग्रहणीमिहिरं नाम तैलं भुवनमङ्गलम्॥

## दाड़िमाद्यं तैलम्।

दाड़िमत्वग्जलं धान्यं वत्सकस्य त्वचस्तथा।
प्रत्येकमाढ़कं ग्राह्यं जलद्रोणे पचेत्पृथक्॥
चतुर्भागावशिष्टन्तु तक्रमाढ़कसम्मितम्।

पचेत्तैलाढ़के धीमान् गर्भं दत्त्वा भिषग्वरः ॥
त्रिकटु त्रिफला मुस्तं चव्यजीरकसैन्धवम् ।
चातुर्जातं मधुरिका मांसी च देवपुष्पकम् ॥
जातीकोषफले धान्यं यमान्यौवालकं तथा ।
कण्टकारिविषा भेको शृङ्गाटं हृत्तोद्वयम् ॥
आम्रजम्बुत्वचः पर्णी समङ्गेन्द्रयवं वरी ।
धातकीविल्वमोचञ्च मुषली वल्कं वला ॥
श्वदंष्ट्रा लोध्र पाठाश्च काष्ठं खादिरमेव च ।
अमृता शाल्मलीत्वक् च सर्वमर्द्धपलोन्मितम् ॥
पिष्ट्वा तण्डुलतोयेन साधयेन्मृदुनाग्निना ।
ग्रहणीं हन्ति दुर्वारां प्रमेहानपि विंशतिम् ॥
अर्शांसि षड्विधान्येव नाशयेन्नात्र संशयः ॥

## मरिचाद्यं घृतम् ।

मरिचं पिप्पलीमूलं नागरं पिप्पली तथा ।
भल्लातकं यमानी च विडङ्गं हस्तिपिप्पली ॥
हिङ्गुसौवर्चलञ्चैव विड़सैन्धव चव्यथ ।
सामुद्रं सयवक्षारं चित्रको वचया सह ॥
एतैरर्द्धपलैर्भागै घृतप्रस्थं विपाचयेत् ।
दशमूली रसे सिद्धं पयसा द्विगुणेन च ॥
मन्दाग्निनां हितं श्रेष्ठं ग्रहणीदोषनाशनम् ।
विष्टम्भमामदौर्बल्यं प्लीहानञ्चापकर्षति ॥
कासंश्वासं क्षयञ्चापि दुर्नाम सभगन्दरम् ।
कफजान् हन्ति रोगांश्च वातजान् क्रिमिसम्भवान् ॥

तान् सर्वान्नाशयत्याशु शुष्कं दावानलो यथा ॥

## महाषट्पलकं घृतम् ।

सौवर्चलं पञ्चकोलं सैन्धवं हवुषं विड़म् ।
अजमोदां यवक्षारं हिङ्गु जीरक मौद्भिदम् ॥
कृष्णाजाजीं सभूतीकं कल्कीकृत्य पलाद्धिकम् ।
आर्द्रकस्वरसं चुक्रं क्षीर मस्त्वारनालकम् ॥
दशमूलकषायेण घृतप्रस्थं विपाचयेत् ।
भक्तेन सह पातव्यं निर्भक्तं वा विचक्षणैः ॥
क्रिमि प्लीहोदराजीर्ण ज्वर कुष्ठ प्रवाहिकाः ।
महाषट्पलक नाम्ना हन्ति मिन्द्राशनि र्यथा ॥

## स्वल्पचुक्रसन्धानम् ।

यन्मस्त्वादिः शुचौ भाण्डे सगुड़क्षौद्रकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥
द्विगुणं गुड़ मध्वारनाल मस्तु क्रमादिदुः ॥

## बृहच्चुक्रसन्धानम् ।

प्रस्थं तण्डुलतोयतस्तुषजलात्प्रस्थत्रयं चाम्लतः
प्रस्थार्द्धं दधितोऽम्लमूलक पलान्यष्टौ गुड़ात्मानिके ।
मान्यो शोधितशृङ्गवेर शकलात् द्वे सिन्धुजाज्योःपले
द्वे कृष्णा षणयोर्निशापलयुगं निक्षिप्य भाण्डे दृढ़े ॥
स्निग्धे धान्ययवादिराशिनिहितं त्रीन्वासरान् स्थापयेद्
ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे ।
षट्शीतेऽष्टदिनान्यतः परमिदं विस्राव्य संचर्येत्

चातुर्जात पलेन संहृतमिदं शुक्तञ्च चुक्रञ्च तत्।
हन्याद्वात कफामदोषजनितान्नानाविधानामयान्
दुर्नामानि च शूलगुल्म जठरान् हत्वानलं दीपयेत्॥

चाङ्गेरीघृतम्।

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली।
श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यमानिका॥
चाङ्गेरी स्वरसे सर्पिः कल्कैरेतैर्विपाचयेत्।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत्॥
अर्शांसि ग्रहणी दोषं मूत्रकृच्छ्रं प्रवाहिकाम्।
गुदभ्रंशार्त्तिमानाहं घृतमेतद्व्यपोहति॥
दधिसाहचर्य्याच्चाङ्गेरीस्वरसश्चतुर्गुणः।

कठिन्यादिपेया।

कठिनो पलसंख्याता सिता चार्द्धपला मता।
वव्वूलस्य च निर्य्यासो ग्राह्योऽर्द्धपलसंमितः॥
ग्राह्या मधुरिका दारुसिता कर्षमिता शुभा।
एकीकृत्य मनाक् चूर्ण्णं तोयमष्टपलं तथा॥
भ्र ञ्जाजने परिस्थाप्य सर्व्वेनिशि यत्नतः।
स्रावयित्वा पिबेत्प्रातः स्वच्छांशमुपरिस्थितम्॥
प्रवाहिकायां पित्तास्रे ग्रहण्याञ्च प्रशस्यते।
लवङ्गधान्यसयुक्तमम्लपित्ते महौषधम्॥
सर्ग्योषितेऽतिसारे च शस्तं बिल्वसमायुतम्।

तक्रारिष्टः।

यमान्यामलकं पथ्या मरिचं त्रिपलांशिकम्।

लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत्॥
तक्रकं संयुतं जातं तक्रारिष्टं पिबेन्नरः।
दीपनं शोथगुल्मार्शः क्रिमिमेहोदरापहम्॥

## पिप्पल्याद्यासवः।

पिप्पली मरिचं चव्यं हरिद्रा चित्रको घनः।
विडङ्गं क्रमुको लोध्रः पाठा धात्रेलवालुकम्॥
उशीरं चन्दनं कुष्ठं लवङ्गं तगरं तथा।
मांसी त्वगेलापत्रञ्च प्रियङ्गुनागकेशरम्॥
एषामर्द्धपलान् भागान् सूक्ष्म चूर्णीकृतान् शुभान्।
जलद्रोणद्वये क्षिप्ता दद्याद् गुड़तुलात्रयम्॥
पलानि दश धातक्या द्राक्षा षष्टिपला भवेत्।
एतान्येकत्र संयोज्य मृद्‌भाण्डे विनिक्षिपेत्॥
ज्ञात्वा रसगतं सर्वं पाययेदग्न्यपेक्षया।
क्षयं गुल्मोदरं कार्श्यं ग्रहणीं पाण्डुतान्तथा॥
अर्शांसि नाशयेच्छीघ्रं पिप्पल्याद्यासवस्त्वयम्॥

## आयामकाञ्जिकम्।

वाल्यस्य दद्याद् यवशक्तुकानां
पृथक् पृथक् चाढ़क संमितन्तु।
मध्यप्रमाणानि च मूलकानि
दद्याच्चतुःषष्टिसुकल्पितानि॥
द्रोणेऽम्भसः प्राप्य घटे सुधौते
दद्यादिदं भेषजजातमुत्तम्।

नारदयं तुम्बुरुवस्तगन्धा
धनीयकं स्याद्विड़सैन्धवञ्च ॥
सौवर्च्चलं हिङ्गु शिराटिकाञ्च
चव्यञ्च दद्याद् द्विपल प्रमाणम्।
इमानि चान्यानि प्रलोम्बितानि
विजर्ज्जरीकृत्य घटे चिपेच्च ॥
कृष्णामजाजीमुपकुञ्चिकाञ्च
तथा सुरीं कारवि चित्रकञ्च।
पचस्थितोऽयं बलवर्णदेह-
वयस्करोऽतीव बलप्रदश्च ॥
कान् जीवयामीति यतः प्रवृत्त-
स्तत्काञ्जिकेति प्रवदन्ति चैनम्।
आयामकालाज्जरयेच्च भुक्त
मायामिकेति प्रवदन्ति चैनम्।
दकोदरं गुल्ममथ प्लीहानं
हृद्रोगमानाहमरोचकञ्च ॥
मन्दाग्निताां कोष्ठगतञ्च शूल-
मर्शोविकारान् सभगन्दरांश्च।
वातामयानाशु निहन्ति सर्व्वान्
संसेव्यमानो विधिवन्नराणाम् ॥

निस्तुषदरदलित यवे चतुर्द्दशगुण जलदानात् साधितोमण्डः वाटग्रः तस्य प्र ६४ तथा यवशक्तु स ६४।

कल्याणगुड़: ।

प्रस्थत्रयेणामलकीरसस्य
शुद्धस्य दत्त्वार्द्धतुलां गुड़स्य ।
चूर्णीकृतैर्ग्रन्थिक जीरचव्य-
व्योषेभकृष्णा हवुषाजमोदैः ॥
विड़ङ्ग सिन्धुत्रिफला यमानी
पाठाग्नि धान्यैश्च पलप्रमाणैः ।
दत्त्वा त्रिवृच्चूर्ण पलानि चाष्टा-
वष्टौ च तैलस्य पचेद्यथावत् ॥
तं भक्षयेदक्षफल प्रमाणं
यथेष्टचेष्टं त्रिसुगन्धियुक्तम ।
अनेन सर्वग्रहणी विकाराः
सश्वासकास स्वरभेद शोथाः ॥
शाम्यन्ति चायं चिरमन्दराग्ने-
र्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ।
स्त्रीणाञ्च वन्ध्यामयनाशनोऽयं
कल्याणको नाम गुड़ः प्रदिष्टः ॥

त्रिवृतां भर्जयन्त्यत्र मनाक् तैले चिकित्सकाः ।
तत्रोक्तमानसाधर्म्म्यात् त्रिसुगन्धि पलं पृथक् ॥

कुष्माण्डगुड़कल्याणकः ।

कुष्माण्डकानां रूढ़ानां सुस्विन्नं निष्कुलत्वचाम्
सर्पिःप्रस्थे पलशतं ताम्रपात्रे शनैः पचेत् ॥

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
धान्यकानि विडङ्गानि यमानी मरिचानि च॥
त्रिफला चाजमोदा च कलिङ्गाजाजी सैन्धवम्।
एकैकस्य पलञ्चैव त्रिवृदष्टपलं भवेत्॥
तैलस्य च पलान्यष्टौ गुड़ं पञ्चाशदेव तु।
प्रस्थैस्त्रिभिः समेतन्तु रसस्यामलकस्य च।
यदा दार्व्वीं प्रलेपस्तु तदैनमवतारयेत्।
यथा शक्ति गुड़ीं कुर्य्यात्कर्षकर्षार्द्धमानतः॥
अनेन विधिना चैव प्रयुक्तस्तु जयेदिमान्।
दुर्व्वारान् ग्रहणीरोगान् कुष्ठान्यर्शोभगन्दरान्॥
ज्वरदुर्नाम हृद्रोग गुल्मोदर विसूचिकाः।
कामलां पाण्डुरोगांश्च प्रमेहांश्चैव विंशतिम्॥
प्लीहानं वातरक्तञ्च दद्रु चर्म्म हलीमकान्।
कफपित्तानिलान् सर्व्वान् प्ररूढ़ांश्च व्यपोहति।
व्याधिक्षीणा वयःक्षीणाः स्त्रीषु क्षीणाश्च येनराः
तेषां वृष्यश्च बल्यश्च वयःस्थापन एव च।
गुड़कुष्माण्डको नाम बन्ध्यानां गर्भदः परः॥

मुस्तकाद्यमोदकः।

त्रिकटु त्रिफलाचित्रं लवङ्गं जीरकद्वयम्।
यमान्यौ द्वे मधुरिका नागवल्लीदलं तथा॥
शतपुष्पावरी धान्यं चातुर्जातं तथा तुगा।
मेथी जातीफलं ग्राह्यं प्रत्येकं कर्षसम्मितम्॥
मुस्तकं षट्पलं देयं सिता च द्विगुणा मता।

ग्रहणीं हन्त्यतीसारं मन्दाग्नित्वमरोचकम् ।
अजीर्णमामदोषञ्च विसूचीमपि दारुणम् ।
पुष्टिं देहस्य जनयेद्बलवर्णाग्निवृद्धिकृत् ॥
वलीपलितदौर्बल्यं क्षपयेत् क्षयतामपि ॥

## श्रीकामेश्वरमोदकः ।

सम्यङ्मारितमभ्रकं कट्फलं कुष्ठाश्वगन्धामृता
मेथी मोचरसो विदारिमुषली गोक्षुरकश्चेक्षुरः ।
रम्भाकन्द शतावरी त्वजमुदा मांसी तिला धान्यकं
शटीनागबला कचूर मदनं जातीफलं सैन्धवम् ॥
भार्गी कर्कटशृङ्गकं त्रिकटुकं जीरद्वयं चित्रकं
चातुर्जात पुनर्नवा गजकणा द्राक्षा शटीवालकम् ।
शाल्मल्यत्रिफलत्रिकं कपिभवं वीजं समंचूर्णयेत्
चूर्णांशाविजयासिताद्विगुणितामध्वाज्ययोःपिण्डितम्
कर्षांशा गुड़िकार्द्धकर्षमथवा सेव्या सदा कामिभिः
सेव्यक्षीरसितं सुवीर्य्यकरणं स्तम्भेऽप्ययंकामिनाम् ।
वामावश्यकरः सुखातिसुखदो वह्वङ्गनाद्रावणः
क्षीणे पुष्टिकरः क्षतक्षयहरो हन्याच्च सर्वामयान् ॥
कासश्वास महातिसारशमनः कामाग्निसन्दीपनो
दुर्णामग्रहणी प्रमेहनिवह श्लेष्मातिरेक प्रणुत् ।
नित्यानन्दकरो विशेषकविताबाचांविलासोद्भवं
धत्ते सर्वगुणं महास्थिरमतिवालोनितान्तोत्सवः ॥
अभ्यासेन निहन्तिमृत्युपलितं कामेश्वरोक्तसरात्
सर्वेषां हितकारिणानिगदितः श्रीनित्यनाथेन सः ।

वृद्धानां मदनोदयोदय करः प्रौढ़ाङ्गनासङ्गमे
सिंहोऽयं समदृष्टिप्रत्ययकरोभूपैः सदासेव्यताम्॥
तन्त्रान्तरेऽस्य महाकामेश्वर संज्ञा।

कामेश्वरोमोदकः।

धात्रीसैन्धव कुष्ठकट् फलकणा शुण्ठी यमानीद्वयं
यष्ठोजोरक युग्मधान्यकशटी शृङ्गीवचाकेशरम्।
तालीशं त्रिसुगन्धिकं समरिचं पथ्याद्यमेभिःसम
चूर्णीकृत्यमनाक्स्ववीजसहितं भृष्टा तु शक्राशनम्॥
सर्वेषां द्विगुणां सितां सुविमलां यत्नाद्विषङ्निक्षिपेत्।
क्षौद्रस्वापिघृतं प्रशस्तदिवसे कुर्य्याच्छुभान्मोदकान्।
कर्पूरैरवचूर्णितानपिहितान् दत्त्वा तिलान् भर्जितान्
गोप्याऽयंचिति मण्डले मितधियां पाषण्डिनामग्रतः।
आधिव्याधिहरः क्षयहरः कुष्ठापहो वृंहणः
स्त्रीणां तोषकरोमुखद्युतिकरः शुक्राग्निवृद्धिप्रदः॥
कासश्वास वलास रोगनिचय प्रध्वंसनः प्राणिनां
प्रोक्तो ब्रह्मसुतेन सर्वसुखदः कामेश्वरोमोदकः।
ग्रहगण परिहीनः सर्वशास्त्रप्रवीणः
कलित विमलकीर्त्तिः प्राप्तकन्दर्पमूर्त्तिः।
विगत सकलभीतिर्गीतवाद्याङ्गनीति
र्भवति भुवि स देवो येन भक्तः प्रयत्नात्॥
रहसि युवतिखेला सम्पुटा कर्षहर्षाद्
गमयति युवतीनां केलिकौतूहलेन।
यदि कथमपि भुक्तो भोमनादावशान्ते

सुरतरभसमुद्यैर्नष्टकामं प्रकामम् ॥
यस्मान्नव्यवहस्यतिस्तनुधिया यस्मात् सदा वीर्य्यवान्
यस्मादुन्मद दाक्षिणात्य युवतीसम्भोग कौतुहली ।
यस्मात्काव्य कुतूहलं सुकविता संजायते लीलया
श्रीमद्भिः प्रतिवासरं चिंतितलेसमेव्यतांमोदकः ॥

मदनमोदकः ।

त्रैलोक्य विजयापत्रं सवीजं घृतभर्जितम् ।
समे शिलातले पश्चाच्चूर्णयेदति चिक्कणम् ॥
त्रिकटु त्रिफलाशृङ्गीकुष्ठ धान्यक सैन्धवम् ।
शटी तालीश पत्रञ्च कट्फलं नागकेशरम् ॥
अजमोदा यमानी च यष्टीमधुक मेव च ।
मेथी जीरक युग्मञ्च गृहीत्वा समचूर्णितम् ॥
यावन्त्येतानि चूर्णानि तावदेव तदौषधम् ।
तावदेव सिता देया यावदायाति बन्धनम् ॥
घृतेन मधुना मिश्रं मोदकं परिकल्पयेत् ।
त्रिसुगन्धि समायुक्तं कर्पूरेणाधिवासयेत् ॥
स्थापयेद्घृत भाण्डे च श्रीमन्मदनमोदकम् ।
भक्षयेत्प्रातरुत्थाय वातश्लेष विनाशनम् ॥
कासघ्नं सर्वशूलघ्न मामवात विनाशनम् ।
सर्वरोगहरो ह्येष सग्रह ग्रहणीहरः ॥
एतस्य सतताभ्यासाद्वृद्धोऽपि तरुणायते ॥
ब्रह्मणः प्रमुखात् श्रुत्वा वासुदेवे जगत्पती ।
एष कामविवृद्ध्यर्थं नारदैः प्रतिपादितः ॥

तेन लब्धं वरस्त्रीणां रेमे स यदुनन्दनः ॥

## मेथीमोदकः ।

त्रिकटु त्रिफला मुस्त जीरकद्वय धान्यकम् ।
कट्फलं पौष्करं शृङ्गी यमानी सैन्धवं विड़म् ॥
तालीशकेशरं पत्रं त्वगेला च फलं तथा ।
जातीकोष लवङ्गञ्च मुरा कर्पूरचन्दनम् ॥
यावन्त्येतानि चूर्णानि तावदेव तु मेथिका ।
सञ्चूर्ण्य मोदकः कार्य्यः पुरातन गुड़ेन च ॥
घृतेन मधुना किञ्चित् खादेदग्निबल प्रति ।
अग्निञ्च कुरुते दीप्तं सामे मेदे महौषधम् ॥
बलवर्णकरो ह्येष संग्रहग्रहणीहरः ।
प्रमेहान् विंशतिं हन्ति मूत्राघातां स्तथाश्मरीम् ॥
पाण्डुरोगं तथा कासं यक्ष्माणं हन्ति कामलाम् ।
स्तनौ च पतितौ गाढ़ौ स्यातां तालफलोपमौ ॥
दृष्टिप्रसादनश्चैव नारीणाञ्चैव पुत्रदः ।
भाषितः कामदेवेन मेथीमोदक संज्ञकः ॥

## वृहन्मेथीमोदकः ।

त्रिफला धान्यकं मुस्तं शुण्ठी मरिच पिप्पली ।
कट्फलं सैन्धवं शृङ्गी जीरकद्वयपुष्करम् ॥
यमानी केशरं पत्रं तालीशं विड़मेव च ।
जातीफलं त्वगेला च जयित्रीन्द्र लवङ्गकम् ॥
शतपुष्पा मुरामांसी यष्टीमधुक पद्मकम् ।

चव्यं मधुरिका दारु सर्वमेतत्समं भवेत् ॥
यावन्त्येतानि चूर्णानि तावन्मात्रा तु मेथिका।
सितया मोदकं कार्य्यं घृतमाक्षीकसंयुतम् ॥
भक्षयेत्प्रातरुत्थाय यथादोषानुपानतः।
हन्ति मन्दानलान् सर्वानामदोषं विशेषतः
महाग्निजननं हृद्यमामवात निसूदनम्।
ग्रहण्यर्शोविकारघ्नं प्लीहपाण्डुगदापहम् ॥
प्रमेहान् विंशतिं हन्ति कासं श्वासञ्च दारुणम्
छर्द्यतीसारशमनं सर्वार्शविनाशनम् ॥
मेथीमोदकनामेदं पायञ्जलि मुनेर्मतम्।

## जीरकादिमोदकः :

श्लक्ष्णचूर्णीकृतं जीरं पलाष्टकमितं शुभम्।
तदर्द्धं विजयावीजं भर्जितं वस्त्रपूतकम् ॥
अयश्चूर्णं तथा वङ्गमभ्रकं कर्षमानतः।
मधूरिकं च तालीशं जातीकोष फले तथा ॥
धान्यकं त्रिफला चैव चातुर्जात लवङ्गकम्।
शैलेयं चन्दने द्वे च मांसी द्राक्षा शटी तथा।
टङ्कनं कुन्दुरुर्यष्टी तुगा कक्कोल वालकम्।
गाङ्गेरुस्त्रिकटुश्चैव धातकी विल्वमर्जुनम् ॥
शतपुष्पा देवदारु कर्पूरं सप्रियङ्गुकम्।
जीरकं शाल्मलश्चैव कटुकापद्मनालुके ॥
एषां कर्षसमं चूर्णं गृह्णीयात्कुशलो भिषक्।
शर्करा मधनाज्येन मोदकश्च विनिर्मितम् ॥

खादेत्कर्षसमं तच्च प्रत्यहम्मात रुत्थितः।
शीततोयानुपानेन सर्वग्रहणिकां जयेत्॥
आमदोषावृते पित्ते वह्निमान्द्ये तथैव च।
रक्तातिसारेऽतिसारे प्रयोज्यं विषमज्वरे॥
सशब्दं घोरं गम्भीरं हन्ति सद्यो न संशयः।
अम्लपित्तकृतं दोषमुदरं सर्वरूपिणम्॥
सर्वातीसारशमनं संग्रहग्रहणीं जयेत्।
एकजं द्वन्द्वजं चैव दोषत्रयकृतं तथा॥
विकारं कोष्टजञ्चैव हन्ति शूलमरोचकम्।
भाषितं कृष्णनाथेन जन्तूनां हितकारणम्॥

जीरकचूर्णं प्र ८ विजयाबीजचूर्णं प्र ४ लौहादि-नालुकान्तानां प्रत्येकं कर्ष १ सर्वद्विगुणा सिता घृतमधुभ्यां वर्द्धनम्।

## बृहज्जीरकादिमोदकः।

जीरकं कृष्णजीरञ्च कुष्ठं शुण्ठी च पिप्पली।
मरिचं त्रिफला त्वक् च पत्रमेला च केशरम्॥
शुभा लवङ्गं शैलेयं चन्दनं श्वेतचन्दनम्।
काकोली क्षीरकाकोली जातीकोषफले तथा॥
यष्टी मधुरिका मांसी मुस्तं सचलकं शटी।
धन्याकं टंकनाङ्गञ्च मूरा द्राक्षा नखी तथा॥
शतपुष्पा पद्मकञ्च मेथी च सुरदारु च।
सजलं नालुकाश्चैव सैन्धवं गजपिप्पली॥
कर्पूरं वनिता चैव कुन्दखोटी समांशिकम्।

लौहमभ्रञ्च वङ्गानां द्विभागं तत्र दापयेत्॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत्।
सर्वचूर्णं समं देयं भृष्टजीरकचूर्णकम्॥
सिता द्विगुणिता देया मोदकं परिकल्पयेत्।
घृतेन मधुना मिश्रं मोदकञ्च भिषग्वरः॥
भक्षयेत्प्रातरुत्थाय यथादोषबलाबलम्।
गव्यं सशर्करञ्चैव अनुपानं प्रयोजयेत्॥
अशीतिन् वातजान् रोगांश्चत्वारिंशञ्च पैत्तिकान्
सर्वांस्तान्नाशयत्याशु वृत्रमिन्द्राशनि र्यथा॥
नानावर्णमतीसारं विशेषादामसम्भवम्।
शूलमष्टविधं हन्ति अर्शोरोगं चिरोत्थवम्॥
जीर्णज्वरञ्च सततं विषमज्वरमेव च।
स्त्रीणाञ्चैवानपत्यानां दुर्बलानाञ्च देहिनाम्॥
पुष्टिकृत पुत्रकृच्चैव बलवर्णकरं परम्।
सूतिकारोगमत्युग्रं नाशयेन्नात्र संशयः॥
प्रदरं नाशयत्याशु सूर्य्यस्तम इवोदितः।
दाहं सर्वाङ्गिकञ्चैव वातपित्तोत्थितञ्च यत्॥
अयं सर्वगदोच्छेदी जीरकाख्यो हि मोदकः।

## अग्निकुमारमोदकः।

उशीरं बालकं मुस्तं त्वक्पत्रं नागकेशरम्।
जीरद्वयञ्च शृङ्गी च कट्फलं पुष्करं शटी॥
त्रिकटु बिल्वकं धान्यं जातीफल लवङ्गकम्।
कर्पूरं [illegible] शैलजं वंशलोचना॥

एलाबीजं जटामांसी रास्ना तगरपादुकम्।
समङ्गातिबला चाभ्रं मुरा वङ्गं तथैव च।
अस्य चूर्णं समा मेथी चूर्णार्द्धं विजयारजः।
शर्करा मधुसंयुक्तं मोदकं परिकल्पयेत्॥
कर्षमेकं प्रमाणन्तु भक्षयेत्प्रातरुत्थितः।
शीततोयानुपानेन आजेन पयसाथवा॥
ग्रहणीं दुस्तरां हन्ति श्वासं काममतीव च।
आमवातमग्निमान्द्यं जीर्णञ्च विषमं ज्वरम॥
विबन्धानाहशूलञ्च यकृत् प्लीहोदराणि च।
हन्त्यष्टादशकुष्ठानि ग्रहणीदोषनाशनम्॥
उदावर्त्तं गुल्मरोगोदरामयविनाशनम्।

## रसप्रयोगः।

### अग्निकुमारोरसः।

रसं गन्धं विषं व्योषं टङ्कनं लौहभस्मकम्।
अजमोदाहिफेनञ्च सर्वतुल्यं मृताभ्रकम्॥
चित्रकस्य कषायेण मर्द्दयेद्याममात्रकम्।
मरिचाभां वटीं खादेदजीर्णं ग्रहणीं तथा॥
नाशयेत्रात्र सन्देहो गुह्यमेतच्चिकित्सितम्।

### ग्रहणीकपाटोरसः।

रसमभ्रकयोश्चापि जातीफललवङ्गयोः।
प्रत्येकं शान मानञ्च श्लक्ष्णं चूर्णीकृतं शुभम्।
सूर्य्यावर्त्तं रसेनैव बिल्वपत्र रसेन च।

शृङ्गाटकस्य पत्राणां रसैः प्रत्येकशः पलैः ॥
चण्डातपेन संशोष्य वटिकां कारयेद्भिषक्।
बिल्वपत्र रसेनैव दापयेद्रक्तिकाद्वयम् ॥
दध्ना च भोजनीयश्च ग्रहणीरोगनाशनः।
पाण्डुरोगमतीसारं शोथं हन्ति तथा ज्वरम् ॥
ग्रहणीकपाटनामा रसः परमः दुर्लभः।

ग्रहणीकपाटोरसः।

टङ्कनचार गन्धाश्म रसं जातीफलं तथा।
तथा खदिरसारञ्च जीरकं श्वेतधूनकम्
कपित्थत्वकवीजञ्च तथैव वकपुष्पकम्।
एषां शानं समादाय सूक्ष्मचूर्णानि कारयेत् ॥
विल्वपत्रक कार्पास फलं शालिञ्चदुग्धिका।
शालिञ्च मूलं कूटजत्वचः कञ्चटपत्रजम्।
सर्वेषां स्वरसेनैव वटिकां कारयेद्भिषक्।
रक्तिकैकप्रमाणेन खादयेद्दिवसत्रयम् ॥
दधिमस्तु ततः पेयं पलमात्र प्रमाणतः।
अपियोगशताक्रान्तां ग्रहणीसुत्कटां जयेत् ॥
शामशूलं ज्वरं कासंश्वासं शोथं प्रवाहिकाम्।
रक्तस्रावकरं द्रव्यं कार्य्यं नैवात्र युक्तितः ॥
कथावार्त्तांकु मत्स्यञ्च दधितक्रञ्च शस्यते।
ज्ञात्वा वायोः क्षतिं तत्र तैलं वारि प्रदापयेत् ॥

संग्रहग्रहणीकपाटः।

मुक्ता सुवर्णं रस गन्ध टङ्क-
भस्मं कपर्दीऽमृततुल्यभागः।

सर्वैः समं गन्धक चूर्णमत्र
खल्ले च भाव्योऽतिविषा द्रवेण।
गोलञ्च कृत्वा मृदुकर्पटस्थं
सम्पाच्य भाण्डे दिवसार्द्धकञ्च।
सर्वाङ्गशीतो रस एष भाव्यो
धुस्तूरवङ्कोमुषलो द्रवैश्च॥
लोहस्य पात्रे परिभावितश्च
सिद्धो भवेत्संग्रहणी कवाटः।
वातोत्तरायां मरिचाज्य युक्तः
पित्तोत्तरायां मधुपिप्पलीभिः।
कफोत्तरायां विजयारसेन
कटुत्रयेणाज्ययुतो ग्रहण्याम्।
क्षयज्वरे चार्शसि षट्प्रकारे
मान्द्यातिसारेऽरुचि पीनसे च।
मेहे च कृच्छ्रे गतधातुवर्द्धने
गुल्मादयं चापि महामयघ्नम्॥

## जातीफलाद्यावटी।

जातीफलं टङ्कनमभ्रकञ्च
धुस्तूर वीजं समभागचूर्णम्।
भांगद्वयाख्यं फणिफेन युक्तं
गन्धालिकापत्र रसेन मर्द्यम्।
चणप्रमाणा वटिका विधेया
मधुप्रयुक्ता ग्रहणीगदेषु।

रोगेषु दद्यादनुपानभेदै
र्युक्ता विदध्यादतिसारवत्सु ॥
सामेषु रक्तेषु सशूलकेषु
पक्केष्वपक्केषु गुदामयेषु ।
पथ्यं सदध्योदनमत्र देयं
रसोत्तमोऽयं ग्रहणीकपाटः ॥

## जातीफलाद्यावटिका ।

विशुद्ध सूतस्य च गन्धकस्य
प्रत्येकशो माष चतुष्टयन्तु ।
विधाय शुद्धोपल पात्रमध्ये
सुकज्जलीं वैद्यवरः प्रयत्नात् ॥
जातीफलं शाल्मलिवेष्ट मुस्तं
सटङ्कनं सातिविषं सजीरम् ।
प्रत्येकमेषां मरिचस्य शाण-
प्रमाणमेकं विषमाषकञ्च ॥
विचूर्ण्य सर्वाण्यवलोड्य पश्चाद्
विभावयेत् पत्रभवैरमीषाम् ।
रसैरसोन्मानमिते रसाल-
वंशी च भङ्गोत्कट कञ्चटी च ॥
इन्द्रालिकेन्द्राशनकं सजम्ब-
जयन्तिका दाड़िमकेशराजी ।
अविद्धकर्णापि च भृङ्गराजी
विभाव्य सम्यग्वटिका विधेया ॥

कोलास्थिमाना च बहुप्रकारं
सामं निहन्त्यत्र यथानुपानम्।
कुर्य्याद्विशेषादनलावलम्बं
कासञ्च पञ्चात्मक मम्लपित्तम्॥
इयं निहन्ति ग्रहणीं प्रवृद्धां
मर्त्यस्यजीर्ण ग्रहणीमसाध्याम्।
चिरोद्भवां संग्रह कोष्ठदुष्टिं
शोथं समग्रं गुदजानसाध्यान्॥
आमानुबद्धन्त्वतिसार मुग्रं
जयेद्ध्रुवं योगशते रसाध्यम्।
विवर्जनीयास्त्विह भृष्टमत्स्या
मत्स्यस्तथा पाण्डुरवर्ण एव॥
रम्भाफलं मूलमथोदनञ्च
बुधैर्विधेयं न कदाचिदत्र।
जातीफलाद्या वटिका विधेया
यशोऽर्थिनो वैद्यवरस्य हृद्या॥
अनेक सम्भावित मर्त्यलोका
नानाविधव्याधि पयोधि नौका॥

ग्रहणीशार्दूलवटिका।

जातीफलं देवपुष्पमजाजी कुष्ठ टङ्कनम्।
त्रिडं त्वगेला धत्तूरं फणिफेनं समं समम्॥
प्रसारणीरसेनैव संमर्द्य वटिका कृता।
यथादोषानुपानेन सेविता ग्रहणीं हरेत्॥

नानावर्णमतीसारं दारुणाञ्च प्रवाहिकाम् ।
नाम्ना ग्रहणीशार्द्दूलवटिका ग्राहिणी परम् ॥

### ग्रहणीगजेन्द्रवटिका ।

रसगन्धक लौहानि शङ्खटङ्कन रामठम् ।
शटीतालीश मुस्तानि धान्य जीरक सैन्धवम् ॥
धातक्यतिविषा शुण्ठी गृहधूमो हरीतकी ।
भल्लातकं तेजपत्रं जाती फलं लवङ्ग कम् ॥
त्वगेला वालकं विल्वं मेथी शक्राशनस्य च ।
रसैः संमर्द्य वटिका रसवैद्येन कारिता ॥
गहनानन्दनाथेन भाषितेयं रसायने ।
ग्रहणीगजेन्द्र संज्ञेयं श्रीमता लोकरक्षणे ॥
ग्रहणीं विविधां हन्ति ज्वरातीसारनाशिनी ।
शूलगुल्माम्लपित्तांश्च कामलाञ्च हलीमकम् ॥
वलवर्णाग्निजननी सेविता च चिरायुषे ।
कण्डूं कुष्ठं विसर्पञ्च गुदभ्रंशं क्रमिं जयेत् ॥
माषद्वयां वटीं खादेच्छागीदुग्धानुपानतः ।
वयोऽग्निवलमावीच्य युक्त्या वा त्रुटिवर्द्धमम् ॥

### महागन्धकम् ।

रसगन्धकयोःकर्षं ग्राह्यमेकं सुशोधितम् ।
ततः कज्जलिकां कृत्वा मृदुपाकेन साधयेत् ॥
जात्याः फलं तथाकोषी लवङ्गारिष्टपत्रके ।
एतेषां कर्षमात्रेण तोयेन सह मर्दयेत् ॥

मुक्ताग्टहे पुनः स्थाप्य पुटपाकेन साधयेत् ।
गुञ्जाषट्क प्रमाणेन प्रत्यहं भक्षयेन्नरः ॥
एतत् प्रोक्तं कुमाराणां रक्षणाय महौषधम् ।
ज्वरघ्नं दीपनञ्चैव बलवर्णप्रसाधनम् ॥
दुर्वारं ग्रहणीरोगं जयत्येव प्रवाहिकाम् ।
सूतिकाञ्च जयेदेतदपि वैद्यविवर्जिताम् ॥
कासश्वासातिसारघ्नं वाजीकरणमुत्तमम् ।
बालरोगं निहन्त्याशु सर्वोपद्रव संयुतम् ॥
पिशाचा दानवा दैत्या बालानां येविघातकाः
यत्रौषधवरस्तिष्ठेत् तत्र सीमां त्यजन्तिते ॥
बालानां गदयुक्तानां स्त्रीणाञ्चापि विशेषतः ।
महागन्धकमेतद्धि सर्वव्याधि निसूदनम् ।

रसगन्धकयोः प्रत्येकं कर्षः जातीफलादीनामपिचतुर्णां प्रत्येकं कर्षः । कज्जलीं जलेन पङ्कवत् कृत्वा लौहदार्विकायां स्वेदयित्वा ततः सर्वमेकीकृत्य जलेन पिष्ट्वा एकस्मिन् मुक्ताग्टहे ओषधं संस्थाप्य अपरेणाच्छाद्य कदलीपत्रेण वेष्टयित्वा घनपङ्केनालिप्य करीषाग्नेर्मध्ये संस्थाप्य यदा वह्निरारक्तता भवति तदैवाकृष्य ग्राह्यः । यथाबाध्यनुपानं रत्तिकाः षट् खाद्याः । बालकानामुदरामयादावतिप्रशस्तम् ।

### श्रीवैद्यनाथवटिका ।

रसस्य शानं संग्टह्य काञ्जिकेन तु शोधयेत् ।
चित्रकस्य रसेनापि त्रिफलायाश्च बुद्धिमान् ॥

रसार्द्धं गन्धकं शुद्धं भृङ्गराजरसेन वा ।
द्वाभ्यां संमूर्च्छनं कृत्वा स्वरसैःशान संमितैः ॥
खल्लयेत्तु शिलाखल्ले क्रमशो वक्ष्यमाणजैः ।
निर्गुण्डी मण्डूकी श्वेता कुचेला शोभसुन्दरैः ॥
भृङ्गाह्वकेशराजैश्च जयेन्द्राशनकोल्वटैः ।
सर्षपाभां वटीं कृत्वा दद्यात्तां ग्रहणीगदे ॥
सामवातेऽग्निमान्द्ये च ज्वरे प्लीहोदरेषु च ।
वातश्लेष्मविकारेषु तथा श्लेष्मगदेषु च ॥
दधिमस्तु विनिक्षिप्य मर्द्दयित्वा यथाबलम् ।
दातव्या गुडिकाः सप्त रोगिणे ग्रहणीगदे ।
अम्ल तक्राणि सेवास्तु कुर्वीत स्वेच्छया बहु ।
श्रीमता वैद्यनाथेन लोकानुग्रहकारिणा ॥
स्वप्नान्ते ब्राह्मणस्येयं भाषिता लिखितेन तु ॥

## खसर्पणवटी ।

पक्केष्टकाहरिद्राभ्यामगारधूमकेन च ।
शोधितं पारदस्यैव कर्षार्द्धं तुलया धृतम् ॥
भृङ्गराज रसैः शुद्धं गन्धकं रससम्मितम् ।
द्वाभ्यां कज्जलिकां कृत्वा भावयेत्तत्तु भेषजैः ॥
सिन्धुवारदल रसे मण्डूक पर्णिका रसे ।
केशराज रसे चापि शोभसुन्दरजे रसैः ॥
रसेऽपराजितायाश्च सोमराजी रसे तथा ।
रक्तचित्रक पत्रोत्थे रसे च परिभावितम् ॥
रसमान समानेन च्छायायां शोषयेद्भिषक् ।

सर्षपाभाश्च गुड़िकाः कारयेत्कुशलो भिषक्॥
ततः सप्तवटीर्दद्याद्दधिमस्तु समाप्लुताः।
नित्यं दध्ना च भोक्तव्यं कोष्ठदुष्टि निवृत्तये॥
ग्रहणीमतिसारञ्च ज्वरदोषञ्च नाशयेत्।
अग्निदार्ढ्यकरं श्रेष्ठमामपर्पटिकाह्वयम्॥

अभ्रवटिका।

अथ शुद्धस्य सूतस्य गन्धकस्याभ्रकस्य च।
प्रत्येकं कर्षमानन्तु ग्राह्यं रसगुणैषिणा॥
ततः कज्जलिकां कृत्वा व्योमचूर्णं प्रदापयेत्।
केशराजस्य भृङ्गस्य निर्गुण्ड्याश्चित्रकस्य च॥
ग्रीष्मसुन्दरकस्याथ जयन्त्याः स्वरसं तथा।
मण्डूकपर्ण्याः स्वरसं तथा शक्राशनस्य च॥
श्वेतापराजितायाश्च स्वरसं पर्णसम्भवम्।
दापयेत्तत्र तुल्यञ्च विभिन्नः कुशलो भिषक्॥
रस तुल्यं प्रदातव्यं चूर्णं मरिच सम्भवम्।
इत्थं रसार्द्धभागेन चूर्णं टङ्कनसम्भवम्॥
शुभे शिलामये पात्रे घर्षणीयं प्रयत्नतः।
शुष्कमातप संयोगाद्वटिकां कारयेद्भिषक्॥
कलायपरिमाणान्तु खादेत्तान्तु प्रयत्नतः।
दृष्ट्वा वयश्चाग्निबलं यथाव्याध्यनुपानतः॥
हन्ति कासं चयं श्वासं वातश्लेष्म भवं रुजम्।
परं वाजीकरः श्रेष्ठो बलवर्णाग्निबर्द्धनः॥
ज्वरे चैवातिसारे च सिद्ध एष प्रयोगराट्।

नातः परतरः श्रेष्ठो विद्यतेऽभ्ररसायनात् ।
चातुर्थके ज्वरे श्रेष्ठः सूतिकातङ्कनाशनः ।
भोजने शयने पाने नास्त्यत्र नियमः क्वचित् ।
दधि चावश्यकं भक्ष्यं प्राह नागार्जुनो मुनिः ॥

शुद्धरस कर्ष १ शुद्ध गन्धक कर्ष १ कज्जली कृत्वा जारिताभ्र कर्ष १ मरिच चूर्णकर्ष १ टङ्कन क्षार तो १ मिश्रीकृत्य केशराजादीनां स्वरस कर्ष १ ततः छाया शुष्कां वटीं कारयेत् ॥

## महाभ्रवटी ।

अभ्रकं पुटितं ताम्रं लौहं गन्धक पारदम् ।
कुनटी टङ्कनक्षारं त्रिफला च पल पञ्चम् ॥
गरलस्य तथा माष चतुष्कञ्चैव चूर्णयेत् ।
तत्सर्वं भावयेदेषां रसैः प्रत्येकशः पलैः ॥
देवराजाशनाख्यस्य केशराजाख्यकस्य च ।
सोमराजस्य भृङ्गाख्यराजस्य श्रीफलस्य च ॥
पारिभद्राग्निमन्थस्य वृद्धदारस्य तुम्बरोः ।
मण्डूकपर्णी निर्गुण्डी पूतिकोम्लस्वकस्य च ॥
श्वेतापराजितायाश्च जयन्त्याश्चार्द्रकस्य च ।
शोभसुन्दरकस्याटरूषकस्य रसेन तु ॥
रसैस्ताम्बूलवल्ल्याश्च पञ्चोत्थैर्भावयेत् पृथक् ।
द्रवे किञ्चित् स्थिते चूर्णं मरिचस्य पलं क्षिपेत् ॥
ततश्चैव वटीं कुर्य्यान्मात्रां दद्याद् यथोचिताम् ।
ज्वरे चैवातिसारे च कासे श्वासे क्षये तथा ॥

सन्निपातज्वरे चैव विविधे विषमज्वरे ।
क्षयरोगेषु सर्वेषु चीणशुक्रे च यक्ष्मणि ॥
ग्रहण्यां चिरभूतायां सूतिकायां विशेषतः।
शोथे शूले तथा साध्ये स्थविरे चामवातके ॥
मन्दानलेऽबले चैव सकले श्लेष्मजे गदे।
पीनसेऽपीनसे चैव पक्केऽपक्के विशेषतः ॥
वातश्लेष्मणि वाते वा विविधे चेन्द्रियस्थिते ।
वातहृद्रे हृते पित्ते बलासेनाहृतेऽपि च ॥
अष्टसूदररोगेषु कुष्ठरोगे प्रशस्यते ।
अजीर्णे कर्णरोगे च क्रमे स्थूले च यक्ष्मणि ॥
अयं सर्वगदेष्वेव रसो वै परिकीर्त्तितः ।
महाभ्रवटिका सेयं परं श्रेष्ठा रसायने ॥

## पीयूषवल्ली रसः :

सूतकं गन्धकञ्चाभ्रं तारं लौहं सटङ्कनम् ।
रसाञ्जनं माक्षिकञ्च शाणमेकं पृथक् पृथक् ।
लवङ्गं चन्दनं मुस्तं पाठा जीरक धान्यकम् ।
समङ्गातिविषा लोध्रं कुटजेन्द्रयवं त्वचम् ॥
जातीफलं विश्वं निम्बं कनकं दाड़िमच्छदम् ।
सभङ्गा धातकी कुष्ठं प्रत्येकं रससम्मितम् ॥
भावयेत् सर्वमेकत्र केशराजरसैः पुनः ।
चणकाभावटी कार्य्या छागी दुग्धेन पेषिता ॥
अनुपानं प्रदातव्यं दग्धबिल्वं समं गुड़म् ।
अतिसारं ज्वरं तीव्रं रक्तातीसारमुल्बणम् ।

ग्रहणीं चिरजां हन्ति शोथं दुर्नामकं तथा।
आनःशूल विबन्धघ्नं संग्रह ग्रहणीहरम्॥
पिच्छामदोषं विविधं पिपासादाह रोगकम्
हृल्लासारोचकच्छर्द्दि गुदभ्रंशं सुदारुणम्॥
पक्वापक्वमतीसारं नानावर्णं सवेदनम्।
कृष्णारुणञ्च पीतञ्च मांसधावन सन्निभम्॥
प्लीहगुल्मोदरानाहं सूतिकारोगमङ्करम्।
असृग्दरं निहन्त्येव वन्ध्यानां गर्भदं परम्॥
कामलां पाण्डुरोगञ्च प्रमेहानपि विंशतिम्।
एतान् सर्वान्निहन्त्याशु मासार्द्धेनात्र संशयः॥
पीयूषवल्ली वटिका अश्विभ्यां निर्मिता पुरा।
कश्यपाय ददेऽश्विभ्यां ततः प्राप्य प्रजापतिः॥
धन्वन्तरिस्ततः प्राप देवतानां पतिस्ततः।
परम्परा प्राप्त एष रसस्त्रैलोक्य दुर्लभः॥

श्रीनृपतिवल्लभः।

जातीफल लवङ्गाब्दत्वगेला टङ्करामठम्।
जीरकं तेजपत्रञ्च यमानी विश्वसैन्धवाः॥
लौहमभ्रं रसो गन्धस्ताम्रं प्रत्येकशः पलम्।
मरिचं द्विपलं दत्त्वाच्छागीक्षीरेण पेषयेत्॥
धात्री रसेन वा पेष्यं वटिकाः कुरु यत्नतः।
श्रीमद्गहननाथेन विचिन्त्य परिनिर्मितम्॥
सूर्य्यवत्तेजसा चायं रसो नृपतिवल्लभः।
अष्टातशवटीं खादेत्प्रातः सूर्य्यदर्शकः॥

हन्ति मन्दानलं सर्वं मामदोषं विसूचिकाम् ।
प्लीह गुल्मोदराष्ठीला यकृत् पाण्डुत्वकामलाम् ॥
हृच्छुलं पृष्ठशूलञ्च पार्श्वशूल तथैव च ।
कटीशूलं कुक्षिशूलमानाहमष्टशूलकम् ॥
कास श्वासामवातांश्च श्लीपद शोथमर्व्वुदम् ।
गलगण्डं गण्डमालामम्लपित्तञ्च गद्भीम् ॥
क्रिमिकुष्ठानि दद्रुणि वातरक्तं भगन्दरम् ।
उपदंशमतीसारं प्रहण्यर्शः प्रमेहकम् ॥
अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातं सुदारुणम् ।
ज्वरं जीर्णं तथा पाण्डुं तन्द्रालस्यं भ्रमं क्लमम् ॥
दाहञ्च विद्रधिं हिक्कां जड़गद्गद मूकताम् ।
मूढ़ञ्च स्वरभेदञ्च व्रध्नवृद्धि विसर्पकान् ॥
ऊरुस्तम्भं रक्तपित्तं गुदभ्रंशारुचिं तृषाम् ।
कर्णनासामुखोत्थांश्च दन्तरोगांश्च पीनसान् ॥
शौन्यञ्चशीतपित्तञ्चस्थावरादिविषाणि च ।
वातपित्तकफोत्थांश्च द्वन्द्वजान् सान्निपातिकान् ॥
सर्व्वानेव गदान् हन्ति चण्डांशुरिव पापहा ।
बलवर्णकरो हृद्य आयुष्यो वीर्य्यवर्द्धनः ।
परं वाजीकरः श्रेष्ठः पटुद्रो मन्त्रसिद्धिदः ।
अरोगी दीर्घजीवी स्याद्रोगी रोगाद्विमुच्यते ॥
रसस्यास्य प्रसादेन बुद्धिमान् जायते नरः ॥

## बृहन्नृपवल्लभः ।

रसगन्धक लौहाभ्रं नागं चितञ्च मुस्तकम् ।

टङ्कं जातीफलं हिङ्गुलगैला बङ्गिवङ्गकम् ॥
तेजपत्र मजाजी च यमानी विश्वसैन्धवम्।
प्रत्येकं तोलकं चूर्णं तथा मरिच ताम्रयोः ॥
निरुत्थक मृतं हेम तथा माष चतुष्टयम्।
आर्द्रकस्य रसेनैव धातग्याश्च स्वरसैस्तथा ॥
भावयित्वा प्रदातव्यं चणमात्रं भिषग्वरैः।
भक्षयेत् प्रातरुत्थाय पथ्यं भक्षेद्यथोचितम् ॥
अग्निमान्द्य मजीर्णञ्च दुर्नाम ग्रहणीं जयेत्।
आमाजीर्ण प्रशमनं सर्वरोग निसूदनम् ॥
नाशयेदोदरान् रोगान् विष्णुचक्र मिवासुरान्।
प्रथ्याभरोऽस्य राजवल्लभसंज्ञा ॥

## अजाज्यादिचूर्णम्

पलद्वन्द्वमजाज्यास्तु पलैकं यवशूकजम्।
अम्बुदं द्विपलं ज्ञेयं फणिफेन पलं तथा ॥
अर्कमूल भवं चूर्णं चतुःपल मितं स्मृतम्।
अजाज्यादिक मेतद्धि हन्त्युग्रं ग्रहणीगदम् ॥
सरक्त मथनीरञ्चमतिसारं सुदारुणम्।
ज्वरातिसारं शमयेद्विसूचीं घोररूपिणीम् ॥

## स्वल्प गृहणीकपाटरसः।

दरदं गन्धपाषाणं तुगाक्षीर्य्यहिफेनकम्।
तथा वराटिकाभस्म सर्वं क्षीरेण मर्दयेत् ॥
रक्तिका युग्ममानेन छायायाशुष्कां वटीं चरेत्।

गृहणीं विविधां हन्ति रक्तातीसारमुल्वणम् ॥

## बृहद्ग्रहणीकवाटः ।

तारमौक्तिक हेमानि सारश्चैकैक भागिकम् ।
द्विभागोगन्धकः सूतस्त्रीभागो मर्दयेदिमान् ॥
कपित्थस्वरसैर्गाढ़ं मृगशृङ्गे ततः क्षिपेत् ।
पुटेन्मध्ये पुटेनैव तत उद्धृत्य मर्दयेत् ॥
बलारसैः सप्तधैवमपामार्गरसैस्त्रिधा ।
लोध्र प्रतिविषा मुस्तधातकीन्द्रयवामृताः ॥
प्रत्येकमेतत् स्वरसैर्भावना स्यात्त्रिधा त्रिधा ।
माषमात्रो रसो देयो मधुना मरिचैस्तथा ॥
हन्ति सर्वानतीसारान् गृहणीं सर्वजामपि ।
कपाटो गृहणीरोगे रसोऽयं वह्निदीपनः ॥
सारो लौहः ।

## रसपर्पटी ।

श्रीविन्ध्यवासिपादान् नत्वा धन्वन्तरिञ्च सुरभिषजम्
रस गन्धक पर्पटिकापरिपाटी पाटवं वक्ष्ये ॥
मग्नं रसे जयन्त्याः पश्चादेरण्डसम्भुते ।
आर्द्रकरसे च सूतं पत्ररसे काकमाच्याश्च ॥
मग्नमुदितानुपूर्व्या मर्दनशुष्कं करेण गृह्णियात् ।
प्रस्तरभाजन मध्ये शुद्धिरियं पारदस्योक्ता ॥
शुकपुच्छ समच्छायो नवनीत समद्युतिः ।
मसृणः कठिनः स्निग्धः श्रेष्ठो गन्धक दृश्यते ॥

कृत्वा भद्रं गन्धक मति कुशलः क्षुद्रतण्डुलाकारम्
तद्भृङ्गराज रसैरनन्तरं भावयेत्सप्त ॥
तदनु च शुष्कं कुर्य्यात् धूलिसमानञ्च सप्तधा रौद्रे ।
तदनु च शुष्कं चूर्णं कृत्वा विन्यस्य लौहिकामध्ये ॥
निर्धुमबदर काष्ठाङ्गारेन्यस्तं बिलाप्य तैल समम्
पात्रस्थित भृङ्गराजरस मध्ये टालयेन्निपुणः ॥
तस्मिन् प्रविष्टमात्रं कठिनत्वं याति गन्धक चूर्णम् ।
पुनरपि रौद्रे शुष्कं केतक रजसा समानतांनीतम् ॥
शुद्धे सूते शोधित गन्धक चूर्णेन तुल्यता कार्य्या ।
तावन्मर्दन मनयो यावन्न कणोऽपि दृश्यते सूते ॥
पश्चात् कज्जलसदृशं चूर्णं लौहीस्थितं यत्नेन ।
निर्धूमवदर काष्ठाङ्गारेन्यस्तं विलाप्य तैल समम् ॥
सद्योगोमय निहिते कदलदले टालयेन् मृदुनि ।
लौहीस्थित मवशिष्टं कठिनं तन्नग्रहणीतिव्यम् ॥
पश्चात्पर्पटरूपा पर्पटिका कीर्त्यते लोकैः ।
मयूर चन्द्रिकाकार लिङ्गं यत्र तु दृश्यते ॥
तत्र सिद्धं विजानीयाद्वैद्यो नैवात्र संशयः ।
सम्मर्दित पात्रे भरणा वदनीया पर्पटी मनुजैः ॥
जीरक गुञ्जे हिङ्गोरङ्गं स्यादेव वातले जठरे ।
जीरक हिङ्गोरसेन त्वनुपानं सलिल धारयाकार्य्यम् ॥
रसगन्धक पर्पटिका भक्तमात्रे तु नाम्भसः पानम ।
प्रथमं गुञ्जायुगलं प्रतिदिन मेकैक वृद्धितोभक्ष्यम् ।
दशगुञ्जापरिमाणान्नाधिकमदनीयमेकविंशतिदिनानि ।
वातातप कोपमनश्चिन्तन माहार समय वैषम्यम् ॥

व्यायामश्चायासः स्नानं व्यध्वानं महितं मत्यन्तम्।
पाके स्तोकं सर्पिर्जीरक धन्याक वेशवारैश्च॥
सिन्धुद्भवेन रन्धन मोदनधान्यानि शालयो भक्ष्याः
कुष्टं वार्तिङ्गलफल मविड्कर्णा च वास्तुकम्॥
अत्तमन्नः सहितः कदलदल सहितं पटोलञ्च।
क्रमुकफल शृङ्गवेरो भक्ष्यो शाकेषु काकमाचो च॥
लावकवर्त्तक तित्तिरिमयूर मांसञ्च हिततरं भवति।
मद्गुरो रोहितमीनावदनीयो क्षुणा मत्स्याश्च॥
नीरचीरं व्यञ्जन मदनीयं पक्व कदलञ्च।
रम्भाफल दल वल्कलमूलानां वर्जनं कार्य्यम्॥
तिक्तं निम्बादिकमपि नाद्यं नोष्णं तथान्नञ्च।
अनूपमांस जलचर पतत्रि पललञ्च सर्वथा त्याज्यम्॥
स्त्रीणां सम्भाषणमपि गड़कस्य क्षणमत्र्येषु।
नाम्लं न दधिशाकं पर्पट्या भक्षणे भक्ष्यम्॥
गुड़खण्ड शर्करादिक इक्षुविकारो न भक्ष्य इक्षुश्च।
न दलं न फलं न लताप्यदनीया कारवेल्लस्य॥
स्तोक घृतमिह भक्ष्यं पथ्ये साकाङ्क्षमुत्थानम्
क्षुत्पीड़ायां भोजनमवश्य कार्य्यं महानिशायाञ्च॥
सगजलमिश्रं. पक्वं चीरं यद्वाधिक जलपक्वञ्च।
कथमपि भोजन समयातिक्रमजातं ज्वरे विरेके च॥
वमने च नारिकेल सलिलं दुग्धञ्च पातव्यम्।
स्वप्ने जाते रमिते विरेकतः चीरमेव पातव्यम्॥
न ज्ञायते बुभुक्षा लक्ष्यालक्ष्या प्रतीयते यदि वा।
अग्नित्ति भिनि भिन्नमस्तक शूलाद्यैर्नूनमवधार्य्या॥

किंबहु वाच्यं रोगी यदा यदा भवति साकाङ्क्षः।
पाययितव्यं दुग्धं तदा तदा निर्भयीभूय॥
विहिताकरणे चास्यामविहितकरणे च रोगाद्यम्लानाम्।
व्यापत्तयोऽपि बहुधा दृष्टा प्रमाणिकैर्बहुशः॥
तस्मादवधातव्यं भवितव्यं भोजने निपुणैः।
एवमियं क्रियमाणा भवति श्रेयस्करी नियतम्॥
अर्शोरोगं ग्रहणीं सामां शूलातिसारौ च।
कामलपाण्डुव्याधिं प्लीहानञ्चाति दारुणं हन्ति॥
गुल्मजलोदर भस्मक रोगं हन्त्यामवातांश्च।
अष्टादशैव कुष्ठा न्यशेषशोथादि रोगांश्च॥
इयमम्लपित्तशमनी त्रिदोषदमनी क्षुधातिकमनीया।
अग्निं निमग्नमुदरे ज्वालाजटिलं करोत्याशु॥
रसगन्धकपर्पटिका त्वपवार्थ्य व्याधिसंघातम्।
वलिपलितशून्यं पुरुषं दीर्घायुषं कुरुते॥
व्याधिप्रभाव हरणादपमृत्युत्रासनाशकरणाच्च।
मर्त्यानाममृत घटी रसगन्धक पर्पटी जयति॥
सम्भुं प्रणम्य भक्त्या पुजां कृत्वा च विष्णुचरणाब्जे।
रसगन्धक पर्पटिका भक्ष्या तेनाति सिद्धिदा भवति॥
नृणां सरुजां ध्रुवमियमारोग्यं सतत शोलिताकुरुते।
श्रीवत्साङ्क विनिर्म्मिता सम्यग्रसपर्पटी श्रेष्ठा॥
उक्तमेव हि कर्त्तव्यं नानारोगतया तथा।
औषध क्रियवैवात्र कर्त्तव्या चोत्तरक्रिया॥
प्रत्यवाय विनाशार्थं क्षेत्रपाल बलिं न्यसेत्।
कृतमङ्गलकः प्रातर्योगिनीनामतः परम्॥

अनन्तर पूर्व्व बलिदान मन्त्रः। ओं घं त्तें चे त्रपालाय नमः।
चेत्रपालस्य सामान्य बलिमन्त्रः। ओं क्रीं क्रें दिव्याभ्यो योगिनीभ्यो मातृभ्यः चेत्रीभ्यो भूतेभ्योः शाकिनीभ्यो नमो नमो क्रीं सामान्य योगिनीनां बलिः। ओं गन्धकमहाकालाय स्वाहा। ओं ब्रह्मकोषिणि रच रच स्वाहा। विशेष बलिः। अत्र पारदस्य नैसर्गिक दोषत्रय शोधनमावश्यकं कार्य्यम्।

यदुक्तं मलशिखि विषनामानो रसस्य नैसर्गिकादोषाः
मूर्च्छां मलेन कुरुते शिखिना दाहं विषेण हिक्काञ्च॥
गृहकन्या हरति मलं त्रिफला वह्निं चित्रकश्चविषम्।
तस्मादेभिर्व्वारान् संमूर्च्छयेत् सप्त सप्तैव इति॥

गृहकन्या घृतकुमारि तस्या दलरसेन खल्लनम्।
त्रिफलायाश्चूर्णेन खल्लनम्। चित्रकस्य पत्ररसेनमूर्च्छनम्
तदैव नैसर्गिक दोषापहारानन्तरं जयन्त्यादिद्रव्य चतुष्टय रसेन मुर्च्छनमधिगन्तव्यम्।

## लोहपर्पटी।

समौ गन्धरसौ कृत्वा कज्जलीकृत्य यत्नतः।
शुद्ध लौहस्य चूर्णन्तु रस तुल्यं प्रदापयेत्॥
एकीकृत्य ततो यत्नाल्लौहपात्रे प्रमर्द्दितम्।
घृत प्रलिप्त दर्व्यान्तु स्वेदयेन्मृदुनाग्निना॥
द्रवीभूतं समाहृत्य ढालयेत्कदली दले।
चूर्णीकृत्य सुखार्थाय पथ्यभुग्भिः प्रसेव्यते॥
शीतोदकानुपान वा क्वाथं वा धान्यजीरयोः।

लौहेन पर्पटी ह्येषा भच्या लोकस्य सिद्धिदा॥
रक्तिकैकां समारभ्य वर्द्धयेद्रक्तिकां क्रमात्।
सप्ताहं वा द्वय वापि यावदारोग्यदर्शनम्॥
सूतिकाञ्च ज्वरञ्चैव ग्रहणीमति दुस्तराम्।
आमशूलातिसारांश्च पाण्डुरोगं सकामलम्॥
मोहानमग्निमान्द्यञ्च भस्मकञ्च तथैव च।
आमवात मुदावर्त्तं कुष्ठान्यष्टादशैव तु॥
एवमादीं स्तथा रोगानगराणि विविधानि च।
हन्त्यनेन प्रयोगेण वपुषाग्निर्मल: सुखी॥
जीवेद्दर्षशतं पूर्णं बलीपलितवर्जित:।
भोजनं रक्तशालीनां त्यक्ता शाकं विदाहि च॥
आमवात प्रकोपञ्च चिन्तनं मैथुनं तथा।
प्रातरुत्थाय संसेव्या विधिनायु: प्रवर्द्धिनी॥

## स्वर्णपर्पटी।

रसोत्तमं पलं शुद्धं हेमतोलक संयुतम्।
शिलायां मर्दयेत्तावत् यावदेकत्वमागतम्॥
गन्धकस्य पलञ्चैकमय:पात्रे ततो दृढ़े।
मर्दयेद्दृढ़ पाणिभ्यां यावत्कज्जलतां व्रजेत्।
तत:परं विधानज्ञ: पर्पटीं कारयेत्सुधी:।
रक्तिकादि क्रमेणैव योजयेदनुपानत:॥
ग्रहणीं विविधां हन्ति हृष्या सर्वज्वरापहा।
शूलमष्टविधं हन्ति हृष्या सर्वरुजापहा॥
अत्र हेम्नोऽष्टभागित्वमुपलक्षणमिति प्रामाणिका:।

## पञ्चामृतपर्पटी।

अष्टौ गन्धक तोलका रस दलं लौहं तदर्द्धं शुभं
लौहार्द्धञ्च वराभ्रकं सुविमलं ताम्रं तथाभ्राद्धिकम्।
पात्रे लौहमये च मर्द्दन विधौ चूर्णीकृतञ्चैकतो
दर्व्यां वा दर बह्निनाति मृदुना पाकं विदित्वा दले॥
रम्भाया भव ढालयेत्पटरियं पञ्चामृता पर्पटी
ख्याता क्षौद्र घृतान्विता प्रतिदिन गुञ्जाद्वयं वर्द्धितः।
लौह्रे मर्द्दनयोगतः सुविमलं भचक्रिया लौहवद्-
गुञ्जाष्टावथवा त्रिकं त्रिगुणितं सप्ताहमेवं भजेत्॥
नानावर्ण ग्रहण्यामरुचिसमुदये दुष्टदुर्नामकादौ
छर्द्यां दीर्घातिसारे ज्वरभवकलित रक्तपित्ते क्षयेऽपि।
वृष्याणां वृष्यराज्ञी बलिपलितहरा नेत्ररोगैकहन्त्री
तुन्दं दीप्तस्थिराग्निं पुनरपि नवकं रोगिदेहं करोति॥
रस दलं गन्धकार्द्धमित्यर्थः दीर्घातिसारे चिरोत्थितातिसारे।

## विजयपर्पटी।

गन्धकं चूर्णितं कृत्वा भाव्यं भृङ्गरसेन तु।
सप्तधा वा त्रिधा वापि पश्चाच्छुष्कं विचूर्णयेत्॥
चूर्णयित्वा यसे पात्रे कृत्वा वह्निगतं सुधीः।
द्रुतं भृङ्गरसे क्षिप्तं तत उद्धृत्य शोषयेत्।
तच्च गन्धं पलञ्चैकं गन्धार्द्धं शुद्धपारदम्।
सूतार्द्धं भस्म रौप्यञ्च तदर्द्धं स्वर्णभस्मकम्॥
तदर्द्धं मृतवैक्रान्तं मौक्तिकञ्च विनिक्षिपेत्।

एकीकृत्य ततः सर्वं कुर्य्यात्पर्पटीकां शुभाम् ॥
लौहपात्रे समरसं मर्दितं कज्जलीकृतम् ।
बदराङ्गारवह्निस्थे लौहपात्रे द्रवीकृते ॥
मयूर चन्द्रिकाकारं लिङ्गं वा यदि दृश्यते ।
मृदौ न सम्यग् भङ्गः स्यात् मध्ये तङ्गस्य रूप्यवत् ॥
खरे लघुर्भवेद्भङ्गो रुक्षः सूक्ष्मोऽरुणच्छविः ।
मृदुमध्यौ तथा खाद्यौ खरस्त्याज्यो विषोपमः ॥
जराव्याधि मृताकीर्णं विश्वं दृष्ट्वा पुरा हरः ।
चकार पर्पटीमेतां यथा नारायणोऽमृतम् ॥
आदौ शङ्करमभ्यर्च्य द्विजातीन् प्रणिपत्य च ।
प्रभाते भक्षयेदेनां प्राग्रक्तिद्वय सम्मिताम् ॥
रक्तिकादि क्रमाद् वृद्धिर्भक्ष्या नैव दशापरि ।
आरोग्यदर्शनं यावत्तावद्ह्रासस्ततः परम् ॥
अजीर्णे भोजनं नैव पथ्यकाल व्यतिक्रमः ।
घृतसैन्धवधन्याक हिङ्गुजीरक नागरैः ॥
शस्यते व्यञ्जन सिद्धं पित्ते स्वाद्वम्लमाक्षिकम् ।
कृष्णमत्स्येन दुग्धेन मांसेन जाङ्गलेन च ॥
जाङ्गलेषु शशच्छागौ मत्स्ये रोहित मद्गुरौ ।
पटोलपत्रञ्च तथा कृष्णवार्त्ताकुजालिका ॥
सुस्विन्नपर्णैस्ताम्बुलैर्नाभि कर्पूरसंयुतैः ।
क्षुधाकाले व्यतिक्रान्ते यदि वायुः प्रकुप्यति ॥
भिद्यतेऽतीति शिरःशूले विरेके वमथौ तथा ।
तृष्णारागाद्याधिके पित्ते नारिकेलाम्बु निर्भयम् ॥
नारिकेलं पयः पेयं द्विभक्ष्यं क्षीरमेव च ।

स्वप्ने शुक्रच्युतौ चैव चम्पकं कदलीदलम्॥
वर्ज्यं निम्बादिकं शाकं पाकाम्लं काञ्जिकं सुराम्।
कदलीफलपत्राङ्घ्रि त्रपुषालावुकर्कटी॥
कुष्माण्डं कारवेल्लञ्च व्यायामं जागरं निशि।
न पश्येन्न स्पृशेन्नच्छेत् स्त्रियं जीवितुमिच्छति॥
यद्यौषधे स्त्रियं गच्छेत कर्त्तव्या तु प्रतिक्रिया।
दुर्वारां ग्रहणीं हन्ति दुःसाध्यां बहुवार्षिकीम्॥
आमशूलमतीसारं सामञ्चैव सुदारुणम्।
क्षतिसारं षड़र्शांसि यक्ष्माणं सपरिग्रहम्॥
शोथञ्च कामलां पाण्डुं प्लीहानञ्च जलोदरम्।
पक्तिशूलञ्चाम्लपित्तं प्रमेहान् विषमज्वरान्॥
वातपित्तकफोत्थांश्च ज्वरान् हन्ति सुदारुणान्।
जीर्णेऽपि पर्पटीं कुर्व्वन् वपुषा निर्म्मलः सुधीः॥
जीवेद्वर्षशतं श्रीमान् वलीपलितवर्जितः॥
प्रातः करोति सततं नियतं द्विगुञ्जां
यस्तां स विन्दति तुलां कुसुमायुधस्य।
आयुश्च दीर्घमनघं वपुषः स्थिरत्वं
हानिं वलीपलितयोरतुलं बलञ्च॥

तन्त्रान्तरोक्ता विजयपर्पटी।

रसं वज्रं हेमतारं मौक्तिकं ताम्रमभ्रकम्।
सर्व्वतुल्येन गन्धेन कुर्य्याद्विजयपर्पटीम्॥
दुर्वारां ग्रहणीं हन्ति दुःसाध्यां बहुवार्षिकीम्।
आमशूलमतीसारं चिरोत्थमतिदारुणम्॥

प्रवाहिकां षड्र्शांसि यक्ष्माणं सपरिग्रहम्।
शोथञ्च कामलां पाण्डुं प्लीहगुल्मजलोदरम्॥
पक्तिशूलमम्लपित्तं वातरक्तं वमिं भ्रमिम्।
अष्टादशविधं कुष्ठं प्रमेहान् विषमज्वरान्॥
चतुर्विधमजीर्णञ्च मन्दाग्नित्वमरोचकम्।
जीर्णेऽपि पर्पटीं कुर्वन् वपुषा निर्मलः सुधीः॥
जीवेद्वर्षशतं श्रीमान् वलीपलितवर्जितः॥

प्रातः करोति सततं नियतं द्विगुञ्जां
यस्तां स विन्दति तुलां कुसुमायुधस्य।
आयुश्च दीर्घमनघं वपुषः स्थिरत्वं
हानिं वलीपलितयोरतुलं बलञ्च॥

जराव्याधिसमाकीर्णं विश्वं दृष्ट्वा पुरा हरः।
चकार पर्पटीमेतां यथा नारायणः सुधाम्॥

## हिरण्यगर्भपोट्टलीरसः।

एकोभागो रसराजस्य भागौ द्वौ हाटकस्य च।
मुक्ताफलस्य चत्वारो भागाः षड् दीर्घनिःस्वनात्॥
ताम्रं बलेर्वरत्याश्च टङ्गनो रसपादिकः।
पक्वनिम्बकतोयेन सर्वमेकत्र मर्दयेत्॥
मूषामध्ये न्यसेत्कल्कं तस्य वक्त्रं निरोधयेत्।
गर्त्तेऽरत्निप्रमाणेन पुटेच्चिंशद्वनोपलैः॥
स्वाङ्गशीतलतां ज्ञात्वा रसं मूषोदराद्धरेत्।
ततः खल्लोदरे मर्द्यं सुधारूपं समुद्धरेत्॥
एतस्यामृतरूपस्य दद्याद् गुञ्जाचतुष्टयम्।

घृतमाध्वीकसंयुक्तमेकोनविंशदूषणैः ॥
मन्दाग्नौ रोगसङ्घे च ग्रहण्यां विषमज्वरे ।
गुदाङ्कुरे महाशूले पीनसे श्वासकासयोः ॥
अतीसारे ग्रहण्याञ्च श्वयथौ पाण्डुके गदे ।
सर्वेषु कोष्ठरोगेषु यकृत् प्लीहादिकेषु च ॥
वातपित्तकफाख्येषु द्वन्द्वजेषु त्रिजेषु च ।
दद्यात्सर्वेषु रोगेषु श्रेष्ठमेतद्रसायनम् ॥

इति भैषज्यरत्नावल्यां ग्रहण्यधिकारः समाप्तः ।

# अतीसाराधिकारः

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः ।
अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम् ॥

## आमपक्वलक्षणम् ।

मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले ।
विनातिद्रवसंघातशैत्यश्लेष्मप्रदूषणात् ॥

## आमपक्वयोरपरलक्षणम् ।

शकृद्दुर्गन्धि साटोप विष्टम्भार्त्तिप्रसेकिनः ।

विपरीतं निराममन्तु कफात्पक्वञ्च मज्जति ॥
आमे विलङ्घनं शस्तमादौ पाचनमेव वा।
कार्य्यञ्चानशनस्यान्ते प्रद्रवं लघुभोजनम् ॥
लङ्घनमेकं त्यक्त्वा नान्यदस्तीह भेजजं बलिनः।
समुदीर्णं दोषचयं शमयति तत्पाचयत्यपि च ॥

प्रद्रवं प्रकृष्टद्रवं तच्च लघु एतेन मण्डपेयाद्यन्नाम्बादिकं सूचितम्। वर्ज्जयेद्वैदलं शूली कुष्ठी मांसं चयी स्त्रियम्। द्रवमम्लमतीसारी सर्वञ्च तरुणज्वरी। इत्यत्र द्रवनिषेधोऽविहितदुग्धादिद्रवनिषेधार्थ इति न विरोधः।

ह्रीवेरशृङ्गवेराभ्यां मुस्तपर्पटकेन वा।
मुस्तोदीच्यशृतं तोयं देयं वापि पिपासवे ॥

युक्तेऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत्।
औपश्च सिद्धपेया लाजानां शक्तवोऽप्यतिसारहिताः।
वस्त्रप्रस्रुतमण्डः पेया च मसूरयूषश्च ॥

न तु संग्रहणं दद्यात्पूर्वमामातिसारिणे।
दोषा ह्यादौ रुध्यमाना जनयन्त्यामयान् बहून् ॥
शोथपाण्ड्वामयप्लीह कुष्ठगुल्मोदरज्वरान्।
दण्डकालसकाध्मान ग्रहण्यर्शो गदांस्तथा ॥

क्षीणधातुबलार्त्तस्य बहुदोषोऽति तिःसृतः।
आमोऽपि स्तम्भनीयः स्यात्पाचनान्मरणं भवेत् ॥

स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्य्यते।
अभया पिप्पली कल्कैः सुखोष्णैस्तं विपाचयेत् ॥

धान्यपञ्चकं धान्यचतुष्कञ्च।

धान्यकं नागरं मुस्तं बालकं विल्वमेव च।

आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥
इदं धान्यचतुष्कं स्यात् पैत्ते शुण्ठीं विना पुनः ॥
नागरातिविषामुस्तैरथवा धान्यनागरैः।
तृष्णाशूलातिसारघ्नं पाचनं दीपनं लघु ॥
पक्कोऽप्यकृदतीसारो ग्रहणीमार्दवाद्यदा।
प्रवर्त्तते तदा कार्य्यः क्षिप्रं सङ्ग्राहिको विधिः ॥

कञ्चटादिः।

कञ्चटदाडिमजम्बूशृङ्गाटकपत्रह्रीवेरम्।
जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात् ॥

कुटजादिः।

कुटजं दाडिमं मुस्तं धातकीविल्ववालकम्।
लोध्रचन्दनपाठाश्च कषायं मधुना पिवेत् ॥
सामे शूले च रक्ते च पिच्छास्रावे च शस्यते।
कुटजादिरिति ख्यातः सर्वातीसारनाशनः ॥
अति दृष्टफलोऽयम्।

वत्सकादिः।

सवत्सकः सातिविषः सविल्वः
सोदीच्यमुस्तश्च कृतः कषायः।
सामे सशूले सहशोणिते च
चिरप्रवृत्तेऽपि हितोऽतिसारे ॥

अथ नाभिप्रलेपाः।

कृत्वालवालं सुदृढं पिष्टैरामलकैर्भिषक्।
आर्द्रक स्वरसेनाथ पूरयेन्नाभि मण्डलम् ॥

नद्दीवेगोपमं घोरमतीसारं निवारयेत् ॥
तथा जातीफलं पिष्ट्वा नाभौ दद्यात् प्रलेपनम्
दुर्निवारमतीसारं वारयत्यनिवारितम् ॥
आम्रस्य वल्कलं पिष्टं काञ्जिकेन प्रयत्नतः ।
नाभिं संलेपयेत्तेन कल्केन मतिमान् भिषक् ॥
नद्दीवेगोपमं घोरमतीसारं निवारयेत् ॥
बिल्वचूतास्थि निर्य्यूहः पीतः सक्षौद्रशर्करः ।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥
पटोलयवधान्यानां क्वाथः पेयः सुशीतलः ।
शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः ॥

लवङ्गचतुः समम् ।

जातीफलं त्रिदशपुष्पसमन्वितञ्च
जीरञ्च टङ्कनयुतं मुनिभिः प्रणीतम् ।
एतानि माक्षिकसितामर्द्दितानि लीढ्वा
आमातिसारमखिलं गुरुमाशु हन्ति ॥

गुञ्जामितमहिफेनं छागदुग्धेन भुञ्जानम् ।
अतिसरणं बहुवेगं धारयत्याशु ॥
अहिफेनातियोगेन नातिसारो निवर्त्तते ।
किन्त्वस्य बहुभिर्योगैर्मर्मृतो मृत एव सः ॥

कुटजदाड़िमकषायः ।

कषायो मधुना पीतस्त्वचो दाड़िमवत्सकात् ।
सद्यो जयेदतीसारं सरक्तं दुर्निवारणम् ॥

गुड़बिल्वम् ।

गुड़ेन खादितं बिल्वं रक्तातीसारनाशनम् ।

आमशूल विबन्धघ्नं कुक्षिरोगविनाशनम ॥

शल्लकी बदरीजम्बु पियालाम्रार्जुनत्वचः।
पीताः क्षीरेण मध्वाक्ताः पृथक् शोणितनाशनाः ॥

जम्ब्वाम्रामलकानान्तु पल्लवानथ कुट्टयेत्।
संगृह्य स्वरसं तेषामजाक्षीरेण योजयेत्।
तं पिबेन्मधुना युक्तं रक्तातीसारनाशनम् ॥

विल्वं छागपयः सिद्धं सितामोचरसान्वितम्।
कलिङ्गचूर्णसंयुक्तं रक्तातीसारनाशनम् ॥

ज्येष्ठाम्बुना तण्डुलीयं पीतञ्च ससितामधु।
पीत्वा शतावरी कल्कं पयसा क्षीरभुग जयेत्।
रक्तातीसारं पीत्वा वा तया सिद्धं घृतं नरः॥

कुटजस्य पलं गृह्य अष्टभागजले शृतम्।
तथैव विपचेद्भूयो दाड़िमोदकसंयुतम् ॥
यावन्नैव लसीकाभं शृतं तदुपकल्पयेत्।
तस्यार्द्धकर्षं तक्रेन पिबेद्रक्तातिसारवान् ॥
अवश्यमरणीयोऽपि मृत्योर्याति न गोचरम् ॥

क्वाथदाड़िमाम्बुभागाः समाः, भागानुक्तेः
सम यतः।

कल्कस्तिलानां कृष्णानां शर्करा भागसंयुतः॥
आजेन पयसा पीतः सद्यो रक्तं नियच्छति।

विल्वाब्दधातकी पाठा शुण्ठी मोचरसाः समाः।
पीता रुन्धन्त्यतीसारं गुड़तक्रेन दुर्जयम ॥

गुड़ेन मधुरीकृतं तक्रं गुड़तक्रं आल्केन
योग इति गोपालदासः॥

रसाञ्जनादिचूर्णम् ।

रसाञ्जनं सातिविषं कुटजस्य फलत्वचम् ।
धातकी शृङ्गवेरञ्च पिबेत्तण्डुलवारिणा ॥
क्षौद्रयुक्तं प्रणुदति रक्तातीसारमुल्वणम् ॥

निःक्वाथ्य मूलममलं गिरिमल्लिकायाः
सम्यक्पल द्वितयमम्बुचतुःशरावे ।
तस्मादशेषसलिलं खलु शोषणीयं
क्षीरे पलद्वयमिते कुशलैरजायाः ॥

प्रक्षिप्य माषकानष्टौ मधुनस्तत्र शीतले ।
रक्तातिसारी तं लीढ्वा नैरुज्यमधिगच्छति ॥

पीत्वा सशर्करं क्षौद्रं चन्दनं तण्डुलाम्बुना ।
दाहं तृष्णां प्रमेहञ्च सद्यो रक्तं नियच्छति ॥

नवनीतं मधुयुतं लिह्वा सितया सह ।
नागकेशरसंयुक्तं रक्तसंग्रहणं परम् ॥
मधुपादं सितार्द्धांशं नवनीतं चतुर्गुणम् ॥

गुदवाहे प्रपाके वा पटोलमधुकाम्बुना ।
सेकादिकं प्रशंसन्ति छागेन पयसाथवा ॥
गुदभ्रंशे तु कर्त्तव्या चिकित्सा तत्प्रकीर्त्तिता

पिष्ट्वा कनकमूलञ्च शक्रजं फणिफेनकम् ।
वल्लमानं कृता वर्त्तिर्मधुत्यष्टतयोगतः ॥
हन्याद्गुदगतां क्षिप्रं दाहपाकावसंशयम् ।
फलवर्त्तिरियं ख्याता गुदरोगनिसूदनी ॥

नारायणचूर्णम् ।

गुड़ूची देवदारुञ्च कुटजस्य फलं तथा ।

विल्वञ्चातिविषाञ्चैव भृङ्गराजञ्च नागरम् ॥
अक्राशनस्य चूर्णञ्च सर्व्वमेकत्र मेलयेत्।
चूर्णमेतत्सम ग्राह्यं कुटजस्य त्वचोऽपि च ॥
गुड़ेन मधुना वापि लेहयेद्भिषजां वरः ॥
योगं रक्तमतीसारं चिरजं दुर्ज्जयं तथा।
ज्वरं तृष्णाञ्च कासञ्च पाण्डुरोगं हलीमकम् ॥
मन्दानलं प्रमेहञ्च गुल्मञ्च विनाशयेत्।
एतन्नारायणं चूर्णं श्रीनारायणभाषितम् ॥
अवेदनं सुसम्पक्वं दीप्ताग्नेः सुचिरोत्थितम्।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥



कुटजपुटपाकः।

स्निग्धं घन कुटजवल्कमजन्तुजग्ध-
मादाय तत्क्षणमतीव च पोथयित्वा।
जम्बुपलाशपुटतण्डुलतोयसिक्तं
वद्धं कुशेन च वहिर्घनपङ्कलिप्तम् ॥
सुस्विन्नमेतदवपीड्य रसं गृहीत्वा
क्षौद्रेण युक्तमतिसारवते प्रदद्यात्।
कृष्णात्रिपुत्रमतपूजित एष योगः
सर्व्वातिसारहरणे स्वयमेव राजा।

स्वरसस्य गुरुत्वेन पुटपाके पलं पिवेत्।
पुटपाकस्य पाकोऽय वहिरारुणवर्णता ॥
त्वक् पिण्डं दीर्घवृन्तस्य काश्मरीपत्रवेष्टितम्।
मृदावलिप्तं सुकृत मङ्गारेष्ववकूलयेत् ॥

भित्त्वमुद्धृत्य निष्पीड्य रसमादाय यत्नतः ।
शीतीकृतं मधुयुतं पाययेदुदरामये ॥
दाड़िमस्य फलं पिष्ट्वा पचेत्पुटविधानतः ।
तद्रस मधुसंमिश्रं पिवेत्सर्वातिसारजित् ॥

कुटजलेहः ।

शतं कुटजमूलस्य क्षुण्णं तोयार्म्मणे पचेत् ।
क्वाथे पादावशेषेऽस्मिन् लेह पूते पुनः पचेत् ।
सौवर्च्चलयवक्षारविड़सैन्धवपिप्पलीः ।
धातकीन्द्रयवाजाजीचूर्णं दत्त्वा पलद्वयम् ॥
लिह्याद्वदरमात्रन्तु शीत क्षौद्रेण संयुतम् ।
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ॥
दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम् ।
चूर्णं मिलित्वा पलद्वयं ग्राह्यं घनीभूते प्रक्षेपः ।
वदरमात्रमष्टमाषकमानं मधुना खाद्यमिति गोपालदास भानुदास प्रभृतयः ।

कुटजाष्टकः ।

तुलामथार्द्रां गिरिमल्लिकायाः
सचुद्य पक्त्वा रसमाददीत ।
तस्मिन्स्रुपूते पलसंमितानि
श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन ॥
पाठां समङ्गातिविषां समुस्तां
विल्वञ्च पुष्पाणि च धातकीनाम् ।

प्रक्षिप्य भूयो विपचेत्तु तावद्
दार्वीप्रलेपः स्वरसस्तु यावत् ॥
पीतस्त्वसौ कालविदा जनेन
मण्डेन वाजापयसाथवापि।
निहन्ति सर्वन्त्वतिसारमुग्रं
कृष्णं सितं लोहितपीतकं वा ॥
दोषं ग्रहण्या विविधञ्च रक्तं
पित्तं तथार्शांसि सशोणितानि।
असृग्दरञ्चैवमसाध्यरूपं
निहन्त्यवश्यं कुटजाष्टकोऽयम् ॥

तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुलामता ॥

मनाक्दार्वी प्रलेपावस्थायां शाल्मल्यादिचूर्ण-
क्षेप्यं शाल्मल्यादीनां प्रत्येकं पलमानत्वम्।

...शाल्मलिनिर्य्यासः अग्निमान्द्ये कोष्ण-
...शृतशीतेन इत्यन्ये, वस्तिदुष्टौ अजमण्डेन रक्ते
...इति भानुदासः ॥

जीर्णेऽमृतोपमं क्षीरमतीसारे विशेषतः।
छागं तद्वत्पजैः सिद्धं पेयं वा वारिसाधितम् ॥

अथ प्रवाहिकायाम्।

बालं बिल्वं गुड़ं तैलं पिप्पली विश्वभेषजम्।
लिह्याद्वाते प्रतिहते सशूलः सप्रवाहिकः ॥
पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः।
त्र्यहात् प्रवाहिकां हन्ति चिरकालानुबन्धिनीम् ॥

कल्कः स्याद्बालविल्वानां तिलकल्कश्च तत्समः ।
दध्नः सरोऽम्लः स्नेहाढ्यः खडो हन्यात् प्रवाहिकाम् ॥

दध्ना ससारेण समाक्षिकेन
भुञ्जीत निश्चारक पीड़ितस्तु ।
सुतप्त कुप्य क्वथितेन वापि
क्षीरेण शीतेन मधुप्लुतेन ॥

निश्चारकः प्रवाहिका ॥

रसप्रयोगः ।

अमृतार्णवः ।

हिङ्गुलोत्थो रसो लौहं गन्धकं टङ्कनं शटी ।
धान्यकं बालकं मुस्तं पाठा जीरं घुणप्रिया ॥
प्रत्येकं तोलकं चूर्णं छागीक्षीरेण पेषितम् ।
माषेका वटिका कार्य्या रसोऽयममृतार्णवः ।
वटिकां भक्षयेत् प्रातर्गहनानन्दभाषिताम् ।
धान्यजीरकचूर्णेन विजयाशालवीजतः ॥
मधुनाच्छागदुग्धेन मण्डेन शीतवारिणा ।
कदलीमोचकरसैः कण्ठकारीद्रवेण वा ॥
अतीसारं जयेदुग्रमेकजं द्वन्द्वजं तथा ।
दोषत्रय समुद्भूत मुपसर्ग समन्वितम् ।
शूलघ्नो वह्निजननी ग्रहण्यर्शोविकारनुत् ।
अम्लपित्त प्रशमनः कासघ्नो गुल्मनाशनः ॥

जातीयफलरसः ।

पारदाभ्रक सिन्दूरं गन्धं जातीफलं समम् ।

कुटजस्य फलञ्चैव धूर्त्तबीजानि टङ्कनम् ॥
व्योषं मुस्ताभयाचैव चुतबीजं तथैव च ।
बिल्वकं सर्ज्जबीजञ्च दाडिमोग्रक्षजीरकम् ॥
एतानि समभागानि निःक्षिपेत् खल्लमध्यतः ।
विजयास्वरसेनैव मर्दयेत् सुक्ष्मचूर्णितम् ॥
गुञ्जाफलप्रमाणान्तु वटिकां कारयेद्भिषक् ।
एकां कुटजमूलत्वक्कषायेण प्रयोजयेत् ॥
आमातिसारं हरति कुरुते वह्निदीपनम् ।
मधुना बिल्वशुण्ठेन रक्तं ग्रहणिकां जयेत् ॥
शुण्ठीधान्यकयोगेन चातिसारं निहन्त्यसौ ।
जातीफलरसोऽप्येष ग्रहणीगदहारकः ॥

### अभयनृसिंहो रसः ।

दरदञ्चविषं व्योषं जीरकं टङ्कनं समम् ।
गन्धकञ्चाभ्रकञ्चैव भागैकं शुद्धसूतकम् ॥
रागाङ्क सर्वतुल्यं स्यान्मर्दयेन्निम्बुकद्रवैः ।
रक्तिकं भक्षयेश्चानु जीरकं मधुना सह ॥
त्रिदोषोत्थमतीसारं सज्वरं वा विज्वरम् ।
सर्वरूपमतीसारं सग्रहग्रहणीं जयेत् ।
रसोऽभयनृसिंहोऽयमतीसारे सुपूजितः ॥

### आनन्दभैरवो रसः ।

दरदं मरिचं टङ्कममृतं मागधी समम् ।
सूक्ष्म पिष्टन्तु गुञ्जैकं रसमानन्दभैरवम् ॥
लेहयेन्मधुना चानु कुटजस्य फलत्वचाः ।

चूर्णितं कर्षमात्रन्तु त्रिदोषोत्थातिसारजित्।
दध्यन्न दापयेत् पथ्यं दध्याज्यं तक्रमेव वा।
पिपासायां जलं देयं विजया च हितानिशि॥

तन्त्रान्तरोक्त आनन्दभैरवोरसः।

हिङ्गुलञ्च विषं व्योषं टङ्कनं गन्धकं समम्।
जम्बीररस संयुक्तं मर्दयेद्याममात्रकम्॥
कासश्वासातिसारेषु ग्रहण्यां सान्निपातिके।
अपस्मारेऽनिले मेहेऽप्यजीर्णे वह्निमान्द्यके॥
गुञ्जामात्रः प्रदातव्योरस आनन्दभैरवः॥
यथाव्याध्यनुपानं देयम्॥

कर्पूररसः।

हिङ्गुलञ्चाहिफेनञ्च मुस्तकेन्द्रयवं तथा।
जातीफलञ्च कर्पूरं सर्वं समर्द्धयत्नतः॥
जलेन वटिका कार्य्या द्विगुञ्जा परिमाणतः।
ज्वरातीसारिणे चैव तथातीसाररोगिणे॥
ग्रहणीषट्प्रकारे च रक्तातीसार उल्बणे॥
अत्र केचित् टङ्कनमप्येकभाग मिच्छन्ति।

कुटजारिष्टः।

तुलां कुटज मूलस्य मृद्वीकार्द्धतुलां तथा।
मधूकपुष्पकाश्मर्य्योर्भागान् दशपलोन्मितान्॥
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणश्चैवावशेषितम्।
धातक्या विंशतिपलं गुडस्य च तुलां क्षिपेत्॥
मासमात्रं स्थितो भाण्डे कुटजारिष्टसंज्ञितः।

ज्वरान् प्रशमयेत् सर्वान् कुर्य्यात्तीक्ष्णं धनञ्जयम्।
दुर्वारां ग्रहणीं हन्ति रक्तातीसार मुल्वणम्॥

अहिफेनासवः।

तुलां मधूकमद्यस्य शुभे भाण्डे परिक्षिपेत्।
फणिफेनस्य कुडवं मुस्तकं पलसंमितम्॥
जातीफलञ्चेन्द्रयवं तथैलां तत्र दापयेत्।
कद्वाभाण्डं मासमात्रं यत्नतः परिरक्षयेत्॥
हन्त्यतीसार मत्युग्रं विसूचीमपि दारुणाम्॥

वब्बुलाद्यरिष्टः।

तुलाद्वयं तु वब्बूल्याश्चतुर्द्रोणे जले पचेत्।
द्रोणशेषे रसे शीते गुड़स्य त्रितुलाः क्षिपेत्।
धातकीं षोड़श पलां कृष्णाञ्च द्विपलां शिकाम्।
जातीफलानि कक्कोलं त्वगेला पत्रकेशरम्॥
लवङ्गं मरिचञ्चैव पलिकान्युपकल्पयेत्।
मासं भाण्डे स्थितस्त्वेष वब्बूल्यरिष्टको जयेत्॥
क्षयं कुष्ठमतीसारं प्रमेह श्वास कासकान॥
ग्रहण्यां ये रसाः प्रोक्तास्तेऽतिसारे नियोजिताः।
हन्युः सर्वमतीसारं शिवस्याज्ञा विशेषतः॥
स्नानाभ्यङ्गावगाहांश्च गुरुस्निग्धातिभोजनम्।
व्यायाममग्निसन्तापमतीसारी विवर्जयेत्॥

इति भैषज्यरत्नावल्यामतिसाराधिकारः समाप्तः।

## क्रिम्यधिकारः ।



पारसीययमानी पीता पर्युषितवारिणा प्रातः ।
गुड़पूर्वा क्रिमिजातं कोष्ठगतं पातयत्याशु ॥

गुड़पूर्वा प्रथमतो गुड़ मनाक् भक्षयित्वा विलम्बं कृत्वा पातव्या ।

पारिभद्रस्य पत्राणां रसं क्षौद्रयुतं पिबेत् ।
केवुकस्य रसं वापि पत्तूरस्याथ वा पुनः ॥
लिह्यात् क्षौद्रेण वैड़ङ्गं चूर्णं क्रिमिहरं परम् ॥

मुस्ताखुपर्णी फल शिग्रु दारु-
क्वाथः सकृष्णाक्रिमिशत्रुकल्कः ।
मार्गद्वयेनापि चिरप्रवृत्तान्
क्रिमीन्निहन्ति क्रिमिजांश्च रोगान् ॥

फलमत्र फलत्रिकम् ।

पलाशबीज स्वरस पिबेद्वा क्षौद्र संयुतम ।
पिबेत्तद्बीजकल्कं वा तक्रेण क्रिमिनाशनम् ॥

क्वाथं खर्जूरपत्राणां सक्षौद्र मुषितं निशि ।
पीत्वा निवारयत्याशु क्रिमिसङ्घमशेषतः ॥

अपक्वं क्रमुकं पिष्टं पीतं जम्बीरजै रसैः ।
निहन्ति विड्भवं कीटं रसः खर्जुर जम्भयोः ॥
पिबेत्तु्म्बीबीज चूर्णं तक्रेण क्रिमिनाशनम् ।
नारिकेल जलं पीतं सक्षौद्रं क्रिमिनाशनम् ॥

यमानीं लवणोपेतां भक्षयेत्कल्य उत्थितः ।

अजीर्णमामवातञ्च क्रिमिजांश्च जयेद्गदान् ॥

पलाशबीजेन्द्र विड़ङ्ग निम्ब-
भूनिम्ब चूर्णं सगुड़ं लिहेद्यः।
दिनत्रयेण क्रिमयः पतन्ति
पलाशवोजेन यमानिका वा ॥

## पारासोहादिचूर्णम्।

पारासोय यमानिका घन कणा शृङ्गीविड़ङ्गारुणा-
चूर्णञ्चत्वातरं विलोढ़मपि तत् चौद्रेण संयोजितम्।
कासं नाशयति ज्वरञ्च जयति प्रौढ़ातिसारं जये-
च्छर्दिं मर्दयति क्रिमिन्तु नियतं कोष्ठस्थनुन्मूलयेत् ॥

पिषयेदारनालेन नाड़ीचस्य फलानि च।
यूकालिख्याप्रशान्त्यर्थं दद्याल्लेपन्तु मस्तके ॥
रसेन्द्रेण समायुक्तोरसो धुस्तूरपत्रजः।
ताम्बूलपत्रजो वापि लेपाद् युकाविनाशनः ॥

## विड़ङ्गतैलम्।

सविड़ङ्ग गन्धकशिला सिद्धं सुरभीजलेन कटुतैलम।
आजन्मनयति नाशं लिख्यासहितांश्च यूकांश्च ॥

शिलामनःशिला गन्धकशिलाशब्देन गन्धक
इति भानुः।

## धुस्तूरतैलम्।

धुस्तूरपत्रकल्केन तद्रसेन च साधितम्।
तैलमभ्यङ्गमात्रेण युकां नाशयतिध्रुवम् ॥

## त्रिफलाद्यं घृतम् ।

त्रिफलाचित्रकता द्रन्ति वचाकम्पिल्लकं तथा ।
सिद्धमेभिर्गवां मूत्रैः सर्पिः क्रिमिविनाशनम् ॥
सर्वान्क्रिमीन् प्रणुदतिवज्रं मुक्तमिवासुरान् ॥

## त्रिफलाद्यं घृतम् ।

त्रिफलायास्त्रयः प्रस्था विड़ङ्गप्रस्थ एव च ।
दीपनं दशमूलञ्च लाभतः समुपाहरेत् ॥
पादशेषे जलद्रोणे शृते सर्पिर्विपाचयेत् ।
प्रस्थोन्मितं सिन्धुयुतं तत्परं क्रिमिनाशनम् ॥
त्रिफलाघृतमेतद्धि लेह्यं शर्करयासह ॥
दीपनं पञ्चकोलम् ।

## क्रिमिरोगे हरिद्राखण्डः ।

( पारिभद्रावलेह्यः । )

स्वरसं पारिभद्रस्य प्रस्थमादाय यत्नतः ।
तदर्धाञ्च सितां दत्त्वा घृतं कुड़व सम्मितम् ॥
वस्त्रार्द्धं रजनीचूर्णं दत्त्वा पात्रं समाचरेत् ।
यदा दार्व्यां प्रलेपः स्यात्तदैषां चूर्णमाक्षिपेत् ॥
चित्रकं त्रिफला मुस्तं विड़ङ्गं कृष्णजीरकम् ।
यमानीद्वय सिन्धूत्थं निर्गुण्डीफल मेव च ॥
पाठाविड़ङ्गकञ्चैव शारिवाद्वय वासकौ ।
पलाशबीजं व्योषञ्च त्रिवृद्दन्ती सरेणुका ॥

अरिष्टं सोमराजी च प्रत्येकन्तु द्विकार्षिकम्।
तन्मात्राष्टकं भक्षेत्तोयञ्चानुपिबेन्नरः॥
क्रिमींश्च विंशतिविधान्नाशयेन्नात्र संशयः।
दुष्टव्रणञ्च कुष्ठञ्च नाड़ीव्रण भगन्दरम्॥
शीतपित्तं विद्रधिञ्च दद्रं चर्म्मदलं तथा।
अजीर्णं कामलां गुल्मं श्वयथुञ्च विनाशयेत्॥
बलपुष्टिकरो ह्येष बलीपलितनाशनः।
हरिद्राखण्ड नामायं सर्वव्याधि निसूदनः॥
व्रणिणां हितकामोहि प्राह नागार्ज्जुनो मुनिः॥
द्रवद्वैगुण्यादृष्ट पलमिति ग्रन्थकर्त्तुर्मतम्।
पारिभद्रावलेहोऽयमित्यन्यत्र पाठः।

## क्रिमिमुद्गरोरसः।

क्रमेणवृद्धं रसगन्धकाज-
मोदाविड़ङ्गं विषमुष्टिका च।
पलाश वीजञ्च विचूर्णमस्य
निष्कप्रमाणं मधुनावलीढ़म्॥
पिबेत्कषायं घनजं तदूर्द्धं
रसोऽयमुक्तः क्रिमिमुद्गराख्यः।
क्रिमिन्निहन्ति क्रिमिजांश्च रोगान्
सन्दिपयत्यग्निमयं त्विरावात्॥

## कीटारीरसः।

शुद्धसूतमिन्द्रयवञ्चाजमोद, मनःशिला।

पलाशबीजं गन्धञ्च देवदाल्यादृवैर्दिनम् ॥
संमर्द्य भक्षयेन्नित्यं मुद्गपर्णीरसैः सह।
सितायुक्तं पिवेच्चानु क्रिमिपातो भवत्यलम् ॥

### कीटमर्दीरसः।

शुद्धसूतं शुद्धगन्धमजमोदा विड़ङ्गकम्।
विषमुष्टी ब्रह्मदण्डो यथाक्रमगुणोत्तरम ॥
चूर्णयेन्मधुनामिश्रं निष्कैकं क्रिमिजिद्भवेन्।
कीटमर्दो रसो नाम मुस्ताक्वाथं पिवेद्नु ॥
अत्र ब्रह्मदण्डो भार्गी।

### क्रिमिघातिनीगुड़िका।

रसगन्धाजमोदानां क्रिमिघ्न ब्रह्मबीजयोः।
एकद्वित्रिचतुःपञ्च तिन्दीबीजस्य षट्क्रमात् ॥
संचूर्ण्य मधुना सर्वं गुड़िकां क्रिमिघातिनीम्।
खादेन् पिपासुस्तोयञ्च मुस्तानां क्रिमिशान्तये ॥
आखुपर्णीकषायं वा प्रपिवेत् शर्करान्वितम् ॥

इति भैषज्यरत्नावल्यां क्रिम्यधिकारः समाप्तः।



# अम्लपित्ताधिकारः ।



वान्तिं कृत्वाम्लपित्ते तु विरेकं मृदु कारयेत् ।
सम्यग्वान्त विरिक्तस्य सुस्निग्धस्यानुवासनम् ॥
आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया ।
क्रिया शुद्धस्य शमनी ह्यानुबद्ध व्यपेक्षया ॥
दोषसंसर्गजा कार्य्या भेषजाहारकल्पना ॥
ऊर्द्धगं वमनैर्धीमान् अधोगं रेचनैर्हरेत् ।
अम्लपित्ते तु वमनं पटोलारिष्ट पत्रकैः ॥
कारयेन्मदन क्षौद्र सिन्धुयुक्तैः कफोल्वणे ।
विरेचनं त्रिवृच्चूर्णं मधु धात्रीफलद्रवैः ॥
तिक्तभूयिष्ठमाहारं पानञ्चापि प्रकल्पयेत् ।
यवगोधूम विकृतीस्तीक्ष्णसंस्कार वर्जिताः ॥
यथास्वं लाजसक्तून् वा सिता मधुयुतान् पिबेत् ॥
निम्बपटोल त्रिफला धात्री क्वाथस्त्रिसुगन्धि मधुयुतः पीतः ।
अपनयत्यम्लपित्तं यदि भुक्तं मुद्गयूषेण ॥
कफपित्त वमीकण्डूज्वर विस्फोट दाहहा ।
पाचनो दीपनः क्वाथः शृङ्गवेर पटोलयोः ॥
पटोलं नागरं धान्यं क्वाथयित्वा जलं पिबेत् ।
कण्डूपामार्त्ति शूलघ्नं कफपित्ताग्निमान्द्यजित् ॥
पटोल विश्वामृत रोहिणीकृतं
जलं पिबेत्पित्तकफाग्रयेषु ।

शूल भ्रमारोचक वह्निमान्द्य-
दाह ज्वरच्छर्दि निवारणं तत्॥
यवकृष्णा पटोलानां क्वाथं क्षौद्रयुतं पिबेत्।
नाशयेदम्लपित्तञ्चारुचिञ्च वमनं तथा॥

दशाङ्गः।

वासामृता पर्पटक निम्बभूनिम्ब मार्कवैः।
त्रिफला कुलकैः क्वाथः सक्षौद्रश्चाम्लपित्तहा॥
छिन्ना खदिर यष्ट्याह्व दार्व्यम्भो मधुना पिबेत्।
सद्राक्षामभयां खादेत्सक्षौद्रां सगुड़ाञ्चताम्॥
छिन्नोद्भवा निम्ब पटोलपत्रं
फलत्रिकं सुक्वथितं सुशीतम्।
क्षौद्रान्वित पीतमनेकरूपं
सुदारुणं हन्ति तदम्लपित्तम्॥
हिङ्गु च कतकफलानि च चिञ्चात्वचो घृतञ्च पुटदग्धम्।
शमयति तदम्लपित्तमम्लभुजो यदि यथोत्तर द्विगुणम्॥

हिङ्गु इत्यादौ यथोत्तरं द्विगुणमिति। हिङ्गुपेक्षया कतकफलं द्विगुणं कतकफलापेक्षया घृतं द्विगुणमिति एतत्सर्वं स्थालीमध्ये निक्षिप्य शरावेन पिधायान्तर्धूमेन दग्ध्वा माषकचतुष्टय मुपयोज्यं तप्तजलञ्चानुपेयं तन्त्रान्तरे सम्वादात्।

काम्लपात्रे वराक्काथोव्युषितोऽभ्यासयोगतः।
सिताक्षौद्र समायुक्तः कफपित्तहरः स्मृतः॥

पञ्चनिम्बादिचूर्णम्।

एकोऽंशः पञ्चनिम्बानां द्विगुणो वृद्धदारकः।
शक्तुर्दशगुणो देयःशर्करा मधुरीकृतः॥
शीतेन वारिणा पीतं शूलं पित्तकफोच्छ्रितम्।
निहन्तिचूर्णं सक्षौद्रं अम्लपित्तं सुदारुणम्॥
वासाघृतं तिक्तघृतं पिप्पलीघृतमेव च।
अम्लपित्ते प्रयोक्तव्यं गुड़कुष्माण्डकं तथा॥
पक्तिशूलापहा योगा स्तथा खण्डामलक्यपि॥
पिप्पली मधुसंयुक्ता अम्लपित्त विनाशिनी।
जम्बीरस्वरसः पीतः सायं हन्त्यम्लपित्तकम्॥

अविपत्तिकरं चूर्णम्।

त्रिकटुत्रिफला मुस्तं विड़ञ्चैव विडङ्गकम्॥
एलापत्रञ्च चूर्णानि समभागानि कारयेत्॥
सर्वमेकीकृतं यावल्लवङ्गं तत्समं भवेत्।
सर्वचूर्णं द्विगुणितं त्रिवृच्चूर्णं प्रदापयेत्॥
सर्वमेकीकृतं यावत्तावच्छर्करयान्वितम्।
भोजनादौ तथामध्ये खादेन्माषाष्टकं शुभम्॥
अम्लपित्तं निहन्त्याशु विवड्ं मलमूत्रयोः।
अग्निमान्द्य भवान् रोगान् नाशयेद्विकल्पतः॥
प्रमेहान विंशतिञ्चैव सर्वं दूर्नाम नाशनम्।
अविपत्तिकरं चूर्णं मगस्त्यविहितं शुभम्॥

पिप्पलीखण्डः।

कणाचूर्णस्य कुड़वं घटं र्न्म र्विषस्तथा।

शतावरी रसस्याष्टौ पलान्यत्र प्रदापयेत्॥
खण्डप्रस्थं समादाय चीरं प्रस्थद्वये पचेत्।
त्रिजात मुस्त धन्याक शुण्ठी वांशी द्विजीरकम्॥
अभयामलकञ्चैव चूर्णं द्वादशमाशिकम्।
तदर्द्धं मरिचं चूर्णं सारं खादिरमेव च॥
पलत्रयञ्च मधुनः शीतीभूते प्रदापयेत्।
ततो मात्रां प्रयुञ्जीत अम्लपित्तनिवृत्तये॥
शूलारोचक हृल्लासच्छर्द्दिं पित्ताम्लशूलनुत्।
अग्निसन्दीपनो ह्यषः खण्डपिप्पलिको मतः॥

## बृहत्पिप्पलीखण्डः।

पिप्पल्याः कुडवं चूर्णं घृतस्य कुडवद्वयम्।
पलषोड़शिकं खण्डाद्रसे वर्य्याः पलाष्टके॥
पलषोड़शिके चैव आमलक्या रसस्य च।
क्षीरं प्रस्थद्वये साध्यं लेहीभूते ततः क्षिपेत्॥
त्रिजातकाभयाभार्गी धन्याकं मुस्तकं शुभा।
धात्री च कार्षिकं चूर्णं कणाद्वञ्चापि जीरकम्।
कुष्ठं नागरकं नागं सिंहशीर्ण्डवचूर्णितम्।
जातिफलं समरिचं मधुनश्च पलत्रयम्॥
उपयुञ्जीत तां धीमान् अम्लपित्तनिवृत्तये।
हृल्लासारोचकच्छर्द्दिश्वासकासक्षयापहम्॥
अग्निसन्दीपनं हृद्यं पिप्पलीखण्डसञ्ज्ञितम्॥

## शुण्ठीखण्डः।

शुण्ठी चूर्णस्य कुडवं खण्डप्रस्थं समावपेत्।

दत्त्वा द्विकुडवं सर्पिःक्षीर प्रस्थद्वये पचेत् ॥
लेह्ये ऽवतारिते दद्याद्धात्री धान्यकमुस्तकम्।
अजाजी पिप्पली वांशी त्रिजातं कारवी शिवा ॥
त्रिशाणं मरिचं नागं पलमाषन्तु पृथक् पृथक्।
पलत्रयञ्च मधुनः शीतीभूते प्रदापयेत् ॥
ततो मात्रां प्रयुञ्जीत अम्लपित्तनिवृत्तये।
शूलहृद्रोगवमनैरामवातैश्च पीड़ितः ॥

शतावरीघृतम्।

शतावरीमूलकल्कं घृतप्रस्थं पयः समम्।
पचेन्मृद्वग्निना सम्यक् क्षीरं दत्त्वा चतुर्गुणम् ॥
नाशयेदम्लपित्तञ्च वातपित्तोद्भवान् गदान्।
रक्तपित्तं तृषां मूर्च्छां श्वास सन्तापमेव च ॥

नारायणघृतम्।

जलैर्दशगुणैः क्वाथ्यं पिप्पली पलषोड़श।
पादशेषं हरेत्तु क्वाथं क्वाथतुल्यं घृतं पचेत् ॥
रसप्रस्थं गुड़ूच्याश्च धात्र्याः पष्टिपलं रसम्।
द्राक्षाधात्री पटोलञ्च विश्वञ्च कटुका वचा ॥
पलप्रमाणं कल्कञ्च दत्त्वा सर्पिः समुद्धरेत्।
अम्लपित्तहरं ख्यातं दाहच्छर्दिनिवारणम् ॥
असाध्यं साधयेत्सर्व्वा नाम्ना नारायणं घृतम् ॥

सितामण्डूरम्।

धमनविधिविशुद्धं गोजले सप्तवारान्
तदपि किरणशुष्कं श्लक्ष्णमण्डूरचूर्णम्।

विमलकपलमेकं पञ्चसंख्यं सितायाः
अनवघृतपलाष्टौ द्व्यष्टकं गव्यदुग्धम् ॥
मृदुदहनशिखाभिर्मन्दमन्दं कटाहे
विगतसलिलशेषं पाचयेत्पाकविज्ञः।
वितरितगुडपाके किञ्चिदुष्णेऽवतीर्णे
दृषदि दृढमभीक्ष्णं चर्णितं देयमाशु ॥
त्रिकटुकमधुकैला वासवैडङ्गसारं
त्रिफलगदलवङ्गं कर्षमेकैकमस्य।
तदनु शिशिरकाले द्वे पले माक्षिकस्य
प्रतनु पटनिघृष्टं गालितं सम्प्रदद्यात् ॥
शुभतिथिदिवसादौ भोजनादौ निषेव्यं
प्रथमदिवसमेनं शाणमाणं तदूर्द्धम्।
अदुरहरनुवृद्ध्या यावदर्द्धं प्रयोज्यं
हिमकररुचिशीतं गव्यदुग्धञ्च पेयम्।
नियतमयमसाध्यानम्लपित्ताख्यशूलान्
वमिनिवह मदाहानाहमोहप्रमेहान्।
विविधरुधिररोगान् पित्तयुक्तानशेषान्
अपहरति सिताख्यो दिव्यमण्डूरयोगः ॥

### सौभाग्यशुण्ठीमोदकः।

त्रिकटु त्रिफलाभृङ्ग जीरकद्वयधान्यकम्।
कुष्ठाजमोदा लौहाभ्रं शृङ्गी कटफलमुस्तकम्
एलाजातीफलं मांसीपत्रं तालीशकेशरम्।
गन्धमात्राशटी यष्टी लवङ्गं रक्तचन्दनम् ॥

एतानि समभागानि शुण्ठीचूर्णन्तु तत्समम् ।
सिता द्विगुणिता तत्र गव्यक्षीरञ्चतुर्गुणम् ॥
तोलप्रमाणं दातव्यं दुग्धेनापि जलेन वा ।
अम्लपित्तं निहन्त्येतदरोचकनिसूदनम् ॥
शूलहृद्रोगशमनं कण्ठदाहं नियच्छति ।
छर्द्दाहञ्च शिरःशूलं मन्दाग्नित्वं विनाशयेत् ॥
हृच्छूलम्पार्श्वकुक्षिस्थ वस्तिशूल गुदेरुजम् ।
बलपुष्टिकरञ्चैव वशीकरणमुत्तमम् ॥
विशेषादम्लपित्तञ्च मूत्रकृच्छ्रं ज्वरं भ्रमम् ।
निहन्ति नात्र सन्देहो भास्करस्तिमिरं यथा ॥

## अम्लपित्तान्तको मोदकः ।

नागरस्य कणायाश्च पलान्यष्टौ प्रदापयेत् ।
गुवाकस्य पलान्यष्टौ सर्वमेकत्र कारयेत् ॥
घृतं क्षीरं ततः पश्चात्प्रस्थं प्रस्थं प्रदापयेत् ।
लवङ्गं केशरं कुष्ठं यमानी कारवी वचा ॥
चन्दनं मधुकं रास्ना देवदारुफलत्रिकम् ।
पत्रमेला वराङ्गञ्च सैन्धवं हवुषं शटी ॥
मदनं कटफलं मांसी शशयं वङ्करूप्यकम् ।
तालीशं पद्मकं मूर्वा समङ्गा वंशलोचना ॥
ग्रन्थिकं शतपुष्पा च शतमुलि कुरुण्टकम् ।
जातीफलं जातीकोषं कक्कोलमम्बुदं कणा ॥
कर्पूरञ्च विडङ्गञ्च अजमोदा बलामृता ।
मर्कटी चुरबीजञ्च चन्दनं देवताड़कम् ॥

लौहं कांस्यं प्रदातव्यं कर्षमात्रं भिषग्विदा ।
अभ्रत्वं कर्षमात्रं कर्षार्द्धं स्वर्णभस्मकम् ॥
चतुर्धातुविधानेन मारितं ग्राहयेत् सुधीः ।
अम्लपित्तान्तको ह्येष मोदको मुनिभाषितः ।
वान्तिं मूर्च्छाञ्च दाहञ्च कासं श्वासं भ्रमं तथा
वातजं पित्तजञ्चैव कफजं सान्निपातिकम् ।
सर्वरोगं निहन्त्याशु प्रमेहं सुतिका गदम् ।
शूलञ्च वह्निमान्द्यञ्च मूत्रकृच्छ्रं गलग्रहम् ॥

सर्वतोभद्रलौहः ।

लौहचूर्णं मृतं ताम्रमभ्रकञ्च पलं पलम् ।
शुद्धसूतञ्च कर्षैकं गन्धकाद्र्धं पलं तथा ॥
माक्षिकस्य विशुद्धस्य कर्षं शुद्धा शिलापरा ।
सार्द्धकर्षं विशुद्धञ्च शिलाजतु तथा परम् ॥
गुग्गुलोश्चापि कर्षैकं भागमानं परस्य च ।
चूर्णं विडङ्गभल्लातवह्नि श्वेतार्कमूलजम् ॥
करिकर्णपलाशञ्च तालमूली पुनर्नवा ।
घनामृता नागबला चक्रमर्द्दक मुण्डिरी ॥
भृङ्गकेश शतावर्य्यौ वृद्धदारं फलत्रिकम् ।
त्रिकटुश्चापि सर्वेषां प्रत्येकञ्च नयेद्भिषक् ॥
सर्वमेकत्र संमर्द्य घृतेन मधुना सह ।
स्निग्धे भाण्डे विनिक्षिप्य ततः कुर्य्याद्विधानवित् ॥
मासकादिक्रमेणैव लौहं सर्वरसायनम् ।
अम्लपित्तं जयेच्छीघ्रं सर्वोपद्रवसंयुतम् ॥

तद्वदर्शांसि सर्वाणि सर्वमेव भगन्दरम्।
पक्तिशूलञ्च शूलञ्च तथामं कुक्षिसम्भवम्।
वातरक्तं तथा कुष्ठं पाण्डुरोगं हलीमकम्
आमवातं तथा शोथमग्निमान्द्यं सुदुस्तरम्॥
कामलां वातगुल्मञ्च पिड़का गरगण्डसौ।
कासश्वासारुचिहरं वृष्यमेतद्विशेषतः॥
सर्वव्याधिहरं प्रोक्तं यथेष्टाहारसेविनः।
यक्ष्माणं रक्तपित्तञ्च वातरोगं विनाशयेत्॥
संज्ञया सर्वतोभद्र लौहो रसवरः स्मृतः॥

पानीयभक्तवटी।

त्र्यूषणं त्रिफलामुस्तं त्रिवृता चित्रकं तथा।
प्रत्येकं कार्षिकं दद्यात् सुतगन्धौ तदर्द्धकौ॥
लौहाभ्रकविड़ङ्गानां दद्यात्कर्षद्वयं तथा।
त्रिफलायाः कषायेण गुड़ीं कृत्वा विधानतः॥
तदेकां भक्षयेत्प्रातर्भक्तवारि पिबेदनु।
हन्ति शूलं पार्श्वशूलं कुक्षिवस्तिगुदे रुजम्॥
श्वासं कासं तथा कुष्ठं ग्रहणीं दोषनाशिनी॥

पानीयभक्तवटिका।

कृष्णाभ्रलौहमलशुद्धविड़ङ्गचूर्णं
प्रत्येकमेकपलिकं विधिवद्विधाय।
चव्यं कटुत्रयफलत्रयकेशराज
दन्ती पयोदचपलानलघण्टकर्णाः॥
मानौल शुक्लवृहती त्रिवृताः समूर्व्वा-

वर्त्ताः पुनर्नविकया सहितस्त्वमीषाम्।
मूलम्पति प्रतिविशोधितमञ्चमेकं
चूर्णं तदर्द्धरसगन्धकमेकसंस्थम्॥
कृत्वार्द्रकीयरससम्बलितञ्च भूयः
सम्पिष्य तस्य वटिका विधिवद्विधेया।
हन्त्यम्लपित्तमरुचिं ग्रहणीमसाध्यां
दुर्नामकामलभगन्दरशोथगुल्मान्॥
शूलञ्च पाकजनितं सततागिमान्द्यं
सद्यः करोत्यपचितिं चिरनष्टवह्नेः।
कुष्ठान्निहन्ति पलितञ्च बलिं प्रवृद्धां
श्वासञ्च कासमपि पाण्डुगदं निहन्ति॥
वार्य्यन्नमांसदधिकाञ्जिकतक्रमत्स्य-
वृन्ताम्लतैलपरिपक्वभुजो यथेष्टम्।
शृङ्गाटविल्वगुड़कच्चटनारिकेल-
दुग्धानि सर्वं विदलानि विवर्जयेत्तु॥
एषा ग्रहण्यामपि प्रशस्ता।

## बृहत् सुधावतीगुड़िका।

गगनाद्द्विपलं चूर्णं लौहस्य पलमात्रकम्।
लौहकिट्ट पलार्द्धञ्च सर्वमेकत्र संस्थितम्॥
मण्डूकपर्ण्णी वशिर तालमूलीरसै स्तथा।
भृङ्गराज केशराज कालमारिषजै रथ॥
त्रिफलाभद्रमुस्ताभिः स्थालीपाकाद्विचर्णितम्।
रसगन्धकयोः कर्षं प्रत्येकं ग्राह्यमेकतः॥

तन्मर्द्दय शिलाखल्ले यत्नतः कज्जलीकृतम्।
वचाचव्यं यमानी च जीरके शतपुष्पिका॥
व्योषं विडङ्ग मुस्तञ्च ग्रन्थिकं खरमञ्जरी।
त्रिवृता चित्रकोदन्ती सूर्य्यावर्त्तः सितस्तथा॥
भृङ्गमाणककन्दाश्च घण्टाकर्णक एव च।
दण्डोत्पला केशराज कालो कर्कटकोऽपि च॥
एषामर्द्धपलं ग्राह्यं पटघृष्टं सुचूर्णितम्।
प्रत्येकं त्रिफलायाश्च पलार्द्धं पलमेव च॥
एतत्सर्वं समालोड्य लौहपात्रे च भावयेत्।
आतपेदण्डसंघृष्टमार्द्रकस्य रसैस्त्रिधा॥
तद्रसेन शिला पिष्टां गुडिकां कारयेद्भिषक्।
वदरास्थि निभां शुष्कां सुनिगुप्तां निधापयेत्॥
तत्प्रातर्भोजना दौ च सेवितं गुड़िकात्रयम्।
अम्लोदकानुपानन्तुहितं मधुरवर्जितम्॥
दुग्धञ्चनारिकेलञ्च वर्जनीयं विशेषतः।
भोज्यं यथेष्टमिष्टञ्च वारिभक्तयम्लकाञ्जिकम्॥
हन्तयम्लपित्तं विविधं शूलञ्चपरिणामजम्।
पाण्डुरोगञ्च गुल्मञ्चशोथोदर गुदामयान्॥
यक्ष्माणं पञ्चकासञ्च मन्दाग्नित्वमरोचकम्॥
प्लीहानं श्वासमानाहमामवातं स्वरामयम्॥
गुड़ीक्षुधावतीसेयं विख्याता रोगनाशिनी॥

स्वल्पा क्षुधावतीगुड़िका।

रसगन्धकमभ्राणि यमानी त्र्यषणं तथा।

त्रिफला शतपुष्पा च चविका जीरकद्वयम् ॥
पुनर्नवा वचा दन्ती त्रिवृता घण्टकर्णकम्।
दण्डोत्पला सारिवे द्वे चाक्षमात्राणि कारयेत्।
मण्डूरं द्विगुणं दत्त्वा पेषणीयं प्रयत्नतः।
आर्द्रस्वरस आलोड्य गुड़िकां कारयेद्बुधः॥
प्रत्यहं भक्षयेदेकां भक्तवारि पिवेदनु।
वटी क्षुधावती नाम्ना चाम्लपित्तविनाशिनी॥
अग्निञ्च कुरुते दीप्तं तेजोवृद्धिं बलं तथा।
प्लीहानं श्वासमानाहमामवातं विनाशयेत्॥
परिणामभवं शूलं कासं पञ्चविधं तथा।
जगतस्तु हितार्थाय वाभटेन प्रकीर्त्तिता॥
अत्र मण्डूरमक्षद्वयम्।

## क्षुधावतीगुड़िका।

रसाथो गन्धकाभ्राणि त्र्यूषणं त्रिफला वचा।
यमानी शतपुष्पा च चविका जीरकद्वयम्॥
प्रत्येकं पलमेषान्तु घण्टकर्णं पुनर्नवा।
माणकं ग्रन्थिकञ्चेन्द्र केशराज सुदर्शनी॥
दण्डोत्पला त्रिवृद्दन्ती जामाल रक्तचन्दनम्।
भृङ्गापामार्ग कुलका मण्डूकञ्च पलार्द्धकम्॥
आर्द्रक स्वरसेनाथ गुड़िकां सम्प्रकल्पयेत्।
बदरास्थिसमाञ्चैकां भक्षयित्वा पिवेदनु॥
वारिभक्तजलञ्चैव प्रातरुत्थाय मानवः।
वटी क्षुधावती नाम सर्वाजीर्णविनाशिनी॥

अग्निञ्च कुरुते दीप्तं भस्मकञ्च नियच्छति।
अम्लपित्तञ्च शूलञ्च परिणामकृतञ्च यत्॥
तत्सर्वं शमयत्याशु भास्करस्तिमिरं यथा।
मधुरं वर्जयेदत्र विशेषात् क्षीरशर्करे॥

## लीलाविलासः।

रसो बलिर्व्योम रविस्तु लौहं
धात्रीघनौरैस्त्रिदिनं विमर्द्य।
तदल्पपृष्ठं मृदुना करेण
संमर्दयेदस्यहि वल्लयुग्मम्॥
हन्त्यम्लपित्तं विविधप्रकारं
लीलाविलासो रसराज एषः।
छर्दिं सशूलां हृदयस्य दाहं
निवारयेदेष न संशयोऽस्ति॥
दुग्धं सकुष्माण्डरसं सधात्री
फलं समितं सभितं भजेद्वा॥

## अम्लपित्तान्तकलौहः।

मृतसूतार्कलौहानां तुल्यां पथ्यां विमर्दयेत्।
माषमात्रं लिहेत् क्षौद्रैरम्लपित्तप्रशान्तये॥

## पञ्चाननगुड़िका।

शुद्धसूतपलार्द्धञ्च तत्समं शुद्धगन्धकम्।
तयोस्तुल्यं ताम्रपात्रं लिप्त्वा मूषान्तरे क्षिपेत्॥
आच्छाद्य पञ्चलवणैर्लिप्त्वा गजपुटे पचेत्।

सिद्धं ताम्रं समादाय पलमेकं विचूर्णयेत्।
पारदस्य पलञ्चैकं गन्धकस्य पलं तथा।
पुटदग्धस्य लौहस्य गगनस्य पलं पलम्॥
यमानी शतपुष्पा च त्रिकटु त्रिफलापि च।
त्रिवृता चविका दन्ती शिखरी जीरकद्वयम्॥
एतेषां पलिकैर्भागैर्घण्टकर्णकभागकम्।
ग्रन्थिकं चित्रकञ्चैव कुलिशानां पलार्द्धकम्॥
आर्द्रक स्वरसैः पिष्ट्वा गुड़िकां माषकोन्मिताम्।
पञ्चाननवटी ख्याता सर्वरोगविनाशिनी॥
अम्लपित्त महाव्याधि नाशिनी च रसायनी।
महाग्निकारिका चैषा परिणामव्यथापहा॥
शोथ पाण्डुामयानाह प्लीहगुल्मोदरापहा।
गुरुद्रव्यान्नपानानि पयोमांसरसा हिताः॥

## भास्करामृताभ्रम्।

वासामृता केशराजपर्पटी निम्बभृङ्गकम्।
मुस्तं द्वयोरन्तहतो वाट्यालकशतावरी॥
एषां सत्वैः पलोन्मानैर्मर्दितं विमलाभ्रकम्।
सहस्रपुटितं तत्र शतावर्य्यारसं क्षिपेत्॥
वारद्वादशकं दत्त्वा वटिकां कारयेद्भिषक्।
भास्करामृतनामेदमम्लपित्तं नियच्छति॥
शूलमन्नद्रवं शूलं शूलञ्च परिणामजम्।
छर्दिं हृल्लासमरुचिं तृष्णां कासञ्च दुर्जयम्।
हृद्ग्रहं कामलां रक्तपित्तं यक्ष्माणमेव च॥
दाहं शोथं भ्रमं तन्द्रां विस्फोटं कुष्ठमेव च।

श्वासं मूर्च्छाञ्च मन्दाग्निं यकृत्प्लीहोदरं तथा।

त्रिफलामण्डूरम्।

गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम्।
विलिहन् मधुसर्पिर्भ्यां शूलं हन्त्यम्लपित्तजम्॥
मिलित त्रिफला समं मण्डूरचूर्णम् अनुपानं शीतल जलम्।

श्रीविल्वतैलम्।

बालविल्वं पलशतं जलद्रोणे विपाचयेत्।
पादावशेषे तस्मिंस्तु तैलप्रस्थं विपाचयेत्॥
धात्रीरस तैलसमं द्विगुणं छागदुग्धकम्।
कल्कीकृत्य प्रचेद्धीमान् धात्रीं लाक्षां तथाभयाम्॥
मुस्तकं चन्दनोदीच्य सरलं देवदारु च।
मञ्जिष्ठां चन्दनं कुष्ठमेलां तगरपादिकम्॥
मांसीं शैलेयकं पत्रं प्रियङ्गुं शारिवां वचाम्।
शतावरिमश्वगन्धां शतपुष्पां पुनर्नवान्
तत्सिद्धं स्थापयेत् कुम्भे मासमेकं सुरक्षिते।
विल्वतैलमिदं श्रेष्ठमम्लपित्तकुलान्तकृत्॥
शूलमष्टविधं हन्ति साध्यासाध्यं न संशयः।
सूतिकारोगशमनं गर्भदं शुक्रवर्द्धनम्॥
हस्तपादशिरोदाहं दौर्बल्यं कृशतां तथा।
ग्रहणी गुल्महिक्कार्त्तिं रक्तपित्तज्वरं जयेत्॥

अथात्र पथ्यापथ्यविधिः।

ऊर्द्धगे वमनं पूर्वमधोगे तु विरेचनम्।

सर्वत्र शस्यते पश्चान्निकृष्टश्चापि शालयः॥
यवगोधुममुद्गाश्च पुराणा जाङ्गला रसाः।
जलानि तप्तशीतानि शर्करा मधुशक्तवः।
कर्कोटकं कारवेल्लं पटोलं हिलमोचिका।
वेत्राग्रं वृद्धकुष्माण्डं रम्भापुष्पञ्च वास्तुकम्॥
कपित्थं दाड़िमं धात्री तिक्तानि सकलानि च।
अम्लपित्तामये नित्यं सेवितव्यानि मानवैः॥
नवान्नानि समस्तानि कफपित्तकराणि च।
वमिवेगं तिलान्माषान् कुलत्थांस्तैलभचणम्॥
अविदुग्धञ्च धान्याम्लं लवणाम्लकटूनि च।
गुर्वन्नन्दधिमद्यञ्च वर्जयेदम्लपित्तवान्॥

इति भैषज्यरत्नावल्यामम्लपित्ताधिकारः समाप्तः

## शूलाधिकारः।



वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः।
चारचूर्णानि गुड़िकाः शस्यन्ते शूलशान्तये॥
लङ्घनम् आमपाचनार्थमेव स्वेदः पित्तं विना, चार चूर्णानि वक्ष्यमाणानि।

पुंसः शूलाभिपन्नस्य स्वेद एव सुखावहः।

पायसैः कृशरैः पिण्डैः स्निग्धैर्वा पिशितोत्करैः॥

वातात्मकं हन्त्यचिरेण शूलं
स्नेहेन युक्तस्तु कुलत्थयूषः।
ससैन्धवः व्योषयुतः सनावः
सहिङ्गु सौवर्चल दाड़िमाढ्यः॥

मावमांसं कुलत्थञ्च युक्त्या गृहीत्वा क्वाथयित्वा क्षालयित्वा च यूषः ततो घृतं दत्त्वा सैन्धवं लवणञ्च मात्रापादिकं व्योषञ्च कटुत्वमात्रकारकं दाड़िमफलरसः स्वादुत्वार्थं ततो हिङ्गुसौवर्चलं प्रक्षिप्य पिवेत्। अन्ये तु कुलत्थयूषः पृथगेव।

वला पुनर्नवैरण्डवृहतीद्वयगोक्षुरैः।
सहिङ्गु लवणोपेतं सद्यो वातरुजापहम्॥

शूली निरन्नकोष्ठोऽग्निकणाभिसूर्णिताः पिवेत्।
हिङ्गुप्रतिविषाव्योष वचा सौवर्चलाभयाः॥

तुम्बुरूण्यभया हिङ्गु पौष्करं लवणत्रयम्।
पिवेदुष्णाम्बुना वापि शूलगुल्मापतन्त्रकी॥

यमानी हिङ्गु सिन्धूत्थ क्षार सौवर्चलाभयाः।
सुरामण्डेन पातव्या वातशूलनिसूदनाः॥

विश्वमेरण्डजं मूलं क्वाथयित्वा जलं पिवेत्।
हिङ्गुसौवर्चलोपेतं सद्यः शूलनिवारणम्॥

हिङ्गु पुष्करमूलाभ्यां हिङ्गुसौवर्चलेन वा।
विश्वैरण्डयवक्वाथः सद्यः शूलनिवारणः॥

तद्वद्दुवयवक्वाथो हिङ्गुसौवर्चलान्वितः।

सौवर्च्चलाम्लिकाजाजी मरिचैर्द्विगुणोत्तरैः।
मातुलुङ्गरसैः पिष्टा गुड़िका वातशूलनुत्॥
बीजपूरकमूलञ्च घृतेन सह पाययेत्।
जयेद्वातभवं शूलं कर्षमेकं प्रमाणतः॥
हिङ्ग्वम्लवेतस व्योष यमानी लवणत्रिकैः।
बीजपूररसोपेतैर्गुड़िका वातशूलनुत्॥
विल्वमूल तिलैरण्डं पिष्टा चाम्लतुषाम्भसा।
गुड़िकां भ्रामयेदुष्णां वातशूलविनाशिनीम्॥
नाभिलेपाज्जयेच्छूलं मदनं काञ्जिकान्वितम्।
जीवन्तीमूल कल्को वा सतैलः पार्श्वशूलनुत्॥

अथ पित्तशूले।

गुड़ः शालिर्यवाः क्षीरं सर्पिः पानं विरेचनम्।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम्॥
(गुड़ोऽत्र शर्करा।)

पैत्ते तु शूले वमनं पयोऽम्बु
रसैस्तथेक्षोः सपटोलनिम्बैः।
शीतावगाहाः पुलिनाः सवाताः
कांस्यादि पात्राणि जलप्लुतानि॥

पय आदि यथालाभं मदनफलयोगेनाकण्ठं पीत्वा वमनम्। पटोलं निम्बयोर्द्वैसृतं मदनफलयुक्तं सम्यक् शीतलाकण्ठं पीत्वा वमनम्।

विरेचनं पित्तहरञ्च शस्तं
रसाश्च शस्ताः शशलावकानाम्।

सन्तर्पणं लाजमधूपपन्नं
योगाः सुशीतः मधुसम्प्रयुक्ताः ॥

लाजसक्तुकं नारिकेलोदकेन माधुर्य्यार्थं मधुदत्त्वा सन्तर्पणम् ।

छर्द्यां ज्वरे पित्तभवेऽथ शूले
घोरे विदाहे त्वतिकर्षिते च ।
यवस्य पेयां मधुना विमिश्रां
पिबेत्सुशीतां मनुजः सुखार्थी ॥

धात्रीरसं विदार्य्या वा त्रायन्तो गोस्तनाम्बुना ।
पिबेत्सशर्करं सद्यः पित्तशूलनिसूदनम् ॥

शतावरीरसं चौद्रयुत प्रातः पिबेन्नरः ।
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम् ॥

शतावरी सयष्ट्याह्ववाट्यालकुशगोक्षुरैः ।
शृतशीतं पिबेत्तोयं सगुड़चौद्रशर्करम् ॥
पित्तासृग्दाहशूलघ्नं सद्यो दाहज्वरापहम् ॥

तैलमेरण्डजं वापि मधुकक्काथसंयुतम् ।
शूलं पित्तोद्भवं हन्ति गुल्मं पैत्तिकमेव च ॥
भक्षितात् पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् ।

अथ श्लैष्मिकशूले ।

श्लेष्मात्मके च्छर्दनलङ्घनानि
शिरोविरेकं मधुसीधुपानम् ।
मधूनि गोधूमयवानरिष्टान्
सेवेतरुचान् कटुकांश्च सर्वान् ॥

मधुसीधु इत्येकपदं मद्यविशेषस्य संज्ञा।

लवणत्रयसंयुक्तं पञ्चकोल सरामटम।
सुखोष्णेनाम्बुना पीतं कफशूलनिवारणम्।
विल्वमूलमथैरण्डं चित्रकं विश्वभेषजम्।
हिङ्गुसैन्धवसंयुक्तं सद्यः शूलनिवारणम्॥
हिङ्गु सौवर्चलं शुण्ठी पथ्या च द्विगुणोत्तरा।
एतच्चूर्णं कटीकुक्षि पार्श्व हृद्बस्तिशूलनुत्॥

अथामशूले।

आमशूले क्रिया कार्य्या कफशूलविनाशिनि।
सेव्यमामहरं सर्वं यदग्निबलवर्द्धनम॥

कफस्य तुल्यत्वात्, कफशूले यत्पञ्चकोलादियुक्तं तदा
मशूले कार्य्यम्।

चतुःसमचूर्णम्।

दीप्यकं सैन्धवं पथ्या नागरञ्च चतुःसमम्।
चूर्णं शूलं जयत्याशु मन्दस्याग्नेश्च दीपनम॥
समाचिकं वृहत्यादि पिबेत्पित्तानिलात्मके॥
व्यामिश्रं वा विधिं कुर्य्यात् शूले पित्तानिलात्मके॥
पित्तजे कफजे चापि क्रिया या कथिता पृथक्।
एकीकृत्य प्रयुञ्जीत तां क्रियां कफपित्तजे॥
रसोनं मधुसंमिश्रं पिबेत्प्रातः प्रकाङ्क्षितः।
वातश्लेष्मभवं शूलं निहन्ति वह्निदीपनम॥
शङ्खचूर्णं सलवणं सहिङ्गुव्योषसंयुतम्।

उष्णोदकेन तत्पीतं शूलं हन्ति त्रिदोषजम् ।

मृदग्धस्य शङ्खस्य चूर्णं माषकैकमधिकं वा लवण-व्योषयोर्मिलित्वा माषकद्वयं हिङ्गो रक्तिकाद्वयं दत्त्वा पिबेत् श्लेष्मोत्तरे योगोऽयम् । अन्ये तु भागानुक्तत्वात्सर्वं समभागम् । इति भानुः ।

गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम् ।
त्रिलिहन्मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥

मिलितत्रिफलाचूर्णसमं मण्डूरम् ।

दग्धमनिर्गतधूमं मृगशृङ्गं गोघृतेन सह पीतम् ।
हृदयानितम्बजशूलं हरति शिखी दारुनिवहमिव ॥

हरिणशृङ्गं सङ्कुट्य अन्तर्धूमेन दग्ध्वा तद्भस्म घृतेन सह लेह्यम् ।

व्यायामं मैथुनं मद्यं लवणं कटुवैदलम् ।
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान्नरः ॥

अथ परिणामशूले ।

वमनं तिक्तमधुरैर्विरेकश्चात्र शस्यते ।
वस्तयश्च हिताः शूले परिणामसमुद्भवे ॥

नागरतिलगुडकल्कं पयसा संसाध्य यः पुमानद्यात् ।
उग्रं परिणतिशूलं तस्यापैति सप्तरात्रेण ॥

शुण्ठीचूर्णगुडयोः प्रत्येकं कर्षः तिल म ४ पायसं कृत्वा भक्षयेत् ।

शम्बूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात् ।
पक्तिजं विनिहन्त्येतत् शूलं विष्णुरिवासुरान् ॥

निर्मांसीकृतशम्बुकभस्म माषमेकं द्वयं वा घृताक्त मुखकुहरेण उष्णाम्बुना गोलयित्वा पेयम्।

दद्यादन्नसरेणाद्यात्तौलशवशम्बूकान्।
अचिरान्मुच्यते शूलान्नरोऽन्न परिवर्जनात्॥
तिलनागरपथ्यानां भागं शम्बुकभस्मनाम्।
द्विभाग गुडसंयुक्तां गुडीं कृत्वाक्षभागिकाम्॥
पिताम्बुपानात् पूर्वाह्णे भक्षयेत् क्षीरभोजनः।
सायाह्ने रसकं पीत्वा नरोमुच्येत दुर्जयात्॥
परिणाम समुत्थाच्च शूलाच्चिरभवादपि॥

शम्बूकादि गुडिका।

शम्बूकं त्र्यूषणञ्चैव पञ्चैव लवणानि च।
समांशा गुडिकाः कार्य्याः कलम्बकरसेन च॥
प्रातर्भोजनकाले वा भक्षयेत्तद्यथाबलम।
शूलाद्विमुच्यते जन्तुः सहसा परिणामजात्॥

सर्वं समांशं कलम्बरसेन मर्द्दयित्वा माषकचतुष्टय-मिता वटिकाः कार्य्याः अत एकामुष्णजलेन पिवेत्।

शङ्खरसगुडिका।

पलानि चिञ्चाक्षारस्य पञ्च पञ्चपलानि च।
लवणानां क्षिपेत् प्रस्थद्वयं जम्बीरवारिणः॥
पलद्वादशशङ्खस्य भस्मीभूतं क्षिपेत् पुनः।
पूर्वत्र्येण संनर्द्य हिङ्गुव्योषचतुःपलम्॥
रसामृतसुगन्धानां पलार्द्धञ्च पृथक् पृथक्।
दद्यात्समस्तं संमर्द्य जम्बीराम्ले दिनत्रयम्॥
बदरास्थिप्रमाणेन गुडिकाः कारयेद्भिषक्।

भक्षयेत्प्रातरुत्थाय तोयमुष्णं पिवेदनु ॥
शूलञ्च सर्वगुल्मञ्च अजीर्णपरिणामजम्।
अन्त्रशूलं पित्तशूलं हृच्छूलञ्च विशेषतः॥
कुक्षिशूलं पार्श्वशूलं पृथग्वातादिसम्भवम्।
आमशूलमुदावर्त्तं नाशयेन्नात्र संशयः॥

तिन्तिड़ी त्वग्भस्म प्र ५ पञ्चलवण प्रत्येकं प्र १ शङ्खभस्म प्र १२ जम्बीररस श ८ शनैः शनैः पक्का पश्चात् हिङ्गु, शुण्ठी पिप्पली मरिच एषाञ्च,र्णं प्रत्येकं प्र १ रस गन्धक अमृत प्रत्येकं तो ४ सर्वमेकीकृत्य जम्बीररसेन मर्दयित्वा दिनत्रयं रौद्रे शोषयेत्ततो वदरास्थिमिता वट्यः कार्य्याः अत एकामुष्णजलेन भक्षयेत्॥

यः पिवति सप्तरात्रं शक्तूनेकान् कलाय यूषेण।
स जयतिपरिणामजं शूल
चिरजमपि किमूतनूतनजम्॥
लौहचूर्णं वरायुक्तं विलीढ़ं मधुसर्पिषा।
परिणामशूलं शमयेत्तन्मलं वा प्रयोजितम्॥

## सामुद्राद्यंचूर्णम्।

सामुद्रं सैन्धवं क्षारो रुचकं रोमकं विड़म्।
दन्ती लौहरजः किट्टं त्रिवृच्छूरणकं समम्।
दधिगोमूत्र पयसा मन्दपाकि विपाचितम्।
तद्यथाग्निबलं चूर्णं पिवेदुष्णेन वारिणा॥
जीर्णेऽजीर्णे तु भुञ्जीत मांसाद्भिर्घृतसाधितम्।
नाभिशूलं प्लीहशूलं यकृद्गुल्म क्षतञ्च यत्॥

विद्रधाष्ठीलिकां हन्ति कफवातोद्भवं तथा।
शूलानामपि सर्वेषामौषधं नास्ति तत्परम्॥
परिणाम सभुत्थस्य त्रिशेषेणान्तकक्षमतम्॥

सामुद्राद्दीनां प्रत्येकं समभागचूर्णमेकीकृत्य दधिदुग्धगोमूत्राणां समभागेन यावता आलोड़ितं भवति तावद्दत्वा मन्दानलेन पचेत् आचूर्णी भावात्ततोऽग्न्यधम-क्षौद्रकेन यथायोग्यं प्रयोज्यम्। अन्ये तु समुदित चूर्णात दध्यादीनां मिलितानां चातुर्गुण्यमाहुः।

नारिकेलं सतोयञ्च लवणेन प्रपूरितम्।
विपक्कमग्निना सम्यक् परिनामजशूलनुत्॥

## सप्तामृतलोहम्।

मधुकं त्रिफलाचूर्णमयोरजः समं लिहन्।
मधुसर्पिर्युतं सम्यगाद्यं क्षीरं पिवेदनु॥
छर्दिं सतिमिरं शूलमम्लपित्तं ज्वरं क्लमम्।
आनाहं मूत्रसङ्गञ्च शोथञ्चैव निहन्ति सः॥

## पिप्पलीघृतम्।

सपिप्पली गुड़ं सर्पिः पचेत क्षीरे चतुर्गुणे।
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम्॥

## पिप्पलीघृतम्।

क्वाथेनकल्केन च पिप्पलीनां
सिद्धं घृतं माक्षिकसंप्रयुक्तम्।
क्षीरानुपानस्य निहन्त्यवश्यं

शूलं प्रवृद्धं परिणामसंज्ञम ॥
सुगोत मध्वादिकं कल्कवन्मधु शर्करेति
वचनात् । दुग्धपलमनुपिवेत ।

बीजपूराद्यं घृतम् ।

बीजपूरकमैरण्डं रास्नां गोक्षुरकं बलाम ।
पृथक् पञ्चपलान् भागान् यवप्रस्थसमायुतान ॥
वारिद्रोणेन संसाध्य यावत् पादावशेषितम् ।
घृतप्रस्थं पचेत्तेन कल्कं दत्त्वाक्षसंमितम ॥
तुम्बुरुण्यभया व्योष हिङ्गुसौवर्चलं विडम् ।
सैन्धवं यावशूकञ्च सर्जिकामम्लवेतसम् ॥
पुष्करं दाडिमञ्चैव वृक्षाम्लं जीरकद्वयम ।
मस्तु प्रस्थद्वयं दत्त्वा सर्व मृद्वग्निना पचेत् ॥
घृतमेतत्प्रशंसन्ति शूलं हन्ति त्रिदोषजम् ।
वातशूलं यकृच्छूलं गुल्मं प्लीहापहं परम् ॥
हृच्छूलं पार्श्वशूलञ्च अङ्गशूलञ्च नाशयेत् ।
बलवर्णकरं हृद्यमग्निसन्दीपनं परम् ॥

कोलादिमण्डूरम् ।

कोलाग्रन्थिक शृङ्गवेर चपलाक्षारैः समं चूर्णितम् ।
मण्डूरं सुरभोजलेऽष्टगुणिते पक्त्वाथ सान्द्रीकृतम् ॥
तत् खादेद् दशनादि मध्यविरतौ पायेण दुग्धान्नभुग् ।
जेतुं वातकफामयान् परिणतौ शूलञ्च शूलानि च ॥

क्षीरमण्डूरम् ।

लौहकिट्टपलान्यष्टौ गोमूत्रेऽष्टगुणे पचेत् ।

क्षीरप्रस्थेन तत्सिद्धं पक्तिशूलहरं परम् ॥

## ताराम‌ण्डूरगुडः।

विडङ्गं चित्रकं चव्यं त्रिफला त्र्यूषणानि च।
नवभागानि चैतानि लौहकिट्टसमानि च ॥
गोमूत्रं द्विगुणं दत्त्वा मूत्राद्विकगुड़ान्वितम्।
शनैर्मृद्वग्निना पक्त्वा सुसिद्धं पिण्डतां गतम् ॥
स्निग्धे भाण्डे विनिक्षिप्य भक्षयेत्कोलमात्रया।
प्राङ्मध्यान्तक्रमेणैव भोजनस्य प्रयोजितम् ॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम्।
कामलां पाण्डुरोगञ्च शोथं मन्दाग्नितामपि ॥
अर्शांसि ग्रहणीरोगं क्रिमि गुल्मोदराणि च।
नाशयेदम्लपित्तञ्च स्थौल्यञ्चापि नियच्छति ॥
वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च।
पक्तिशूलान्तको ह्येष गुड़ोमण्डूरसंज्ञितः ॥
शूलार्त्तानां कृपाहेतोस्तारया परिकीर्त्तितः ॥

## शतावरीमण्डूरम्।

संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम्।
शतावरी रसस्याष्टौ दध्नश्च पयसस्तथा ॥
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः।
विपचेत्सर्वमेकध्यं यावत् पिण्डत्वमागतम् ॥
सिद्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा।
वातात्मकं पित्तभवं शूलञ्च परिणामजम् ॥
निहन्त्येव नियोगोऽयं मण्डूरस्य न संशयः ॥

बृहच्छतावरीमण्डूरम् ।

मण्डूरस्याष्टपलान्यत्र त्रिफलाक्वाथे समे तस्य च ।
कल्कं कृत्वा पलान्यष्टौ शतावरीरसस्य च ॥
दध्नश्च पयसश्चाष्टावामलक्या रसस्य च ।
चतुःपलं घृतस्यापि शाणमात्रं विनिक्षिपेत् ॥
सिद्धे प्रत्येकमेतेषामजाजी धान्य मुस्तकम् ।
त्रिजातक कणापथ्या उपयुक्तं निहन्ति च ॥
शूलं दोषत्रयोद्भूतमम्लपित्तञ्च दारुणम् ।
मूर्च्छाञ्च वमिञ्चैव कास श्वासञ्च नाशयेत् ॥

त्रिफलाक्वाथ निर्वापित मण्डूर प्र ८ पाकार्थ शत-मूली रस प्र ८ दधि प्र ८ दुग्ध प्र ८ आमलकी रस प्र ८ घृत प्र ८ सिद्धे प्रक्षेपार्थं अजाज्यादीनां प्रचूर्ण मा ४ । अत्र अजाजी जीरकम् ।

चतुःसममण्डूरम् ।

मस्तो लोह मलाज्य माक्षिक सिता भागाः समामानतः
पात्रे ताम्रमये दिनान्त मथितं संस्थापयेदातपे ।
पश्चात्तद्घनतां प्रणीय रजनी मेकं बहिः स्थापयेत्
पात्रे ताम्रमये निधेय मथवा पात्रे हविर्भाविते ॥
पश्चान्माषचतुष्टयं प्रतिदिनं जग्धाजल शीतलं
पेयं भोजनापूर्वमध्यविरतौ स्वच्छन्दभाजो नरैः ।
शीतं शूलहुताशनाल्प कसनश्वासाम्लपित्तज्वरो-
न्मादापस्मृतिमेहसर्वजठराजीर्णादिसर्वा रुजः ॥

रसमण्डूरम् ।

कुडवं पथ्याचूर्णं द्विपलं गन्धाश्मलौहकिट्टस्य

शुद्धरसस्यार्द्ध पलं भृङ्गस्य रसं सकेशराजस्य ॥
अन्योन्मितश्चदत्वा पात्रे लौहेऽथ दण्डसंघृष्टम् ।
शुष्कं घृतमधुयुक्तं मर्दितं स्थाप्यञ्च भाजनेस्निग्धे ॥
उपयुक्तमेतदचिरान्निहन्ति कफपित्तजान् रोगान् ।
शूलं तथाम्लपित्तं ग्रहणीञ्च कामलामुग्राम् ॥

## धात्रीलौहम् ।

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य ।
यष्टीमधुकरजश्च द्विपलं दद्यात्पटेघृष्टम ॥
अमृताक्काथेन तच्चूर्णं ताव्यञ्च सप्तसप्ताहम ।
चण्डातपेषु शुष्कं भूयः पिष्टानवेवटे स्थाप्यम ॥
घृतमधुनासंयुक्तं भक्तादौ मध्यतस्तथान्ते च ।
त्रीनपि वारान् खादेत्पथ्यं दोषानुबन्धेन ॥
भक्तस्यादौ शमयति रोगान् पित्तानिलोद्भूतान्
मध्येऽन्ने विष्टम्भं जयति नृणां विदह्यते चान्नम् ॥
पानान्नकृतान् दोषान् भक्तान्ते शीलितं जयति ।
एवं जीर्य्यति चान्नं शूल नृणां सुकष्टमपि ॥
हरति च सहमायुक्तो योगश्चायं जरत्पित्तम् ।
चक्षुष्यःपलितघ्नः कफपित्तसमुद्भवान् जयति ॥

अत्रामृता आमलकीति भानुदासः अन्येतु गुडूचीमाहुः । सप्ताहं सप्तभावनाः । औषधस्य माषकत्रयं भोजनादिमध्यान्तेषु घृतमधुभ्यां मर्दितंभक्ष्यमितित्रिपुरारिः

## धात्रीलौहम् ।

षट्पलं शुद्धमण्डूरं यवस्य कुडवं तथा ।

पादांशं क्षीरप्रस्थार्द्धं दद्यात्पादावशेषितम् ॥
शतमूलीरसस्याष्टौ चामलक्यारसस्तथा ।
तथा दधिपयी भूमिकुष्माण्डस्य चतुःपलम् ॥
चतुःपलं सर्पिरिक्षुरसं दद्याद्विचक्षणः ।
प्रक्षिपेद् जीरधन्याक त्रिजातं करिपिप्पली ॥
मुस्तं हरीतकी चैव लौहमभ्रं कटुत्रिकम् ।
रेणुकं त्रिफला चैव तालीशं नागकेशरम् ॥
एतेषां कार्षिकैर्भागैश्चूर्णयित्वा विनिक्षिपेत् ।
भोजनाद्यवसाने च मध्ये चैव समाहितः ॥
तोलैकं भक्षयेच्चानुपेयं नित्यं पयस्तथा ।
शूलमष्टविधं हन्ति साध्यासाध्यमथापि वा ॥
वातिकं पैत्तिकञ्चापि श्लैष्मिकं सान्निपातिकम् ।
परिणामभवं शूलमन्नद्रवभवन्तथा ॥
द्वन्द्वजानपि शूलांश्च अम्लपित्तं सुदारुणम् ।
सर्वशूलहरं श्रेष्ठं धात्रीलौहमिदं शुभम ॥

## शर्करालौहम् ।

शतावरीरसप्रस्थे प्रस्थे च सुरभीजले ।
अजायाः पयसः प्रस्थे प्रस्थे धात्रीरसस्य च ॥
लौहमलपलान्यष्टौ शर्करापलषोड़श ।
दत्त्वाज्यं कुडवं तत्र शनैर्मृद्वग्निना पचेत् ॥
सिद्धशीते घनीभूते द्रव्याणीमानि दापयेत् ।
विड़ङ्गत्रिफला व्योषयमानी गजपिप्पली ॥
द्विजीरकं घनं लौहमभ्रं कर्षद्वयं पृथक् ।

खादेदग्निबलापेक्षी भोजनादौ विचक्षणः ॥
शूलं सर्वभवं हन्ति पित्तशूलं विशेषतः ।
हृच्छूलं पार्श्वशूलञ्च कुक्षिवस्तिगुदेरुजम् ॥
कासं श्वासं तथा शोथं ग्रहणीदोषमेव च ।
यकृत्प्लीहोदरानाह राजयक्ष्मविनाशनम् ॥
विष्टम्भमामं दौर्बल्यमग्निमान्द्यञ्च यद्भवेत् ।
एतान् रोगान् निहन्त्याशु भास्करस्तिमिरं यथा ॥

खण्डामलकी ।

स्विन्नपीड़ितकुष्माण्डात् तुलार्द्धं भृष्टमाज्यतः ।
प्रस्थार्द्धं खण्डतुल्यन्तु पचेदामलकीरसात् ॥
प्रस्थे सुस्विन्नकुष्माण्डरसप्रस्थे विघट्टयन् ।
दर्व्वीपाकं गते तस्मिंश्चूर्णीकृत्य विनिःक्षिपेत् ॥
द्वे द्वे पले कणाजाजीशुण्ठीनां मरिचस्य च ।
पलं तालीशधन्याक चातुर्जातकमुस्तकम् ॥
कर्षप्रमाणं प्रत्येकं प्रस्थार्द्धं माक्षिकस्य च ।
पक्तिशूलं निहन्त्येतत् दोषत्रयकृतञ्च यत् ॥
छर्द्यम्लपित्तमूर्च्छाश्च श्वासं कासनरोचकम् ।
हृच्छूलं पृष्ठशूलञ्च रक्तपित्तञ्च नाशयेत् ॥
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञितम् ।

छर्द्यम्लपित्तयोः पित्तोत्तरशूले च दृष्टफलोऽयं योगः

नारिकेलखण्डः ।

कुडवमितमिह स्यान्नारिकेलं सुपिष्टं

पञ्चपरिमितसर्पिः पाचितं खण्डतुल्यम्।
निजपयसि तदेतत् स्थमाले विपक्वं
गुड़वदथ सुशीते शाणभागान् क्षिपेच्च।
धन्याकपिप्पलि पयोद तुगा द्विजीरान्
शाणं त्रिजातमिभकेशरवह्निचूर्ण।
हन्त्यम्लपित्तमरुचिं क्षयमस्रपित्तं
शूल वमिं सकलपौरुषकारिहारि॥

वृहन्नारिकेलखण्डः।

नारिकेलपलान्यष्टौ शर्करा प्रस्थसम्मिता।
तज्जलं पात्रमेकन्तु सर्पिः पञ्चपलानि च॥
शुण्ठीचूर्णस्य कुड़व प्रस्थार्द्धं क्षीरमेव च।
सर्वमेकीकृतं पात्रे शनैर्मृद्वग्निना पचेत्॥
तुगा त्रिकटुकं मुस्तं चातुर्जातं सधान्यकम्।
द्विकणाजीरकञ्चैव कर्षयुग्मं पृथक् पृथक्॥
कृत्वा चूर्णं विनिक्षिप्य स्थापयेद्भाजने मृदः।
खादेत्प्रतिदिनं शाणं यथेष्टाहारवानपि।
सर्वदोषभवं शूलमेकजं द्वन्द्वजं तथा।
परिणामभवं शूलमम्लपित्तञ्च नाशयेत्॥
बलपुष्टिकरं हृद्यं वाजीकरणमुत्तमम्।
रक्तपित्तहरं श्रेष्ठं छर्द्दिहृद्रोगनाशनम्॥
धन्वन्तरिकृतश्चैतन्नारिकेलरसायनम्॥

नारिकेलामृतम्।

नारिकेलफलप्रस्थं सुपिष्टं भर्जितं घृते।

प्रस्थे प्रस्थं समादाय शुण्ठीचूर्णन्तु तत्समम् ॥
द्विपात्रं नारिकेलाम्बु तत्समं चीरमेव च ।
धात्रमाश्च स्वरसप्रस्थं खण्डस्यापि तुलां न्यसेत् ॥
एकीकृत्य पचेत्सर्वं शनैर्मृद्वग्निना भिषक् ।
सिद्धशीते प्रदातव्यं चूर्णमेषां सुशोभनम् ॥
कटुत्रयञ्चतुर्जातं प्रत्येकञ्च पलोन्मितम् ।
धात्री जीरकयुग्मञ्च धन्याकं ग्रन्थिपर्णकम् ।
तुगा पयोदमूलानि त्रिकर्षाणि पृथक् पृथक ।
चतुःपलानि मधुनः स्निग्धे भाण्डे निधापयेत् ॥
शिवं प्रणम्य सगणं धन्वन्तरिमथापरम् ।
कर्षप्रमाणं कर्त्तव्यं मद्ययुगं पिबेद्दन् ॥
अम्लपित्तं निहन्त्याशु शूलञ्चैव सुदारुणम् ।
परिणामभवं शूलं पृष्ठशूलञ्च नाशयेत् ॥
अन्नद्रवभवं शूलं पार्श्वशूलं सुदुस्तरम् ।
अग्निसन्दीपनकरं रसायनमिदं शुभम् ॥
मूत्राघातानशेषांश्च रक्तपित्तं विशेषतः ।
पीनसञ्च प्रतिश्यायं नाशयेन्नित्यसेवनात् ॥
रोगानीकविनाशाय लोकानुग्रहहेतवे ।
अश्विभ्यां निर्म्मितं श्रेष्ठं नारिकेलामृतं शुभम् ॥

## हरीतकीखण्डः ।

त्रिफलाब्दं चतुर्जातं यमानी कटुकत्रयम् ।
धान्यं मधुरिका चैव शतपुष्पा लवङ्गकम् ॥
प्रत्येकं कार्षिकं ग्राह्यं त्रिवृता स्वर्णपत्रिका ।

पंचद्वन्द्वप्रमाणेन सर्वतुल्या हरीतकी ॥
यावन्त्येतानि चूर्णानि सिता तद्द्विगुणा मता।
पक्त्वैतानि विधानेन क्षीरेणोष्णेन सम्पिबेत् ॥
हन्त्यम्लपित्तं शूलञ्च षड्ग्रांस्यनिलामयम्।
कोष्ठवातं कटीशूलमानाहमपि दारुणम् ॥

पूगखण्डः।

छिन्नं पूगफलं दृढं परिणतं पक्त्वा च दुग्धाम्बुभिः
प्रक्षाल्यातपशोषितं वसुपलं ग्राह्यं ततश्चूर्णितात्।
तत्सर्पिः कुड़वे विपच्य हि वरीधात्रीरसौ द्रक्षकौ
द्वे प्रस्थे पयसः प्रदाय विपचेन्मन्दं तुलार्द्धां सिताम् ॥
हेमाम्भोधरचन्दनं त्रिकटुकं धात्रीपियालास्थिजौ
मज्जानौ त्रिसुगन्धिजीरकयुगं शृङ्गाटकं वंशजा।
जातीकोषफले लवङ्गमपरं धन्याककङ्कोलकं
माकूलीतगराम्बुवीरणशिफा भृङ्गाश्वगन्धे तथा ॥
सर्वं द्रङ्क्षमितं विचूर्ण्य विधिना पाके तु मन्दे ततः
प्रक्षिप्याथ विघट्टयन् मुहुरिदं दार्व्यावतार्य्य क्षणात्।
सिद्धं वीक्ष्य विधारयेद्धितः स्निग्धेऽथमृङ्गाजने
खादेत् प्रातरिदं ज्वरामयहरं वृष्यं बुधः कार्षिकम् ॥
शूलाजीर्णं गुदप्रवाहरुधिरं तृष्णाम्लपित्तं जयेद्-
यक्ष्मक्षीणहितं महाग्निजननं छटच्छर्दिमूर्च्छापहम्।
पाण्डुघ्नं बलवर्णं दृष्टिकरणं गर्भप्रदं योषिता-
मेतत्पूगरसायनं प्रदरनुद्धिक्कम्लसङ्गापहम् ॥

पूगखण्डः।

प्रस्थैकं पूगचूर्णस्य पयसश्चाढ़कं क्षिपेत्।

शर्कराया: पलशतं घृतस्य कुड़वद्वयम्॥
चातुर्जातं त्रिकटुकं देवपुष्पं सचन्दनम्।
मांसी तालीशपत्रञ्च वीजं कमलसम्भवम्॥
नीलोत्पलं तथा वांशी शृङ्गाटं जीरकं तथा।
विदारी कन्दजञ्चैव रजो गोक्षुरसम्भवम्॥
शतमूलीरजश्चैव मालतीकुसुमं तथा।
धात्रीचूर्णं समं कर्षं कर्पूरं शुक्तिमानतः॥
मन्देऽग्नौ विपचेद्वैद्यः स्निग्धे भाण्डे निधापयेत्॥
खादेच्च प्रातरुत्थाय कर्षमेकं प्रमाणतः॥
छर्द्यस्रपित्त हृद्दाह भ्रमि मूर्च्छापहं नृणाम्।
सर्वशूलहरं श्रेष्ठमामवातविनाशनम्॥
मेहमेदो विकारघ्नं प्लीहपाण्डुगदापहम्।
अश्मरीं मूत्रकृच्छ्रञ्च गुदजं रुधिरं जयेत्॥
रेतोवृद्धिकरं हृद्य पुष्टिदं कामदं तथा।
वन्ध्यापि लभते पुत्रं वृद्धोऽपि तरुणायते॥
नात: परतरं श्रेष्ठं विद्यते राजिकर्म्मसु॥

## वैश्वानरलौहम।

द्विपलं तिन्तिड़ीक्षारं तथापामार्गसम्भवम्।
शम्बूकभस्मसंयुक्तं लवणञ्च समं तथा॥
चतुर्णां समभागा: स्युस्तुल्यञ्च लौहचूर्णकम्
चूर्णं सम्मिश्र्य खल्लान्तै कारयेदेकतां भिषक्॥
शूलस्यागमवेलायां खादेन्माषद्वयं नर:।
शूलमष्टविधं हन्ति साध्यमाध्यं न संशय:॥

शूलगजकेशरी ।

शुद्धसूतं द्विधा गन्धं यामैकं मर्दयेद्दृढम् ।
द्वयोस्तुल्यं शुद्धताम्रसम्पुटन्तं निरोधयेत् ।
ऊर्द्धाधोलवणं दत्त्वा मृद्भाण्डे स्थापयेदधः ।
रुद्ध्वा गजपुटं दत्त्वा स्वाङ्गशीतं समुद्धरेत् ॥
सम्पुटं चूर्णयेच्छ्लक्ष्णं पर्णखण्डे द्विगुञ्जकम् ।
भक्षयेत्सर्वशूलार्त्तो हिङ्गुशुण्ठी सजीरका ॥
वचा मरिचजं चूर्णं कर्षमूष्णजलैः पिबेत् ।
असाध्यं साधयेच्छूलं श्रीशूलगजकेशरी ॥

शूलवर्ज्जिनीवटी ।

रसगन्धकलौहानां पलार्द्धेन समन्वितम ।
टङ्कनं रामठं शुण्ठी त्रिकटु त्रिफला शटी ॥
त्वगेलापत्रतालीशं जातीफललवङ्गकम् ।
यमानि जीरकं धान्यं प्रत्येकं तोलकं शुभम् ॥
माषिका वटिका कार्य्या छागीदुग्धेन पेषिता ।
गणेशं योगिनीं शम्भुं हरिं सूर्य्यं प्रपूज्य च ॥
शीततोयानुपानेन छागीदुग्धेन वा पुनः ।
एकैका भक्षिताचेयं वटिकाशूलवर्जिनी ॥
शूलमष्टविधं हन्ति प्लीह गुल्मोदरज्वरम् ।
अष्ठीलानाह मेहांश्च मन्दाग्नित्वमरोचकम् ॥
अम्लपित्तामवातांश्च कामलां पाण्डुरोगकम ।
गुरुणा चन्द्रनाथेन वटिकैषा प्रकीर्त्तिता ॥
संसारलोकरक्षार्थं विचिन्त्य परिनिर्म्मिता ॥

शूलान्तकोरसः।

त्र्यूषणं त्रिफलामुस्तं चित्रताचित्रकं तथा।
एकैकशः समोभागस्तदर्द्धं रसगन्धयोः॥
लौहाभ्रकविडङ्गानां भागस्तु द्विगुणो भवेत्।
एतत्सर्वं समादाय चूर्णयित्वा विचक्षणः॥
त्रिफलायाः कषायेण गुड़िकाः कारयेद्भिषक्
तदेकां भक्षयेत्प्रातर्भक्ताग्रारि पिवेदनु॥
निहन्ति परिणामोत्थमम्लपित्तं वमिं तथा।
अन्नद्रवभवं शूलं सन्निपात समुद्भवम्॥
सर्वशूलान्निहन्त्याशु शुष्कदार्वनलो यथा॥

श्रीविद्याधराभ्रम्।

विडङ्गमुस्तत्रिफलागुड़ूची
दन्ती त्रिवृद्वह्नि कटुत्रिकञ्च।
प्रत्येकमेषां पिचुभागचूर्णं
पलानि चत्वार्य्ययसो मलस्य।
गोमूत्रशुद्धस्य पुरातनस्य
यद्वायसो वापि किराटिकायाः।
कृष्णाभ्रकाच्चूर्णपल विशुद्धं
निश्चन्द्रकं श्लक्ष्णमतीव सूतात्॥
पादोनकर्षं स्वरसेन खल्ल-
शिलातले मर्द्यमनोऽनलस्य।
संमर्द्य यत्नादथ निम्नगन्ध
पाषाणचूर्णेन पिचुन्मितेन।

शुक्त्या ततः पूर्वरजांसि दत्त्वा
सर्पिर्मधुभ्यामवमर्द्य पश्चात्।
संस्थापयेत् स्निग्धविशुद्धभाण्डे
ततः प्रयोज्यास्य रसायनस्य॥
प्राक्माषकौ द्वावथवा त्रयो वा
गव्यं पयो वा शिशिरं जलं वा।
पिवेदयं योगवरः प्रभूत-
कालप्रनष्टानलदीपकश्च॥
रोगेषु हन्यात् परिणामशूल
शूलं तथान्नद्रवसञ्ज्ञकञ्च।
यक्ष्माम्लपित्तं ग्रहणीं प्रदुष्टां
जीर्णज्वरं लोहितपित्तमुग्रम्॥
नश्यन्ति ते यान् न निहन्ति रोगान्
योगोत्तमः सम्यगुपास्यमानः॥

मन्युमनोद्गलं शूलकुड़ाति यस्य प्रसिद्धिः चिराटिका लौहचटकेतिख्याता। भोजनादिमध्यान्तेषु भक्ष्यं भोजनात्पूर्वं व्यवहरन्ति वैद्याः। मण्डूरस्थाने लौहं ग्राह्यम् परिणामशूलेऽतिप्रशस्तम्।

चतुःसमलौहम्।

अभ्रं गन्धं रसं लौहं प्रत्येकं संस्कृतं पलम्॥
सर्वमेतत् समाहृत्य यत्नतः कुशलो भिषक्।
आज्यपलद्वादशके दुग्धे वत्सरसंख्यके।
पक्त्वा चिपेत्तत्र चूर्णं सुपूतं घनवाससा॥
विड़ङ्गत्रिफलावह्नि त्रिकटूनां तथैव च।

पिष्ट्वा पलोन्मितानेतान् तया संमिश्रितान्नयेत् ॥
तत्त पिष्टं शुभे भाण्डे स्थापयेत्तु विचक्षणः ।
आत्मनः शोभने चाह्नि पूजयित्वा रविं गुरुम् ॥
घृतेन मधुना मर्द्यं भक्षयेन्माषकावधि ।
क्रमेण वर्द्धयेत्तच्च समाहितमनाः सदा ॥
अनुपानञ्च दुग्धेन नारिकेलोदकेन वा ।
जीर्णान्ने हितमाल्यन्नः मुद्गमांसरसादिभिः ॥
रसायनाविरुद्धानि चान्यान्यपि च कारयेत् ।
हृच्छूलं पार्श्वशूलञ्चाप्यामवातं कटीग्रहम् ॥
गुल्मशूलञ्च हृच्छूलं यकृत्प्लीहानमेव च ।
अग्निमान्द्यं जय कुष्ठं कासं श्वासं विचर्चिकाम् ॥
अश्मरीं मूत्रकृच्छ्रञ्च योगेनानेन साधयेत् ॥

शूलगजेन्द्रतैलम् ।

एरण्डं दशमूलञ्च प्रत्येकं पलपञ्चकम् ।
जले चाष्टगुणे पक्त्वा तैलस्यार्द्धाढ़क पचेत् ॥
विश्वं जीरं यमानाञ्च धान्यक पिप्पलीं वचाम् ।
सैन्धवं वदरीपत्रं प्रत्येकञ्च पलद्वयम् ॥
यवक्वाथः पयश्चैव तैलादेयं गुणाद्वयम् ।
तैलमेतन्महातेजो नाम्ना शूलगजेन्द्रकम् ॥
निहन्त्यष्टविध शूलमुपद्रवसमन्वितम ।
अग्निप्रद वमिहरं श्वासकासारुचीजयेत् ॥
ज्वरघ्नं रक्तपित्तघ्नं प्लीहगुल्मविनाशनम् ।
श्रीमद्गहननाथेन निर्म्मितं विश्वसम्पदे ॥
इति भैषज्यरत्नावल्यां शूलाधिकारः समाप्तः ।

# अथ गुल्माधिकारः।

लङ्घनं दीपनं स्निग्धमुष्णं वातानुलोमनम्।
बृंहणं यद्भवेत्सर्वं तद्धितं सर्वगुल्मिनाम्॥

लङ्घनमित्यत्र लघ्वन्नमिति वा पाठः।

सिद्धमेकादशविधं शृणु मे गुल्मभेषजम्।
स्नेहनं स्वेदनञ्चैव निरूह मनुवासनम्॥
विरेकवमने चोभे लङ्घनं बृंहणं तथा।
शमनश्चावसेकश्च शोणितस्याग्निकर्म्म च।
कारयेदिति गुल्मानां यथारम्भं चिकित्सितम्॥

गुल्मिनामनिलशान्तिरुपायैः
सर्वशो विधिवदाचरितव्या।
मारुते ह्यवजितेऽन्यमुदीर्णं
दोषमल्पमपि कर्म्म निहन्यात्॥

स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये।

स्वेदगुणमाह।

स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम्।
भित्वा विबन्धं स्निग्धस्य स्वेदो गुल्मान् व्यपोहति।
कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक्।
उपनाहाश्च कर्त्तव्याः सुखोष्णाः साल्वणादयः॥

कुम्भीस्वेदः वातहरक्काथादिभिः, काञ्जिकादिभिर्वा

घटस्थितैः स्वेदः उत्स्विन्नमांसादिपिण्डेन स्वेदः। तथा इष्टकास्वेदः प्रतप्तया काञ्जिकासिक्तया कर्त्तव्य इति भानुदासः।

स्थानावसेको रक्तस्य बाहुमध्ये शिराव्यधः।
स्वेदोऽनुलोमनञ्चैव प्रशस्तं सर्वगुल्मिनाम्॥

स्थानावसेको गुल्मस्थाने रक्ताकृष्टिः शृङ्गादिना विधेया। बाहुमध्ये सन्धेरधोऽस्य शिराव्यधः नतु मध्यशिराव्यधः तस्य मर्म्मत्वात्। यस्मिन् पार्श्वे गुल्मस्तस्मिन् पार्श्वे बाहौ शिराव्यध इति। चरकोऽपि, गुल्मे सत्यनिलादीनां कृते सम्यङ्भिषगुजिते। न प्रशाम्यति रक्तस्यावसेकाच्च प्रशाम्यति।

पेया वातहरैः सिद्धा कौलत्था धान्वजा रसाः।
खडाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः॥
मातुलुङ्गरसो हिङ्गु दाड़िमं विड़सैन्धवम्।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम्॥
नागराद्ध पलं पिष्टं द्वे पले लुञ्चितस्य च।
तिलस्यैकं गुड़पलं क्षीरेणोष्णेन पाययेत्॥
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत्।
[illegible]रण्डतैलं वा वारुणीमण्डमिश्रितम्॥
त[illegible]न पयसा वातगुल्मी पिबेन्नरः॥
[illegible]द्धशुष्कस्य लशुनस्य चतुःपलम्।
क्षी[illegible]ऽष्टगुणिते क्षीरशेषञ्च पाययेत्॥
वा[illegible] मुदावर्त्तं गृध्रसीं विषमज्वरम्।
हृ[illegible] विद्रधिं शोथं नाशयत्याशु तत्पयः॥

एवन्तु साधिते क्षीरे स्तोकमप्यत्र दीयते ॥
सर्जिका कुष्ठसहितः क्षारः केतकजोऽपि वा ।
तैलेन पीतः शमयेद्गुल्मं पवनसम्भवम् ॥

आवस्थिकक्रियासूत्रमाह ।

वातगुल्मे कफे वृद्धे वान्तिश्चूर्णादिचेष्यते ।
पित्ते विरेचनं स्निग्धं रक्ते रक्तस्य मोचणम् ॥
स्निग्धोष्णे नोदिते गुल्मे पैत्तिके स्रंसनं हितम् ।
रुक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम् ॥

स्निग्धोष्णेन राजिकादिनाकारणेन सम्भूते गुल्मे पैत्तिके पित्तोत्तरे स्रंसन विरेचनं हितम् । एवं रुक्षोष्णेन अग्न्यातपादिना कारणेन सम्भूते सर्पिः पानं हितं रक्तपिताक्तमिति भावः ।

काकोल्यादिमहातिक्त वासाद्यैः पित्तगुल्मिनम् ।
स्नेहितं स्रंसयेत्पश्चाद्योजयेद्बस्तिकर्म्मणा ॥
स्निग्धोष्णजे पित्तगुल्मे काम्पिल्लं मधुना लिहेत्
रेचनार्थौरसं वापि द्राक्षायाः सगुड़ं पिबेत् ॥
दाहशूलार्त्तिसङ्क्षोभ स्वप्ननाशारतिज्वरैः ॥
विदह्यमानं जानीयाद्गुल्मं तदुपनाहयेत् ।
पक्के तु व्रणवत्कार्य्यं व्यधशोधनरोपणम् ।
स्वयमूर्द्धमधो वापि स चेद्दोषः प्रवर्त्तते ॥
द्वादशाहमुपेक्षेत रक्षन्नन्यानुपद्रवान् ।
लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ सम्प्रधुक्षिते ।
घृतं सक्षारं कटुकं पातव्यं कफगुल्मिनाम् ॥

मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ॥
सोत्क्लेशतारुचिर्यस्य स गुल्मो वमनोपगः ॥
मन्देऽग्नावनिले मूढे ज्ञात्वा सस्नेहमाशयम्।
गुडिकाचूर्णनिर्य्यूहाः प्रयोज्याः कफगुल्मिनाम् ॥
तिलैरण्डातसीबीजसर्षपैः परिलिप्य च।
श्लेष्मगुल्ममयः पात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥
यमानी चूर्णितं तक्रं विड़ेन लवणीकृतम्।
पिवेत्सन्दीपनं वातमूत्रवर्चोऽनुलोमनम् ॥
व्यामिश्रदोषे व्यामिश्रः सर्व एव क्रियाक्रमः।
सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो विधिर्हितः ॥
वचाभयाविड़ा शुण्ठी हिङ्गु कुष्ठाग्निदीप्यकाः।
द्वित्रिषट्चतुरेकाष्ट पञ्चपञ्चांशिकाः क्रमात् ॥
चर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम्।
शूलार्शः श्वासकासघ्नं ग्रहणी दीपनं परम् ॥
यमानी हिङ्गु सिन्धूत्थ चार सौवर्चलाभयाः।
सुरामण्डेन पातव्या गुल्मशूलनिसूदनाः ॥

## हिङ्ग्वादिचूर्णम्।

हिङ्गु त्रिकटुकं पाठां हवुषामभयां शटीम्।
अजमोदाजगन्धे च तिन्तिड़ीकाम्लवेतसौ ॥
दाड़िमं पौष्करं धान्यमजाजीं चित्रकं वचाम्।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥
चूर्णमेतत्प्रयोक्तव्यमनुपानेष्वनत्ययम्।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥

पार्श्वहृद्बस्तिशूलेषु गुल्मे वातकफात्मके।
आनाहे मूत्रकृच्छ्रेषु गुदयोनिरुजासु च॥
ग्रहण्यर्शोविकारेषु प्लीहपाण्ड्वामयेऽरुचौ।
उरोविवद्धे हिक्कायां श्वासे कासे गलग्रहे॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा।
वहुशो गुड़िकाः कार्य्याः कार्षिकाः स्युस्ततोऽधिकाः॥

गुड़िका पक्षे एषां समभागचूर्णं सप्तदिनं कोलङ्गरसेन भावयित्वा गुड़िकाः कार्य्याः।

हिङ्गुपुष्करमूलानि तुम्बुरूणि हरीतकी।
श्यामा विड़ं सैन्धवञ्च यवक्षारं महौषधम्॥
यवक्वाथोदकेनैतद्घृतभृष्टन्तु पाययेत्।
तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः॥

वचादिचूर्णम्।

वचा हरीतकी हिङ्गु सैन्धवं चाम्लवेतसम्।
यवक्षारं यमानीञ्च पिवेदुष्णेन वारिणा॥
एतद्धि गुल्मनिचयं सशूलं सपरिग्रहम्।
भिनत्ति सप्तरात्रेण वह्नेर्वृद्धिं करोति च॥

हिङ्ग्वादिचूर्णम्।

हिङ्गूग्रगन्धा विटशुण्ठ्यजाजी-
हरितकी पुष्करमूलकुष्ठम्।
भागोत्तरं चूर्णितमेतदिष्टं
गुल्मोदराजीर्णविसूचिकासु॥

## लवङ्गादिचूर्णम्।

लवङ्गदन्ति त्रिवृता यमानी
शुण्ठी वचा धन्यकचित्रकाश्च।
फलत्रयं मागधिका च कट्वी
द्राक्षा चवी गोक्षुरयावशूकम्॥
एलाजमोदा कुटजस्य बीजं
विधाय चूर्णानि समान्यमीषाम्।
खादेत्ततः पाणितलं हिताशी
कोष्णं जलं चानुपिबेत्प्रयत्नात्॥
निहन्ति गुल्मं मरुजं सदाह-
मर्शांसि शोथांश्च तथामवातम्।
सर्वोदराण्येव चिरोत्थितानि
चूर्णं लवङ्गादिकमाशु हन्ति॥

## काङ्कायनगुड़िका।

शटीं पुष्करमूलञ्च दन्तीं चित्रकमाढ़कीम्।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत्॥
त्रिवृतायाः पलञ्चैकं कुर्य्यात्त्रीणि च हिङ्गुनः।
यवक्षारपले द्वे तु द्वे पले चाम्लवेतसात्॥
यमान्यजाजीमरिचं धन्याकञ्चेति कार्षिकम्।
उपकुञ्च्यजमोदाभ्यां तथा चाष्टमिकामपि॥
मातुलुङ्गरसे चैता गुड़िकाः कारयेद्भिषक्।
आसाञ्चैकां पिबेद्द्वे वा तिस्रो वाथ सुखाम्बुना॥
अम्लैर्मद्यैश्च यूषैश्च घृतेन पयसाथवा।

एषा काङ्कायनोक्ता च गुड़िका गुल्मनाशिनी
अर्शो हृद्रोगशमनी क्रिमीणाञ्च विनाशिनी ।
गोमूत्रयुक्ता शमयेत्कफगुल्मं चिरोत्थितम् ॥
क्षीरेण पित्तगुल्मञ्च मद्यैरम्लैश्च वातिकम् ।
रक्तगुल्मे च नारीणां मुष्टोक्षीरेण पाययेत् ॥

## नाराचघृतम् ।

चित्रक त्रिफलादन्ती त्रिवृता कण्टकारिका ।
स्नुहीक्षीरविडङ्गानि घृतं दशम मुच्यते ॥
एकैकस्य च कर्षेण घृतस्य कुडवं पचेत् ।
अस्य मात्रां पिवेत् काले पलार्द्धेन च सम्मिताम् ॥
उष्णोदकञ्चानुपिवेद्विरेकार्थं पिवेन्नरः ।
पिवेद्यवागूं सर्पिषा पेयां वा क्षीरसाधिताम् ॥
रसेन जाङ्गलानां वा भोजयेन्मतिमान् भिषक् ।
वातगुल्ममुदावर्त्तं प्लीहार्शो व्रध्नकुण्डलम् ॥
ग्रहणीं दीपयेन्मन्दां कुष्ठदोषांश्च नाशयेत् ।
नाराचकमिदं सर्पिः ख्यातं नाराचसन्निभम् ॥

## हपुषाद्यं घृतम् ।

हपुषाव्योष पृथ्वीका चव्य चित्रकसैन्धवैः ।
साजाजी पिप्पलीमूल दीप्यकैः पाचयेद्घृतम् ॥
सकोलमूलकरसं सक्षीरदधिदाड़िमम् ।
तत्परं वातगुल्मघ्नं शूलानाह विवन्धनुत् ।
योन्यर्शो ग्रहणीदोष श्वास कासारुचि ज्वरान् ॥

पार्श्वहृद्वस्तिशूलञ्च घृतमेतद्व्यपोहति

### पञ्चपलं घृतम् ।

पिप्पल्याः पिचुरध्यर्द्धो दाड़िमाद् द्विपलं पलम् ।
धान्यात् पञ्चघृतात् शुण्ठ्याः कर्षः क्षीरञ्चतुर्गुणम्
सिद्धमेतद् घृतं सद्यो वातगुल्मं चिकित्सति ।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरम् ॥

### त्रायमाणाघृतम् ।

जले दशगुणे साध्य त्रायमाणां चतुःपलम् ।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥
रोहिणी कटुका मुस्तं त्रायमाणा दुरालभा ।
कल्कैस्तामलकी वीरा जीवन्ती चन्दनोत्पलम् ॥
रसस्यामलकीनाञ्च क्षीरस्य च घृतस्य च ।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत् ॥
पित्तगुल्मं रक्तगुल्मं विसर्पं पैत्तिकज्वरम् ।
हृद्रोगं कामलां कुष्ठं हन्यादेव घृतोत्तमम् ॥
पलाद्वि स्वागते लाभे न द्वैगुण्यमिहेष्यते ।
चत्वारिंशत् पलस्ते न तोयं दशगुणं भवेत् ।

### क्षीरषट्पलकं घृतम् ।

पिप्पली पिप्पलीमूलचव्यचित्रकनागरैः ।
पलिकैः सयवक्षारैः सर्पिः प्रस्थं विपाचयेत् ॥
क्षीरप्रस्थेन तत्सर्पिर्हन्ति गुल्मं कफात्मकम् ।
ग्रहण्यां पाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥

केचित् पुनरत्र जतुकर्णसंवादात् त्रिगुणं जलमिच्छन्ति यदुक्तं सन्तारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके। सन्तो-त्र घृतप्रस्थमित्यादि।

धात्रीषट्पलकं घृतम्।

धात्रीफलानां स्वरसैः षडङ्गं पाचयेद्घृतम्।
शर्करासैन्धवोपेतं तद्धितं सर्वगुल्मिनाम्॥

दन्तीहरीतकी।

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च॥
तेनाष्टभागशेषेण पचेद्दन्तीसमं गुडम्।
ताश्चाभयास्त्रिवृच्चूर्णात्तैलाच्चापि चतुःपलम्॥
पलमेकं कणाशुण्ठ्योः सिद्धे लेहे च शीतले।
क्षौद्रं तैलसमं दद्याच्चातुर्जातपलं तथा॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम्।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः॥
प्लीहश्वयथुगुल्मार्शोहृत्पाण्डुग्रहणीगदाः।
शाम्यन्त्यानाहवीसर्पज्वरकुष्ठान्यरोचकाः॥

वृहन्नाराचमोदकम्।

त्रिकटु त्रिफला चव्यं विडङ्गं जीरकद्वयम्।
यमानीहपुषा धान्यं त्रिवृद्दन्ती च चित्रकम्॥
सर्वेषां कार्षिकं भागं [illegible] कर्षमात्रकम्।
खण्डस्य षोडशपलं पक्वञ्च त्रिफलाजलम्॥

अम्बोराणां रसं दद्यात्पलषोडशकं तथा।
पाच्यं सर्वं प्रयत्नेन लौहं दत्त्वा पलद्वयम्॥
सिद्धे पाके पुनर्देयं घृतं पलचतुष्टयम्।
सर्वरोगेषु संयोज्यं महामृतरसायनम्॥
गुल्मं पञ्चविधं हन्ति यकृत्प्लीहोदराणि च।
कामलां पाण्डुरोगञ्च शोथं जीर्णज्वरं तथा॥
रोगान् सर्वान्निहन्त्याशु भास्करस्तिमिरं यथा॥

## गुल्मकालानलोरसः।

पारदं गन्धकं तालं ताम्रकं टङ्गनं समम्।
तोलद्वयमितं भागं यवक्षारञ्च तत्समम्॥
मुस्तक पिप्पली शुण्ठी मरिचं गजपिप्पली।
हरीतकी वचा कुष्ठं तोलैकं चूर्णयेत्सुधीः॥
सर्वमेकीकृतं पात्रे भावना क्रियते ततः।
पर्पटं मुस्तक शुण्ठ्यपामार्गं पापचेलिकम्॥
तत्पुनश्चूर्णयेत्पश्चात् सर्वगुल्मनिवारणम्।
गुञ्जाचतुष्टयं खादेद्धरीतक्यनुपानतः॥
वातिक पैत्तिकं गुल्मं श्लैष्मिकं सान्निपातिकम्।
द्वन्द्वजं विनिहन्त्याशु वातगुल्मं विशेषतः।
श्रीमद्गहननाथेन निर्म्मितो विश्वसम्पदे॥

## वृहद्गुल्मकालानलो रसः।

अभ्रं लौहं रसं गन्धं टङ्गनं कटुकं वचाम्।
द्विक्षारं सैन्धवं कुष्ठं त्र्यूषणं सुरदारु च॥
पत्रमेलां त्वचं नागं खादिरं सारमेव च

गृहीत्वा समभागेन श्लक्ष्णचूर्णं प्रकल्पयेत्॥
जयन्ती चित्रकोन्मत्तो केशराजदलं तथा।
निष्पीड्य स्वरसं नीत्वा भावयेत् कुशलो भिषक्॥
चतुर्गुञ्जाप्रमाणेन वटिकाः कारयेत्ततः।
उत्थाय भक्षयेत्प्रातरनुपानं जलं पयः॥
गुल्मं पञ्चविधं हन्ति यकृत् प्लीहोदराणि च।
कामलां पाण्डुरोगञ्च श्वयथुञ्चैव सुदारुणम्॥
हलीमकं रक्तपित्तं मन्दाग्निमरुचिं तथा।
ग्रहणीमार्दवं कार्श्यं जीर्णञ्च विषमज्वरम्॥

## शिखिवाड़वो रसः।

मारितं ताम्रसूताभ्रं गन्धकं माक्षिकं समम्।
मर्दयेच्चित्रकद्रावैर्यवक्षारयुतं दिनम्॥
द्विगुञ्जं भक्षयेन्नित्यं नागवल्लीदलेन च।
वातगुल्महरः ख्यातो रसोऽयं शिखिवाड़वः॥

## नागेश्वररसः।

शुद्धसूतस्तथा गन्धो नागवल्ली मनःशिला।
निशादलञ्च त्रिक्षारं लौहं शुल्वं तथाभ्रकम्॥
एतानि समभागानि स्नुहीक्षीरेण मर्दयेत्।
चित्रकं वासकं दन्ती क्वाथेनैकेन मर्दयेत्॥
दिनैकन्तु प्रयत्नेन रसो नागेश्वरो मतः।
गुल्मप्लीहपाण्डुशोथामाध्मानञ्च विनाशयेत्॥
भक्षयेन्माषमेकन्तु पर्णखण्डेन गुल्मवान्॥

## अथ रक्तगुल्मे।

रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे।
स्निग्धस्विन्न शरीरायै दद्यात् स्निग्ध विरेचनम्॥
शताह्वाचिरविल्वत्वग्दारुभार्गीकणोद्भवः।
कल्कः पीतो हरेद्गुल्मं तिलक्वाथेन रक्तजम्॥
तिलक्वाथो गुड़व्योष हिङ्गुभार्गीयुतो भवेत्।
पान रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम्॥
सक्षारत्र्यूषणं मद्यं प्रपिबेदस्रगुल्मिनी।
पलाशक्षारतोयेन सिद्धं सर्पिः पिबेच्च सा॥
उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः।
न प्रभिद्येत यद्येवं दद्याद्योनिविशोधनम्॥
क्षारेण युक्तपलल सुधाक्षीरेण वा पुनः॥
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरो क्रिया।
भल्लातकाल्कक्वकषायपक्वं
सर्पिः पिबेच्छर्करया विमिश्रम्।
तद्रक्तगुल्मं विनिहन्ति पीतं
बलासगुल्मं मधुना समेतम्॥

## पञ्चाननरसः।

पारदांशकतुल्यञ्च गन्धं जेपालपिप्पली।
आरग्वधफलान्मज्जा वज्रीक्षीरेण भावयेत्॥
धात्रीरसयुतं खादेद्रक्तगुल्मप्रशान्तये।
चिञ्चादलरसञ्चानुपथ्यं दध्योदनं हितम्॥

वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम्।
न खादेदालुकं गुल्मी मधुराणि फलानि च॥

इति भैषज्यरत्नावल्यां गुल्माधिकारः समाप्तः।



## उदावर्त्तानाहाधिकारः।

त्रिवृत्सुधापत्रतिलादिशाक-
ग्राम्यौदकानूपरसैर्यवान्नम्।
अन्यैश्च सृष्टानिल मूत्र विड्भि-
रद्यात्प्रसन्नागुड़सीधुपायी॥

आस्थापनं मारुतजे स्निग्धस्विन्नस्य शस्यते।
पुरीषजे तु कर्त्तव्यो विधिरानाहिकस्तु यः॥

नाराचचूर्णम्।

खण्डपलं त्रिवृता सममुपकुल्या कर्षचूर्णितं श्लक्ष्णम्।
प्राग्भोजने च समधुविड़ालपदकं लिहेत्प्राज्ञः॥
एतद्गाढ़पुरीषे पित्ते कफे च विनियोज्यम्।
स्वादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम्ना॥

नाराचरसः।

सूतगन्धकतुल्यांशं मरिचं सूततुल्यकम्।
टङ्कनं पिप्पली शुण्ठी द्वौ द्वौ भागौ विमिश्रयेत्॥
सर्वतुल्यानि बीजानि दन्तीनान्निस्तुषाणि च।
स्नुहीक्षीरेण संयुक्तं मर्दयेद्दिवसत्रयम्॥
नारिकेलोदरे स्थाप्यं मृदागाढ़ाग्निना ततः।
तत्कल्कं पाचयेत् क्षिप्रं खलशिला निधापयेत्॥
तन्मध्य नाभिलेपेन राजयोग्यं विरेचनम्।
वटिका लेप मात्रेण दशवार विरेचयेत्॥
तद्गन्ध घ्राणमात्रेण विरेको जायते ध्रुवम्॥
त्रिवृत्कृष्णा हरीतक्यो द्विचतुः पञ्चभागिकाः!
गुड़िका गुड़तुल्या सा विड्विबन्ध गदापहा॥

अथानाहे।

त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत्।
स्नुहीमूलस्य चूर्णं वा पिबेदुष्णेण वारिणा॥

त्रिकट्वादिवर्त्तिः।

वर्त्तिस्त्रिकटुकसैन्धवसर्षपगृहधूम कुष्ठमदनफलैः।
मधुनि गुड़े वा पक्वा पाण्यौरिताङ्गुष्ठपरिमाणा॥
वर्त्तिरियं दृष्टफला शनैः शनैः प्रणिहिता घृताभ्यक्ता।
आनाहोदावर्त्त प्रशमनी जठरगुल्मनिवारिणी च॥

. सर्षपः श्वेतः मदनफलमेकं त्रिकट्वादीनां मिलित्वा कर्षः मधुनः पलं पक्वा वर्त्तिः कर्त्तव्यत्येके। त्रिकट्वादि द्रव्यं संगृह्य गुड़े दत्वा पक्वा वर्त्तिः कार्य्येति केचित्।

इति भैषज्यरत्नावल्यामुदावर्त्तानाहाधिकारः समाप्तः।

## अथानाहरोगाधिकारः।



तत्रादौ बद्धानाहगदस्य लक्षणम्।

मोदः पुरीषसंरोध आध्मानाक्षेपकौ तथा।
नाभावाकर्षणं वान्तिः समला च बलक्षयः॥
छिद्रोदरे व्यथा घोरा वह्निनाशोऽरतिस्तथा।
चिह्नानीमानी जायन्ते गदे बद्धानाहसंज्ञके॥

बद्धानाहगदस्य चिकित्सा।

विरेचनं वस्तिकर्म विविच्य परियोजयेत्।
स्वेदक्रियाश्च कुर्वीत गदे बद्धानाहनामनि॥
सुरा ससलिला देया फणिफेनश्च युक्तितः।
ततः शाम्यन्ति सहसा कुक्षिनाक्षेपवेदनाः॥
पिष्ट्वा कनकपत्राणि खाखसस्य फलं तथा।
उष्णीकृत्याहयोगेनोदरं तेन प्रलेपयेत्॥
एवं बहुविधैर्व्याधिः कर्मभिर्नैव शाम्यति।
ततः कुर्याद्विच्चयत्नात्सलिलेनाहपूरणम्॥
सर्वे भिषग्यथोक्ताहमातुरं बलिभिर्धृतम्।
उष्णितक्षमवाक्क्षोभं सान्त्वयित्वा च सान्त्वनैः
सुदूरमहमध्येऽस्य नाडीं दीर्घां प्रवेशयेत्।

तूलेन वस्त्रखण्डैर्वा पायुरन्ध्रं निरुध्य च।
वस्तियोगेनान्त्रमध्ये तोयमुष्णं प्रयोजयेत्।
संपूर्णमुदरं दृष्ट्वा निवर्त्तेत भिषक् ततः॥
वस्तिदेशादथारभ्योत्पीड़येदुदरं क्रमात्।
वक्रस्यान्त्रस्य सारल्यं कर्म्मणानेन जायते॥
सलिलेनैव सूतेन पलाष्टकमितेन च।
वस्तियोगप्रयुक्तेन रुद्धान्त्रत्वं विनश्यति॥
अत्र शस्त्रक्रिया प्राणनाशाय प्रायशो भवेत्।
आतुराणां सहस्रेषु कस्यचित्स्याच्छुभाय वा॥
द्रवोपयोगा रुद्धान्त्रगदेन स्याद्धिताय हि।
युक्त्या तद्वद्दिने दद्यादतः सान्द्ररसादिकम्॥

अन्त्रवृद्धिः।

विविधैः कर्मभिः क्रूरैरन्त्रस्यावयवो द्रुतम्।
भित्त्वोदरीं निःसरति सान्त्रवृद्धिर्निगद्यते॥

अन्त्रवृद्धेश्चिकित्सा।

अन्त्रवृद्धेः प्रशान्त्यर्थं धार्य्या कुण्डलवन्धनी।
स्वेदभेदादिकर्माणि कर्त्तव्यानि च सर्वथा॥
तैलमेरण्डजं पीत्वा बलासिद्धं यथोचितम्
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः॥
रास्ना यष्ट्यमृतैरण्डबलारग्वधगोक्षुरैः।
पटोलेन वृषेणापि विधिना विहितं शृतम्।
वृषतैलेन संयुक्तमन्त्रवृद्धिं व्यपोहति।

गन्धर्वहस्ततैलेन चोरेण विहितं सुतम् :।
विशाला मूलजं चूर्णं वृद्धिं हन्ति न संशयः॥
वचा सर्षपकल्केन प्रलेपः शोथनाशनः।
शिग्रुत्वक् सर्षपैर्लेपः शोथश्लेष्मानिलापहः॥

## वृद्धिबाधिकावटिका।

शुद्धसूतं तथा गन्धं मृतान्येतानि योजयेत्।
लौहं रङ्गं तथा ताम्रं कांस्यञ्चाथ विशोधितम्॥
तालकं तुत्थकञ्चापि तथा शङ्खवराटकम्।
त्रिकटु त्रिफला चव्यं विड़ङ्गं वृद्धदारकम्॥
कचूर मागधीमूलं पाठां सहवुषां वचाम्।
एलाबीजं देवकाष्ठं तथा लवणपञ्चकम्॥
एतानि समभागानि चूर्णयेदथ कारयेत्।
कषायेण हरीतक्या वटिकां टङ्कसंमिताम्।
एकां तां वटिकां यस्तु निर्गिलेद्वारिणा सह।
अन्त्रवृद्धिरसाध्यापि तस्य नश्यति सत्वरम्॥
अन्त्रेऽन्ये बहवो रोगा जायन्ते बहुदुःखदाः।
विविच्य भिषजा तत्र क्रिया कार्य्या विधानतः॥

## सर्वान्त्ररोगेषु भेषजानि।

## महोदधिरसः।

रसं गन्धं तथा हेमवज्रविद्रुममौक्तिकम्।
अहोला समभागेन मर्दयेत्त्रिफलाम्बुना॥

ततो रक्तिमिताः कुर्य्याद्वटीश्छायाप्रशोषिताः।
एकैकां दापयेदासां यथादोषानुपानतः॥
कृच्छाम्लत्वमम्लवृद्धिं तथान्यानम्लजान् गदान्।
वातपित्तकफोत्थांश्च सर्वान् हन्तिमहौषधिः॥

## अग्निमेखररसः।

लोहमभ्रञ्च सिन्दूरं मर्दयेत्कन्यकाम्बुना।
चणं रक्तिमितं दद्यादम्लरोगनिवृत्तये॥

## रसराजेन्द्रः।

हिङ्गुलोत्थं रसं गन्धं केशराजाम्बुशोधितम्।
रसार्द्धं हेमतारञ्च नागं हेमार्द्धकं तथा॥
क्षिप्त्वा खल्वतले पश्चाद्रामाक्काथेन भावयेत्।
काकमाच्याश्चित्रकस्य निर्गुण्ड्याः कुटजस्य च।
खल्पपद्मोत्पलस्य सप्तकृत्वो द्रवैः पृथक्।
ततो रक्तिमिताः कुर्य्याद्वटीश्चण्डांशुशोषिताः॥
अम्लजानखिलान् रोगान् सर्वदोषोद्भवांस्तथा।
हन्त्ययं रसराजेन्द्रो मृगराजो यथा मृगान्॥

## त्रिवृतादिघृतम्।

त्रिवृता मधुयष्ट्यम्बु पयोधरयमानिकाः।
श्यामाविदारी मिश्रेया पिप्पली गिरिमल्लिका॥
घृतप्रस्थं पयःप्रस्थं दद्यादाढ़कसम्मितम्।
शतावरीरसप्रस्थं सर्वाण्येकत्र सम्पचेत्॥

विद्रताहिष्टतश्चैतदन्त्रजान्निखिलान् गदान्।
प्रमेहान् विंशतिं श्वासान् कुष्ठान्यर्शांसिकामलाम्॥
हलीमकं पाण्डुरोगं गलगण्डं तथार्वुदम्।
विद्रधिं व्रणशोथञ्च हन्ति नास्त्यत्र संशयः॥

## वृहद्दन्तीघृतम्।

जलद्रोणे पचेत्सम्यग्दन्त्याः पलशतं भिषक्।
पादशिष्टं गृहीत्वेमं क्वाथं सर्पिः पयस्तथा॥
दन्तीमूलं बलां द्राक्षां सहदेवीं शतावरीम्।
सरलं शारिवां श्यामां प्रत्येकं कुडवोन्मितम्॥
विदार्य्यास्तालमूल्याश्च शाल्मल्याः कुटजस्य च।
रसाढ़कं परिक्षिप्य साधयेन्मृदुनाग्निना॥
अन्त्रवृद्धिमन्त्ररोधमन्त्रदाहं सुदारुणम्।
मुष्कवृद्धिं तथा ब्रध्नं व्रणशोथं भगन्दरम्॥
आमवातं वातरक्तं मुखनासा सिरोरुजः।
रेतःशोणितदोषांश्च हन्ति दन्तीघृतं वृहत्॥

## वृहन्मन्दारतैलम्।

यन्मध्यनारायणनाम तैलं
तस्याङ्ग मङ्गैस्तिलजं हितैलम्।
मन्दारपुष्पस्वरसेन सार्द्धं
पचेद्विधिज्ञः कमलाश्रमा च॥
मन्दारतैलं वृहदेतदाशु
बलञ्च शुक्रं परिवर्द्धयेद्धि।

अन्तोत्थ रोगानखिलान्निहन्ति
पित्तोत्थ वातोत्थ कफोत्थितांश्च ॥

इति भैषज्यरत्नावल्यामन्त्ररोगाधिकारः समाप्तः ।

## अथ यक्ष्माधिकारः ।



शालिषष्टिकगोधूमयवमुद्गादयः शुभाः ।
मद्यानि जाङ्गलाः पक्षि मृगाः शस्ता विशुष्यताम् ॥
शुष्यतां क्षीणमांसानां कल्पितानि विधानवित् ।
दद्यात् क्रव्यादमांसानि बृंहनानि विशेषतः ॥
दोषाधिकानां वमनं शस्यते सविरेचनम् ।
स्नेहस्वेदोपपन्नानां सस्नेहं यन्नकर्षणम् ॥

ननु सर्व्वथैव यक्ष्मिणां विरेचनं निषिद्धं यदुक्तति शुक्रायत्तं बलं पुंसां मलायत्तं हि जीवनम् । तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥ अत्रोच्यते रोगे शोधनसाध्ये तु यं विद्याद्दोषवर्द्धनम् । तं समीक्ष्य भिषक्कुर्य्याद्दोष प्रच्यावनं मृदु इति ।

बलिनां बहुदोषस्य पञ्चकर्म्माणि कारयेत् ।
यक्ष्मिणः क्षीणदेहस्य तत्कृतं स्याद्विषोपमम् ॥

शुक्रायत्तं बलं पुंसां मलायत्तं हि जीवनम्।
तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी॥

पारावतकपिच्छागकुरङ्गाणां पृथक् पृथक्।
मांसचूर्णमजाक्षीरैः पीतं क्षयहरं परम्॥

घृतकुसुमरसलीढं क्षयं नयती गजबलामूलम्।
दुग्धेन केवलेन च वायसजङ्घा निपीतैव॥

शर्करा मधुसंयुक्तं नवनीतं लिहन् क्षयी।
क्षीराशी लभतेपुष्टिमतुल्ये चाज्यमाक्षिके॥

## सितोपलादिलेहः।

सितोपला तुगाक्षीरी पिप्पली बहुला त्वचः।
अन्त्यादूर्द्धं द्विगुणितं लेहयेत् क्षौद्रसर्पिषा॥
चूर्णं वा प्राशयेदेतत् श्वासकासक्षयापहम्।
सुप्तजिह्वारोचकिनं मन्दाग्निं पार्श्वशूलिनम्॥
हस्तपादांसदाहेषु ज्वरे रक्ते तु चोर्द्धगे।

## अजापञ्चकघृतम्।

छागशकृद्रसमूत्रक्षीरैर्दध्ना च साधितं सर्पिः।
सक्षारं यक्ष्महरं श्वासकासोपशान्तये परमम्॥
छागमांसं पयश्छागं छागं सर्पिं सशर्करम्।
छागोपसेवा शयनं छागमध्ये तु यक्ष्मनुत्॥

## जिवन्त्याद्यं घृतम्।

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च।
शटीं पुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम्॥

नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम्।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत्॥
एतद्व्याधि समूहस्य रोगेशस्य समुत्थितम्।
रूपमेकादशविधं सर्पिरुग्रं व्यपोहति॥

वृहद्वासावलेहः।

शतं संगृह्य वासायास्त्रिंशद्द्रोणे विपाचयेत्।
चतुर्भागावशेषेऽस्मिन् शर्करायाः पलं शतम्॥
त्रिकटु त्रिसुगन्धिञ्च कट्फलं मुस्तकं गदम्।
जीरकं पिप्पलीमूलं रोचनी चविका शुभा॥
कटुका श्रेयसी चैव तालीशं सधनीयकम्।
कार्षिकं पृथगेतेषां क्षिपेन्मधुपलाष्टकम्॥
तद्यथाग्निबलं लिह्याच्छृतशीताम्बुपानतः।
निहन्ति राजयक्ष्माणं रक्तपित्तं क्षतं क्षयम्॥
वातिकं पैत्तिकञ्चैव श्वासञ्चैव सुदारुणम्।
हृच्छूलं पार्श्वशूलञ्च वमिञ्चैवारुचिं ज्वरम्॥
अश्विभ्यां निर्मितो ह्येष वृहद्वासावलेहकः।
अटरूषकः रसैः क्षौद्रं रक्तवान्तिहरं परम्॥
यष्ट्याह्वचन्दनोपेतं सम्यक्क्षीरप्रपेषितम्।
क्षीरेणालोड्य पातव्यं रुधिरच्छर्दिनाशनम्॥

वृहद्वासावलेहः।

(रसार्णवस्य।)

पञ्चविंशत्पलं ग्राह्यं वृहत्योर्वासकस्य च।

भार्ग्याश्च पञ्चविंशञ्च जलद्रोणे विपाचयेत् ॥
पादशेषे रसे तस्मिन् खण्डप्रस्थं समावपेत्।
कुड़वार्द्धञ्च हविषो मधुनः कुड़वं तथा ॥
मृताभ्रकं पलञ्चैकं कणाचूर्णं चतुःपलम्।
कुष्ठं तालीशपत्रञ्च मांसं तेजपत्रकम् ॥
मुरामांसीमुशीरञ्च लवङ्गं नागकेशरम्।
त्वग्भार्गीं बालकं मुस्तं प्रत्येकं कर्षसम्मितम् ॥
सूक्ष्मचूर्णीकृतं सर्वं लेहीभूते विनिक्षिपेत्।
हन्ति यक्ष्माणमत्युग्रं कासं पञ्चविधं तथा ॥
रक्तपित्तं क्षयं श्वासं ज्वरं शोषानमेव च।
बालानामपि वृद्धानां तरुणानां विशेषतः ॥
पार्श्वशूलञ्च हृच्छूलमम्लपित्तं वमिं तथा।
वृहद्वासावलेहोऽयं महादेवेन निर्मितः ॥

वृहद्वासावलेहः।

तुलामादाय वासाय जलद्रोणे विपाचयेत्।
पादशेषे रसे तस्मिन् खण्डं शतपलं नसेत् ॥
शनैर्मृद्वग्निना सम्यक् सिद्धे तत्र प्रदापयेत्।
त्रिकटु त्रिसुगन्धञ्च कट्फलं मुस्तमेव च ॥
कुष्ठं कम्पिल्लकं श्वेतजीरञ्च कृष्णजीरकम्।
त्रिवृता पिप्पलीमूलं चव्यं कटुकरोहिणी ॥
शिवा तालीशधन्याकं प्रत्येकञ्च द्विकार्षिकम्।
चूर्णयित्वा क्षिपेत्तत्र शीते मधुपलाष्टकम् ॥

अस्य मात्रां ततो लीढ्वा तोयमुष्णं पिबेदनु।
सर्वकासविकारेषु स्वरभङ्गे विशेषतः॥
राजयक्ष्मणि दुःसाध्ये वातश्लेष्माश्रये तथा।
आनाहे वह्निमान्द्ये च हृद्रोगे च चतक्षये॥
मूत्रकृच्छ्रे च कृच्छ्रे च शस्तोऽयं लेह उत्तमः॥
उपद्रवा ज्वराद्यास्ते साध्याः स्वैः स्वैः चिकित्सितैः
तेषु शान्तेषु रोगेषु पश्चाच्छोषमुपाचरेत्॥

च्यवनप्राशः।

विल्वाग्निमन्थश्योनाक काश्मर्य्यः पाटला बला।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा वृहतीद्वयम्॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्कराग्रुरु।
अभया चामृता ऋद्धि जीवकर्षभकौ शटी॥
मुस्तं पुनर्नवा मेदा सूक्ष्मैलोत्पलचन्दने।
विदारी वृषमूलानि काकोली काकनासिका॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च।
पञ्च दद्यात्तदैकध्यं जलद्रोणे विपाचयेत्॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम्।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः॥
पलद्वादशके भृष्टा दत्त्वा चार्द्धतुलां भिषक्।
मत्स्यण्डिकायाः पूताया लेहवत्साधु साधयेत्॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत्।
चतुःपलं तुगाक्षीर्य्याः पिप्पल्या द्विपलं तथा॥
पलमेकं विदध्याच्च त्वगेला पत्रकेशरात्।

इत्ययं च्यवनप्राशः परमुक्तो रसायनः॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनः॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति॥
अस्य मात्रां प्रयुञ्जीत नोपरुन्ध्याच्च भोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा॥
मेधां स्मृतिं कान्तिमनामयत्व-
मायुः प्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं
बलप्रसादं पवनानुलोम्यम्॥
रसायनस्यास्य नरः प्रयोगा-
ल्लभेत जीर्णोऽपि कुटिप्रवेशात्।
जराकृतं पूर्वमपास्य रूपं
विभर्त्ति रूपं नवयौवनस्य॥
मिता मत्स्यण्डिकाऽला... धात्र्याश्च मृदुभर्जनम्॥
चतुर्भागजले शाय्य द्रव्यं गतरसं भवेत्॥

यक्ष्मारिलौहम्।

मधुताप्यविडङ्गाश्मजतुलौहघृताभयाः।
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिना॥

सर्वचूर्णसमं लौहचूर्णं घृतमधुभ्यां लेह्यमिति भानुदासः।

### विन्ध्यवासियोगः।

व्योषं शतावरी त्रीणि फलानि द्वे बले तथा।
सर्वामयहरो योगः सोऽयं लौहरजोऽन्वितः॥
एष वल्लः क्षतं हन्ति कण्ठजांश्च गदांस्तथा।
राजयक्ष्माणमत्युग्रं बाहुस्तम्भमथार्द्दितम्॥

### यक्ष्मान्तकलौहः।

रास्ना तालीशकर्पूर भेकपर्णी शिलाह्वयैः।
त्रिकटुत्रयसमायुक्तो लौहो यक्ष्मान्तको मतः॥
सर्वोपद्रवसंयुक्तमपि वैद्यविवर्ज्जितम्।
हन्ति कास स्वराघात क्षयकासं क्षतक्षयम्॥
बलवर्णाग्निपुष्टीनां साधनो दोषनाशनः।
शिलाशिलाजतु मनःशिला इति केचित्।

### शिलाजत्वादिलौहम्।

शिलाजतु मधुव्योष ताप्यलौहरजांसि च।
क्षीरेण लोहितस्याशु क्षयं क्षयमवाप्नुयुः॥
अवाप्नुयुः प्रापयेयुः अन्तर्भूतणर्थत्वात्

### क्षयकेशरी।

त्रिकटु त्रिफलैलाभिर्जातीफललवङ्गकैः।
नवभागान्वितं लौहं समं सिन्दूरसन्निभम्॥
छागीदुग्धेन संपिष्य वल्लमस्य प्रयोजयेत्।
मधुना क्षयरोगांश्च हन्त्ययं क्षयकेशरी॥

रसेन्द्रगुड़िका ।

कर्षं शुद्धरसेन्द्रस्य स्वरसेन जयार्द्रयोः ।
शिलायां खल्लयेत्तावद्यावत्पिण्डं घनं भवेत् ॥
जलकर्णाकाकमाचो रसाभ्यां भावयेत्पुनः ।
सौगन्धिकपलं भृङ्गस्वरसेन सुभावितम् ॥
चूर्णितं रससंयुक्तमजाक्षीरपलद्वये ।
खल्लित घनपिण्डन्तु गुड़ीः खिन्नकलायवत् ॥
कृत्वादौ शिवमभ्यर्च्य द्विजातीन् परितोष्य च ।
जीर्णान्नो भक्षयेदेकां क्षीरमांसरसाशनः ॥
सर्वरूपं क्षयं कासं रक्तपित्तमरोचकम् ।
अपि वैद्यशतैस्त्यक्तमम्लपित्तं नियच्छति ॥

वृहद्रसेन्द्रगुड़िका ।

कुमार्य्या त्रिफलाचूर्णैश्चित्रकस्य रसैः क्रमात् ।
शोधयित्वा पुनाराजी गृहधूमहरिद्रया ॥
पक्वेष्टका रजोभिश्च धूर्त्तपत्ररसेन च ।
शृङ्गवेररसेनापि शोधयित्वा पुनः पुनः ॥
प्रक्षालयेत्पुनः पश्चाच्छानयेद्वसने घने ।
कर्षद्वयं रसेन्द्रस्य भावयेद्विजया रसे ॥
शिलायां खल्लयेत्तापि यावच्चूर्णत्वमागतम् ।
जलकणा काकमाचो रसाभ्यां भावयेत्पुनः ।
सौगन्धिकपलं शुद्धमर्द्धं मरिचटङ्कनम् ।
माक्षिकञ्च शिखिग्रीवं तालं चाभ्रकं तथा ।

एतांस्तु मिलितान् दत्त्वा भावयेदार्द्रकोद्रवैः।
रक्तिद्वयप्रमाणेन कारयेद्गुड़िकां भिषक्॥
जीर्णान्नो भोजयेदेकां क्षीरमांसरसाशनः।
हन्ति कासं क्षयं श्वासं रक्तपित्तमरोचकम्॥
पाण्डुत्वमग्निस्वरहरं कृशानां पुष्टिवर्द्धनम्।
वाजीकरणमुद्दिष्टमम्लपित्तहरं परम्॥

## कल्याणसुन्दराभ्रम्।

वज्राभ्रमेकपलिकं पुटनैः सुजीर्णं
धात्रीपयोदबृहती शतमूलिकैस्तु।
विल्वाग्निमन्थजलवासककण्टकारी-
श्योनाकपाटलिबला च रसैरमीषाम्॥
सम्मर्दितं पलमितैः पृथगेकशश्च-
गुञ्जासमं सुवलितं वटिकाकृतञ्च।
यक्ष्मक्षयौ सकलरोगसबलासपित्तं
श्वासं समीरमरुचिं सकलाङ्गसादम्।
शोथं स्वरक्षयमजीर्णमुदर्द्दशूल
मेहं ज्वरं विषमरोगहपाण्डु हिक्काः।
कार्श्यं क्रिमिं बलविनाशनमम्लपित्तं
प्लीहामयं सह हलीमकमस्रगुल्मम्॥
तृष्णामवातनिचयं ग्रहणीं प्रदुष्टां
विस्फोटकुष्ठनयनास्य शिरोगदांश्च॥
मूर्च्छां वमिं विरसतां विनिहन्ति सद्यः
कल्याणसुन्दरमिदं बलदं सुपथ्यम्॥

मेध्यं रसायनवरं सकलामयानां
नाशाय यक्ष्मनिवहे कथितं हरेण॥

मृगाङ्कोरसः।

स्याद्रसेन समं हेममौक्तिकं द्विगुणं ततः।
गन्धकञ्च समं तेन रसपादन्तु टङ्कनम्॥
सर्वं तद्गोलकं कृत्वा काञ्जिकेनाथशोषयेत्।
भाण्डे लवणपूर्णेऽथ पचेद्यामचतुष्टयम्॥
मृगाङ्कसंज्ञः सज्ञेयो रोगराजनिकृन्तनः।
गुञ्जाचतुष्टयं चास्य मरिचैर्भक्षयेद्भिषक्॥
पिप्पलीदशकै र्वाथ मधुना लेहयेद्बुधः।
पथ्यं सुलघुमांसेन प्रयशोऽस्य प्रयोजयेत्॥
दध्याज्यं गव्यतक्रं वा मांसमाजं प्रयोजयेत्।
व्यञ्जनैर्घृतपक्वैश्च नातिचारैरहिङ्गुभिः॥
वृन्ताकं तैलबिल्वादिकारवेल्लञ्च वर्जयेत्।
स्त्रियं परिहरेद्दूरे कोपञ्चापि परित्यजेत्॥

राजमृगाङ्कोरसः।

रसभस्मत्रयो भागा भागैकं हेमभस्मकम्।
मृततास्रस्य भागैकं शिलातालकगन्धकम्॥
प्रतिभागद्वयं तत्राप्येकीकृत्य निधापयेत्।
वराटीः पूरयेत्तेन चाजाक्षीरेण टङ्कनम्॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डेन निरोधयेत्।
शुष्कं गजपुटे पाच्यं चूर्णयेत् स्वाङ्गशीतलम्॥
रसो राजमृगाङ्कोऽयं चतुर्गुञ्जं क्षयापहम्।

दशपिप्पलिकैः क्षौद्र मरिचैकोनविंशतिः ।
सघृतर्द्दीपयेद्वातपित्तश्लेष्मोद्भवे क्षये ॥

महामृगाङ्कोरसः ।

निरुत्थभस्मसौवर्णं द्विगुणं भस्मसूतकम् ।
त्रिगुणं भस्ममुक्तोत्थं शुकपुच्छं चतुर्गुणम ॥
मृततार्प्यञ्च पञ्चांशं दद्यादत्र भिषक् सुधीः ।
सप्तभागं प्रवालञ्च रसतुल्यञ्च टङ्कनम् ॥
सर्वमेकत्र सम्मर्द्य त्रिदिनं लुङ्गवारिणा ।
तत्तो गोलकं कृत्वा शोषयित्वा खरातपे ।
लवणैः पात्रमापूर्य्य तन्मध्ये गोलकं क्षिपेत् ।
तन्मुखञ्च मृदा रुद्धा पचेद्यामचतुष्टयम ।
आकृष्य चूर्णितं शुद्धं प्रदेयं पूर्वभागिकम् ॥
वज्रञ्च तदभावे तु वैक्रान्तं तत्समांशकम् ।
महामृगाङ्कः खलु सिद्ध एष
श्रीनन्दिनाथप्रकटीकृतोऽयम् ।
बल्लोऽस्य सेव्यो मरिचाज्ययुक्तः
सेव्योऽथवा पिप्पलिकासमेतः ॥
अत्रोपचाराः कर्त्तव्याः सर्वे क्षयगदोदिताः ।
बल्यं घृतञ्च भोक्तव्यं त्याज्यं शुरविरोधि यत् ।
यक्ष्माणं बहुरूपिणं ज्वरगणं गुल्मं तथा विद्रधिं
मन्दाग्निं स्वरभेदकासमरुचिं वान्तिञ्च मूर्च्छां भ्रम
अष्टावेव महागदान् गदगदान् पाण्डुामयं कामला
पित्तार्त्तिं समनग्रहान् बहुविधानन्यांस्तथा नाशयेत्

## रत्नगर्भपोट्टलीरसः।

रसं वज्रं हेमतारं नागं लौहञ्च ताम्रकम्।
तुल्यांशं मारितं योज्यं मुक्तामाक्षिकविद्रुमम्॥
शङ्खञ्च तुल्यतुल्यांश सप्ताहं चार्द्रकद्रवैः।
मर्दयित्वा विचर्ण्याथ तेन पूर्य्या वराटिकाः॥
टङ्कनं रविदुग्धेन पिष्ट्वा तन्मुखवद्धयेत्।
मृद्भाण्डे तं निरूध्याथ सम्यग्गजपुटे पचेत्॥
आदाय चूर्णयेत्सर्वं निर्गुण्ड्याः सप्तभावनाः।
आर्द्रकस्य रसैः सप्तचित्रकस्यैकविंशतिः।
द्रवैर्भाव्य ततः शोष्यं देयं गुञ्जाचतुष्टयम्।
यक्ष्मरोगं निहन्त्याशु साध्यासाध्यं न संशयः॥
योजयेत्पिप्पलीक्षौद्रैः सघृतैर्मरिचैस्तथा।
महारोगाष्टके कासे ज्वरे श्वासेऽतिसारके॥
पोट्टली रत्नगर्भोऽयं योगवाहेन योजयेत्।
वातव्याध्यश्मरी कुष्ठमेहोदरभगन्दराः॥
अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्त्तिताः॥

## काञ्चनाभ्ररसः।

काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्रकम्।
विद्रुमंसमयातारं कस्तूरी च मनःशिला॥
प्रत्येकं बिन्दुमात्रञ्च सर्वं सम्मर्द्य यत्नतः।
वारिणा वटिका कार्य्या द्विगुञ्जा फलमानतः।
अनुपानं प्रयोक्तव्यं यथादोषानुसारतः।

नानारोगप्रशमनं सर्व्वोपद्रवसंयुतम् ॥
क्षयं हन्ति तथा कासं श्लेष्मपित्तसमुद्भवम् ।
प्रमेहान् विंशतिश्चैव दोषत्रयसमुत्थितान् ।
अशीतिं वातजान् रोगान् नाशयेत्सद्य एव हि ।
बलवृद्धिं वीर्य्यवृद्धिं लिङ्गदार्ढ्यं करोति च ॥
काञ्चनस्य समा कान्तिर्मदनस्य समं वपुः ।
भक्षयेत्प्रातरुत्थाय रसोऽयं काञ्चनाभ्रकः ॥

## वृहत्काञ्चनाभ्ररसः।

काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्रकम् ।
विद्रुमं मृतवैक्रान्तं तारं ताम्रञ्च वङ्गकम् ॥
कस्तूरिका लवङ्गञ्च जातीकोषैलवालुकम् ।
प्रत्येकं विन्दुमातञ्च सर्व्वं मर्द्यं प्रयत्नतः ॥
कन्यानीरेण सम्मर्द्य केशराजरसेन च ।
अजाक्षीरेण सम्भाव्य प्रत्येकं दिवसत्रयम् ।
चतुर्गुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ॥
अनुपानं प्रदातव्यं यथादोषानुसारतः ।
नानारोगप्रशमनं सर्व्वोपद्रवसयुतम् ॥
क्षयं हन्ति तथा कासं यक्ष्माणं श्वासमेव च ।
प्रमेहान् विंशतिश्चैव दोषत्रयसमुत्थितान् ॥
सर्व्वान् रोगान् निहन्त्याशु भास्करस्तिमिरं यथा ॥

## चूड़ामणिरसः।

द्विनिष्कं रससिन्दूरं तदर्द्धं हेमजारितम् ।

निष्कद्वयं गन्धकञ्च मर्दयेच्चित्रकद्रवैः॥
कुमारिकाद्रवैर्यामं छागदुग्धे त्रियामकम्।
मुक्ताविद्रुमवज्राणां निष्कं निष्कं विमिश्रयेत्।
गोलकं पूरयेद्भाण्डे कृत्वा गजपुटे पचेत्।
स्वाङ्गशीतं विचूर्ण्याथ भक्षयेद्रत्तिकाद्वयम्।
मधुना क्षयरोगघ्नं वातपित्तसमुद्भवम्॥
अजाघृतञ्चानुपिबेत् शर्करामधुसंयुतम्॥

महाचन्दनादितैलम्।

चन्दनं शालपर्णी च पृश्निपर्णी निदिग्धिका।
बृहती गोक्षुरश्चैव मुद्गपर्णीविदारिका॥
अश्वगन्धा,माषपर्णी तथामलकमेव च।
शिरीषं पद्मकोशीरं सरलं नागकेशरम्॥
प्रसारणी तथा मूर्वा प्रियङ्गूत्पलबालकम्।
वाट्यालकं चातिबला मृणालं विषशालुकम्॥
पञ्चाशत्पलमेतेषां श्वेतवाट्यालकं तथा।
जलद्रोणे विपक्तव्यं ग्राह्यं पादावशेषितम्॥
अजाक्षीरं तैलसमं शतमूलीरसाढ़के।
लाक्षारसं काञ्जिकञ्च दधिमस्तु तथैव च॥
हरिणच्छागशशकमांसानाञ्च पृथक् पृथक्।
चतुःप्रस्थ विनिःक्वाथ्य तैलाढ़कं विपाचयेत्॥
श्रीखण्डागुरुकक्कोलं नखं शैलेयकेशरम्।
पत्रं चार्चं मृणालञ्च हरिद्रे शारिकाद्वयम्॥
रक्तोत्पलं नतं कुष्ठं त्रिफला च परुषकम्।

मूर्वा च ग्रन्थिपर्णी च नलिका देवदारु च ॥
सरलं पद्मकोशीरं धातकी बिल्वपेषिका।
रसाञ्जनं मुस्तकञ्च शैलकं बालकं वचा ॥
मञ्जिष्ठालोध्र मधुरी जीवनीयं प्रियङ्गुकम्।
शठ्येला कुङ्कुमञ्चैवखट्टाशी पद्मकेशरम् ॥
रास्ना च जातीकोषञ्च विश्वकं सधनीयकम्।
पलार्द्धमेषां प्रत्येकं पेषयित्वा विनिक्षिपेत् ॥
महासुगन्धितैलस्य गन्धमत्र प्रदीयते।
काश्मीरमद्चन्द्रांश्च सिद्धे पूते विनिक्षिपेत् ॥
यथालाभं शुभे पात्रे मङ्गापैन निधापयेत्।
वातपित्तहरं वृष्यं धातुपुष्टिकरं परम् ॥
हन्ति यक्ष्माणमत्युग्रं रक्तपित्तमुरःक्षतम् ॥
येषां भूरिपरिश्रमादनुदिनं नश्यन्ति देहा नृणां
ये वा कामकलानुकूलतरुणी सङ्गे च निर्धातवः।
ये वा व्याधिविशीर्णतामुपगतास्तेषां परं भेषजं
बल्यं वृष्यतमं तनूपचयकृत् श्रीचन्दनाद्य महत्।

द्राक्षारिष्टः।

द्राक्षात् लार्द्धं द्विद्रोणे जलस्य विपचेत्सुधीः।
पादशेषे कषाये च पूते शीते विनिक्षिपेत् ॥
गुड़स्य द्वितुलं तत्र त्वगेला पत्रकेशरम्।
प्रियङ्गुर्मरिच कृष्णा विड़ङ्गेति विचूर्णयेत ॥
पृथक् पलोन्मितैर्भागैर्घृतभाण्डे निधापयेत्।
समन्ततो घट्टयित्वा पिवेज्जातरसं ततः ॥

उरःक्षतं क्षयं हन्ति कासश्वासगलामयान्।
द्राक्षारिष्टाह्वयः प्रोक्तो बलकृन्मलशोधनः॥

इति भैषज्यरत्नावल्यां यक्ष्माधिकारः समाप्तः।

---

# अथ कासाधिकारः।

वास्तुको वायसीशाकं मूलकं सुनिषण्णकम्।
स्नेहास्तैलादयो भक्ष्याः क्षारेक्षुरसगौडिकाः॥
दध्यारनालाम्लफलं प्रसन्नापानमेव च।
शस्यते वातकासे तु स्वाद्वम्ललवणानि च॥
ग्राम्यानूपौदकैः शालि यवगोधूमषष्टिकान्।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान्॥
शटी शृङ्गीकणाभार्गी गुड़वारिदयासकैः।
सतैलैर्वातकासघ्नो लेहोऽयमपराजितः॥
पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम्।
दद्याद्घनकफे तिक्तैर्विरेकार्थं युतां भिषक्॥
मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवा।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः॥

द्राक्षा मधुकखर्जूरं पिप्पली मरिचान्वितम् ।
पित्तकासहरं ह्येतल्लिह्यान्माक्षिकसर्पिषा ॥
बलिनं वमनेनादौ शोधितं कफकासिनम् ।
यवान्नैः कटुरूक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥
पार्श्वशूले ज्वरे श्वासे कासे श्लेष्मसमुद्भवे ।
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत् ॥
स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम् ।
पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥
कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहा ।
विभीतकं घृताभ्यक्तं गोमयेनापरिवेष्टितम् ॥
स्विन्नमग्नौ हरेत्कासं ध्रुवमास्ये विधारितम् ।
वासकस्वरसः पेयः मधुयुक्तो हिताशिना ।
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ॥
वासायाः स्वरसः पूतं कणामाक्षिकसंयुतम् ।
अभ्यासान्मुच्यते पीत्वाप्यसाध्यात् कासरोगतः ॥
पुटपाकेन उत्स्विद्य वासकस्य रसो ग्राह्य अत्रक्वाथं व्यवहरन्ति वृद्धाः ।

समूलं चित्रकञ्चैव पिप्पलीचूर्णकं हरेत् ।
कासं श्वासञ्च हिक्काञ्च मधुयुक्तं द्विजोत्तमम् ॥
तद्वत् क्रव्यादजं मांसं कौलिङ्गं मांसमेव च ।
षमाष्यान्मुच्यते भुक्त्वा कासाद्‍श्वासयोगतः ॥
मुस्तकं पिप्पली द्राक्षा सपक्वं बृहतीफलम् ।
घृतक्षौद्रयुतो लेहः क्षयकासनिवर्हणः ॥

मरिचाद्यचूर्णम्।

कर्षः कर्षार्द्धमथो पलं पलद्वयं तथार्द्धकर्षञ्च।
मरिचस्य पिप्पलीनां दाड़िमगुड़ यावशूकानाम्॥
सर्व्वौषधैरसाध्या ये कासाः सर्व्ववैद्यविनिमुक्ताः।
अपि पूयं छर्द्दयतां तेषामिदं महौषधं पथ्यम्॥

समशर्करचूर्णम्।

लवङ्गजातीफलपिप्पलीनां
भागान् प्रकल्प्याक्षसमानमीषाम्।
पलार्द्धमेकं मरिचस्य दद्यात्
पलानि चत्वारि महौषधस्य॥
सितासमं चूर्णमिदं प्रसह्य
रोगानिमानाशु बलान्निहन्यात्।
कासज्वरारोचकमेह गुल्म-
श्वासाग्निमान्द्य ग्रहणी प्रदोषान्॥

मनःशिलालमरिचमांसी मुस्तेङ्गुदैः पिबेत्।
धूमं त्र्यहञ्च तस्यानु सगुडञ्च पयः पिबेत्॥
एष कासान् पृथग्द्वन्द्व सर्व्वदोषसमुद्भवान्।
शतैरपि प्रयोगाणां साधयेदप्रसाधितान्॥
मनःशिलालिप्तदलं बदर्य्या रविशोषितम्।
सक्षीरं धूमपानञ्च महाकासनिबर्हणम्॥
अर्कच्छमूलशिले तुल्ये ततोऽर्द्धेन कटुत्रिकम्।
चूर्णितं बह्निनिक्षिप्तं पिबेद्धूमन्तु योगवित्॥
भक्षयेदथ ताम्बूलं पिबेद्दुग्धमथाम्बुना।

कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः॥
मरिचं शिलार्क क्षीरैरार्कीं त्वचमाशु भावितां शुष्काम्
कृत्वा विधिना धूमं पिबतः कासाः शमं यान्ति॥

कण्टकारीघृतम्।

घृतं रास्ना बलाव्योष श्वदंष्ट्रा कल्कपाचितम्।
कण्टकारीरसे पानात्पञ्चकासनिसूदनम्॥

व्याघ्रीहरीतकी।

समूलपुष्पच्छदकण्टकाया-
स्तुलां जलद्रोणपरिस्रुताञ्च।
हरीतकीनाञ्च शतं निदध्याद्
विपच्य सम्यक् चरणावशेषम्॥
गुडस्य दत्त्वा शतमेवमग्नौ
विपक्वमुत्ताय्य ततः सुशीते।
कटुत्रिकञ्च द्विपलप्रमाणं
पलानि षट् पुष्परसस्य तत्र॥
त्रिपेत्सुजात पल यथाग्नि
प्रयुज्यमानो विधिनावलेहः।
वातात्मकं पित्तकफोद्भवञ्च
द्विदोषकासानपि च त्रिदोषम्।
क्षयोद्भवञ्च क्षतजञ्च हन्यात्
तत्पीनसं श्वासमुरःक्षतञ्च।
यक्ष्मामयमेकादशमुग्ररूपं
भृगूपदिष्टं हि रसायनं स्यात्॥

तिन्तिड़ी पञ्चजः क्वाथो हिङ्गुसैन्धवसंयुतः ।
दुष्टकासं जयत्याशु तृणबिन्दुमिवानलः ॥

वासावलेहः ।

वासकस्वरसप्रस्थे मानिका मितशर्करा ।
पिप्पली द्विपलं दत्वा सर्पिषश्च पचेच्छनैः ॥
लेहीभूते ततः पश्चाच्छीते क्षौद्रपलाष्टकम् ।
दत्वावतारयेद्वैद्यो मात्रया लेह उत्तमः ॥
निहन्ति राजयक्ष्माणं कासं श्वासञ्च दारुणम् ।
पार्श्वशूलञ्च हृच्छूलं रक्तपित्तं ज्वरं तथा ॥

तालीशाद्यो मोदकः ।

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्धा त्वगेले च द्विभागिके ॥
पिप्पल्यष्टगुणा चात्र प्रदेया मितशर्करा ।
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥
हृत्पाण्डुग्रहणीरोगप्लीहशोषज्वरापहम् ।
छर्द्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥
कल्पयेद् गुड़िकाञ्चैतच्चूर्णं पक्त्वा सितोपलाम् ।
गुड़िकाह्यग्निसंयोगाच्चूर्णाल्लघुतरा स्मृता ।
पैत्तिके ग्राह्यत्वाच्चैके शुभया वंशलोचनाम् ॥
विशेषणं हि पिप्पल्या अन्यत्र पैत्तिकाच्छुभा ॥

पञ्चामृतरसः ।

शुद्धसूतस्य भागैकं भागौ द्वौ गन्धकस्य च ।

भागद्वयं मृतं ताम्रं मरिचं दशभागिकम् ॥
मृताभ्रस्य चतुर्भागं भागमेकं विषं क्षिपेत् ।
अम्लेन मर्दयेत्सर्वं माषैकं वातकासनुत् ॥
अनुपानं लिहेत् क्षौद्रैर्विभीतकफलत्वचम् ।

अमृतार्णवरसः ।

पारदं गन्धकं शुद्धं मृतलौहञ्च टङ्कनम् ।
रास्ना विडङ्गत्रिफला देवदारु कटुत्रिकम् ॥
अमृता पद्मकं क्षौद्रं विषञ्चापि विचूर्णयेत् ।
द्विगुञ्जं वातकासार्त्तः सेवयेदमृतार्णवम् ॥

चन्द्रामृतावटी ।

( चन्द्रामृतरसः )

त्रिकटु त्रिफलाचव्यं धान्यजीरकसैन्धवम् ।
प्रत्येकं तोलकं ग्राह्यं छागीक्षीरेण गालयेत् ॥
रसगन्धकलौहानां प्रत्येकं कार्षिकं शुभम् ।
टङ्कनस्य पलं दत्त्वा मरिचस्य पलार्द्धकम् ॥
नवगुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ।
प्रातःकाले शुचिर्भूत्वा चिन्तयित्वा मृतेश्वरीम् ॥
एकैकां वटिकां खादेद्रक्तोत्पलरसप्लुताम् ।
नीलोत्पलरसेनापि कुलत्थस्य रसेन वा ॥
पिप्पल्या मधुना वापि शृङ्गवेररसेन वा ।
हन्ति पञ्चविधं कासं वातपित्तसमुद्भवम् ॥
वातश्लेष्मोद्भवं दोषं पित्तश्लेष्मोद्भवं तथा ।
वातिकं पैत्तिकञ्चैव नानादोषसमुद्भवम् ॥

रक्तनिष्ठीवनञ्चापि ज्वरं श्वाससमन्वितम्।
तृष्णां दाहं भ्रमं हन्ति जठराग्निप्रदीपनी॥
बलवर्णकरी ह्येषा प्लीहगुल्मोदरापहा।
आनाहक्रिमिहृत्पाण्डु जीर्णज्वरविनाशिनी॥
इयं चन्द्रामृता नाम चन्द्रनाथेन निर्मिता।
वासा गुडूची भार्गी च मुस्तकं कण्टकारिका॥
सेवनार्त्ते प्रकर्त्तव्या गुडिका वीर्य्यधारिणी॥

श्रीडामरानन्दाभ्रम्।

अभ्रस्यामलमारितस्य तु पलं क्षुद्राटरूषस्थिरा-
बिल्वश्योनाकपाटला कलसिका सब्राह्मयष्ट्यार्द्रकाः।
चित्रग्रन्थिकगोक्षुरं सचविकं भार्गीत्रगुप्तान्वितं
सर्व्वैर्मर्द्दितमेकशश्च पलिकैर्गुञ्जार्द्धकं भक्षितम्॥
कासं पञ्चविध स्वरामयमुरोघातञ्च हिक्कां ज्वरं
श्वासं पीनसमेहगुल्ममरुचिं यक्ष्माम्लपित्तं क्षयम्।
दाहं मोहमशेषदोषजनितं शूलं बलाशं क्रिमिं
छर्द्दिं पाण्डुहलीमकं गलगदं विस्फोटकं कामलाम्॥
मन्दाग्निं ग्रहणीं क्षयञ्च यकृतं प्लीहानमर्शांसि षट्
हन्यादामकफोद्भवान् गुरुगदान् श्रीडामरानन्दकम्।
बल्यं वृष्यमशेषदोषहरणं धातुप्रदं कामिनां
मेध्यं हृद्यरसायनं हरमुखाज्ज्ञात्वा मयाभाषितम्॥

महाकालेश्वरोरसः।

मृतं लौहं मृतं वङ्गं मृतार्कं मृतमभ्रकम्।
शुद्धं सूतञ्च गन्धञ्च माक्षिकं हिङ्गुलं विषम्॥

जातीफलं लवङ्गञ्च त्वगेला नागकेशरम् ।
उन्मत्तस्य च बीजानि जयपालञ्च शोधितम् ॥
एतानि समभागानि मरिच द्विगुणं कम् ।
सर्वंद्रव्यं क्षिपेत् खल्ले लौहदण्डेन मर्दयेत् ॥
शक्राशनस्य स्वरसैर्भावयेदेकविंशतिम् ।
गुञ्जामात्रा प्रदातव्या आर्द्रकस्य रसैर्युता ॥
तदर्द्धं बालवृद्धेषु पथ्यं देयं यथोचितम् ।
पञ्चकासान् क्षयं श्वासं राजयक्ष्माणमेव च ॥
सन्निपातं कण्ठरोगमभिन्यासमचेतनम् ।
महाकालेश्वरो हन्ति कालनाथेन भाषितः ॥

विजयभैरवो रसः ।

सूतकं गन्धकं लौहं विषमभ्रकतालकम् ।
विडङ्गं रेणुकं मुस्तमेलाग्रन्थिककेशरम् ॥
त्रिकटु त्रिफलाचित्रं शुद्धं जैपालबीजकम् ।
एतानि समभागानि गुडं द्विगुणमुच्यते ॥
तिन्तिड़ीबीजमात्रेण प्रातःकाले तु भक्षयेत् ।
कासं श्वासं क्षयं गुल्मं प्रमेहं विषमज्वरम् ॥
अजीर्णं ग्रहणीदोषं हन्ति पाण्डुामयं तथा ॥
अपाने हृदये शूलं वातरोगं गलग्रहम् ।
ब्रह्मणा निर्म्मितो ह्येष रसो विजयभैरवः ॥

काससंहारभैरवो रसः ।

रसगन्धकताम्रञ्च शङ्कटङ्गनलौहकम् ।
मरिचं कुष्ठतालीशजातीफललवङ्गकम् ॥

कार्षिकं चूर्णमादाय दण्डे नामद्यं भावयेत्।
भेकपर्णी केशराज निर्गुण्डी काकमाचिका॥
द्रोणपुष्पी शालपर्णी ग्रीष्मसुन्दरमेव च।
भार्गी हरीतकी वासा कार्षिकैः पत्रजैरसैः॥
वटिकां कारयेद्वैद्यः पञ्चगुञ्जाप्रमाणतः।
वातजं पित्तजं कासं द्वन्द्वजं चिरकालजम्॥
निहन्ति नात्रसन्देहो भास्करस्तिमिरं यथा॥
श्रीमद्गहननाथेन कासंसहारभैरवः।
रसोऽयं निर्म्मितो यत्नाल्लोकरक्षणहेतवे॥
वासा शुण्ठी कण्टकारी क्वाथेन पाययेद्बुधः।
कासं नानाविधं हन्ति श्वासमुग्रं गरापहः॥
बलवर्णकरः श्रीदः पुष्टिदो वह्निदीपनः॥

## बृहद्रसेन्द्रगुड़िका।

कर्षं शुद्धरसेन्द्रस्य गन्धकस्याभ्रकस्य च।
लौहचूर्णस्य ताम्रस्य तालकस्य विषस्य च॥
मनःशिलायाः क्षाराणां बीजं धूस्तूरकस्य च।
मरिचस्यापि सर्व्वेषां समं चूर्णं प्रकल्पयेत्॥
जयन्ती चित्रकं भार्गवण्टकणीलमण्डुकी।
अङ्काशनं भृङ्गराजं केशराजार्द्रकं तथा॥
सिन्धुवारस्य च रसैः कर्षमात्रं विभावयेत्।
कलाय परिमाणान्तु गुड़िकां कारयेद्भिषक्॥
हन्ति पञ्चविधं कासं श्वासञ्चैव सुदारुणम्।
कफवातामयानुग्रानानाहं विड़्विबद्धताम्॥

अग्निमान्द्यारुचिं शोथमुदरं पाण्डुकामलाम्।
रसायनी च वृष्या च बलवर्णप्रसादनी॥
मधुरं वृंहणं वृष्यं मत्स्यं मांसञ्च जाङ्गलम्।
घृतपक्वं सदा भक्ष्यं रुक्षं तीक्ष्णं विवर्जयेत्॥
आर्द्रक रसेन भक्षणम्।

यक्ष्माधिकारोक्ता स्वल्परसेन्द्रगुड़िका चात्र कर्त्तव्या

गुणमहोदधिः।

सूतकं गन्धकं लौहं विषञ्चापि वराङ्गकम्।
ताम्रकं वङ्गभस्मापि व्योमकञ्च समांशकम्॥
पत्रं त्रिकटुकं मुस्तं विड़ङ्गं नागकेशरम्।
रेणुका मेलकञ्चैव पिप्पलीमूलमेव च॥
एषाञ्च द्विगुणं दत्त्वा मर्दयित्वा प्रयत्नतः।
भावना तत्र दातव्या जलपिप्पलिनिम्बुभिः॥
मात्रा चणकतुल्या तु वटिकेयं प्रकीर्त्तिता॥
हन्ति कासं तथा श्वासमर्शांसि च भगन्दरम्।
हृच्छूलं पार्श्वशूलञ्च कर्णरोगं कपालिकाम्॥
हरेत्तं ग्रहणी रोगानष्टौ च जठराणि च।
प्रमेहान् विंशतिञ्चैवाप्यश्मरीञ्च चतुर्विधाम्॥
न चान्नपाने परिहार्य्यमस्ति
न चातपे चाध्वनि मैथुने च।
यथेष्टचेष्टाभिरतः प्रयोगी
नरो भवेत्काञ्चनराशिगौरः॥

## समशर्करलौहम्।।

लवङ्गं कट्फलं कुष्ठं यमानी त्र्यूषणं तथा।
चित्रकं पिप्पलीमूलं वासकं कण्टकारिका॥
चव्यं कर्कटशृङ्गी च चातुर्जातं हरीतकी।
शटी कक्कोलकं मुस्तं लौहमभ्रं यवाग्रजम्॥
सर्वं प्रतिसमञ्चूर्णं तावच्छर्करयान्वितम्।
सर्वमेकीकृतञ्चूर्णं स्थापयेत् स्निग्धभाजने॥
निहन्ति सर्वजं कासं वातश्लेष्मसमुद्भवम्।
क्षयकासं रक्तपित्तं श्वासमाशु विनाशयेत्॥
क्षीणस्य पुष्टिजननं बलवर्णाग्निवर्द्धनम्॥

## भागोत्तरगुड़िका।

रसभागो भवेदेको गन्धको द्विगुणो भवेत।
त्रिभागा पिप्पली पथ्या चतुर्भागा विभीतकः॥
पञ्चभागस्तथा वासा षड्गुणा सप्तभागिका।
भार्गी सर्वमिदञ्चूर्णं भाव्यं बब्बोलजैर्द्रवैः।
एकविंशतिवारांस्तु मधुना गुड़िका कृता॥
विभितकप्रमाणेन प्रातरेकान्तु भक्षयेत्।
कासं श्वासं हरेत् क्षुद्रा क्वाथस्तदनुक्रमणया॥

## कासलक्ष्मीविलासः।

पलं वङ्गं पलं कान्तं घनं ताम्रञ्च कांस्यकम्।
शुद्धसूतं सतालञ्च तालाङ्कुर सखर्परम्॥
केशराजरसेनापि भावना दिवसत्रयम्।

कुलत्थस्वरसेनाथ भावयेच्च पुनः पुनः ॥
एला जातीफलाख्यञ्च तेजपत्रलवङ्गकम्।
यमानी जीरकञ्चैव त्रिकटु त्रिफलासमम् ॥
नतं भृङ्गं वंशगर्भं कर्षमात्रञ्च कारयेत्।
भावयेच्च रसेनाथ गोलयेत्सर्वमौषधम् ॥
तत्पश्चात् वटिका कार्य्या चणकप्रमिता तथा।
शीताम्बुना पिबेन्नीमानस्त्रकासनिवृत्तये ॥
मत्स्यं मांसं तथा क्षीरं पथ्यं स्यात् स्निग्धभोजनम्।
क्षतकासं तथा श्वासं ज्वरं हन्ति न संशयः ॥
हलीमकं पाण्डुरोगं शोथं शूलं प्रमेहकम्।
अर्शो नाशं करोत्येव बलवृद्धिञ्च कारयेत् ॥
कामदेवसमं वर्णं दृग्गारोचकनाशनम्।
वर्ज्यं शाकाम्लमाद्री च भृष्टद्रव्यं हुताशनम् ॥
रसो लक्ष्मीविलासोऽयं महादेवेन भाषितः ॥

## सर्वाङ्गसुन्दररसः।

रसगन्धकतुल्यांशौ द्वौ भागौ टङ्कनस्य च।
मौक्तिकं विद्रुमं शङ्खं मारणीयं प्रयत्नतः ॥
हेमभस्माद्धभागञ्च सर्वं खल्ले निधापयेत्।
निम्बद्रवस्य योगेन पिण्डिकां कारयेद्भिषक् ॥
पश्चाद्गजपुटं दद्यात् शीतलञ्च समुद्धरेत्।
हेमभस्मसमं तीक्ष्णं तोलार्द्धं टङ्कणो मतः ॥
एकीकृत्य समस्तानि सूक्ष्मचूर्णानि कारयेत्।
ततः पूजां प्रकुर्वीत रसस्य दिवसे शुभे ॥

सर्वाङ्गसुन्दरो नाम रोगराजकुलान्तकृत् ।

शृङ्गाराभ्रम् ।

शुद्धं कृष्णाभ्रचूर्णं द्विपलपरिमितं शाणमानं यदन्यत्
कर्पूरं जातिकोषं सजलमिभकणा तेजपत्रं लवङ्गम् ॥
मांसी तालीशचोचे गजकुसुमगदं धातकी चेतितुल्यं
पथ्याधात्री विभीतं त्रिकटुरथ पृथक् त्वर्द्धशाणं द्विशाणम् ॥
एलाजातीफलाख्यं त्रितिलविधिना शुद्धगन्धाश्मकोल
कोलार्द्धं पारदस्य प्रतिपदविहितं पिष्टमेकत्र मिश्रम् ।
पानीयेणैव कार्य्याः परिणतचणकास्विन्नतुल्याश्च वट्यः
प्रातः खाद्याश्च तस्तदनु च कियच्छृङ्गवेरं सपर्णम् ॥
पानीयं पीतमन्ते ध्रुवमपहरति चिप्रमादौ विकारान्
कोष्ठे दुष्टाग्निजातान् ज्वरमुदररुजो राजयक्ष्मक्षयश्च ।
कासं श्वासं सशोथं नयनपरिभवं मेहमेदो विकारान् ॥
छर्द्दिं शूलाम्लपित्तं व्रणमपि महतीं गुल्मजालं विशालम् ।
पाण्डुत्वं रक्तपित्तं गरगरलगदान् पीनसान् प्लीहरोगान्
हन्यादामानिलोत्थान् कफपवनकृतान् पित्तरोगानशेषान्
वन्ध्या वृष्यश्च भाग्यस्तरुणतरकरः सर्वरोगे प्रशस्तः
पथ्यं मांसैश्च यूषैर्घृतपरिललितैर्गव्यदुग्धैश्च भूयः ॥
भोज्यं मिष्टं यथेष्टं ललितललनया दीयमानं मुदाय
शृङ्गाराभ्रेण कामी युवतिजनशताभोगयोगात्तुष्टः ॥
वर्ज्यं शाकाम्लमादौ दिनकतिचिदथ स्वेच्छया भोज्यमन्यद्-
दीर्घायुः कामसूर्त्तिर्गतवलिपलितो मानवोऽस्य प्रसादात्

वसन्ततिलकरसः ।

हेम्नो भस्मकतोलकं घनं द्विगुणितं लौहास्त्रयः परदा-

स्त्वारोऽनियतन्तु वज्रयुगलञ्चैकीकृतं मर्दयेत्।
मुक्ताविद्रुमयो रसेन समता गांद्रवासेक्षुणा
सर्वं वन्यकरीषकेण सुदृढ़ं तप्तं पचेत्सप्तधा॥
कस्तूरी घनसारमर्दितरसः पश्चात्सुसिद्धो भवेत्
कासश्वाससपित्तवातकफजित्पाण्डुक्षयादीन् हरेत्
शूलादिं ग्रहणीं विषादि हरणं मेहाश्मरी विंशतिम्
हृद्रोगापहरं ज्वरादिशमनं वृष्यं वयोवर्द्धनम्।
श्रेष्ठं पुष्टिकरं वसन्ततिलकं मृत्युञ्जयेनोदितम्॥

## चन्दनाद्यं तैलम्।

चन्दनागुरुतालीश मञ्जिष्ठा नखपद्मकम्।
मुस्तकञ्च शटीलाक्षा हरिद्रा रक्तचन्दनम्॥
एषां प्रतिपलैश्चूर्णैस्तैलार्द्धपात्रकं पचेत्।
भार्गी वासा कण्टकारी वाट्यालकगुडूचिकाः॥
एषां शतपले क्वाथ्ये समभागे जडीकृते।
पक्वा तैलं प्रदातव्यं राजयक्ष्मविनाशनम्॥
कासघ्नं गरदोषघ्नं बलवर्णाग्निवर्द्धनम्।
पापालक्ष्मी प्रशमनं ग्रहदोषविनाशनम॥
आदौ कल्कं प्रदातव्यं गन्धद्रव्यं ततः परम्।
तैलमत्ताय्यै दातव्यं शिह्लकं कुङ्कुमं नखम्॥
गन्धचन्दनकर्पूरमेलावीजं लवङ्गकम्॥

## वासाचन्दनाद्यं तैलम्।

चन्दनं रेणुका पूतिर्हयगन्धा प्रसारणी।
त्रिसुगन्धि कणामूलं नागकेशरमेव च॥

मेदे द्वे च त्रिकटुकं रास्ना मधुकशैलजम्।
शठी कुष्ठ देवदारु वनिता च विभितकम्॥
एतेषां पलिकैर्भागैः पचेत्तैलाढ़कं भिषक्।
वासायाश्च पलशतं जलद्रोणे विपाचयेत्॥
लाक्षारसाढ़कञ्चैव तथैव दधिमस्तुकम्।
चन्दनञ्चामृता भार्गी दशमूलं निदिग्धिका॥
एतेषां त्रिंशतिपलं जलद्रोणे विपाचयेत्।
पादशेषे स्थिते क्वाथे तैलं तेनैव साधयेत्॥
कासान् ज्वरान् रक्तपित्तं पाण्डुरोगं हलीमकम्।
कामलाञ्च चतक्षीणं राजयक्ष्माणमेव च॥
श्वासान् पञ्चविधान् हन्ति बलवर्णाग्निपुष्टिकृत्।
तैलं वासाचन्दनादिकृष्णात्रेयेण भाषितम्॥

इति भैषज्यरत्नावल्यां कासाधिकारः समाप्तः।

# अथ हिक्काश्वासाधिकारः।



हिक्का श्वासातुरे पूर्वं तैलाक्ते स्वेद इष्यते।
स्निग्धैर्लवणयोगैश्च मृदुवातानुलोमनम्॥
ऊर्द्धाधः शोधनं शक्ते दुर्बले शमनं मतम्॥

कोलमज्जाञ्जनं लाजा तिक्ता काञ्चनगैरिकम्।
कृष्णाधात्री सिताशुण्ठी काशीशं दधिनाम च॥
पाटल्याः सफलं पुष्पं कृष्णाखर्ज्जूरमुस्तकम्।
षड़ेते पादिका लेह्या हिक्काघ्ना मधुसंयुता॥
मधुकं मधुसंयुक्तं पिप्पली शर्कराविता।
नागरं गुडसंयुक्तं हिक्काघ्नं लावणत्रयम्॥
स्तन्येन मक्षिकाविष्ठा नस्यं बालक्तकाम्बुना।
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम्॥
मधुसौवर्च्चलोपेतं मातुलुङ्गरसं पिबेत्।
हिक्कार्त्तस्य पयश्चाग हितं नागरसाधितम्॥
अप्यसाध्यां नयत्यस्तं हिक्कां क्षौद्रविलेहनम्।
सद्य एव महारोगः काशमूलभवं रजः॥
माषचर्णभवो धूमो हिक्कां हन्ति न संशयः।
असाध्यां नाशयेद्धिक्कां सितयेलाभवं रजः॥
शर्करा मरिचचूर्णं लीढ़ं मधुयुतं मुहुः।
निहन्ति प्रबलां हिक्कामसाध्यामपि देहिनाम्॥
हिक्काघ्नः कदलीमूलरसः पेयः सशर्करः।
कृष्णामलकशुण्ठीनां चूर्णं मधुसिताघृतम्।
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवर्हणम्॥
हिक्कां हरति प्रबलां श्वासमतिप्रबलं जयति।
शिखिपुच्छभस्मपिप्पलीचूर्णं मधुमिश्रितं लीढ़म्।
अभया नागरकल्कं पौष्करयावशूकमरिचकल्कं वा।
तोयेनोष्णेन पिबेच्छ्वासी हिक्की च तच्छान्त्यै॥
कषं कलिङ्गचर्णं लीढ़ं चाम्लमिश्रितं मधुना।

अचिराद्धरति श्वासं प्रबलामूर्द्धहिक्काञ्च ॥
कनकस्य फलं शाखां पत्रं संकुटयं यत्नतः।
शोषयित्वा च तद्धूमपानात् श्वासो विनश्यति ॥

हरिद्रादिचूर्णम्।

हरिद्रां मरिचं द्राक्षां गुड़ं रास्नां कणां शठीम्।
जह्यात्तैलेन विलिहन् श्वासान् प्राणहरानपि ॥
गुड़ं कटुकतैलेन मिश्रयित्वा समं लिहेत्।
त्रिसप्ताहप्रयोगेण श्वासं निर्म्मूलतो जयेत् ॥
बिल्वाटरूषदलवारिसमूलशुक्ल-
दण्डोत्पलोद्दलजलं कटुतैलमिश्रम्।
भार्गी गुड़ो यदि च तत्र हतप्रभाव-
स्तं श्वासमाशु विनिहन्ति महाप्रभावम् ॥
बिल्ववासकयोः पत्रस्य शुक्लदण्डोत्पलपत्रस्य च स्वरसः कटुतैलेन पेयः।
कुष्माण्डकानाञ्चूर्णन्तु पेयं कोष्णेन वारिणा।
शीघ्रं प्रशमयेच्छ्वासं कासञ्चैव सुदारुणम् ॥
कृष्णा सैन्धवचूर्णं स्वरसेन शृङ्गवेरस्य।
यो लेढि शमनकाले स जयति समाहृतः श्वासान् ॥
गन्धकं मरिचं साज्यं श्वासकासक्षयापहम्।
गन्धकं घृतयोगेन श्वासकासक्षयापहम्।

शृङ्गयादिचूर्णम्।

शृङ्गीकटुत्रयफलत्रयकण्टकारी-
भार्गीसपुष्करजटालवणानि पञ्च।

चूर्णं पिवेदृशिशिरेण जलेन हिक्का-
श्वासोर्द्ध्ववातकसनारुचि पीनसेषु ॥

भार्गीगुड़ः।

शतं संगृह्य भार्ग्यास्तु दशमूल्यास्तथा शतम्।
शतं हरितकीनाञ्च पचेत्तोये चतुर्गुणे ॥
पादावशेषे तस्मिंस्तु रसे वस्त्रं परिस्तुते।
आलोड्य च तुलां पूतां गुड़स्य त्वभयां ततः ॥
पुनः पचेन्मृदावग्नौ यावल्लेहत्वमागतम्।
शीते च मधुनश्चात्र षट्पलानि प्रदापयेत् ॥
त्रिकटु त्रिसुगन्धञ्च पलिकानि पृथक् पृथक्।
कर्षद्वयं यवक्षारं सञ्चूर्ण्य प्रक्षिपेत्ततः ॥
भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत् ॥
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा।
स्वरवर्णप्रदोह्येष जठराग्नेश्च दीपनः ॥
पलाल्लेखागते माने न द्वैगुण्यमिहेष्यते।
हरीतकी शतस्यात्र प्रस्थत्वादाढ़कं जलम् ॥

शृङ्गीगुड़घृतम्।

कण्टकारीद्वयं वासामृता पञ्चपलं पृथक्।
शतावर्य्या पञ्चदशभार्गी दशपलानि च ॥
गोक्षुरं पिप्पलीमूलं पृथक्पलसमन्वितम्।
पाटला त्रिपलञ्चैव चतुर्गुणजले पचेत् ॥
चतुर्भागावशिष्टन्तु कषायमवतारयेत्।
पुरातनगुड़स्यात्र पलानि दश दापयेत् ॥

घृतस्य पञ्च दत्त्वा च दत्त्वा दशपलं पयः।
सर्वमेकीकृतं पक्त्वा चूर्णमेषां विनिःक्षिपेत्॥
शृङ्गी द्वितोलकं जातीफलं पत्रं त्रितोलकम्।
चतुस्तोलं लवङ्गञ्च तुगाक्षीरी पृथक् पृथक्॥
गुड़त्वगेले च तथा तोलकद्वयमाषके।
कुष्ठतोलचतुष्कञ्च शुण्ठ्या तोलकसप्तकम्॥
पिप्पल्याः पलमेकञ्च तालीशं तोलकत्रयम्।
जातीकोषं तोलकैकं शीते च मधुनः पलम्॥
ततः खादेच्च कर्षकमनुपानविधिं शृणु।
काष्ठमार्ज्जारिकाचूर्णं मरिचं तच्चतुर्गुणम्॥
एकीकृत्य वटीं यत्नात् कुर्य्यान्माषमितां भिषक्।
तासामेकां चर्वयित्वा पिवेदनु जलं कियत्॥
शृङ्गीगुड़घृतं नाम सर्वरोगहरं परम्।
अपि वैद्यशतैस्त्यक्तं श्वासं हन्ति सुदारुणम्॥
कासं पञ्चविधं हन्ति विविधोपद्रवान्वितम्।
रक्तपित्तं क्षयञ्चैव स्वरभङ्गमरोचकम्॥
विशेषाच्चिरकालोत्थं श्वासं हन्ति सुदुस्तरम्॥

## भार्गीशर्करा।

भार्ग्याः शतार्द्धं वासायाः कण्टकार्य्याश्च पाचयेत्।
तुलामितं जलं दत्त्वा निशाचरचतुष्टयम्॥
जलाढ़के पचेत्तेन चतुर्थमवशेषयेत्।
वस्त्रपूतञ्च तत्सर्वं सिताप्रस्थं ततः क्षिपेत्॥
उष्णेऽवतारिते तत्र चूर्णानीमानि दापयेत्।

त्रिकटु त्रिफला मुस्तं तालीशं नागकेशरम्।
भार्गी वचा श्वदंष्ट्रा च त्वगेला पत्रजीरकम्॥
यमानी चाजमोदा च वांशी कौलत्थजं रजः॥
कट्फलं पौष्करं शृङ्गी कोलमात्रं पिबेत्ततः।
हन्ति पञ्चविधं कासं श्वासमेव सुदारुणम्॥
यक्ष्माणं हन्ति हिक्काञ्च ज्वरं जीर्णं व्यपोहति
रोगानेतान्निहन्त्याशु बलपुष्ट्यग्निवर्द्धनम्॥

## डामरेश्वराभ्रम्।

मेचकं पलमितं मृतमभ्रं ब्रह्मयष्टिकनकामृतवासाः।
कासमर्दवननिम्बकचव्यं ग्रन्थिकं दहनमूलसमेतम्॥
एकशश्च पलिकैरिह सत्त्वैर्मर्दितं सुवलितं गुरुहिक्काम्।
श्वासकासमुदरं चिरमेहान् पाण्डुगदयकृतं गलरोगम्॥
शोथमोहनयनास्यजरोगं यक्ष्मपीनसगरं बलसादम्।
गण्डमण्डलवमिभ्रमिदाहं प्लीहशूलविषमज्वरकृच्छ्रम्॥
हन्ति वातकफपित्तमशेषं डामरेश्वरमिदं महदभ्रम्।
हिक्कायां श्वासे च प्रशस्तम्॥

## महाश्वासारिलौहम्।

कर्षद्वयं लौहचूर्णं कर्षार्द्धमभ्रमेव च।
सिताकर्षद्वयञ्चैव मधु कर्षद्वयं तथा॥
त्रिफला मधुकं द्राक्षा कणाकोलास्थिवंशजा।
तालीशपत्रं वैड़ङ्गमेलापुष्करकेशरम्॥
एतानि सूक्ष्मचूर्णानि कर्षार्द्धञ्च समांशिकम्।
लौहे च लौहदण्डेन मर्दयेत् प्रहरद्वयम्॥

ततो मात्रां लिहेत् चोर्द्धे बुद्धा दोषबलाबलम्।
इदं श्वःसारिलौहञ्च महाश्वास विनाशयेत्॥
कासं पञ्चविधञ्चैव रक्तपित्तं सुदारुणम्।
एकजं द्वन्दजञ्चैव तथैव सान्निपातिकम्॥
निहन्ति नात्रसन्देहो भास्करस्तिमिरं यथा॥

पिप्पल्याद्यं लौहम्।

पिप्पल्यामलकौ द्राक्षा,कोलास्थि मधुशर्करा।
विडङ्गपुष्करैर्युक्तं लौह हन्ति सुदुस्तराम्॥
हिक्कां छर्दिं महाश्वासं चिरात्रेण न संशयः।
सर्वचूर्णसमं लौहम् हिक्कायामतिप्रशस्तम्।

श्वासकुठारोरसः।

रसं गन्धं विषं टङ्कं शिलोषणकटुत्रिकम्।
सर्वं समद्यं दातव्यो रसः श्वासकुठारकः॥
वातश्लेष्ममुद्भूतं कासं श्वासं स्वरक्षयम्।
नाशयेन्नात्र सन्देहो वृक्षमिन्द्राशनिर्यथा॥
अत्र मरिचस्य भागद्वयं पुनरुक्तत्वात् मात्रारक्तिमिता।
वृद्धवैद्योपदेशात् आर्द्रकरसानुपानम्॥

तन्त्रान्तरोक्तः श्वासकुठारो रसः।

रसं विषं समं गन्धं टङ्कनं समनःशिलम्।
एतानि समभागानि मरिचञ्चाष्टटङ्कनात्।
टङ्कत्रट्कं द्विकटुकं खल्ले कृत्वा विचूर्णयेत्।
रसः श्वासकुठारोऽयं विषमश्वास कासजित्॥
प्रतिश्याय' चतक्षीणमेकादशविधं क्षयम्।

हृद्रोगं पार्श्वशूलञ्च स्वरभेदञ्च दारुणम् ॥
सन्निपातं तथा,तन्द्रां प्रमेहांश्च विनाशयेत् ।
गता संज्ञा यदा पुंसां तदा नस्यं प्रदापयेत् ।
प्रापयेन्नासिकारन्ध्रे संज्ञाकारणमुत्तमम् ।
सूर्य्यावर्त्तार्द्धभेदौ च दुःसहांश्च शिरोव्यथाम् ॥
अनुपानं पर्णरसं आर्द्रकस्य रसं तथा ॥
टङ्कणादष्टगुणं मरिचम् । षड्गुणा पिप्पलीशुण्ठी च ।

## श्वासभैरवोरसः ।

रसं गन्धं विषं व्योषं मरिचञ्चव्यचित्रकम् ।
आर्द्रकस्य रसेनैव संमर्द्य वटिकां ततः ।
गुञ्जाद्वयप्रमाणेन खादेत्तोयानुपानतः ।
स्वरभेदं निहन्त्याशु श्वासं कासं सुदुर्जयम ।

व्योषस्थाने टङ्कनमिति कौमुद्याम् । अत्रापिमरिचस्य भागद्वयम् ।

## सूर्य्यावर्त्तरसः ।

सूतार्द्धौ गन्धको मर्द्यौमासैकं कन्यकाद्रवैः ।
द्वयोस्तुल्यं ताम्रपात्रं पूर्वकल्केन लेपयेत् ॥
दिनैकं वालुकायन्त्रे पाच्यमादाय चूर्णयेत् ।
सूर्य्यावर्त्तरसो ह्येष द्विगुञ्जः श्वासजिद्भवेत् ।
इन्द्रवारुणिकामूलं देवदारु कटुत्रयम् ।
शर्करा सहितं खादेदूर्द्ध्वश्वास निवृत्तये ॥
एतेषां चूर्णं यथाबलं लेह्यं कस्यचिन्मतेक्वाथः ।

श्वासचिन्तामणिः ।

हिकर्षं लौहचूर्णस्य तदर्द्धं गन्धमभ्रकम् ।
तदर्द्धं पारदं ताप्यं पारदार्द्धेन मौक्तिकम् ॥
शाणमानं हेमचूर्णं सर्वं संमर्द्य ततः ।
कण्ठकारीरसैश्चापि शृङ्गवेररसैस्तथा ॥
छागीक्षीरेण मधुकैः क्रमेण मतिमान् भिषक्
गुञ्जाचतुष्टयञ्चास्य विभितकसमन्वितम ॥
भक्षयेत् श्वासकासार्त्तोराजयक्ष्मनिपीड़ितः ॥

बृहच्चन्दनादितैलम् ।

चन्दनाम्बुनखं वाप्यं यष्टीशैलेयपद्मकम् ।
मञ्जिष्ठासरलं दारु शव्येलापूतिकेशरम्॥
पत्रं तैलं मुरामांसी कक्कोलं वनिताम्बुदम् ।
हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम् ॥
त्वग्रेणु नलिकाश्चेभिस्तैलं मस्तु चतुर्गुणम् ।
लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत् ।
रक्तपित्तक्षतक्षीण श्वासकासविनाशनम् ।
आयुः पुष्टिकरञ्चैव वशीकरणमुत्तमम् ॥

लाक्षाप्रस्थेऽष्टगुणजले दत्त्वा पादावशिष्टं तैलसमो लाक्षारसो ग्राह्यः । अथवा षड़्गुणजलेन एकविंशतिवारान् गालयित्वा रसो ग्राह्यः ।

कनकासवः ।

संक्षुद्य कनकं शाखामूलपत्रफलैः सह ।
ततश्चतुःपलं ग्राह्यं वृषमूलत्वचस्तथा ॥

मधुकं मागधीव्याघ्री केशरं विश्वभेषजम् ॥
भार्गीं तालीशपत्रञ्च सूक्ष्मैलैषां पलद्वयम् ॥
[illegible]टञ्च धातकी प्रस्थं द्राक्षायाः पलविंशतिम्।
[illegible]द्रोणद्वयं दत्त्वा शर्करायास्तुलां तथा।
[illegible]द्रस्यार्द्ध तुलाञ्चापि सर्वं संमिश्र्य यत्नतः।
भाण्डे निक्षिप्य चात्रैव निदध्यान्मासमात्रकम् ॥
[illegible]हन्ति निखिलान् श्वासान् कासं यक्ष्माणमेव च।
[illegible]क्षतक्षीणं ज्वरं जीर्णं रक्तपित्तमुरःक्षतम् ॥

[illegible]ति भैषज्यरत्नावल्यां हिक्काश्वासाधिकारः समाप्तः।



## अथ स्वरभेदाधिकारः।

[illegible] सलवणं तैलं पित्ते सर्पिः समाक्षिकम्।
[illegible] सक्षारकटुकं क्षौद्रं कवड़ इष्यते ॥
[illegible] तालुनि जिह्वायां दन्तमूलेषु चाश्रितः।
तेन निष्क्रष्यते श्लेष्मा स्वरश्चास्य प्रसीदति ॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते ॥
क्षयजे सर्वजे चापि प्रत्याख्याय चरेत् क्रियाम्

### चव्यादिचूर्णम्।

चव्याम्लवेतसकटुत्रिकतिन्तिड़ीक-
तालीशजीरकतुगा दहनैः समांशैः।

चूर्णं गुडैर्विमृदितं त्रिसुगन्धियुक्तं
वैस्वर्य्य पीनसकफारुचिषु प्रशस्तम्॥
अजमोदां निशां धात्रीं क्षारं वह्निं विचूर्णयेत्
मधुसर्पिर्युतं लीढ्वा स्वरभेदमपोहति॥
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम्।
स्वरोपघाते कासे च लेहमेतत् प्रयोजयेत्॥
पिप्पली पिप्पलीमूलं मरिचं विश्वभेषजम्।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसंचये॥

व्याघ्रीघृतम्।

व्याघ्रीस्वरसविपक्वं रास्ना वाट्यालगोक्षुर व्योषैः
सर्पिः स्वरोपघातं हन्यात्कासञ्च पञ्चविधम्॥
शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम्॥

सारस्वतघृतम्।

(ब्राह्मीघृतम्।)

समूलपत्रमादाय ब्राह्मीं प्रक्षाल्य वारिणा।
उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत्॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत्।
औषधानि तु पेष्याणि तानीमानि प्रदापयेत्॥
हरिद्रा मालतीकुष्ठं त्रिवृता सहरीतकी।
एतेषां पलिकान् भागान् शेषाणि कार्षिकाणि च

पिप्पल्योऽथ विडङ्गानि सैन्धवं शर्करा वचा।
सममेतत् समालोड्य शनैर्मृदग्निना पचेत्॥
एतत्प्राशितमात्रेण वाग्विशुद्धिः प्रजायते।
सप्तराच प्रयोगेण किन्नरैः सह गीयते॥
अर्द्धमासप्रयोगेण सोमराजीवपुर्भवेत्।
मासमात्रप्रयोगेण श्रुतमात्रन्तु धारयेत्॥
हन्त्यष्टादशकुष्ठानि अर्शांसि विविधानि च।
पञ्चगुल्मान् प्रमेहांश्च कासं पञ्चविधं तथा॥
वन्ध्यानामपि नारीणां नराणामल्परेतसाम्।
घृतं सारस्वतं नाम बलवर्णाग्निवर्द्धनम्॥

इदानीन्तनैरिदं ब्राह्मीघृतमुच्यते।

श्वासभैरवरसस्तु भैरवरसनामा स्वरभेदे रसकौमुद्यां माधवेन लिखितः। तत्र व्योषस्थानेटङ्गनमिति पाठः॥

## त्र्यम्बकाभ्रम्।

अभ्रं मेचकमारितं पलमितं व्याघ्रीबलागोक्षुरं
रम्भापिप्पलिमूल भृङ्गवृषकाः पत्रं तथा वादरम्।
भार्गीरास्त्र गुडूचिकाः पृथगतः सत्वैः पलांशैर्युतं
संमर्द्याति मनोरमं सुवलितं कृत्वा यदा सेवितम्॥
वातोत्थं कफपित्तजं स्वरगतं यच्च त्रिदोषात्मक-
मत्युच्चैर्वदतो हतं बहुविधं पानीयदोषोद्भवम्।
कासं श्वासमुरोग्रहं सयक्ष्मतं हिक्कां तृषां कामला-
मर्शांसि ग्रहणीं ज्वरं बहुविधं शोथं चयश्चार्वुदम्॥
हन्ति त्र्यम्बकमभ्रमङ्गततरं ख्यातिहृष्यं परं

बङ्कैर्बुद्धिकरं रसायनवरं सर्वामयध्वंसि तत्।

इति भैषज्यरत्नावल्यां स्वरभेदाधिकारः समाप्तः।



## अथ हृद्रोगाद्यधिकारः।



वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम्।
द्विपञ्चमूलीक्वाथेन सस्नेहलवणेन च॥

मदनादिचूर्णयुक्तेन द्विपञ्चमूलीक्वाथेन वमनं कर्त्तव्यम् अत्र विरेचनमपि कर्त्तव्यं लङ्घनञ्च यदुक्तं हृद्रोगिणं स्नेहयित्वा वामयेत् स्रंसयेत्तथा। लङ्घयेदविरोधश्च हृद्रोगं वातिकं विना।

पिप्पल्येला वचा हिङ्गु यवक्षारोऽथ सैन्धवम्।
सौवर्चलमथो शुण्ठी अजमोदा च चूर्णितम्॥
फलधान्याम्लकौलत्थ दधिमद्यासवादिभिः।
पाययेच्छुद्धदेहञ्च स्नेहेनान्यतमेन वा॥
नागरं वा पिवेदुष्णं कषायञ्चाग्निवर्द्धनम्।
कासश्वासानिलहरं शूलहृद्रोगनाशनम्॥
श्रीपर्णीमधुकक्षौद्रसितागुड़जलैर्वमेत्।
पित्तोपसृष्टे हृदये सेवेन्मधुरकैः शृतम्।
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान्॥

शीताः प्रदेहाः परिसेचनानि
तथा विरेको हृदि पित्तदुष्टे ।
द्राक्षासिता क्षौद्रपरूषकैः स्या-
च्छुद्धे च पित्तापहमन्नपानम् ॥
पिष्ट्वा पिबेद्वापि सिताजलेन
यष्ट्याह्वयं तिक्तकरोहिणीञ्च ।
अर्जुनस्य त्वचासिद्धं क्षीरं योज्यं हृदामये ।
सितया पञ्चमूल्या वा बलया मधुकेन वा ॥
घृतेन दुग्धेन गुडाम्भसा वा
पिबन्ति चूर्णं ककुभत्वचो ये ।
हृद्रोगजीर्णज्वररक्तपित्तं
हत्वा भवेयुश्चिरजीविनस्ते ॥
वचानिम्बकषायाभ्यां वान्तं हृदि कफोत्थिते ।
वातहृद्रोगहृच्चूर्णं पिप्पल्यादिञ्च पाययेत् ॥
पिप्पल्याद्विचूर्णं पिप्पल्येला वचा हिङ्गु इत्यादि यदुक्तम् ।
त्रिदोषजे लङ्घनमादितः स्या-
दन्नञ्च सर्वेषु हितं विधेयम् ।
हीनातिमध्यत्वमवेक्ष्य चैव
कार्य्यं त्रयाणामपि कर्म्म शस्तम् ॥
चूर्णं पुष्करजं लिह्यान्माक्षिकेण समायुतम् ।
हृच्छूलश्वासकासघ्नं क्षयहिक्कानिवारणम् ।
तैलाज्य गुडविपक्वं चूर्णं गोधूम पार्थजं वापि ।

पिबति पयोऽनु च स भवेज्जित
सकलश्वासकासहृदामयः पुरुषः॥
पार्थोऽर्जुनः पार्थगोधूमाभ्यां समो गुड़ः तैलाज्ये अल्पमात्रया देये किञ्चिज्जलं दत्त्वा पिबेत् वा शब्दः पूर्वयोगापेक्षया।

गोधूमककुभचूर्णं छागपयो गव्यसर्पिषा पक्वम्।
मधुशर्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम्॥
मूलं नागबलायास्तु चूर्णं दुग्धेन पाययेत्।
हृद्रोगश्वासकासघ्नं ककुभस्य च वल्कलम्।
रसायनं परं बल्यं वातजिच्मासयोजितम्।
संवत्सरप्रयोगेण जीवेद्वर्षशतं ध्रुवम्॥

हिङ्गूग्रगन्धा विड़विश्वकृष्णा-
कुष्ठाभयाचित्रकयावशूकम्।
पिबेत्ससौवर्चलपुष्कराढ्यं
यवाम्भसा शूलहृदामयघ्नम्॥

दशमूलकषायस्तु लवणक्षारयोजितः।
कासं श्वासञ्च हृद्रोगं गुल्मं शूलञ्च नाशयेत्॥
पाठां वचां यवक्षारमभयां चाम्लवेतसम्।
दुरालभां चित्रकञ्च त्र्यूषणञ्च फलत्रयम्॥
शटीं पुष्करमूलञ्च तिन्तिड़ीकं सदाड़िमम्।
मातुलुङ्गस्य मूलानि श्लक्ष्णचूर्णानि कारयेत्॥
सुखोदकेन मद्यैर्वा घृतान्येतानि पाययेत्।
अर्शः शूलञ्च हृद्रोगं गुल्मञ्चाशु नियच्छति॥
पुटदग्धमश्मपिष्टं हरिणविषाणां सपिषा पिबतः।

हृत्पृष्ठशूलमुपशममुपयात्यचिरेण कष्टमपि ॥
क्रिमि हृद्रोगिणं स्निग्धं भोजयेत्पिशितौदनम्।
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥
सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः।
विडङ्ग गाढ़ैर्धान्याम्लं पाययेद्धितमुत्तमम् ॥

अत्र पिशितौदनं क्रिमीणामुत् क्लेशार्थं पिशितप्रधानमोदनं पिशितौदनं दध्ना पललेन च संयुक्तं त्र्यहं भोजयेत्पललं पिष्टकमितिजेज्जड़: तिल चूर्णमिति चक्रः अन्ये तु शुष्कमांसचूर्ण माहुः। एते क्रिमिघातकाः। सुगन्धिभिःसलवणैर्योगैरिति विरेचनयोगैः चातुर्जातेनसुगन्धीकरणञ्च वान्तिशङ्कानिरासार्थं धान्याम्लमनुपेयम्।

क्रिमिजे च पिबेन्मूत्रं विड़ङ्गामय संयुतम्।
हृदिस्थिताः पतन्त्येवमधस्तात् क्रिमयान्नृणाम् ॥
यवान्नं वितरेच्चास्मै सविड़ङ्ग मतः परम् ॥

### वल्लभकं घृतम्।

मुख्यं शतार्द्धञ्च हरीतकीनां
सौवर्चलस्यापि पलद्वयञ्च।
पक्वं घृतं वल्लभकेति नाम्ना
हृत्पार्श्व शूलोदर मारुतघ्नम् ॥

### श्वदंष्ट्राद्यं घृतम्।

श्वदंष्ट्रोशीर मञ्जिष्ठा बला काश्मर्य्य कत्तृणम्।
दर्भमूलं पृथक् पर्णी/पलाशर्षभकौ स्थिरा ॥
पलिकां साधयेत्तेषां रसे क्षीरे चतुर्गुणे।

कल्कैःश्वगुप्तर्षभक मेदाजीवन्ती जीरकैः॥
शतावर्य्यृद्धि मृद्वीका शर्करा श्रावणी विसैः।
प्रस्थःसिद्धो घृतादापि पित्तहृद्रोगशूलनुत्।
मूत्रकृच्छ्र प्रमेहार्शः श्वास काम क्षयापहः।
धनुःस्त्रीमद्य भाराध्व खिन्नानां बलमांसदः॥

बलाद्यं घृतम्।

घृतंबला नागबलार्ज्जुनाम्बु
सिद्धं सयष्टीमधु कल्कपादम्।
हृद्रोग शूलक्षत रक्तपित्त
कासानिलासृक् शमयत्युदीर्णम्॥

अर्ज्जुनघृतम्।

पार्थस्य कल्कस्वरसेन सिद्धं
शस्तं घृतं सर्व्वहृदामयेषु॥

ककुभादिचूर्णम्।

ककुभत्वग्वचा रास्ना बला नागबलाभया।
शटीपुष्करमूलञ्च पिप्पली विश्वभेषजम्॥
सर्व्वाण्येतानि संचूर्ण्य सर्पिषा शाणमात्रया।
भक्षयेत्प्रातरुत्थाय सर्व्वहृद्रोग शान्तये॥

कल्याणसुन्दरोरसः।

सिन्दुरमभ्रं तारञ्च ताम्रं हेम च हिङ्गुलम्।
सर्व्वं खल्वतले क्षिप्त्वा मर्द्दयेद् वह्निवारिणा॥
हस्तिशुण्डाम्भसा पश्चाद्भावयित्वा च सप्तधा।
गुञ्जामात्रां वटीं कृत्वा कोष्णतोयेन दापयेत्॥

हरत्यौयश्च हृद्रोगं वक्षोवात सुरोऽस्रकम् ।
फोपफुसान् हन्ति रोगांश्च रसः कल्याणसुन्दरः ॥

## चिन्तामणिरसः ।

पारदं गन्धकञ्चाभ्रं लौहं वङ्गं शिलाजतु ।
समं समं गृहित्वा च स्वर्णं सूताङ्घ्रिसम्मितम् ॥
स्वर्णस्य द्विगुणं रौप्यं सर्वमेकत्र मर्द्दयेत् ।
चित्रकस्य द्रवेणापि भृङ्गराजाम्भसा ततः ॥
पार्थस्याथ कषायेण सप्तकृत्वोविभावयेत् ।
ततो गुञ्जामिताः कुर्य्याद्वटीश्छायाप्रशोषिताः ॥
एकैकां दापयेद्रासं गोधूमक्वाथवारिणा ।
हृद्रोगान्निखिलान् हन्ति व्याधीन् फुपफुसजानपि ॥
प्रमेहान् विंशतिं श्वासान् कासानपि सुदुस्तरान् ।
बलपुष्टिकरो ह्यो रसश्चिन्तामणिः स्मृतः ॥

## प्रभाकरवटी ।

माक्षिकं लौहमभ्रञ्च तुगाक्षीरीं शिलाजतु ।
क्षिप्ता खल्लोदरे पश्चाद्भावयेत्पार्थवारिणा ॥
वल्लद्वयमितां कुर्य्याद्वटीं छायाविशोषिताम् ।
प्रभाकरवटी सेयं हृद्रोगान्निखिलान् जयेत् ॥

## त्रिनेत्ररसः ।

स्वर्णाभ्रलौहवङ्गानां रस गन्धकयोरपि ।
वैक्रान्तस्य च संगृह्य भागां स्तोलक सम्मितान् ॥
कर्पूरसलिलेनाथ भावयित्वा यथाविधि ।
रक्तिकैकप्रमाणेन विदध्याद्वटिकास्ततः ॥

अयं विश्वेश्वरोनामरसः फुप्फुसजान् गदान् ।
हृद्रोगांश्च जयेत्सर्वान् संशयोऽत्र न विद्यते ॥

हृदयार्णवरसः ।

सूतार्कगन्धकं क्वाथे वरायामर्दयेद्दिनम् ।
काकमाच्या वटीं कृत्वा चणमात्रांश्च भक्षयेत् ।
हृदयार्णवनामायं हृद्रोगदलनो रसः ॥

शङ्करवटी ।

रवस्य भागाश्चत्वारो बलेरष्टौ तथा मताः ।
अयो लौहस्य नागस्य द्वावित्यत्र मर्दयेत् ॥
भावयेत्काकमाच्याश्च चित्रकस्यार्द्रकस्य च ।
स्वरसेन जयन्त्याश्च वासाया विल्वपार्थयोः ॥
ततो गुञ्जाद्वयमिता विदध्याद्वटिका भिषक् ।
एकैकां दापयेदासामोषदुष्णेन वारिणा ॥
जयेदियं फुप्फुसजान् रोगान् हृदयसम्भवान् ।
जीर्णज्वरं तथा घोरं प्रमेहानपि विंशतिम् ॥
कासश्वासामवातांश्च ग्रहणीमपि दुस्तराम् ।
वटी श्रीशङ्करप्रोक्ता बलपुष्टिविवर्द्धिनी ।

पार्थाद्यरिष्टः ।

पार्थत्वचस्तुलामेकां मृद्वीकार्द्धतुलां तथा ।
भागं मधुक पुष्पस्य पलविंशति सम्मितम् ॥
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणमेवावशेषयेत् ।
धातक्या विंशतिपलं गुड़स्य च तुलां क्षिपेत् ॥

मासमात्रं स्थितोभाण्डे भवेत्पार्थाद्यरिष्टकः।
हृत्फुप्फुसगदान् सर्वान् हन्त्ययं बलवीर्य्यकृत् ॥

इति भैषज्यरत्नावल्यां हृद्रोगाद्यधिकारः समाप्तः।

## अथ वातव्याध्यधिकारः।

(वायुरोगाधिकारः।)

स्वाद्वम्ललवणैः स्निग्धैराहारैर्वातरोगिणः।
अभ्यङ्गस्नेहवस्त्यादैः सर्वानेवोपपादयेत् ॥
विशेषतस्तु कोष्ठस्थे वाते क्षीरं पिबेन्नरः।
आमाशयस्थे शुद्धस्य यथारोगहरी क्रिया ॥
आमाशयगते वाते छर्दिताय यथाक्रमम्।
रुक्षः स्वेदो लङ्घनञ्च कर्त्तव्यं वह्निदीपनम्।
पक्काशयगते वाते हितं स्नेहविरेचनम्।
कार्य्योवस्तिगते वापि विधिर्वस्तिविशोधनः।
त्वङ्मांसासृक् शिरा प्राप्ते कुर्य्याच्चासृग्विमोक्षणम् ॥

त्वक्शब्देनात्र रस इति भाःनु।

स्नेहोपनाहाग्निकर्म्म बन्धनोन्मर्दनानि च।
स्नायुसन्ध्यस्थि संप्राप्ते कुर्य्याद्वाते विचक्षणः ॥

स्वेदाभ्यङ्गावगाहांश्च हृद्यं चान्नं त्वगाश्रिते।
शीतः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम्।
विरेको मांसमेदःस्थे निरूहाः शमनानि च॥
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत्।
हृष्टोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम्।
विबद्धमार्गं शुक्रन्तु दृष्ट्वा दद्याद्विरेचनम्॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम्।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः॥
शिरोगतेऽनिले वातशिरोरोगहरी क्रिया॥
व्यादितास्ये हनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च।
प्रदेशिनीभ्याञ्चोन्नम्य चिबुकोन्नमनं हितम्॥
रसोनकल्कं नवनीतमिश्रं
खादेन्नरो योऽर्दितरोगयुक्तः।
तस्यार्दितं नाशयतीह शीघ्रं
वृन्दं घनानामिव मातरिश्वा॥
अर्दिते नवनीतेन खादेन्माषेण्डरीं नरः।
क्षीरमांसरसैर्भुक्त्वा दशमूलीरसं पिबेत्॥
स्नेहाभ्यङ्गशिरोवस्तिपाननस्यपरायणः।
अर्दितं स जयेत्सर्पिः पिबेदौत्तरभक्तिकम्॥
पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथ वा।
रूक्षः स्वेदस्तथा नस्यं मन्यास्तम्भे प्रशस्यते॥
कटुतैलेनाभ्यक्ते लिप्ते कल्केन वाजिगन्धायाः।
शाम्येद् ग्रीवास्तम्भशूलं महदप्यनायासम्॥
वातादाक्षमनोदुष्टौ स्वेहगण्डूषधारणम्।

वातघ्नैर्दंशमूल्या च नरं कुजमुपाचरेत् ॥
छे हैर्मांसरसैर्वापि प्रवृद्धं तं विवर्जयेत् ॥
आधाने लङ्घनं पाचितापश्च फलवर्त्तयः।
दीपनं पाचनञ्चैव वस्तिश्चाप्यत्र शोधनः ॥
प्रत्यष्ठीलाष्ठीलकयोरन्तर्विद्रधिगुल्मवत् ॥
तैलमेरण्डजं वापि गोमूत्रेण पिबेन्नरः।
मासमेकं प्रयोगोऽयं गृध्रस्यरुग्रहापहः ॥
शेफालिकादलक्वाथो मृद्वग्निपरिसाधितः।
दुर्वारं गृध्रसीरोगं पीतमात्रं समुद्धरेत् ॥
पिष्ट्वैरण्डफलं क्षीरे सविश्वं वा रुवोफलम् ।
पायसो भक्षितः सिद्धो गृध्रसी कटिशूलनुत् ॥
रक्तावसेचनं कार्य्यमभीक्ष्णं वातकण्टके।
पिबेदेरण्डतैलं वा दहेत् सूचीभिरेव वा ॥
खल्लयां स्निग्धाम्ललवणैः स्वेदोन्मर्द्दोपनाहनम् ।
कोलं कुलत्थाः सुरदारुरास्ना
माषातसीतैलफलानि कुष्ठम् ।
वचा शताह्वा यवचूर्णमम्ल-
मुष्णानि वातामयिनां प्रदेहः ॥
पक्षाघातं कटिहनुशिरः कर्णनासाक्षितालु-
ग्रीवा ग्रन्थि प्रबलमनिलं चार्दितं सापतानम् ।
मूत्राघातं ग्रहणि गलरुक् श्वास सर्वाङ्गकम्पं
तैलद्रोणी हरति न चिरात्काञ्जिकद्रोणिका च ॥

कल्याणलेहः।

सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजम् ।

अजाजी चाजमोदा च यष्टीमधुक सैन्धवम् ।
एतानि सूक्ष्म चूर्णानि समभागानि कारयेत् ।
तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षयेन्नरः ॥
एकविंशति रात्रेण नरः श्रुतिधरो भवेत् ।
मेघदुन्दुभि निर्घोषो मत्तकोकिल निःस्वनः ॥
जड़गद्गद मूकत्वं लेहः कल्याणको जयेत् ॥

रसोनपिण्डः ।

पलमर्द्धं पलञ्चैव रसोनस्य सुकुट्टितम् ।
हिङ्गु जीरक सिन्धूत्थसौवर्चल कटुत्रिकैः ।
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विलोड़ितम् ॥
यथाग्नि भक्षितं प्रातरुबूकाथानुपानतः ।
दिने दिने प्रयोक्तव्यं मास मेकं निरन्तरम् ।
वातरोगं निहन्त्याशु अर्दितं सापतन्त्रकम् ॥
एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे ।
ऊरुस्तम्भे च गृध्रस्यां क्रिमिदोषे विशेषतः ॥
कटि पृष्ठामयं हन्यादुदरञ्च विनाशयेत् ॥
तैलं घृतञ्चार्द्रक मातुलुङ्गी
रसं सचुक्रं सगुड़ं पिबेद्वा ।
कट्यूरुपृष्ठत्रिक गुल्मशूल-
गृध्रस्युदावर्त्त हरः प्रयोगः ॥
पञ्चमूलीवबासिद्धं चीरं वातामये हितम् ॥

त्रयोदशाङ्गगुग्गुलुः ।

आभाश्वगन्धा हपुषा गुड़ूची

शतावरी गोक्षुर वृद्धदारम्।
रास्ना शताह्वा सशटीयमानी
सनागरा चेति समैश्च चूर्णम्॥
तुल्यं भवेत्कौशिक मत्र मध्ये
देयं तथा सर्पिरथार्द्धभागम्।
सार्द्धाक्ष मात्रन्तु ततः प्रयोगात्
कृत्वानुपानं सुरयाथ यूषैः॥
मद्येन वा कोष्णजलेन वाथ
क्षीरेण वा मांस रसेन वापि।
कटिग्रहे गृध्रसि बाहुपृष्ठे
हनुग्रहे जानुनि पादयुग्मे॥
सन्धिस्थिते चास्थि गते च वाते
मज्जाश्रिते स्नायुगते च कुष्ठे।
रोगान् जयेद्वातकफानुबिद्धान्
वातेरितान् हृद्ग्रह योनिदोषान्॥
भग्नास्थिविद्धेषु च खञ्जवाते
त्रयोदशाङ्गं प्रवदन्ति सन्तः॥

गुग्गुलोरर्द्धं भागं घृतम्। वृद्ध वैद्यास्तु यावता घृतेन गुग्गुलु पिष्टं भवति तावदेव घृतं गृह्णन्ति।

वातहरतैलानां विशेषमूर्च्छाविधिः।

आम्रजम्बुकपित्थानां वीजपूरकविल्वयोः।
गन्धकर्म्मणि सर्वत्र पत्राणि पञ्चपल्लवम्॥
पञ्चपल्लव तोयेन गन्धानां क्षालनं मतम्॥

### अथ गन्धद्रव्य कथनम।

एलालवङ्गकुङ्कुमागुरुमुराकक्कोलमांसी शटी
श्रीवासच्छदग्रन्थिपर्णशशभृत् चौचोग्रजःश्रीरकम्
कस्तूरीनखपूतितैलजलमुक्स्तैशैलवङ्गादिकं
गन्धद्रव्यमिदं प्रदेयमखिलं श्रीविष्णुतैलादिषु॥
तन्त्रान्तरे। कुष्ठश्च नलिका पूतिरुशीरं श्वेतचन्दनम्।
जटामांसी तेजपत्रं नखी मृगमदः फलम्।
कक्कोलं कुङ्कुमं चोचं लताकस्तूरिका वचा।
सूक्ष्मैलागुरुमुस्तञ्च कर्पूरं ग्रन्थिपर्णकम्॥
श्रीवासः कुन्दुरुर्देवकुसुमं गन्धमातृका।
सिह्लको मिशिका मेथी भद्रमुस्तं तथाशटी॥
जातीकोषं शिलजञ्च देवदारु सजीरकम्।
एतानि गन्धद्रव्याणि तैलपाकेषु युक्तितः॥

### स्वल्पविष्णुतैलम्।

शालपर्णी पृश्निपर्णी बला च बहुपुत्रिका।
एरण्डस्य च मूलानि बृहत्योः पूतिकस्य च॥
गवेधुकस्य मूलानि तथा सहचरस्य च।
एतेषां पलिकैर्भागैस्तैलप्रस्थं विपाचयेत्॥
आजं वा यदि वा गव्यं क्षीरं दद्याच्चतुर्गुणम्।
अस्यतैलस्य पक्कस्य शृणु वीर्य्यमतः परम्॥
अश्वानां वातभग्नानां कुञ्जराणां तथैव च।
अपुमांश्च नरः पीत्वा निश्चयेन पुमान् भवेत्॥
हृच्छूले पार्श्वशूले च तथैवार्द्धावभेदके।

कामलापाण्डुरोगेषु शर्करास्वश्मरीषु च ॥
क्षीणेन्द्रिया नरा ये च जरया जर्ज्जरीकृताः ।
येषाञ्चैव चयो व्याधिरन्त्रवृद्धिस्तदा तथा ॥
अर्द्दितं गलगण्डञ्च वातशोणितमेव च ।
स्त्रियो या न प्रसूयन्ते तासाञ्चैव प्रदापयेत् ॥
गर्भमश्वतरी विन्द्यान्नच मृत्युवशं व्रजेत् ।
एतत्तैल वरं चैव विष्णुनापरिकीर्त्तितम् ॥

मध्यमविष्णुतैलम् ।

शतावरी चांशुमती पृश्निपर्णी शटी बला ।
एरण्डस्य च मूलानि वृहत्योः पूतिकस्य च ॥
गवेधुकस्य मूलानि तथा सहचरस्य च ।
एषां द्विपलिकान् भागान् जलद्रोणे विपाचयेत् ॥
पादशेषे च पूते च गर्भञ्चैनं समावपेत् ।
पुनर्नवा वचा दारु शताह्वा चन्दनागुरु ॥
शैलेयं तगरं कुष्ठमेला मांसी स्थिरा बला ।
अश्वाह्वा सैन्धवं रास्ना पलार्द्धानि च पेषयेत् ॥
गव्याज पयसोः प्रस्थौ द्वौ द्वावत्रप्रदापयेत् ।
शतावरीरस प्रस्थं तैल प्रस्थं विपाचयेत् ॥
अस्य तैलस्य सिद्धस्य शृणु वीर्य्यमतःपरम् ।
अश्वानां वातभग्नानां कुञ्जराणां तथा नृणाम् ॥
तैल मेतत् प्रयोक्तव्यं सर्ववात विकारनुत् ।
अपुमांश्च नरः पीत्वा निश्चयेन पुमान् भवेत् ॥
गर्भमश्वतरी विन्द्यात्किं पुनर्मानुषी तथा ।

हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम्॥
अपचीं गण्डमालाञ्च वातरक्तं गलग्रहम्।
कामलां पाण्डुरोगञ्च अश्मरीञ्चैव नाशयेत्॥
तैलमेतद्भगवता विष्णुना परिकीर्त्तितम्।
विष्णुतैलमिदं ख्यातं वातान्तकरणं शुभम्॥

गर्भः कल्कः।

## वृहद्विष्णुतैलम्

जलधरमश्वगन्धा जीवकर्षभकौ शटी।
काकोली क्षीरकाकोली जीवन्ती मधुयष्टिका॥
मधूरिका देवदारु पद्मकाष्ठञ्च शैलजम्।
मांसी चैला त्वचं कुष्ठं वचाचन्दनकुङ्कुमम्।
मञ्जिष्ठा मृगनाभिश्च श्वेतचन्दनरेणुकम्॥
पर्णीपर्णी कुन्दुखोटी ग्रन्थिकञ्च नखी तथा॥
एतेषां पलिकैर्भागैस्तैलस्यापि तथाढ़कम्।
शतावरीरससमं दुग्धञ्चापि समं पचेत्॥
विष्णुतैलमिदं श्रेष्ठं सर्ववातविकारनुत्।
जङ्घवातं तथा वातमङ्गुलिग्रहमेव च॥
शिरोमध्यगतं वातं मन्यास्तम्भं गलग्रहम्।
हन्ति नानाविधं वातं सन्धिमज्जगतं तथा॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला।
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः॥
सर्वांस्तान् नाशयत्याशु सूर्य्यस्तम इवोदितः।

## मध्यमनारायणतैलम्।

विल्वाग्निमन्थश्योनाक पाटला पारिभद्रकम्।
प्रसारण्यश्वगन्धा च वृहती कण्टकारिका॥
बला चातिबाला चैव श्वदंष्ट्रा स पुनर्नवा।
एषां दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत्॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत्।
शतपुष्पा देवदारु मांसी शैलेयकं वचा॥
चन्दनं तगरं कुष्ठमेलापर्णीचतुष्टयम्।
रास्ना तुरगगन्धा च सैन्धवं स पुनर्नवम्॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत्।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत्॥
आजं वा यदि वा गव्यं चीरं दद्याच्चतुर्गुणम्।
पाने वस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते॥
अश्वो वा वातभग्नो वा गजो वा यदि वा नरः।
पङ्गुश्च पीठसर्पी च तैलेनानेन सिध्यति॥
अधोभागे ये च वाताः शिरोमध्यगताश्च ये।
मन्यास्तम्भे हनुस्तम्भे दन्तरोगे गलग्रहे॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला।
चीणेन्द्रियाः चीणशुक्रा ज्वरचीणाश्च ये नराः॥
वधिरा लम्बजिह्वाश्च मन्दमेधस एव च।
अल्पप्रजाश्च या नारी या च गर्भं न विन्दति॥
वातार्त्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा।
एतत्तैलवरं तेषां नाम्ना नारायणं स्मृतम्॥

## महानारायणतैलम्।

विल्वाश्वगन्धा बृहती श्वदंष्ट्रा-
श्योनाकवाट्यालकपारिभद्रम्।
क्षुद्रा कठिल्लातिबलाग्निमन्थं
मूलानि चैषां सहणीयुतानाम्॥
मूलं विदध्यादथ पाटलीनां
प्रस्थं सपादं विधिनोद्धृतानाम्।
द्रोणैरपामष्टभिरेव पक्त्वा
पादावशेषेण रसेन तेन॥
तैलाढकाभ्यां सममेव दुग्ध-
माजं विदध्यादथवापि गव्यम्।
एकत्र सम्यग्विपचेत् सुबुद्धि-
र्दद्याद्रसञ्चैव शतावरीणाम्॥
तैलेन तुल्यं पुनरेव तत्र
रास्नाश्वगन्धामिषिदारुकुष्ठम्।
पर्णीचतुष्कागुरुकेशराणि
सिन्धूत्थमांसी रजनीद्वयञ्च॥
शैलेयकं चन्दनपुष्कराणि
एलाशयष्टी तगराब्दपत्रम्।
भृङ्गाष्टवर्गौ च वचा पलाशं
स्थौणेयवृश्चीरकचोरकाख्यम्।
एतैः समस्तैर्द्विपलप्रमाणै-
रालोड्य सर्वं विधिना विपक्वम्।

कर्पूरकाश्मीरमृगाण्डजानां
चूर्णीकृतानां त्रिपलप्रमाणम् ।
प्रक्षेददौर्गन्ध्यनिवारणाय
दद्यात्सुगन्धाय वदन्ति केचित् ।
नारायणं नाम महच्च तैलं
सर्वप्रकारे विधिवत्प्रयोज्यम् ।
आत्रेव पुंसां पवनार्दितानां
मेकाङ्गहीनार्दितवेपनानाम्
ये पङ्गवः पीठविसर्पिणश्च
बाधिर्य्य शुक्रक्षयपीड़िताश्च ।
मन्या हनुस्तम्भशिरोरुजार्त्ता
मुक्तामयास्ते बलवर्णयुक्ताः ।
संसेव्य तैलं सहसा भवन्ति
वन्ध्या च नारी लभते च पुत्रम् ।
वीरोपमं सर्वगुणोपपन्नं
सुमेधसं श्रीविनयान्वितञ्च ।
शाखाश्रिते कोष्ठगते च वाते
हृद्दौ विधेयं पवनार्दितानाम् ॥
जिह्वानिले दन्तगते च शूले
उन्मादकौब्जज्वरकर्षितानाम् ॥
प्राप्नोति लक्ष्मीं प्रमदाप्रियत्वं
वपुः प्रकर्षं विजयञ्च नित्यम् ॥
तैलोपसेवी जरयाभिमुक्तो
जीवेच्चिरञ्चापि भवेत् युवेव ।

देवासुरे युद्धपरे समीक्ष्य
स्नायुस्थिभङ्गानसुरैः सुरांश्च।
नारायणेनापि सुहृद्गणार्थे
स्वनामतैलं विहितञ्च तेषाम्॥

सिद्धार्थकतैलम्।

शतावरीन्तु निष्पीड्य रसं प्रस्थद्वयं हरेत्।
तिलतैलं पचेत्प्रस्थं क्षीरं दत्त्वा चतुर्गुणम्॥
शतपुष्पा देवदारु मांसी शैलेयकं बला।
चन्दनं तगरं कुष्ठमेला चांशुमती तथा॥
रास्ना तुरगगन्धा च समङ्गा शारिवाद्वयम्।
पृश्निपर्णी वचा चैव तथा गन्धर्वहस्तकम्॥
सिन्धूद्भवं समं दद्यात् विश्वभेषजमेव च।
एभिस्तैलं पचेद्धीमान् दत्त्वार्द्रकरसं समम्॥
कुब्जेन वामना ये च पङ्गुपादाश्च ये नराः।
महावातेन ये भग्ना अङ्गसङ्कुचिताश्च ये॥
तेषां हितमिदं तैलं सन्निवाते च शस्यते।
येषां शुष्यति चैकाङ्गं गतिर्येषाञ्च विह्वला॥
क्षीणेन्द्रिया नष्टशुक्रा जरया जर्जरीकृताः।
अमेधसश्च वधिरास्तेषामपि परं हितम्॥
मासमेकं पिबेद्यस्तु यौवनस्थः पुनर्भवेत्।
सिद्धार्थकमितिख्यातं नरनारीहिताय वै॥

हिमसागरतैलम्।

शतावरीरसप्रस्थे विदार्य्याः स्वरसे तथा।

कुष्माण्डकरसप्रस्थे धात्र्याश्च स्वरसे तथा ॥
शाल्मल्याः स्वरसप्रस्थे तथा गोक्षुरकस्य च ।
नारिकेलरसप्रस्थे तिलतैलस्य प्रस्थतः ॥
कदल्याः स्वरसप्रस्थे चीरप्रस्थचतुष्टये ।
अस्यौषधस्य कल्कस्य प्रत्येकं कर्षसम्मितम् ॥
चन्दनं तगरं वाप्यं मञ्जिष्ठा सरलागुरु ।
मांसीमुरा च शैलेयं यष्टीदारु नखी शिवा ॥
पूतिका पीतिका पद्मं कुन्दुरुर्नलिका तथा ।
वरी लोध्रं तथा मुस्तं त्वगेला पत्रकेशरम् ॥
लवङ्गं जातीकोषञ्च तथा भधुरिका शटी ।
चन्दनं ग्रन्थिपर्णञ्च कर्पूरं लाभतः क्षिपेत् ॥
अस्य तैलस्य सिद्धस्य शृणु वीर्य्यमतः परम् ।
उच्चैः प्रपततो वायोर्गजतो वाजिनस्तथा ॥
उद्धृतो लोष्ठपाताच्च पङ्गूनां पीठसर्पिणाम् ।
एकाङ्गशोषिणाञ्चैव तथा सर्वाङ्गशोषिणाम् ॥
क्षतानां क्षीणशुक्राणामत्यन्तक्षयरोगिणाम् ।
हनुमन्याहतानाञ्च दुर्बलानां तथैव च ॥
शोषिणां लम्बजिह्वानां तथा मिन्मिणभाषिणाम् ॥
अत्यन्तदाहयुक्तानां क्षीणानां वातरोगिणाम् ॥
एतत्तैलवरं श्रेष्ठं विष्णुना परिकीर्त्तितम् ।
हिमसागरमाख्यातं सर्ववातविकारनुत् ॥
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ।
शिरोमध्यगता ये च शाखामाश्रित्य ये स्थिताः ॥
ते सर्वे प्रशमं यान्ति तैलस्यास्य प्रसादतः ॥

## वायुच्छायासुरेन्द्रतैलम्।

वाट्यालकं पलशतं तत्समं दशमूलकम्।
जलषोड़शिके पक्त्वा पादशेषं समुद्धरेत्॥
एतत्क्वाथे पचेत्तैलं द्वात्रिंशत्पलमेव च।
कल्कार्थं दीयते तत्र मञ्जिष्ठारक्तचन्दनम्॥
कुष्ठमेला देवदारु शैलजं सैन्धवं वचा।
कक्कोलं पद्मकाष्ठञ्च शृङ्गी तगरपादिका॥
गुड़ची मुद्गपर्णी च माषपर्णी शतावरी।
नागजिह्वा श्यामलता शतपुष्पा पुनर्नवा॥
एषां तोलद्वयं भागं दत्त्वा तैलन्तु पाचयेत्।
एतत्तैलवरं नाम्ना वायुच्छायासुरेन्द्रकम्॥
सर्ववातविकारेषु हितं पुंसाञ्च योषिताम्।
क्षीणशुक्रार्त्तवानाञ्च नारीणाञ्च विशेषतः॥
रेतोविकारं हन्त्याशु वायुमाक्षेपसम्भवम्।
मर्म्मवातं श्रमकृतं गात्रकम्पादिकं तथा॥
हिक्कां श्वासञ्च कासञ्च वातपित्तसमुद्भवम्।
अपस्मारे महोन्मादे हितं लेपे च भक्षणे॥
श्रीमद्गहननाथेन रचितं विश्वसम्पदे।

जलषोड़शिके तैलात् षोड़शगुणे जले इत्यर्थः।

## नारायणतैलम्।

शतावरी चांशुमती पृश्निपर्णी शटी वचा।
एरण्डस्य च मूलानि बृहत्योः पूतिकस्य च॥

गवेधुकस्य मूलानि तथा सहचरस्य च ।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥
पादावशेषे पूते च गर्भञ्चैनं निधापयेत् ।
पुनर्नवा वचा दारु शताह्वा चन्दनागुरु ॥
शैलेयं तगरं कुष्ठमेला मांसी स्थिरा बला ।
अश्वाह्वा सैन्धवं रास्ना पलार्द्धानि च योजयेत् ॥
गव्याजपयसोः प्रस्थौ द्वौ द्वावत्र प्रदापयेत् ।
शतावरीरसप्रस्थं तैलप्रस्थं विपाचयेत् ॥
अस्य तैलस्य पक्कस्य शृणु वीर्य्यमतः परम् ।
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ॥
तैलमेतत्प्रयोक्तव्यं सर्ववातनिवारणम् ।
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढ़ो भवेत् ॥
गर्भमश्वतरी विन्द्यात्किं पुनर्मानुषी तथा ।
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम् ॥
अपचीं गण्डमालाञ्च वातरक्तं हनुग्रहम् ।
कामलां पाण्डुरोगञ्च अश्मरीञ्चापि नाशयेत् ॥
तैलमेतद्भगवता विष्णुना परिकीर्त्तितम् ।
नारायणमिदं ख्यातं वातान्तकरणं मतम ॥

### महाबलातैलम् ।

बलामूलकषायस्य दशमूलीकृतस्य च ।
यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः ।
पचेदारोप्य मधुरं गणं सैन्धवसंयुतम् ॥

तथागुरु सर्जरसं सरलं देवदारु च।
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारकम्॥
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम्।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम्॥
तत्साधुसिद्धं सौवर्णे राजते मृण्मयेऽपि च।
प्रक्षिप्य कलसे सम्यग् आत्मगुप्तां निधापयेत्॥
बलातैलमिदं नाम्ना सर्ववात विकारनुत्।
यथाबलमतो मात्रां सूतिकायै प्रदापयेत्॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान्।
क्षीणधातौ मर्म्महतेऽभिहते मथितेऽथवा॥
भग्ने श्रमाभिपन्ने च सर्वथैवोपयोजयेत्।
सर्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति॥
हिक्कां कासमधीमन्थं गुल्मं श्वासं सुदुस्तरम्।
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति॥
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः।
एतद्धि राज्ञा कर्त्तव्यं राजपात्राश्च ये नराः॥
सुखिनः सुकुमाराश्च बलिनश्चैव ये नराः॥

पुष्पराजप्रसारणीतैलम्।

प्रसारणी पलशतं मूलञ्चैवाश्वगन्धजम्।
पञ्चाशत्पलमानन्तु जलद्रोणे विपाचयेत्।
पादशेषे हरेत् क्वाथं क्वाथं शं तिलतैलकम्।
तैलाच्चतुर्गुणं क्षीरं गव्यं वा माहिषस्तथा।
पुण्डरीकरसस्तत्र शतावर्य्यारसस्तथा।

तैलसमः प्रदातव्यः पाचयेन्मृदुवह्निना ॥
शतपुष्पाकणा चैला कुष्ठञ्च कण्टकारिका।
शुण्ठी यष्टी देवदारु शालपर्णी पुनर्नवा ॥
मञ्जिष्ठापत्रकं रास्ना वचा पुष्करमूलकम् ॥
यमानी भूतिकं मांसी निर्गुण्डी च तथा बला ॥
वह्निर्गोक्षुरकञ्चैव मृणाल बहुपुत्रिका।
प्रतिकर्षमिदं योज्यं सर्वमेकत्र पाचयेत् ॥
तैलशेषं समुद्धृत्य पुष्पराजप्रसारणीम्।
अभ्यङ्गे योजयेत्पाने नस्यकर्म्मणि सर्वदा ॥
भग्नानां खञ्जपङ्गूनां शिरोरोगे हनुग्रहे।
समस्तान् वातजान् रोगान् तूर्णं नाशयति ध्रुवम् ॥

## महाकुक्कुटमांसतैलम्।

माषस्यार्द्धाढ़कं देयं दशमूल्यास्तुलार्द्धकम्।
बलामूलञ्च तस्यार्द्धं केतकीनां तथैव च ॥
दद्यमांसपलत्रिंशत् झिण्टिका पञ्चविंशतिः।
जलद्रोणद्वये पक्वा पादशेषेऽवतारिते ॥
तिलतैलस्य च प्रस्थं पयो दत्त्वा चतुर्गुणम्।
जीवनीयानि यान्यष्टौ मञ्जिष्ठा चव्य कट्फलम् ॥
व्योषरास्ना कणामूलं मधुकं पुष्कर तथा।
माषात्मगुप्ते सैरण्डा शताह्वा लवणत्रयम् ॥
कृष्णाश्वगन्धा ह्यमृता यमानीन्द्रवरी शटी।
नागरं मागधीमुस्तं वर्षाभूरजनीद्वयम् ॥
शतावरी बृहत्यौ च एतैरत्नसमन्वितैः।

पक्षाघातेषु सर्वेषु अर्दिते च हनुग्रहे ॥
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ।
हस्तकम्पे शिरःकम्पे गात्रकम्पे शिरग्रहे ॥
शस्तं कलायखञ्जे च गृध्रस्यामवबाहुके ।
बाधिर्य्ये कर्णनादे च सर्ववातविकारनुत् ॥
दण्डापतानके चैव मन्यास्तम्भे विशेषतः ।
हनुस्तम्भे प्रशस्तं स्यात् सूतिकातङ्कनाशनम् ॥
त्वच्यं मांसप्रदञ्चैव शुक्रग्निद बलवर्द्धनम् ।
अण्डवृद्धान्त्रवृद्धिं वा वातरक्तञ्च नाशयेत् ॥

## नकुलतैलम्।

मधुकं जीरकं रास्ना सैन्धवं शतपुष्पिका ।
यमानी मरिचं कुष्ठं विड़ङ्गं गजपिप्पली ॥
सौवर्च्चलं चाजमोदा बला षड्ग्रन्थिका तथा ।
ग्रन्थिकं शैलजं मांसी कर्षाविषां पृथक् पृथक् ॥
विनीय पाचयेत्तैलं प्रस्थं रुवुसमुद्भवम् ।
प्रस्थे नकुलमांसस्य क्काथे च दशमूलजे ॥
प्रस्थे च काञ्जिकस्यापि मस्तुप्रस्थे तथैव च ।
सिद्धं तैलमिदं हन्ति कम्पवातं सुदारुणम् ॥
हस्तकम्पं शिरःकम्पं बाहुकम्पञ्च नाशयेत् ।
आमवातं सशूलञ्च सर्वोपद्रवसंयुतम् ॥
पानाभ्यञ्जनवस्तीभिर्नाशयेन्नात्र संशयः ।
आढ्यवातं कटीपृष्ठजानुजङ्घाश्रितं तथा ॥
सन्धिस्थं वातमाशेव जयेन्नकुलसंज्ञकम् ।

हारीतभाषितमिदं तैलं हितचिकीर्षया ॥
वैद्यानां सारभूतानां यतेनापि समुज्झितम् ।
वातव्याधिं निहन्त्याशु कम्पवातं विशेषतः ॥
अशीति वातजान् रोगान्नाशयेदाशु देहिनाम् ॥

## माषतैलम् ।

माषातसीजवकुरुण्टककण्टकारी-
गोकण्ठटुण्टुकजटा कपिकच्छुतोयैः ।
कार्पासकास्थि शणबीजकुलत्थकोल-
क्वाथेन वस्तपिशितस्य रसेन चापि ॥
शुण्ठ्या समागधिकया शतपुष्पया च
सैरण्डमूलसपुनर्नवया सरण्या ।
रास्ना बलामृतलता कटुकैर्विपक्वं
माषाख्यमेतदवबाहुहरञ्च तैलम् ॥
अर्द्धाङ्गशोषमपतानकमाढ्यवात-
माक्षेपकं सभुजकम्पशिरःप्रकम्पम् ।
नस्येन वस्तिविधिना परिषेचनेन
हन्यात्कटीजघनजानुरुजः समीरात् ॥

## स्वल्पमाषतैलम् ।

माषप्रस्थं समावाप्य पचेत्सम्यग्जलाढ़के ।
पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणम् ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसंमितम् ॥
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम् ॥
रास्नात्मगुप्ता मधुकं बलाव्योषचित्रकम् ।

पक्षाघातेऽर्दिते वाते कर्णशूले च दारुणे ॥
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ।
हस्तकम्पे शिरःकम्पे विश्वाच्यामवबाहुके ॥
शस्तं कलायखञ्जे च पानाभ्यञ्जनवस्तिभिः ।
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥

बृहन्माषतैलम् ।

माषक्वाथे बलाक्वाथे,रास्नाया दशमूलजे ।
यवकोलकुलत्थानां छागमांसभवे पृथक् ॥
प्रस्थे तैलस्य च प्रस्थं क्षीरं दत्त्वा चतुर्गुणम् ।
रास्नात्मगुप्ता सिन्धूत्थशताह्वैरण्डमुस्तकैः ॥
जीवनीय,बलाव्योषैः पचेदक्षसमैर्भिषक् ।
हस्तकम्पे शिरःकम्पे बाहुशोषेऽवबाहुके ॥
बाधिर्य्ये कर्णशूले च कर्णनादे च दारुणे ।
विश्वाच्यामर्दिते कुब्जे गृध्रस्यामपतानके ॥
वस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ।
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥
क्वाथप्रस्थाः षडेवात्र विभक्त्यन्तेन दर्शिताः ।

तैलेन सह सप्तप्रस्थमितत्वादस्य सप्तप्रस्थमाषतैलमिति संज्ञान्तरम् ।

महामाषतैलम् ।

माषस्यार्द्धाढकं दत्त्वा तुलार्द्धं दशमूलतः ।
पलानि छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत् ॥
पूतशीते कषाये च चतुर्थांशावशेषिते ।

प्रस्थञ्च तिलतैलस्य पयो दत्त्वा चतुर्गुणम्॥
आत्मगुप्ता स्वक्काथ शताह्वा लवणत्रयम्।
जीवनीयानि मञ्जिष्ठा चव्यचित्रककटफलम्॥
सव्योषं पिप्पलीमूलं रास्ना मधुकसैन्धवम्।
देवदार्वमृता कुष्ठं वाजिगन्धा वचा शटी॥
एतैरक्षसमैर्भागैः साधयेन्मृदुनाग्निना।
पक्षाघातेऽर्दिते वाते बाधिर्य्ये हनुसंग्रहे॥
कर्णमन्या शिरःशूले तिमिरे च त्रिदोषजे।
पाणिपादशिरोग्रीवा भ्रमणे मन्दचङ्क्रमे॥
कलायखञ्जे पाङ्गुल्ये गृध्रस्यामवबाहुके।
पाने वस्तौ तथाभ्यङ्गे नस्ये कर्णाक्षिपूरणे॥
तैलमेतत् प्रशंसन्ति सर्ववातरुजापहम्॥

## निरामिषमहामाषतैलम्।

दशमूलाढ़कं पक्त्वा जलद्रोणेऽङ्घ्रिशेषितं।
तद्वन्माषाढ़कक्वाथे तैलप्रस्थं पयः समं॥
कल्कैरेतैश्च मतिमान् साधयेन्मृदुनाग्निना।
अश्वगन्धा शटीदारु बला रास्नाप्रसारणी॥
कुष्ठं परूषकं भार्गी द्वे विदार्य्यौ पुनर्नवा।
मातुलुङ्गफलाजाज्यौ रामठं शतपुष्पिका॥
शतावरी गोक्षुरकं पिप्पलीमूलचित्रकौ।
जीवनीयगणं सर्वं संहृत्यैव ससैन्धवम्।
तत्साधुसिद्धं विज्ञाय माषतैलमिदं महत्।
वस्त्यभ्यञ्जनपानेषु नावनेषु प्रशस्यते॥

पक्षाघाते हनुस्तम्भे अर्दिते सापतन्त्रके।
अववाहुकविश्वच्योः खाञ्जपाङ्गुल्ययोरपि॥
शिरोमन्याग्रहे चैव अधिमन्थे च वातिके।
शुक्रक्षये कर्णनादे कर्णक्ष्वेड़े च दारुणे॥
कलाय खञ्जशमने भैषज्यमिदमादिशेत्॥

## कुब्जप्रसारणीतैलम्।

प्रसारणीशतं क्षुखं पचेत्तोयार्म्मणे शुभे।
पादशेषे समं तैलं दधिदद्यात्सकाञ्जिकम्॥
द्विगुनञ्च पयो दत्त्वा कल्कान् द्विपलिकांस्तथा।
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वलाम्॥
शतपुष्पां देवदारु रास्नां वारणपिप्पलीम्।
प्रसारण्याश्च मूलानि मांसी भल्लातकानि च॥
पचेन्मृद्वग्निना तैलं वातश्लेष्मामयान् जयेत्।
अशीतिं नरनारीस्थान् वातरोगान् व्यपोहति॥
कुब्जस्तिमितपङ्गुत्वं गृध्रसी खुड़कार्दितम्।
हनुपृष्ठशिरोग्रीवास्तम्भं चाशु नियच्छति॥

## सप्तशतिकाप्रसारणीतैलम्।

समूलपत्रामुत्पाट्य शरत्काले प्रसारणीम्।
शतं ग्राह्यं सहचरात् शतावर्य्याः शतं तथा॥
वलाश्वगन्धा केतकीनां शतं शतम्।
पचेच्चतुर्गुणे तोये द्रवैस्तैलाढ़कं भिषक्॥
मस्तुमांसरसं चुक्रं पयश्चाढ़कमाढ़कम्।
दध्याढ़कसमायुक्तं पाचयेन्मृदुनाग्निना॥

द्रव्याणान्तु प्रदातव्या मात्रा चार्द्धपलांशिका।
तगरं मदनं कुष्ठं केशरं मुस्तकं त्वचम्॥
रास्ना सैन्धवपिप्पल्यौ मांसी मञ्जिष्ठयष्टिका:।
तथा मेदा महामेदा जीवकर्षभकौ पुनः॥
शतपुष्पा व्याघ्रनखं शुण्ठी देवाह्वमेव च।
काकोली चीरकाकोली वचा भल्लातकं तथा॥
पेषयित्वा समानेतान् साधनीया प्रसारणी।
नातिपक्वं न हीनञ्च सिद्धं पूतं निधापयेत्॥
यत्र यत्र प्रदातव्या तन्मे निगदतः शृणु।
कुब्जानामथ पङ्गूनां वामनानां तथैव च॥
यस्य शुष्यति चैकाङ्गं ये च भग्नास्थिसन्धयः।
वातशोणितदुष्टानां वातोपहृतचेतसाम्॥
स्त्रीमद्य चीणशुक्राणां वाजीकरणमुत्तमम्।
वस्तौ पाने तथाभ्यङ्गे नस्ये चैव प्रयोजयेत्॥
प्रयुक्तं शमयत्याशु वातजान् विविधान् गदान्॥

एकादशशतिकं महाप्रसारिणीतैलम्।

शाखामूलदलैः प्रसारणितुलास्तिस्त्रः कुरण्टीतुले च्छिन्नायाश्च तुले तुले रवुकतो रास्नाशिरीषात्तुलाम्।
देवाह्वाच्च सकेतकाद्दृटशते निःकाथ्य कुम्भांशिके।
तोये तैलघटं तुषाम्बु कलसौ दत्त्वाढ़कं मस्तुनः॥
शुक्ताच्छागरसाद्दधीक्षुरसतः चीराच्च दत्त्वाढ़कं
पृक्का कर्कटजीवकाद्य विकषा काकोलिकाकच्छुराः।
सूक्ष्मैला घनसारकुन्दुसरला काश्मीरमांसीनखैः
कालीयोत्पलपद्मकाह्वयनिशाकक्कोलकग्रन्थिकैः॥

चांम्पेयाभयचोचपूगकटुका जातीफला शीतभिः
श्रीवासामरदारुचन्दनवचा शैलेयसिन्धूद्भवैः।
तैलाम्भोद कटम्भराङ्घ्रि नलिना हृषीरकचोरकैः
कस्तूरी दशमूलकेतकवतध्यामाश्वगन्धाम्बुभिः॥
कौन्तीतार्क्षजशल्लकीफललघुश्यामाशताह्वामयै-
र्भल्लातत्रिफलाजकेशरनखाह्वाश्यामालवङ्गान्वितैः।
सव्योषैस्त्रिपलैर्महीयसि पचेन्मन्देन पावकेऽग्निना
पानाभ्यञ्जनवस्तिनस्य विधिना तन्मारुतं नाशयेत्॥
सर्वाङ्गैकाङ्गगतं तथावयवगं सन्ध्यस्थिमज्जाश्रितं
श्लेष्मोत्थानथ पैत्तिकांश्च शमयेन्नानाविधानामयान्।
धातून् बृंहयति स्थिरञ्च कुरुते पुंसां नवं यौवनं
वृद्धस्यापि बलं करोति स महद्वन्ध्यासु गर्भप्रदम्॥
पीत्वातैलमिदं जरत्यपि सुतं सूतेऽमुना भूरुहाः
सिक्ताः शोषमुपागताश्च मालिनाः स्निग्धा भवन्ति स्थिराः
भग्नाङ्गाः सुदृढ़ा भवन्ति मनुजा गावो हयाः कुञ्जराः॥

### अष्टादशशतिकाप्रसारणीतैलम्।

समूलदलशाखायाः प्रसारण्याः शतत्रयम्।
शतमेकं शतावर्य्या अश्वगन्धा शतं तथा॥
केतकीनां शतञ्चैकं दशमूलाच्छतं शतम्।
शतं वाट्यालकस्यापि शतं सहचरस्य च॥
जलद्रोणशतं दत्त्वा शतभागावशेषितम्।
ततस्तेन कषायेन कषायद्विगुणेन च॥
सुव्यक्तेनारनालेन दधिमस्त्वाढ़केन च।

क्षीरशुक्तेक्षुनिर्य्यासच्छागमांसरसाढ़कैः॥
तैलद्रोनं समायुक्तं दृढ़े पात्रे निधापयेत्।
द्रव्याणि यानि पेष्याणि तानि वक्ष्याम्यतः परम्॥
भल्लातकं नतं शुण्ठी पिप्पलीचित्रकं शटी।
वचा पृक्का प्रसारण्याः पिप्पल्यामूलमेव च॥
देवदारु शताह्वा च सूक्ष्मैला त्वचबालकम्।
कुङ्कुमं मदमञ्जिष्ठा तुरुष्कं नखिकागुरु॥
कर्पूरकुन्दुरुनिशा लवङ्गं ध्यामचन्दनम्।
कक्कोलं नलिका मुस्तं कालीयोत्पलपत्रकम्॥
शटीहरेणु शैलेयश्रीवासश्च सकेतकम्।
त्रिफला कच्छुरा भीरु सरलं पद्मकेशरम्॥
प्रियङ्गुशीरनलदं जीवकाद्यं पुनर्नवा।
दशमूल्यश्वगन्ध च नागपुष्पं रसाञ्जनम्॥
कटुका जातिपूगानां फलानि शल्लकीरसम्।
भागान् त्रिपलिकान् दत्त्वा शनैर्मृद्वग्निना पचेत्॥
विस्तीर्णे सुदृढ़े पात्रे पाच्यैषा तु प्रसारणी।
प्रयोगः षड्‌विधस्तत्र रोगार्त्तानां विधीयते॥
अभ्यङ्गात् त्वग्गतं हन्ति पानात्कोष्ठगतं तथा।
भोजनात्सूक्ष्मनाड़ीस्थान् नस्यादूर्द्ध्वं गतं तथा॥
पक्वाशयगते वस्तिर्निरूहः सर्वगात्रिके।
एतद्धि वड़वाश्वानां किशोराणां यथामृतम्॥
एतदेव मनुष्याणां कुञ्जराणां गवामपि।
अनेनैव च तैलेन शुष्यमाणा महाद्रुमाः॥
सिक्ताः पुनः प्ररोहन्ति भवन्ति फलशालिनः।

वृद्धोऽप्यनेन तैलेन पुनश्च तरुणायते ॥
न प्रसूते च या नारी सापि पीत्वा प्रसूयते।
अप्रजाः पुरुषो यस्तु सोऽपि पित्वा लभेत्सुतम् ॥
अशितिं वातजान् रोगान् पैत्तिकान् श्लैष्मिकानपि।
सन्निपातसमुत्थांश्च नाशयेत् क्षिप्रमेव हि ॥
एतेनान्धकवृष्णीनां कृतं पुंसवनं महत्।
कृत्वा विष्णोर्वलिञ्चापि तैलमेतत्प्रयोजयेत् ॥

त्रिशतीप्रसारणीतैलम्।

समूलपत्रशाखाञ्च जातसारां प्रसारणीम्।
कुट्टयित्वा पलशतं दशमूलशतं तथा ॥
अश्वगन्धा पलशतं कटाहे समधिक्षिपेत्।
वारिद्रोणे पृथक्कृत्वा पादशेषेऽवतारितम् ॥
कषायसममात्रन्तु तैलमत्र प्रदापयेत्।
दध्नस्तथाढ़कं दत्त्वा द्विगुणञ्चाम्लकाञ्जिकात् ॥
चतुर्द्रोणेन पयसा जीवनीयैः पलोन्मितैः।
शृङ्गवेरपलान् पञ्चत्रिंशद्भल्लातकानि च ॥
द्वे पले पिप्पलीमूलात् चित्रकाच्च पलद्वयम्।
यवक्षारपलद्वे च सैन्धवस्य पलद्वयम् ॥
सौवर्चलपलद्वे च मञ्जिष्ठायाः पलद्वयम्।
प्रसारणीपलद्वे च मधुकस्य पलद्वयम् ॥
सर्वाण्येतानि संहृत्य शनैर्मृद्वग्निना पचेत्।
एतदभ्यञ्जने श्रेष्ठं वस्तिकर्म्मनिरूहणे ॥
पाने नस्ये च दातव्यं न क्वचित्प्रतिहन्यते।

अशीतिं वातजान् रोगांश्चत्वारिंशञ्च पैत्तिकान्।
विंशतिं श्लैष्मिकांश्चैव सर्वानेतान् व्यपोहति।
गृध्रसीमस्थिभङ्गञ्च मन्दाग्नित्वमरोचकम्॥
अपस्मारं तथोन्मादं विभ्रमं मन्दगामिताम्।
त्वग्गताश्चापि ये वाताः शिरःसन्धिगताश्च ये।
जानुसन्धिगताश्चैव पादपृष्ठगताश्च ये।
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः॥
प्रसारयति यस्मात्तु तस्मादेषा प्रसारणी।
इन्द्रियाणाञ्च जननी वृद्धानाञ्च प्रसूयनी।
एतेनान्धकवृष्णीनां कृतं पुंसवनं महत्।
प्रसारणीतैलमिदं बलवर्णाग्निवर्द्धनम्॥
अपनयति जरां पलितं शोष-
यति रुजानुत्पादयति तारुण्यम्।
पक्षाघातसर्वाङ्गहतं वातगुल्मञ्च नाशयेत्॥
एतदुपयुज्यमानः प्रसन्नवर्णेन्द्रियो भवेत्॥

महाराजप्रसारणीतैलम्।

शतवयं प्रसारण्या द्वे च पीतसहाचरात्।
अश्वगन्धैरण्डबला वरी रास्ना पुनर्नवाः॥
केतकी दशमूलञ्च पृथक् त्वक् पारिभद्रतः।
प्रत्येकमेषान्तु तुला तुलार्द्धं किलिमात्तथा॥
तुलार्द्धं स्याच्छिरीषाच्चलाचाया: पञ्चविंशतिः।
पलानि लोध्राच्च तथा सर्वमेकत्र साधयेत्॥
जलपञ्चाढ़कशते सपादे तत्र शेषयेत

द्रोणद्वयं काञ्जिकस्य षड्विंशत्याढ़कोन्मितम् ॥
क्षीरदध्नोः पृथक् प्रस्था दश मस्त्वाढ़कं तथा ।
इक्षोरसाढ़कौ चापि च्छागमांस तुलात्रये ॥
जलपञ्चचत्वारिंशत्प्रस्थे पक्के तु शेषयेत् ।
सप्तदशरसप्रस्थान् मञ्जिष्ठा क्काथ एव च ॥
कुड़वोनाढ़कोन्मानो द्रवैरेभिस्तु साधयेत्
सुशुद्धं तिलतैलस्य द्रोणं प्रस्थेन संयुतम् ॥
आद्य एभिर्द्रवैः पाकः कल्का भल्लातकं कणा ।
नागरं मरिचञ्चैव प्रत्येकं षट्पलोन्मितम् ॥
भल्लातकासद्दत्वे तु रक्तचन्दनमिष्यते ।
पथ्याक्षधात्र्यः सरलं शताह्वाककटौ वचा ॥
चोरपुष्पो शटी मुस्तद्वयं पद्मञ्च सोत्पलम् ।
पिप्पलीमूल मञ्जिष्ठा साश्वगन्धा पुनर्नवा ॥
दशमूलं समुदितं चक्रमर्दो रसाञ्जनम् ।
गन्धतृणं हरिद्रा च जीवनीयो गणस्तथा ॥
एषां द्विपलिकैर्भागैराद्यः पाको विधियते ।
देवपुष्पो बोलपत्रं शल्लकोरसशैलजे ॥
प्रियङ्गुशीर मधुरी मांसी दारुबला बला ।
श्रीवासो नलिका खोटिः सूक्ष्मैला कुन्दुरुर्मुरा ।
नखोत्रयश्च त्वक्पत्री परमा पूतिचम्पकम् ।
दमनं रेणुका पृक्का मरुवञ्च पलत्रयम् ॥
प्रत्येकं गन्धतोयेन द्वितीयः पाक इष्यते ।
गन्धोदकन्तु त्वक्पत्री पत्रकोशीरमुस्तकम्
प्रत्येकं सरलामूलं पलानि पञ्चविंशतिः ।

कुष्ठार्द्धभागोऽत्र जलप्रस्थास्तु पञ्चविंशतिः ॥
अर्द्धावशिष्टाः कर्त्तव्याः पाके गन्धाम्बुकर्म्मणि ।
गन्धाम्बु चन्दनाम्बुभ्यां तृतीयः पाक इष्यते ॥
कल्कोऽत्र केशरं कुष्ठं त्वक् कालीयकं कुङ्कुमम् ।
भद्रश्रियं ग्रन्थिपर्णं लताकस्तूरिका तथा ॥
लवङ्गागुरु कक्कोलं जातीकोषफलानि च ।
एला लवङ्गच्छल्ली च प्रत्येकं त्रिपलोन्मितम् ॥
कस्तूरी षट्पला चन्द्रात्पलं सार्द्धञ्च गृह्यते ।
वेधनार्थं पुनश्चन्द्रमदौ देयौ तथोन्मितौ ॥
महाप्रसारिणी सेयं राजभोग्या प्रकीर्त्तिता ।
गुणान् प्रसारणीनान्तु वहत्येषा बलोत्तमान् ॥
काञ्जिकं मानतो द्रोणः शुक्तं मात्र विधीयते ।
अत्र शुक्तविधिर्मण्डः प्रस्थः पञ्चाढ़कोन्मितम् ॥
काञ्जिकं कुड़वौ दध्नो गुड़प्रस्थोऽम्लमूलकात् ॥
पलान्यष्टौ शोधितद्रोत्पलषोड़शिकं तथा ॥
कणा जीरकसिन्धूत्थ हरिद्रा मरिचं तथा ।
द्विपलं भाविते भाण्डे घृतेनाष्टदिनं स्थितम ॥
सिद्धं भवति तच्छुक्तं यदावतार्य्य गृह्यते ।
तदा देयं चतुर्जातं पृथक् कर्षत्रयोन्मितम् ॥

यद्यपि काञ्जिकस्य षड्विंशतिराढ़कानीत्युक्तं तथापि काञ्जिकद्रोणमात्रेण व्यवहारः अन्यथा काञ्जिकस्यैव गन्धः स्यादिति अतएव चक्रो वक्ष्यति काञ्जिकं मानतो द्रोण इति । काचिदुडुम्बरपत्राभा तथा चोत्पलसन्निभा । काचिदश्वखुराकारा गजकर्णसमा तथा ।

वराहकर्णसञ्ज्ञाश्च नखी पञ्चविधा स्मृता। तत्र मध्या-
स्तिस्रो ग्राह्याः।

चन्दनाम्बु साधन विधिर्यथा,—कुट्टित चन्दन ग्रं
५०, पा जल ग्रं ५०, शेष ग्रं २५। घृष्टचन्दनं गोल-
यित्वा वा दातव्यम्। इति।

## मृगमदादीनामुत्कर्षापकर्षलक्षणम्।

या गन्धं केतकीनां वहति परिमलं वर्णतः पिञ्जराभा
स्वादे तिक्ता कटुर्वा परिलघुतुलना मर्दिता चिक्कणाभा।
दग्धा नो याति भस्म मिषिमिषि कुरुते चर्मगन्धा तु चान्ते॥
सा भद्रा शोभनीया वरमृगतनुजा राजयोग्या प्रदिष्टा॥
पीतः किञ्चिल्लघुरतिशयं केतकीतुल्यगन्धः
स्निग्धो दग्धो मिषिमिषिकरो भस्मभावं न याति।
ईषत्तिक्तः कटुरपि मनाक् क्षारगन्धानुविद्धः
सम्यक् शुद्धो मद इति महीपालयोग्यो मनोज्ञः॥

पक्वात्कर्पूरतः प्राहुरपक्वं गुणवत्तरम्।
तत्रापि स्याद् यदच्छं स्फटिकाभं तदुत्तमम्।
पक्वञ्च सदलं स्निग्धं हरितद्युति चोत्तरम्।
भङ्गे मनागपि चलेन्निपतन्ति ततः कणाः॥
हस्ते निघृष्य कर्पूरं रेखां हस्तस्य लक्षयेत्।
यदि सा दृश्यते विद्धि कर्पूरमतिभद्रकम्॥
मृगशृङ्गाकृतिकुष्ठं कीटदोषविवर्जितम्।
श्वेतचन्दनमत्यन्तं स्निग्धं गुरु सुगन्धि च।
भवेद्रक्तचन्दनं रक्तपीतसारं तदुत्तमम्॥

यत्पाण्डरमसारञ्च न भद्रं प्रवदन्ति तत् ।
काकतुण्डाकृतिः स्निग्धो गुरुश्चैवोत्तमोऽगुरुः ।
असारं पाण्डुरं रूक्षं लघु चाधममादिशेत् ॥
नादेयं नाप्युपादेयं तित्तिरिपक्षकागुरु ।
शाल्मलीकाष्ठ सङ्काशो नैव ग्राह्यः कदाचन ॥
पाण्डरैः केशरैस्त्यक्तं रक्तं कुङ्कुम मुत्तमम् ।
नील हिरान्निकाश्मीरं खरपाण्डरकेशरम् ॥
खट्टासोऽनपजः श्रेष्ठो वर्त्तुलो मांसलश्च यः ।
सम्मतो मध्यदेशीयो मध्यमो मरुजोऽधमः ।
किञ्चित्पीता सुरा शस्ता मांसी पिङ्गजटाकृतिः
रेणुका मुद्गतुल्यो यो भद्रः स सम्मतः सताम् ॥
स्थूलो मरिच सङ्काशो गन्धकर्म्मणि गर्हितः ।
आनूपदेशसम्भूतो मुद्गवच्चातिशोभनः ॥
मिश्रिते मध्यमः प्रोक्तो जाङ्गलस्त्वधमोमतः ॥
जातीफल सशब्दञ्च स्निग्धं गुरु च शस्यते ।
लघुकं शब्दहीनञ्च रूक्षाङ्गमतिनिन्दितम् ॥
एला कक्कोलबीजाभा सा ग्राह्या कोद्रवाकृतिः ।
या कक्कोलसमाकारा कर्पूररेणुसंयुता ।
सरला सा त्रुटिः श्रेष्ठा विपरीता तु नेष्यते ॥
या किञ्चित्पाण्डरा श्यामा कीटदोषविवर्जिता ।
सा प्रियङ्गुर्मता भद्रा विपरीता तु निन्दिता ॥
नखी पञ्चविधा ज्ञेया गन्धार्थं गन्धतत्परैः ।
काकोड़ुम्बरपत्राभा तथोत्पलदलायता ॥
काचिदश्वखुराकारा गजकर्णसमापरा ।

वराहकर्णसङ्काशा गन्धकर्म्मणि गर्हिता ॥
ग्रन्थिकः पाण्डुरः किञ्चित् कनिष्ठः सर्वसम्मतः।
उत्तमः कृष्णवर्णो यः स्थूलोऽतीव च निन्दितः ॥
दीर्घमूलं दृढ़ं सूक्ष्म मुत्तमं गन्ध संयुतम्।
देशे साधारणे जातं लामज्जं भद्रकं भवेत् ॥
मध्ये सारविहीना या सरसा कीटवर्जिता।
नलिका सा भवेद्भद्रा विपरीता तु निन्दिता ॥
निर्म्मलः कपिलः स्वच्छः सिह्लकोऽतितरां नवः।
मध्वाभो मलसंयुक्तो वर्जितो गन्धकर्म्मणि ॥
श्रीवासो भद्रकः प्रोक्तो मलकाष्ठविवर्जित ॥
लाक्षा च नूतना ग्राह्या मृत्तिकादि विवर्जिताः॥
पद्मकं सरलं भद्रं कीटदोषविवर्जितम्।
जलदोष विहीनश्च त्वक् पत्रश्च तथैव च ॥
सूक्ष्ममूलो वरः केशोऽनूतनः सरलस्तथा।
नूतनः स्थूलमूलश्च वर्जनीयः प्रयत्नतः ॥
कक्कोलकं शुभं विद्धि वेष्टितं सूक्ष्मया त्वचा।
स्निग्धं गुरुकमत्यन्त मन्यथातीव निन्दितम् ॥
अत्युग्रापि सरागापि ग्रन्थिलापि परा भवेत्।
अन्तः शुचित्वमात्रेन वचा कर्म्मणि गर्हिता ॥
द्विमुस्तं नूतनं पुष्टं गन्धाढ्यं परमं विदुः।
चोरपुष्पीं नवां श्यामामामनन्ति मनीषिणः ॥
ग्राह्या प्रशस्थसमक् चम्पककलिका प्रदीपकलिकेव।
कीटादिकेन रहित मभिनवमिह केशरं ग्राह्यम् ॥
ससूक्ष्मकेशरा स्निग्धा मांसी पिङ्गजटाकृतिः ॥

सुगन्धि लघु रुक्षञ्च सुरदारु प्रकीर्त्तितम् ॥
आकृष्णमुत्तमं न्यूनं रक्तश्वेतञ्च मध्यमम् ।
आरक्तमधमं विद्धि रक्तचन्दनकं त्रिधा ॥
हरिद्रा शस्यते स्थूला च्छेदे या कुङ्कुमच्छविः ॥
केतकी यूथिका जाती चम्पकश्चातिमुक्तकः ।
कदम्बो मल्लिका नागपुष्पञ्च कुटजस्तथा ॥
पाटला करुणी मौरी पुष्पैरेभिः समाचरेत् ।
वासनं कुसुमैरन्यैस्तथान्यैरति शोभनैः ॥
सौवर्च्चलन्तु केशाभं सैन्धवं स्फटिकप्रभम् ।
जवाकुसुमसङ्काशा मनोह्वा चोत्तमा मता ॥
सुवर्णवच्च विज्ञेयं स्वर्णमाचिक मुत्तमम् ॥
श्रेष्ठं शिलाजतुज्ञेयं यत्तु चिप्तं न शीर्य्यते ।
तोयपूर्णे यदा पात्रे प्रतान्येव विरुध्यते ॥
भाद्रक्यं कीर्त्तितं येषां विरुद्धत्वं न कीर्त्तितम्
तेषां तद्विपरीतत्वाद्विरुद्धतञ्च लचयेत् ॥

महासुगन्धि तैलं लक्ष्मीविलासतैलञ्च ।

जिङ्गीचोरकदेवदारु सरल व्याघ्री वचाचेलक
त्वक्पत्रैः सहगन्धपत्रक शटी पथ्याचधात्रीघनैः ।
एतैः शोधित सस्कृतैः पलयुगैत्याख्यातयासंख्यया
तैलप्रस्थमवस्थितैः स्थिरमतिः कल्कैःपचेद्गान्धिकैः ॥
मांसी मुरादमनचम्पककुन्दरीत्वग्-
ग्रन्थ्यम्बुकुङ्कुमरवकै र्द्विपलैः सपृक्कैः ।
श्रीवास कुन्दुरुनखीनलिका मिषीणां

प्रत्येकतः पलमुपाद्य पुनः पचेत्त ॥
एला लवङ्ग चलचन्दनजातिपूति-
कक्कोलकागुरुलताघुसृणैः पलार्द्धैः ।
कस्तूरिकाचसहितामलदीप्तियुक्तैः
पक्कन्तु मन्दशिखिनैव महासुगन्धम् ।
पञ्चद्विकेन चार्द्धेन मदात्कर्पूरमिष्यते ।
प्रागुक्तौ शुद्धिसंस्कारौ गन्धानामिहतैः पुनः ।
द्विगुणैर्लक्ष्मीविलासः स्याद्यन्तु तैल सत्तमः ॥
पञ्चपत्राम्बुना चाद्यो द्वितीयो गन्धवारिणा ।
तृतीयोऽपि च तेनैव पाको वा धूपिताम्बुना ।
तैलयुग्ममिदं तूर्णं विकारान् वातसम्भवान् ।
चपयेज्जनयेत्पुष्टिं कान्तिं मेधां धृतिं श्रियम् ।

पञ्चद्विकेनेति पञ्चधा विभक्तस्य कस्तूरीकस्यैको भागो रक्तिद्वयाधिकत्रिमाषको भवति तथा मानेन कर्पूरस्य द्वौ भागौ किम्वा अर्द्धेन कस्तूरीकर्षात्कर्पूरस्याष्टौ माषकाः ।

## नकुलाद्यं घृतम् ।

नकुलस्य च मांसस्य पचेत्प्रस्थं जलाढ़के ।
तत्समं दशमूलञ्च पक्वं माषबलान्वितम् ॥
घृतं प्रस्थं पचेत्तत्र चतुर्भागावशेषितम् ।
शतावरीरसप्रस्थं गव्यदुग्धञ्च तत्समम् ॥
अष्टौ वर्गाश्च काकोल्यौ जीवन्ती मधुयष्टिका ।
एलात्वचञ्च पत्रञ्च त्रिकटु त्रिफला तथा ।
मुस्तकं नागजिह्वा च कर्षं कर्षं प्रदापयेत् ।

सर्व्ववातविकारेषु अपस्मारे विशेषतः॥
महोन्मादे पक्षघाते चाध्माने कोष्ठनिग्रहे।
हस्तकम्पे शिरःकम्पे वाधिर्य्ये मूकमिन्मिने॥
ऊर्द्ध्वजत्रुगते वाते जङ्घा पार्श्वादिसंश्रिते।
नकलाद्यमिदं नाम्ना ऊर्द्ध्वजत्रुगदापहम्॥

छागलाद्यं घृतम्।

आजं चर्म्मविनिर्मुक्तं त्यक्तशृङ्गनखादिकम्।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत्॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
जीवनीयैः सयष्ट्याह्वैः चीरञ्चैव शतावरी॥
छागलाद्यमिदं नाम्ना सर्व्ववातविकारनुत्।
अर्द्दिते कर्णशूले च वाधिर्य्ये मूकमिन्मिने॥
जड़गद्गदपङ्गूनां खञ्जे गृध्रसिकुब्जयोः।
अपतानेऽपतन्त्रे च सर्पिरेतत्प्रशस्यते॥

अत्र यष्टिमधु भागद्वयमिति शिवदासः।

पृथगर्द्धतुलां पञ्चमूलद्वन्द्वाजमांसयोः।
निःक्वाथ्य सलिलद्रोणे क्वाथे पादावशेषिते।

घृतारम्भे मन्त्रः। ओँ कालि वज्रेश्वरि अमुकस्य फलसिद्धिं देहि रुद्रवचनेन स्वाहा॥ स्नापयित्वा छागमादौ मधु दत्त्वा ललाटके। उदङ्मुखः प्राङ्मुखो वा भिषगेनमुपालभेत्॥ छागमारण मन्त्रः। ओँ ह्रां ओँ गौं गणपतये स्वाहा॥

बृहच्छागलाद्यं घृतम्।

छागमांसतुलां गृह्य दशमूल्याः पलं शतम्।

अश्वगन्धा पलशतं वाट्यालकशतं तथा ॥
घृताढ़कं पचेत्तोयैश्चतुर्भागावशेषितैः ।
क्षीरं स्नेहसमं दद्यात् शतावर्य्या रसं तथा ॥
ताम्रपात्रे दृढ़े चैव शनैर्मृद्वग्निना पचेत् ।
अस्यौषधस्य कल्कस्य प्रत्येकं शुक्तिसंमितम् ॥
जीवन्ती मधुकं द्राक्षा काकोल्यौ नीलमुत्पलम् ।
मुस्तं सचन्दनं रास्ना पर्णिनीद्वय शारिवे ।
मेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी ॥
दार्व्वी प्रियङ्गु त्रिफला नतं तालीशपद्मकौ ।
एलापत्रं वरीनागं जातीकुसुमधान्यकम् ॥
मञ्जिष्ठा दाड़िमं दारु रेणुकं सैलवालुकम् ।
विडङ्गं जीरकञ्चैव पेषयित्वा विनिक्षिपेत् ॥
वस्त्रपूते च शीते च शर्करा प्रस्थ संयुतम ।
निक्षापयेत स्निग्ध भाण्डे मार्दे वा भाजने शुभे ॥
अस्यौषधस्य सिद्धस्य शृणु वीर्य्यमतःपरम् ।
देवदेवं नमस्कृत्य संपूज्य गणनायकम् ॥
पिबेत्पाणितलं तस्य व्याधिं वीक्ष्यानुपानतः ॥
सर्व्ववात विकारेषु अपस्मारे विशेषतः ।
उन्मादे पक्षघाते च आध्माने कोष्ठनिग्रहे ॥
कर्णरोगे शिरोरोगे वाधिर्य्ये चापतन्त्रके ।
भूतोन्मादे च गृध्रस्यां सोदरे चाक्षिपातजे ।
पार्श्वशूले च हृच्छूले वाह्यायामार्दिते तथा ॥
वातकण्टक हृद्रोग मूत्रकृच्छ्रे सपङ्गुके ।
क्रोष्टुशीर्षे तथा खञ्जे कुब्जे चाध्वनि भिन्मिने ॥

अपतानेऽन्तरायामे रक्तपित्ते तथोर्द्ध्वगे।
आनाहेऽश्मरीविकारेषु चातुर्थकज्वरेऽपि च॥
हनुग्रहे तथा शोषे क्षीणे चैवाववाहुके।
दण्डापतानके भग्ने दाहे चाक्षेपके तथा॥
जीर्णज्वरे विषे कुष्ठे शेफःस्तम्भे मदात्यये।
आढ्यवातेऽग्निमान्द्ये च वातरक्त गदेषु च॥
एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे।
हस्तकम्पे शिरःकम्पे जिह्वास्तम्भे जड़े भ्रमे॥
क्षीणेन्द्रिये नष्टशुक्रे शुक्रनिःसरणे तथा।
स्त्रीणां वातास्रपाते च पटले चाक्षिस्पन्दने॥
एकाङ्गस्पन्दने चैव सर्वाङ्गस्पन्दने तथा।
नगादि पतिते वाते स्त्रीणामप्राप्तिहेतुके॥
आभिचारिक दोषे च धनसन्तापसम्भवे।
ये वात प्रभवा रोगा ये च पित्तसमुद्भवाः॥
शिरामध्य गता ये च जङ्घा पार्श्वादि संस्थिताः।
मातृग्रहाभिभूतस्य शिशुर्यस्य विशुष्यति॥
प्रक्षीणबलमांसस्य न वत्मं गमनक्षमः।
घृतेनानेन सिध्यन्ति वज्रमुक्तिरिवासुरान्॥
निहन्ति सकलान् रोगान् घृतं परम दुर्लभम्॥

रसायनं बह्निबलप्रदञ्च-
वपुः प्रकर्षं विदधाति रूपम्।
दत्तावलेन्द्रेन समानतेजा
दीर्घायुषं पुत्रशतं करोति॥
स्त्रीणां शतं गच्छति चातिरेकं

न याति तृप्तिं सरसः समाङ्गः।
अपुत्रिणो पुत्रशतं करोति
शतायुषं कामसमं बलिष्ठम्॥
मह्दद्भुतं नाम तु छागलाद्यं
विनिर्म्मितं वातनिसूदनञ्च।
शिवं शुभं रोगभयापहञ्च
चकार हारीतमुनिर्विशिष्टः॥

शृगाल वर्ह्हिणोः पाके पुमांसं तत्र दापयेत्।
मयूरी जम्बुकी च्छागी वीर्य्यहीनास्वभावतः॥
भाषितं काशिराजेनच्छाग एव नपुंसकः॥

चतुर्मुखोरसः।

रस गन्धक लौहाभ्रं समं सूताद्धि हेम च।
सर्व्वं खल्लतले पिष्ट्वा कन्यास्वरसमर्द्दितम्॥
एरण्डपत्रैरावेष्ठ्य धान्यराशौ दिनत्रयम्।
संस्थाप्य च तदुद्धृत्य सर्व्वरोगेषु योजयेत्॥
एतद्रसायनवरं त्रिफलामधुयोजितम्।
तद्यथाग्नि बलं खादेद्वलीपलित नाशनम्॥
क्षयमेकादशविधं पाण्डु रोगं प्रमेहकम्।
कासं शूलञ्च मन्दाग्निं हिक्काञ्चैवाम्लपित्तकम्॥
व्रणान् सर्व्वानाढ्यवातं विसर्पं विद्रधिं तथा।
अपस्मारं महोन्मादं सर्व्वार्शांसि त्वगामयान्॥
क्रमेण शीलितं हन्ति वृक्षमिन्द्राशनिर्यथा।
पौष्टिकं धन्यमायुष्यं स्त्रीणां प्रसव कारणम्॥
चतुर्मुखेन देवेन कृष्णात्रेयस्य सूचितम्॥

### चिन्तामणिचतुर्मुखः।

विशुद्धं रससिन्दूरं तदर्द्धं लौहमभ्रकम्।
तदर्द्धं कनकं खल्ले कन्यास्वरससमर्द्दितम्॥
एरण्डपत्रैरावेष्ट्य धान्यराशौ निधापयेत्।
त्रिदिनान्ते समुद्धृत्य सर्वरोगेषु योजयेत्॥
एतद्रसायनवरं त्रिफलामधुसंयुतम्।
तद्यथाग्निबलं खादेद्वलीपलितनाशनम्।
अपस्मारं महोन्मादं रोगान् वातसमुद्भवान्॥
क्रमेण शीलितं हन्ति वृक्षमिन्द्राशनिर्यथा॥

### योगेन्द्ररसः।

विशुद्धं रससिन्दूरं तदर्द्धं शुद्धहाटकम्।
तत्समं कान्तलौहञ्च तत्समञ्चाभ्रमेव च॥
विशुद्धं मौक्तिकञ्चैव वङ्गञ्च तत्समं मतम्।
कुमारिकारसैर्भाव्यं धान्यराशौ दिनत्रयम्॥
ततो रक्तिद्वय मितां वटीं कुर्य्याद्विचक्षणः।
योगवाही रसो ह्येष सर्वरोग कुलान्तकः॥
वातपित्तभवान् रोगात् प्रमेहान् बहुमूत्रताम्।
मूत्राघातमपस्मारं भगन्दरगुदामयम्॥
उन्मादं मूर्च्छां यक्ष्माणं पक्षाघातं हतेन्द्रियम्।
शूलाम्लपित्तकं हन्ति भास्करस्तिमिरं यथा॥
त्रिफलारसयोगेन शुभया सितयापि वा।
भक्षयित्वा भवेद्रोगी कामरूपी सुदर्शनः॥
रात्रौ सेव्यं गवां क्षीरं क्षमायाञ्च विशेषतः।

योगेन्द्राख्यो रसो नाम्ना कथात्रेय विनिर्म्मितः॥

रसराजरसः।

पलैकं शुद्धसूतस्य व्योमसत्त्वञ्च कार्षिकम्।
तदर्द्धं काञ्चन देयं कन्यारसविमर्द्दितम्॥
लौहं रूप्यं मृतं वङ्गं वाजिगन्धां लवङ्गकम्।
जातीकोषं तथा चीरकाकोलीञ्च तदर्द्धतः॥
काकमाचीरसैःपिष्ट्वा पञ्चगुञ्जामिता वटी।
चीरञ्चशर्करातोयमनुपानं प्रकल्पयेत्॥
पक्षाघातेऽर्द्दितवाते हनुस्तम्भेऽपतन्त्रके।
धनुस्तम्भेऽपतानें च वाधिर्य्ये मस्तकभ्रमे॥
सर्ववात विकारेषु रसराजः प्रकीर्त्तितः।
बल्यो वृष्यश्च भोग्यश्च वाजीकरण उत्तमः॥

वृहद्वातचिन्तामणिः।

भागत्रयं स्वर्णभस्मद्विभागं रूप्यमभ्रकम्।
लौहात्पञ्च प्रवालञ्च मौक्तिकं त्रयसम्मितम्॥
भस्म सूतं सप्तकञ्च कन्यारसविमर्द्दितम्।
वल्लमाला वटी कार्य्या भिषग्भिः परियत्नतः।
यथाव्याध्यनुपानेन नाशयेद्रोगसंकुलम्।
वातरोगं पित्तकृतं निहन्ति नात्र चिन्तनम्॥
वृद्धोऽपि तरुणस्पर्द्धी कन्दर्पसमविक्रमः।
दृष्टः सिद्धफलश्चायं वातचिन्तामणिस्त्विह॥

बलारिष्टः।

बलाश्वगन्धयोर्याह्यं पृथक पलशतं शुभम्।

चतुर्द्रोणे जलेपक्वा द्रोणमेवावशेषयेत् ।
शीते तस्मिन् रसे पूते क्षिपेद् गुड़तुलात्रयम् ।
धातकीं षोड़श पलां पयस्यां द्विपलांशिकाम् ॥
पञ्चाङ्गुलपलद्वन्द्वं रास्नामेलां प्रसारणीम् ।
देवपुष्पमुशीरञ्चश्वदंष्ट्राञ्च पलांशिकाम् ॥
मासं भाण्डे स्थितस्त्वेष बलारिष्टो महाफलः ।
हन्त्युग्रान् वातजान् रोगान् बलपुष्ट्यग्निवर्द्धनः ॥

इति भैषज्यरत्नावल्यां वातव्याध्यधिकारः समाप्तः

## अथामवाताधिकारः ।

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च ।
विरेचनं स्नेहपानं वस्तयश्चाममारुते ॥
आमवाते पञ्चकोल सिद्धं पानान्नमिष्यते ।
पटोलं गोक्षुरश्चैव वरुणं कारवेल्लकम् ॥
यवकोद्रव शाल्यादि प्रपुराणं सतिक्तकम् ।
लावादीनां तथा मांसं तक्रेण मस्तुना हितम् ॥

### शङ्करस्वेदः ।

कार्पासास्थि कुलत्थिका तिल यवैरेरण्ड मूलातसी
वर्षाभूशणबीज काञ्जिक युतैरेकीकृतैर्वा पृथक् ।

स्वेदः स्यादिति कूर्परोदरशिरःस्फिक्पाणिपादाङ्गुली-
गुल्फस्कन्धकटीरुजा विजयते सामाः समीरानुगाः॥

एतानि समुदितानि एकैकशो वा संकुट्यकाञ्जिकेन संसिच्य वस्त्रेण पोट्टलीद्वयं वद्धाद्रौमाग्नि चुल्ल्युपरिस्थित काञ्जिकस्थाल्युपरिलिप्त सच्छिद्र शरावस्थं वास्पतप्तमेकै-कमानीय वेदना स्थाने स्वेदयेत्॥

रुक्ष स्वेदो विधातव्यो वालुकापुटकै स्तथा॥
गोजल पिष्टं हिंस्रा केवुक शिग्रु द्रवं मूलम्।
नाकुयुत परिलेपात्साम समीरणः कुत्र॥

एषां समभागं गोमूत्रेण पिष्ट्वा वेदनास्थाने प्रक्षेपः।

शतपुष्पा वचाशिग्रु श्वदंष्ट्रा वरुणत्वचः।
सहदेवा च वर्षाभूः शटी च सहभाटली॥
सतर्कारीफलं हिङ्गु शुक्त काञ्जिक पेषितम्॥
आमवात हरं श्रेष्ठं सुखोष्णं लेपनं हितम्।

राजादिदशमूलम्।

दशमूल्यमृतैरण्ड रास्ना नागर दारुभिः।
क्वाथो रुवूक तैलेन सामं हन्त्यनिलं गुरुम्॥

रास्नासप्तकम्।

रास्नामृतारग्वधदेवदारु-
त्रिकण्टकैरण्ड पुनर्नवानाम्।
क्वाथं पिवेन्नागरचूर्ण मिश्रं
जङ्घोरुपार्श्वत्रिक पृष्ठशूली॥

रास्नापञ्चकम्।

रास्ना गुडूचीमेरण्डं देवदारु महौषधम्

पिबेत्सार्वाङ्गिकेवातेसामे सन्ध्यस्थिमज्जगे ॥

रास्नापञ्चके रास्नासप्तके च उष्णे भेदार्थमेरण्डतैलं प्रक्षिपन्ति वृद्धाः ।

दशमूली कषायेण पिबेद्वा नागराम्भसा ।

कुक्षिवस्तिकटीशूले तैलमेरण्ड सम्भवम् ॥

आमवात गजेन्द्रस्य शरीर वनचारिणः ।

एक एव निहन्तासावेरण्डस्नेहकेशरी ॥

एरण्डतैल युक्तां हरीतकीं भक्षयेन्नरो विधिवत् ।

आमानिलार्त्ति युक्तो गृध्रसि वृद्ध्यर्दितो नित्यम् ॥

भृष्टाद्यात् कटुतैलेऽन्नैः सहारग्वधपल्लवम् ।

किम्वाम्लकाञ्जिके पक्वा खादेदामानिलापहम ॥

प्रातं नागरचर्णस्य काञ्जिकेन पिवेत्सदा ।

आमवात प्रशमनं कफवात हरं परम ॥

त्रिवृत्सैन्धवशुण्ठीनामारनालेन चूर्णितम् ।

पीत्वा विरिच्यते जन्तुरामवातहरं परम् ॥

सप्ताहं त्रिवृतश्चूर्णं त्रिवृत् क्वाथेन भावितम् ।

काञ्जिकेन तु तत्पीतं रेचयेदामवातिनम् ॥

## वैश्वानरचूर्णम् ।

मानिमन्थस्य भागो द्वौ यमान्यास्तद्वदेवहि ।

भागास्त्रयोऽजमोदाया नागराद् भागपञ्चकम् ।

दश द्वौ च हरीतक्याः सूक्ष्मचूर्णीकृताः शुभाः ।

मस्त्वारनाल तक्रेन सर्पिषोष्णोदकेन वा ।

पीतं जयत्यामवातं गुल्मं हृद्वस्तिजान् गदान् ।

प्लीहानं ग्रन्थि शूलादीनर्शांस्यानाहमेव च ॥

विबन्धं वातजान् रोगांस्तथैवहृत्पादजान् ।
वातानुलोमनमिदञ्चूर्णं वैश्वानरं स्मृतम् ॥

अजमोदादिवटकः।

अजमोदा मरिचपिप्पली विडङ्गसुरदारु चित्रकशताह्वा।
सैन्धवपिप्पलीमूलं भागा नवकस्य पलिकाः स्युः ॥
शुण्ठी दशपलिका स्यात्पलानि तावन्ति वृद्धदारस्य।
पथ्या पञ्चपलानि च सर्वाण्येकत्र सञ्चूर्ण्य ।
समगुड़वटकानदतश्चूर्णं वाप्युष्णवारिणा पिबतः॥
नश्यन्त्यामानिलजाः सर्वे रोगाः सुकष्टाश्च ॥
विसूचिका प्रतितूणी हृद्रोगा गृध्रसी चोग्रा ।
कटिवस्ति गुदस्फुटनञ्चैवास्थि जङ्घयोस्तिव्रम् ॥
श्वयथुस्तथाङ्गसन्धिषु ये चान्येऽप्यामवातसम्भूताः ।
सर्वे प्रयान्ति नाशं तम इव सूर्य्यांशुविध्वस्तम् ॥

अजमोदादि वटके सर्वचूर्णसमो गुड़ः किञ्चिदुदकं दत्त्वा वह्नौ गुड़ं द्रवीकृत्य तत्र चूर्णं प्रक्षिप्य वटकाः कार्य्याः चूर्णं वेति गुड़ं विहाय केवलमुष्णोदकादिभिः पेयमिति भानुः।

आमगजसिंहोमोदकः।

शुण्ठीचूर्णस्य प्रस्थैकं यमान्याश्च पलाष्टकम्।
जीरकस्य पलद्वन्द्वं धन्याकस्य पलद्वयम् ॥
पलैकं शतपुष्पाया लवङ्गस्य पलं तथा।
टङ्कनस्य पलं ग्राह्यं मरिचस्य पलम्भवेत् ॥
चित्रता त्रिफला चारपिप्पलीनां पलं पलम्।

एतेषां सर्वचूर्णानां खण्डं दद्याच्चतुर्गुणम् ॥
घृतेन गुड़कीकृत्य मोदकौ मधुना कृतः।
शटेरला तेजपत्राणां कर्षं दद्याद्गुड़त्वचः ॥
चतुर्भिरधिवासोऽस्य तोलैकं खादयेद्बुधः।
शरीरं वीक्ष्य मात्रास्य युक्त्या वा वृटिवर्द्धनम् ॥
आमवातप्रशमनः कटीग्रहविनाशनः।
शूलघ्नो रक्तपित्तघ्नश्चाम्लपित्तविनाशनः ॥
श्रीमता चन्द्रनाथेन गुरुणा भाषितं मयि।
श्रीमद्गहननाथोऽयं कृतवान् मोदकं शुभम ॥
गर्जत्वामगजेन्द्रोऽयमजीर्णं बलमागतः।
यथा सिंहो वने हन्ति दन्तिनं बलिनं शुभम् ॥
तथामराजकरिणं निहन्त्येव न संशयः ॥

शटयादीनां चतुर्णां प्रक १ सुगममन्यत्।

## रसोनपिण्डः।

रसोनस्य पलशतं तिलस्य कुड़वं तथा।
हिङ्गु त्रिकटुकं चारौ द्वौ पञ्च लवणानि च ॥
शतपुष्पा तथा कुष्ठं पिप्पलीमूलचित्रकौ।
अजमोदा यमानि च धन्याकञ्चापि बुद्धिमान् ॥
प्रत्येकन्तु पलश्चैषां श्लक्ष्णचूर्णानि कारयेत् ॥
घृतभाण्डे दृढ़े चैतत् स्थापयेद्दिनषोड़श।
प्रक्षिप्य तैलमानीञ्च प्रस्थार्द्धं काञ्जिकस्य च ॥
खादेत्कर्षप्रमाणन्तु तोयं मद्यं पिबेदनु।
आमवाते तथा वाते सर्वाङ्गैकाङ्गसंश्रये ॥

अपस्मारेऽनले मन्दे कासश्वासगरेषु च।
उन्मादे वातभग्ने च शूले जन्तोः प्रशस्यते॥

## महारसोनपिण्डः।

रसोनपलशतं लुञ्चं तदर्द्धं निस्तुषात्तिलात्।
पात्रं गव्यस्य तक्रस्य पिष्ट्वा चैतानि संक्षिपेत्॥
त्रिकटु धान्यकं चव्यं चित्रकं गजपिप्पली।
अजमोदा त्वगेला च ग्रन्थिकञ्च पलांशिकम्॥
शर्करायाः पलान्यष्टौ पलांशं मरिचस्य च।
कुष्ठाजाज्योश्च चत्वारि मधुनः कुड़वं तथा॥
आर्द्रकस्य च चत्वारि सर्पिषोऽष्टौ पलानि च।
तिलतैलस्य तावन्ति शुक्तकस्यापि विंशतिः॥
सिद्धार्थकस्य चत्वारि राजिकायास्तथैव च।
कर्षप्रमाणं दातव्यं हिङ्गु लवणपञ्चकम्॥
एकीकृत्य दृढ़े कुम्भे धान्यराशौ निधापयेत्॥
द्वादशाहात्समुद्धृत्य प्रातः खाद्यं यथाबलम्।
सुरां सौवीरकं सीधुं चोरञ्चानुपिबेन्नरः॥
जीर्णे यथेप्सितं भोज्यं दधिपिष्टान्नवर्जितम्।
एकमासप्रयोगेन सर्वान् व्याधीन् व्यपोहति॥
अशीतिं वातजान् रोगान् चत्वारिंशच्च पैत्तिकान्।
विंशतिं श्लैष्मिकांश्चैव प्रमेहानपि विंशतिम्॥
अर्शांसि षट्प्रकाराणि गुल्मं पञ्चविधं तथा।
अष्टादशविधं कुष्ठमेकादशविधं क्षयम्॥
श्वयथुं योनिशूलञ्च सर्वमाशु विनाशयेत्।

क्षतसन्ध्यस्थिभग्नानां सन्धानकरणः परः ॥
दृष्टेर्बलकरो हृद्य आयुष्यो बलवर्द्धनः ।
महारसोनपिण्डोऽयमामवातकुलान्तकः ॥

सर्वमेकीकृत्य चण्डातपे शोषयित्वा स्निग्धभाण्डे संस्थाप्य धान्यराशौ द्वादशदिनानि स्थाप्यं तत उद्धृत्य आकृष्य खाद्यं मा ८ उत्तमगुणानम् ।

## वातारिगुग्गुलुः ।

वातारितैलसंयुक्तं गन्धकं पुरसंयुतम् ।
फलत्रययुतं कृत्वा पिष्टयित्वा चिरं कृती ॥
भक्षयेत्प्रत्यहं प्रातरुष्णतोयानुपानतः ।
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम् ॥
आमवातं कटीशूलं गृध्रसीं खञ्जपङ्गुताम् ।
वातरक्तं सशोथञ्च मदाढ्यं क्रोष्टुशीर्षकम् ॥
शमयेद्बहुशो दृष्टमपि वैद्यविवर्जितम् ।

## योगराजगुग्गुलुः ।

चित्रकं पिप्पलीमूलं यमानी कारवी तथा ।
विड़ङ्गान्यजमोदा च जीरकं सुरदारु च ॥
चव्यैला सैन्धवं कुष्ठं रास्ना गोक्षुरधान्यकम् ।
त्रिफलामुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥
तालीशपत्रं पत्रञ्च श्लक्ष्णचूर्णानि कारयेत् ।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुम् ॥
सम्मर्द्य सर्पिषा गाढ़ं स्निग्धे भाण्डे निधापयेत् ।
अतो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि ॥

योगराज इति ख्यातो योगोऽयममृतोपमः।
आमवाताढ्यवातादीन् क्रिमि दुष्टव्रणानि च॥
प्लीहगुल्मोदरानाह दुर्नामानि विनाशयेत्।
अग्निञ्च कुरुते दीप्तं तेजो वृद्धिं बलं तथा॥
वातरोगान् जयत्येष सन्धिमज्जगतानपि॥

आदौ शुद्धगुग्गुलुं घृतेन पिष्टयित्वा पश्चात्समेन सर्वचूर्णेन सह घृतेन पिष्टयित्वा स्निग्धभाण्डे स्थापयेत्ततोऽष्टौ माषकानुष्णोदकेन भक्षयेत्॥

## वृहद्योगराजगुग्गुलुः।

त्रिकटु त्रिफला पाठा शताह्वा रजनीद्वयम्।
अजमोदा वचा हिङ्गु हवुषा हस्तिपिप्पली॥
उपकुञ्चिका शटीधान्यं विड़ं सौवर्चलं तथा।
सैन्धवं पिप्पलीमूल त्वगेलापत्रकेशरम्॥
फणिज्झकञ्च लौहञ्च सर्जकञ्च त्रिकण्टकम्।
रास्ना चातिविषा शुण्ठी यवक्षाराम्लवेतसम्॥
चित्रकं पुष्करञ्चव्यं वृक्षाम्लं दाड़िमं त्वचम्।
अश्वगन्धा वृहद्दन्ती वदरं देवदारु च॥
हरिद्रा कटुका मूर्वा त्रायमाणा दुरालभा।
विड़ङ्गं मृतवङ्गञ्च यमानी वासकाभ्रकम्॥
एतानि समभागानि स्नत्वा चूर्णानि कारयेत्।
शोधितं गुग्गुलुञ्चैव सर्वचूर्णसमं नयेत्॥
घृतेन पिष्टयित्वा च स्निग्धे भाण्डे निधापयेत्।
रसवातेन ये भग्नाः कटिभग्नाश्च ये जनाः॥

एकाङ्गं शुष्यते येषां कुष्ठं वापि चतोत्तरम्।
पादौ विस्तारितौ येषां येषां वा गृध्रसीग्रहः॥
सन्धिवातं क्रोष्टुशीर्षं वातं सर्वशरीरगम्।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्॥
विंशतिं श्लैष्मिकांश्चैव हन्त्यवश्यं न संशयः।
अयं वृहद्योगराजगुग्गुलुः सर्ववातहा॥

सिंहनादगुग्गुलुः।

पिष्टितां गुग्गुलोर्मानीं कटुतैलपलाष्टकम्।
प्रत्येकं त्रिफला प्रस्थौ सार्द्धद्रोण जले पचेत्॥
पादशेषञ्च पूतञ्च पुनरेतैर्हि मिश्रयेत्।
त्रिकटु त्रिफला मुस्तविड़ङ्गामरकानिकम्॥
गुड़ूच्यग्निवृद्धहती चवीशूरणमानकम्।
पारदं गन्धकञ्चैव प्रत्येकं शुक्तिसम्मितम्॥
सहस्रं कानकफलं सिद्धे सञ्चूर्ण्य निक्षिपेत्।
ततो माषद्वयं जग्ध्वा पिवेत्तप्तजलादिकम्॥
अग्निञ्च कुरुते दीप्तं वड़वानलसन्निभम्।
धातुवृद्धिं वयोवृद्धिं बलं सुविपुलं तथा॥
आमवातं शिरोवातं सन्धिवातं सुदारुणम्।
जानुजङ्घाश्रितं वातं सकटीग्रहमेव च॥
अश्मरीं मूत्रकृच्छ्रञ्च भवनञ्च तिमिरोदरे।
अम्लपित्तं तथा कुष्ठं प्रमेहं गुदनिर्गमम्॥
कासं पञ्चविधं श्वासं चयञ्च विषमज्वरम्।
शोथानं श्लीपदं गुल्मं पाण्डुरोगं सकामलम्॥

शोथान्त्रवृद्धिशूलानि गुदजानि विनाशयेत्।
मेदः कफामसङ्घातं व्याधिवारणदर्पहा॥
सिंहनाद इति ख्याता योगोऽयममृतोपमः॥

कटुतैलेन गुग्गुलुं पिष्टयित्वा क्वाथजलेन सह पक्वा आसन्नपाके प्रक्षेपार्थं त्रिकट्वादीनां चूर्णं तो. ४ शोधित जयपालवीज गोटा १००० रसगन्धकौ कज्जलीकृत्य शीतीभूते दातव्यौ इति वृद्धाः।

## वृहत्सैन्धवाद्यं तैलम्।

सैन्धवं श्रेयसी रास्ना शतपुष्पा यमानिका।
सर्जिका मरिचं कुष्ठं शुण्ठी सौवर्चलं विड़म्॥
वचाजमोदा मधुकं जीरकं पौष्करं कणा।
एतान्यर्द्धपलांशानि श्लक्ष्णपिष्टानि कारयेत्॥
प्रस्थमेरण्डतैलस्य प्रस्थाम्बु शतपुष्पजम्।
काञ्जिकं द्विगुणं दत्त्वा तथा मस्तु शनैः पचेत्॥
सिद्धमेतत्प्रयोक्तव्यमामवातहरं परम्।
पानाभ्यञ्जनवस्तौ च कुरुतेऽग्निबलं भृशम्॥
वातार्त्तरक्षणे शस्तं कटीजानूरुसन्धिजे।
शूले हृत्पार्श्वपृष्ठेषु कच्छ्रेऽश्मरि निपीड़िते॥
व्रध्नायामादितानाहे अन्त्रवृद्धिनिपीड़िते।
अन्यांश्चानिलजान् रोगान् नाशयत्याशु देहिनाम्॥

## द्वितीयसैन्धवाद्यं तैलम्।

सैन्धवं देवकाष्ठञ्च वचा शुण्ठि च कट्फलम्।
शताह्वा मुस्तकं चव्यं मेदे मलहरं त्रिवृत्॥

हिज्जलस्य त्वचं बालं चित्रकं ब्रह्मयष्टिका।
शटी विडङ्गमधुकं रेणुकातिविषा त्वच् ॥
अम्बष्ठी नीलिनी दन्तीमूलं मरिचमेव च।
अजमोदा पिप्पली च कुष्ठं रास्ना च ग्रन्थिकम् ॥
एषां कर्षमितैः कल्कैः शनैर्मृद्वग्निना पचेत्।
प्रस्थञ्च कटुतैलस्य मूर्च्छितस्य यथाविधि ॥
एतत्तैलवरं श्रेष्ठमभ्यङ्गात्सर्ववातनुत्।
विशेषेणामवातेषु कटीजानूरुसन्धिषु ॥
हृत्पार्श्वे सर्वगात्रेषु शूलञ्चैव विनाशयेत् ॥
वातश्लेष्मणि वाह्याद्यामन्त्रवृद्धौ भगन्दरे।
शस्तं नाड़ीव्रणान् सर्वान् नाशयत्यथ देहिनाम्।
अन्यांश्च विविधान् रोगान् वृत्रमिन्द्राशनिर्यथा ॥
सैन्धवाद्यमिदं तैलं सर्वामयनिसूदनम् ॥

## आमवातारिवटिका।

रसगन्धकलौहाभ्रतुल्यटङ्गनसैन्धवान्।
समभागैर्विचूर्ण्याथ चूर्णद्विगुणगुग्गुलुः ॥
गुग्गुलोः पादिकं देयं त्रिवृताचूर्णमुत्तमम्।
तत्समश्चित्रकस्याथ घृतेन वटिकां कुरु ॥
खादेन्माषद्वयञ्चेदं त्रिफलाजलयोगतः।
आमवातारिवटिका पाचिका भेदिका मता ॥
आमवातं निहन्त्याशु गुल्मशूलोदराणि च।
यकृत् प्लीहोदराष्ठीलां कामलां पाण्डुरोगकम् ॥
हलीमकञ्चाम्लपित्तं श्वयथुं श्लीपदार्बुदौ।

ग्रन्थिशूलं शिरःशूलं वातरोगञ्च श्लीपदम्॥
गलगण्डं गण्डमालां क्रिमिं कुष्ठविनाशिनी।
विद्रधिं गर्द्दभानाहावन्त्रवृद्धिञ्च नाशयेत्॥

## आमवातारिरसः।

रसो गन्धो वरा वह्निर्गुग्गुलुः क्रमवर्द्धितः।
एतद्देरण्डतैलेन ग्रन्थाचूर्णं प्रपेषयेत्॥
कर्षोऽस्यैरण्डतैलेन हन्त्युष्णजलपायिनाम्।
आमवातमतोवीग्रं दुग्धमुद्गादिवर्जयेत्॥

## आमवातेश्वरोरसः।

शुद्धगन्धपलार्द्धञ्च मृततास्रञ्च तत्समम्।
ताम्रार्द्धं पारदं देयं रसतुल्यं मृतायसम्॥
सर्वं पञ्चाङ्गुलदले ढालयेन्निपुणः कृती।
सञ्चूर्ण्य पञ्चकोलस्य सर्वं क्वाथे विमर्द्दयेत्॥
रौद्रे विंशतिवारांश्च गुडूचीनां रसैर्दश।
भृष्टटङ्कनचूर्णेन तुल्येन सह मेलयेत्॥
टङ्कनार्द्धं विड़ं देयं मरिचं विड़तुल्यकम्।
तिन्तोड़ीवीजचूर्णन्तु सूततुल्यञ्च दन्तिका॥
त्रिकटु त्रिफला चैव लवङ्गञ्चार्द्धभागिकम्।
आमवातेश्वरोनाम विष्णुना परिकीर्त्तितः॥
महाग्निकारकोह्येष आमवातकुलान्तकः।
स्थूलानां कुरुते कार्श्यं कृशानां स्थौल्यकारकम्॥
अनुपानवशेनैव सर्वरोगकुलान्तकः।

साध्यासाध्यं निहन्त्याशु चामवातं सुदारुणम् ॥
गुरुद्रव्यान्नपानानि पयो मांसरसा हिताः।
भाजयेत्कण्ठपर्य्यन्तं चतुर्गुञ्जामितं रसम् ॥
कटुकतिक्तरहितं पिवेत्तदनुपानकम्।
शोघ्रं जोर्य्यति तत्सर्वं जायते दीपनः परः॥
अनेन सदृशो नास्ति वह्निसन्दीपनो रसः।
गुल्मार्शो ग्रहणीरोग शोथपाण्डुदरापहः॥

सर्वतोभद्रश्चाय मुच्यते।

गन्धकादिलौहान्तानां यथोक्तं भागं सर्वमेकीकृत्य चूर्णयित्वा लौहपात्रे घृत किञ्चिद्दत्त्वा तत्रचूर्णं द्रवीभूतं सद्योगोमयोपरि निहितैरण्डपत्रोपरि ढालयेत् अथ पर्पटी भूतंसंचूर्ण्य पञ्चकोलक्वाथेन विंशतिवारान् भावयेत्ततो गुडूचीरसेन पूर्ववत् क्वाथेन वा दशधा भावयेत् रत्ति खादेत् माषैकमिति पिष्टेन वङ्गेन काञ्जिकं कांस्य पिवेत् दशरत्तिकपर्य्यन्तं वर्द्धयेत् इत्युपदेशः।

त्रिफलादिलौहम्।

त्रिफला मुस्तकं व्योषं विड़ङ्गं पुष्करं वचा।
चित्रक मधुकञ्चैव पलांशं सूक्ष्मचूर्णितम् ॥
अयश्चूर्णपलान्यष्टौ गुग्गुलोस्तावदेव हि।
आलोड्य मधुनापेतं पलद्वादशकेन च॥
प्रातर्विलिह्य भुञ्जानो जीर्णे तस्मिन् जयेद्रुजः।
दुःसाध्यमामवातञ्च पाण्डुरोगं हलीमकम्॥

जीर्णामसम्भवं शूलं श्वयथुं विषमज्वरम्।

## विड़ङ्गादिलौहम्।

वज्रपाण्ड्वादिलौहानां ग्राह्यं पञ्चपलं शुभम्।
चूर्णं मृताभ्रकस्यापि लौहार्द्धं पारदं तथा॥
त्रिगुणा त्रिफला ग्राह्यालौहाभ्रात् षोड़शैर्जलैः।
पक्वाष्टभागशेषन्तु ग्राह्यं क्वाथजलं ततः
तेन लौहाभ्रचूर्णस्य पुनः पाच्यं समं घृतम।
शतावर्य्यारसस्यैव क्षीरस्य द्विगुणं रसात्॥
लौहमय्या पचेर्व्वी पात्रे चायसिताम्रके।
पचेत्पाकविधिज्ञस्तु बह्निना मृदुना शनैः॥
सिद्धे च प्रक्षिपेदेतान् विड़ङ्गादि यथोदितान्।
विड़ङ्गं नागरं धान्यं गुड़ुचीसत्त्वजीरकम्॥
पलाशबीजं मरिचं पिप्पली हस्तिपिप्पली।
त्रिवृता त्रिफला दन्ती एलाचैरण्डकं तथा।
चविका ग्रन्थिकं चित्रं मुस्तकं वृद्धदारकम्।
सर्व्वेषां चूर्णमेतेषां लौहाभ्रकसमं भवेत्।
आमवातगजेन्द्रस्य केशरी विधिनिर्म्मितः।
आमवातस्य शोथाश्चाप्यग्निमान्द्यं हलीमकम्।
इन्तीति शेषः।

## पञ्चाननरसलौहम्।

जारितं पुटितं लौहचूर्णं पञ्चपलं शुभम्।
गुग्गुलोश्च पलं पञ्चलौहार्द्धं मृतमभ्रकम्॥

शुद्धसूतमभ्रसमं गन्धकं तत्समं भवेत् ।
त्रिगुणामयसश्चर्णात् कृत्वा तां त्रिफलां पचेत् ॥
द्विरष्टभागं पानीयमष्टभागावशेषितम् ।
तेन चाष्टावशेषेण पचेल्लौहाभ्रगुग्गुलम् ॥
घृततुल्यं शतावर्य्यारसं दत्त्वा तथा शुभम् ।
प्रस्थं प्रस्थञ्च दुग्धस्य शनैर्मृद्वग्निना पचेत् ॥
लौहमय्या पचेद्दर्व्या पात्रे चायसि मृण्मये ।
ततः पाकविधिज्ञस्तु पाकसिद्धौ विनिक्षिपेत् ॥
विडङ्गं नागरं धान्यं गुडूचीसत्त्वजीरकम् ।
पञ्चकोलं त्रिवृद्दन्ती त्रिफलैला च मुस्तकम् ॥
सुचूर्णितञ्च प्रत्येकमेषामर्द्धपलं क्षिपेत् ।
रसस्य कज्जलीं कृत्वा ईषदुष्णे विमर्दयेत् ॥
उत्तार्य्य स्थापयेद्भाण्डे स्निग्धे चापि सुरक्षितम् ।
घृतेन मधुना पश्चात्मर्दयित्वानुपानतः ॥
गुडूची नागरैरण्डं क्काथयित्वा जलं पिबेत् ।
भक्षयेच्छुद्धदेहस्तु शुभेऽहनि सुरार्चकः ॥
आमवातमहाव्याधिं विनाशयेष्ट देवता ।
सन्धीवातं कटीशूलं कुक्षिशूलं सुदारुणम् ॥
जङ्घापादाङ्गुलीशूलं गृध्रसीं हन्ति पङ्गुताम् ।
गुल्मशोथं पाण्डुरोगं सन्धिवातञ्च दुःसहम् ॥
आमवातगजेन्द्रस्य केशरी विधिनिर्म्मितः ॥
दधिमत्स्यगुड़क्षीरपोतकीमाषपिष्टकान् ।
वर्जयेदामवातार्त्तो मांसञ्चानुपसम्भवम् ॥
अभिष्यन्दकरा ये च ये चान्ये गुरुपिच्छिलाः ।

वर्जनीयाः प्रयत्नेन आमवातार्दितैर्नरैः।

वातगजेन्द्रसिंह।

अभ्रं लौहं रसं गन्धं ताम्रं नागं सटङ्कनम्।
विषं सिन्धुं लवङ्गञ्च हिङ्गु जातीफलं समम्॥
तदर्द्धं त्रिसुगन्धञ्च त्रैफलं जीरकं तथा।
कन्या रसेन संपिष्य वटी कार्य्या त्रिरक्तिका॥
सेव्या पयोऽनुपानेन सदा प्रातः सुखान्वितैः।
अशीतिं वातजान् रोगान् चत्वारिंशञ्च पैत्तिकान्॥
विंशतिं श्लैष्मिकान् रोगान् सेवनादेव नाशयेत्।
अभिघातेन ये क्षीणाः क्षीणाश्चैवयवाश्च ये॥
व्याधिक्षीणावयःक्षीणाः स्त्रीक्षीणाश्चापि ये नराः।
क्षीणेन्द्रियानष्टशुक्रावह्निहीनाश्च मानवाः॥
तेषां दृष्यश्च वल्यश्च वयःस्थापन एव च।
खञ्जानां पङ्गुकुब्जानां क्षीणानां मांसवर्द्धनः॥
अरोगी सुखमाप्नोति रोगी रोगाद्विमुच्यते।
रसस्यास्य प्रसादेन नास्ति रोगाद्भयं क्वचित्॥
वातगजेन्द्र सिंहोऽयं रसो रोगविनाशकः॥

विजयभैरव तैलम्।

रसगन्धशिलातालं सर्वं कुर्य्यात्समांशकम्।
चूर्णयित्वा ततः सूक्ष्ममारनालेन पेषयेत्॥
तेनकल्केन संलिप्य सूक्ष्मवस्त्रं ततः परम्।
तेनाढ्यं कारयेद्वर्त्तिं मूर्द्धभागे च दीपयेत्।

वर्ध्यंशः स्थापिते पात्रे तैलं पतति शोभनम् ।
लेपयेत्तेन गात्राणि भक्षणाय च दापयेत् ॥
नाशयेत्सूततैलं बहूनातरोगानशेषतः ।
बाहुकम्पं शिरकम्पं जङ्घाकम्पं ततः परम् ॥
एकाङ्गञ्च तथा वातं हन्ति लेपान्नसंशयः ॥

इति भैषज्यरत्नावल्यामामवाताधिकारः समाप्तः ।

## अथ मूत्रकृच्छ्राधिकारः ।



अभ्यञ्जन स्नेह निरूह वस्ति-
स्वेदोपनाहोत्तरवस्ति सेकान् ।
स्थिरादिभिर्वात हरैश्च सिद्धान्
दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥
सेकावगाहाः शिशिराः प्रदेहा
ग्रैष्मो विधिर्वस्ति पयोविरेकाः ।
द्राक्षा विदारीक्षुरसैर्घृतैश्च
कृच्छ्रेषु पित्त प्रभवेषु कार्य्याः ॥
क्षारोष्ट तीक्ष्णौषध मन्नपानं
स्वेदो यवान्नं वमनं निरूहाः ।

बलां सतिलगोक्षुरसिद्ध तैल
मभ्यङ्ग पानं कफ मूत्रकृच्छ्रे ॥
सर्वं त्रिदोषप्रभवे च वायोः
स्थानानुपूर्व्या प्रसमीक्ष्य कार्य्यम्।
त्रिभ्योऽधिके प्राग्वमनं विरेकः
पित्ते कफे स्यात् पवने च वस्तिः
तथाभिघातजे कुर्यात्सद्योव्रण चिकित्सितम्।
स्वेदचूर्ण क्रियाभ्यङ्ग वस्तयः स्युः पुरीषजे॥
क्रिया हितास्त्वश्मरि शर्करायां
या मूत्रकृच्छ्रे कफ मारुतोत्थे।
लिह्यं शुक्र विबन्धोत्थे शिलाजतु समाक्षिकम्।
बृंहणैर्हितधातूत्थे विधेया प्रमदोत्तमा॥
यन्मूत्र कृच्छ्रे विहितञ्च पैत्ते
तत्कारयेच्छोणित मूत्रकृच्छ्रे॥
कुष्माण्डकरसं पीत्वा सयवक्षारशर्करम्।
मूत्रकृच्छ्राद्विमुच्येत शीघ्रञ्च लभते सुखम्॥

तृणपञ्चमूलम्।

कुशः कासः शरोदर्भ इक्षुश्चेति तृणोद्भवम्।
पित्तकृच्छ्र हरं पञ्चमूलं वस्ति विशोधनम्॥

पञ्चतृण क्षीरम्।

एतत्सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम्।

त्रिकण्टकादिः।

त्रिकण्टकारग्वध दर्भकास
दुरालभा प्रस्तरभेद पथ्या।

निघ्नन्ति पीडां मधुनाश्मरीष
संग्राम मृत्योरपि मूत्रकृच्छ्रम् ॥
क्वाथं गोक्षुर वीजस्य यवक्षारयुतं पिवेत् ।
मूत्रकृच्छ्रं यथारक्तं पीतः शीघ्रं निवारयेत् ॥

धात्र्यादिः ।

धात्री द्राक्षा विदारी च यष्ट्याह्वं गोक्षुरं तथा
एभिः कषायं विपचेत्पिबेत् शीतं सशर्करम् ॥
अपियोगशतासाध्यं मूत्रकृच्छ्रं जयेल्लघु ॥

वृहद्धात्र्यादिः ।

धात्रीद्राक्षा च यष्ट्याह्वं विदारी सत्रिकण्टका
दर्भेक्षुमूलमभया क्वाथयित्वा जलं पिबेत् ॥
बसितं मूत्रकृच्छ्रघ्नं रुजादाहहरं परम् ॥

वातिके कृच्छ्रे अमृतादिः ।

अमृता नागरं धात्री वाजिगन्धा त्रिकण्टकम् ।
प्रपिवेद्वातरोगार्त्तः सशूलो मूत्रकृच्छ्रवान् ।

शतावर्य्यादिः ।

शतावरी काश कुशैः श्वदंष्ट्रा
विदारि शालीक्षुकशेरुकाणाम्
क्वाथं सुशीतं मधुशर्करात्तं
पिवन् जयेत् पैत्तिकमूत्रकृच्छ्रम् ॥
गुड़ेनामलकं वृष्यं श्रमघ्नं तर्पणं परम् ॥

पित्तजसगदाहशूलघ्नं मूत्रकृच्छ्रनिवारणम्

दूर्वाकबीजं मधुकं सदार्वि
पैत्ते पिवेत्तण्डुलधावनेन।
दार्वीं तथैवामलकीरसेन
समाक्षिकां पैत्तिकमूत्रकृच्छ्रे॥

हरीतक्यादिः।

हरीतकीगोक्षुरराजवृक्ष-
पाषाणभिद्धन्वयवासकानाम्।
क्वाथं पिवेन्माक्षिकसंप्रयुक्तं
कृच्छ्रे सदाहे सरुजे विबन्धे॥

सितातुल्यो यवक्षारः सर्वकृच्छ्रविनाशनः॥
सूर्य्यावर्त्तभवं वीजं श्लक्ष्णं दृषदि पेषितम्।
व्युषितोदकसम्पीतं कृच्छ्रं हन्ति सुदारुणम्॥
मधुना च यवक्षारं मूत्रकृच्छ्राश्मरीहरम्॥
सगन्धकयवक्षारां शर्करां तक्रतः पिवेत्।
मूत्रकृच्छ्रादिमुच्येत साध्यासाध्यान्न संशयः॥
नारिकेलोद्भवं पुष्पं तण्डुलोदकसंयुतम्।
रक्तजं मूत्रकृच्छ्रं हि पित्तं हन्ति न संशयः॥

तारकेश्वरः।

शुद्धसूतं समं गन्धं लौहं वङ्गं मृताभ्रकम्।
दुरालभां यवक्षारं वीजं गोक्षुरजं शिवाम्॥
समांशं भावयेत्सर्वं कुष्माण्डफलवारिणा।

पञ्चतृणभवक्वाथे रसे गोक्षुरजे तथा॥
सम्पिष्य वटिका कार्य्या द्विगुञ्जा फल मानतः।
मधुनामर्य्य विलिह्येन्मूत्रकृच्छ्र विनाशनम्॥
उडुम्बर फलं पक्वं चूर्णितं कर्ष मात्रकम्।
लेहयेन्मधुना सार्द्धं मनुपानं सुखावहम्॥
सजाक्षीरं भवेत्पथ्यं शर्करेक्षूरसोहितः॥

मूत्रकृच्छ्रान्तकः।

सूतं लौहंवैक्रान्तं गन्धतुल्यं विमर्दयेत्।
चाण्डाली राक्षसी द्रावैर्द्दिनयामान्ते तु गोलकम्॥
शुष्कं बद्धा पुटेद्वाहः करीषाग्नौ महापुटे।
माषमात्रं लिहेत् क्षौद्रे मूत्रकृच्छ्र प्रशान्तये॥

त्रिकण्टकाद्यं घृतम्।

त्रिकण्टकैरण्ड कुशाद्यभीरु
कर्कारुकेक्षु स्वरसेन सिद्धम्।
सर्पिर्गुडार्द्धांशयुतं प्रपेयं
कृच्छ्राश्मरीमूत्रविघात हेतोः॥

मूत्रकृच्छ्रहरः।

विदारी गोक्षुरं यष्टी केशरञ्च समं पचेत्।
तत्कषायं पिवेत् क्षौद्रे, रस भस्मयुतं पुनः॥
मूत्रकृच्छ्रं हरेत्सर्वं समाहात्पित्त सम्भवम्॥
इति भैषज्यरत्नावल्यां मूत्रकृच्छ्राधिकारः समाप्तः



# अथ मूत्राघाताधिकारः।



मूत्राघातान् यथा दोषं मूत्रकृच्छ्रहरैर्जयेत्।
वस्तिमुत्तरवस्तिञ्च दद्यात् स्निग्धविरेचनम्॥
कर्कटिर्वारुबीजानामक्षमात्रं ससैन्धवम्।
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते॥
यवक्षारं गुडोन्मिश्रं पिवेत् पुष्पफलोद्भवम्।
रसं मूत्रविबन्धघ्नं शर्कराश्मरी नाशनम्॥
सपत्रफलमूलस्य क्वाथं गोक्षुरकस्य च।
पिवेन्मधुसिता युक्तं मूत्राघातादिरोगनुत्॥
नलकुशकाशेक्षु शिफां क्वथितां प्रातः सुशीतलां ससिताम्।
पिवतः प्रयाति नियतं मूत्रग्रह इत्युवाच चरकः॥
विम्बीमूलञ्च संपिष्टं काञ्जिकेन समन्वितम्।
नाभिलेपनमात्रेण मूत्ररोधं निहन्ति च॥
मूत्रे विपन्ने कर्पूरचूर्णं लिङ्गे प्रवेशयेत्।
कुष्माण्डकरसो वापि पेयः सक्षारशर्करः॥
जलेन खदिरी बीजं मूत्राघाताश्मरी हरम्।
मूलं रुद्रजटायाश्च तक्रपीतं तदर्थकृत्॥
शृतशीतपयोऽन्नाशी चन्दनं तण्डुलाम्बुना।
पिवेत् सशर्करं श्रेष्ठमुष्णवात विनाशनम्॥
गोधावत्या मूलं घृततैलगोरसोन्मिश्रम्।
पीतं निरन्न मचिराद्भिनत्ति मूत्रस्य संरोधम्॥
वराम्ल लवणोपेतं सूतं यश्च पिवेन्नरः।

तस्य नश्यन्ति वेगेन मूत्राघातास्त्रयोदश ॥

उशीराद्यं तैलम् ।

उशीरं तगरं कुष्ठं यष्टीमधुक चन्दनम् ।
विभीतक्यभया मोचः पद्ममुत्पल सारिवे ॥
बला तुरङ्गगन्धा च दर्भमूलं शतावरी ।
विदारी काकोलीचैव गुड़ूच्यतिबला तथा ॥
श्वदंष्ट्रा शतपुष्पा च क्राथ्याश्च मधुरिकि ।
एतैः कर्षमितैर्भागे स्तैल प्रस्थं विपाचयेत् ॥
सपत्रफलमूलस्य गोक्षुरस्य पलं शतम् ।
जलद्रोणे विपक्तव्यं पादांशेनावतारयेत् ॥
तस्मिं तैल समं देयं क्षीरष्वाथकाढ़कम् ।
मूत्राघातं मूत्रकृच्छ्र अश्मरीं हन्ति दारुणम् ॥
बलवर्णं करं हृद्यं वातपित्त निसूदनम् ।
उशीराद्य मिदं तैलं काशीराजेन निर्मितम् ॥

इति भैषज्यरत्नावल्यां मूत्राघाताधिकारः समाप्तः



# अथाश्मर्य्यधिकारः ।



वरुणादिः क्वाथः ।

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुर संयुताम् ।
यवक्षार गुड़ं दत्वा क्वाथयित्वा जलं पिबेत् ॥

अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम्।

## बृहद्वरुणादिः।

वारुणं बल्कलं शुण्ठी बीजं गोक्षुरसम्भवम्।
तालमूली कुलत्थञ्च कुशादि पञ्चमूलकम्॥
शर्करा क्षार संयुक्तं क्वाथयित्वा जलं पिबेत्।
अश्मरी मूत्रकृच्छ्रघ्नं वस्तिमेहनशूलनुत्॥
सगुड़ो वरुण क्वाथ 'स्तत्कल्केनाथवान्वितः'।
शिग्रुक्वाथोऽथवात्युष्णो हन्त्याशु सरुगश्मरीम्॥
त्रिकण्टकस्य बीजानां चूर्णं माक्षिक संयुतम्।
अजाक्षीरेण सप्ताहं पेयमश्मरि भेदनम्॥
प्रपिबेत्तालमूल्या वा कल्कं व्युषित वारिणा॥
तेनैवाथ गवाक्ष्या वा त्र्यहादश्मरि पातनम्॥
यो नारिकेल कुसुमं सक्षारं वारिणा पिष्ट्वा।
पिबति तस्य हि दिनैकान्निपतति घोराश्मरी नूनम्॥

## कुलत्थाद्यं घृतम्।

कुलत्थ सिन्धुत्थ विड़ङ्गसारं
सशर्करं शीतलि यावशूकम्।
बीजानि कुष्माण्डक गोक्षुराभ्यां
घृतं पचेत्तद्वरुणस्य तोये॥
दुःसाध्य सर्वाश्मरि मूत्रकृच्छ्रं
मूत्राभिघातञ्च समूत्र वन्धम्।
एतानि सर्वाणि निहन्ति शीघ्रं
प्ररूढ़ वृक्षानिव वज्रपातः॥

शीतलियावशूकमिति यवक्षारः सच स्फटिकं सैन्धव सङ्काशः अन्येतु शीतली स्वनामख्या च इतिभानुः।

वरुणघृतम्।

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत्।
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत्॥
वरुणं कदली बिल्वं तृणजं पञ्चमूलकम्।
अमृता चाश्मजं देयं बीजञ्च त्रपुषोद्भवम्॥
शतपर्वं तिलक्षारं पलाशक्षार मेव च।
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत्॥
अस्य मात्रां पिवेज्जन्तु र्देशकालाद्यपेक्षया।
जीर्णे तस्मिन् पिवेत्पूर्वं गुडं जीर्णन्तु मस्तुना॥
अश्मरीं शर्कराश्चैव मूत्रकृच्छ्रं विनाशयेत्॥

पाषाणभिन्नः।

शुद्ध सूतं द्विधा गन्धं शिलाजतुरसः पलम्।
श्वेतपुनर्नवावासा रसैः श्वेतापराजितैः॥
प्रति दिनं त्र्यहं मर्द्यं शुष्कं तद्भाण्डसंपुटे।
स्वेदयेद्दोलिकायन्त्रे संशुष्कं तं विचूर्णयेत्॥
रसः पाषाणभिन्नः,स्याद्दिगुञ्जश्चाश्मरीं हरेत्।
भूधात्रीफल विशालां पिष्टा दुग्धेन पाययेत्॥
कुलत्थक्वाथ संपीत मनुपानं सुखावहम्॥

आनन्द योगः।

तिलापामार्गकदलीपलाशयवसम्भवान्।

दग्ध्वा तद्भस्म तोयन्तु वस्त्रपूतञ्च कारयेत् ॥
तत्सेचित्तोय शेषान्नं ततश्चूर्णं द्विगुञ्जकम् ।
पायये दविमूत्रेण शर्कराश्मरिजिद्भवेत् ॥
छागमूत्रेणेति रसेन्द्र चिन्तामणौ ।

इति भैषज्यरत्नावल्यामश्मर्य्यधिकारः समाप्तः ।



## अथोपदंशाधिकारः ।



स्निग्ध स्विन्न शरीरस्य ध्वजमध्ये शिराव्यधः ।
जलौकः पातनं वा स्यादूर्द्धाधः शोधनं तथा ॥
सद्यो निर्जित दोषस्य रुक् शोथा वुपशाम्यतः ।
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरोहि सः ॥
त्रिफलायाः कषायेण भृङ्गराज रसेन वा ।
व्रण प्रक्षालनं कुर्य्यादुपदंश प्रशान्तये ॥
दहेत्कटाहे त्रिफलां समांशां मधु संयुताम् ।
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम् ॥

नूतन स्थाल्यां समभाग त्रिफलां शरावेण पिधाय दग्धव्यं तद्भस्म मधुना संयोज्योपदंशे लेपः ।

रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम् ।
सक्षौद्रं वा प्रलेपोऽयं सर्वलिङ्गगदापहः ॥

वब्बोलस्य चूर्णेन दाड़िमत्वग् भवेन वा।
गुण्डनं ग्रस्थि चूर्णेन उपदंश हरं परम् ॥
लेपः पूगफलेनाश्वमार मूलेन वा तथा।
सेवेन्नित्यं यवान्नञ्च पानीयं कौपमेव च ॥
जयाजात्यश्वमाराकं शम्पाकानां दलैः पृथक्।
क्षतं प्रक्षालने क्वाथं मेढ्रपाके प्रयोजयेत् ॥

धूपः।

बदराकंमपामार्गं स्तथा श्राम्रचयष्टिका।
हिङ्गुलञ्च समं चैषां भाव्यं कृत्वा च धूपनम् ॥
दोषजं कर्म्मजं हन्यादुपदंशादिकं व्रणम् ॥
दिवा निद्रां मूत्रवेगं गुर्वन्नं मैथुनं गुड़म्।
आयासमम्लं तक्रञ्च वर्जयेदुपदंशवान् ॥

भूनिम्बाद्यं घृतम्।

भूनिम्ब निम्ब त्रिफला पटोल-
करञ्ज जाती खदिराशनानाम्।
सतोय कल्कैर्घृत माशु पक्वं
सर्वोपदंशापहरं प्रदिष्टम् ॥

करञ्जाद्यं घृतम्।

करञ्ज निम्बार्ज्जुन शालजम्बू
वटादिभिः कल्क कषाय सिद्धम्।
सर्पिर्निहन्या दुपदंश दोषं
सदाहपाकं स्रुतिरागयुक्तम् ॥

## अगारधूमाद्यं तैलम्।

आगारधूमोरजनीसुराकिट्टञ्च तैस्त्रिभिः।
भागोत्तरैः पचेत्तैलं कण्डूशोथरुजापहम्।
शोधनं रोपणञ्चैव सावर्ण्य करणं तथा॥

## भैरवरसः।

शुद्ध सूतं ग्रहीतव्यं रक्तिका शत मात्रकम्।
त्रिगुणां शर्करां लौहे निम्बदण्डेन मर्दयेत्॥
शाममात्रं तत्र दद्याच्छुतं खदिर चूर्णकम्॥
सूततुल्यं ततः कुर्य्यान्मर्दनात्कज्जलोपमम्॥
विंशतिर्वटिकाः कार्य्याः स्थाप्या गोधूम चूर्णके।
निःशेष निःसृता ज्ञात्वा पिड़कास्ताः कलेवरे॥
भैरवं देव मभ्यर्च्च बलिं तस्मै प्रदाय च।
विधाय योगनी पूजां दुर्गामभ्यर्च्च यत्नतः॥
बटिकास्ताः प्रयोक्तव्या विषजा जानता क्रियाम्।
दिवस त्रियतं दद्यात्तिस्रस्तिस्रो विजानता॥
चतुर्थात्समारभ्य एकामेकां प्रयोजयेत्।
एवं चतुर्दश दिने निरोगी जायते नरः॥
पथ्यं शर्करया सार्द्धं सुशाल्यन्नं घृतगन्धि च।
कुर्य्यात्साकाङ्क्ष मुत्थानं सक्तुभोजन मिष्यते॥
जलपानं जलस्पर्शं न कदाचन कारयेत्।
दुःसहायान्तु तृष्णायां मिचुदाड़िमकादिकम्॥
शौच कार्य्यऽप्युशुवादि वाससा प्रोञ्छनं द्रुतम्।
वातातपाग्नि सम्पर्कं दूरतः परिवर्जयेत्॥

मेघागमे वा शीते वा कार्य्यं मेतद्विजानता ॥
मुखरोगेतु संजाते मुखरोग हरी क्रिया॥
श्रमाध्वभाराध्ययन स्त्रप्रालस्यादिवर्जयेत् ।
ताम्बूलं भक्षयेन्नित्यं कर्पूरादि सुवासितम्॥
क्रिया श्लेष्महरीयुक्ता वातपित्ताविरोधिनी ।
लवणं वर्जयेदम्लं दिवा निद्रां तथैव च ।
रात्रौ जागरणञ्चैव स्त्रीमुखालोकनं तथा ।
समाहृहय मूलस्य स्नान मुष्णाम्बुना चरेत् ॥
पथ्यं कुर्य्याद्धित मिदं जाङ्गलानां रसादिभिः ।
व्यायामाद्यं वर्जनीयं यावत्प्रकृतिर्भवेत् ॥
एवं कृत विधानन्तु यः कारत्येतदौषधम् ।
स एव पापरोगस्य पारं याति जितेन्द्रियः ।
पिड़का विलयं यान्ति बलं तेजश्च वर्द्धते ।
रुजा च प्रशमं यातिग्रन्थि शोथश्च शाम्यति ॥
अस्नां भवति दार्ढ्यञ्च आमवातश्च शाम्यति ।
भैरवेण समाख्यातो रसोऽयं भैरवः स्वयम् ।

## रसगुग्गुलुः ।

याह्यः पातन यन्त्रेण शुद्धचन्द्र समीरसः ।
रक्तिकाशत मेतस्य शर्करा त्रिगुणा भवेत् ॥
ततस्तद्गुणो याह्यो गुग्गुलुर्महिषाचकः ।
घृतं रस समं दद्यान्मर्दयेच्च प्रयत्नतः ॥
विंशतिर्वटिकाः कार्य्यास्तिस्रस्तिस्रो दिनत्रयम् ।
एकादश दिनैरन्या देया एकाकैव ताः ॥

सप्ताहद्वयमेवन्तु कारयेद्भिषजां वरः।
लवणं वर्जयेद् पथ्ये पारदार्थमिष्यते।
दिनद्वये व्यतीते तु पारदोनं पथ्यमाचरेत्।
मसूरसूपं सगुड़ं व्यञ्जनं चाथ कल्पयेत्॥
पुनर्नवा पटोलाग्नि तिक्तपत्री च गोक्षुरम्।
पुटपत्रीं काकिलीञ्च शाकार्थं घृतभर्जितम्॥
शर्करा लवणस्थाने वेशवारे धनीयकम्।
लवङ्गाजाजी हिङ्गूनि धान्यकं जीरकानि च॥
पाकार्थं संप्रदातव्यं संस्कारार्थं भिषग्वरैः।
नैरवस्य रसस्यान्याः क्रिया अत्र प्रयोजयेत्॥
रसगुग्गुलुरेवं हि सर्वान् जित्वामयानयम्।
कुष्ठोपदंशनामानं व्रणं वातादि संयुतम्॥
कामदेव प्रतीकाशश्चिरजीवि भवेन्नरः॥

## धूमः।

रसं वङ्गञ्च खदिरं हरीतक्याश्च भस्मकम्।
कोमलं कदलीभस्म गुवाकफलभस्म च॥
एतत्तोलकमानं स्याद्धिङ्गुलं हरितालकम्।
गन्धकं तुत्थकञ्चापि पद्मकं सरलं तथा॥
द्वे चन्दने देवदारु वकमं काष्ठमेव च।
तथा केशरकाष्ठञ्च माषमानं प्रकल्पयेत्॥
एकीकृत्य चूर्णयित्वा सर्वञ्चाङ्गेरिकाद्रवैः।
तुलसीपत्रजरसैः पुरातनगुड़ेन च॥
घृतेन सह घट्‌ कार्य्या वटिका मन्त्रपूजिताः।

वेदनायामुत्कटायाञ्चतस्तः शुक्लवाससा ॥
वेष्टयित्वा च निर्धूमाङ्गारोपरि च दापयेत् ।
तन्धूपं परिगृह्णीयान्नरो वस्त्रादि वेष्टितः ।
मुखनासा कर्णबहिर्निश्वासस्य निरोधतः ।
… टे जातेऽस्य नैरुज्यं सायं प्रातर्दिनत्रयम् ॥
मास मात्रन्तु पथ्याशी शाकाम्लदधिवर्जनम् ।
गुर्वन्नपायसादीनि अपथ्यानी विवर्जयेत् ॥
दिनत्रये व्यतीते तु स्नानमुष्णाम्बुनाचरेत् ।
एवन्धूमे कृते शान्तिं व्रणाश्च पिड़का अपि ॥
तथा शोथश्चामवातः खञ्जता पङ्गुतापि च ।
कुष्ठोपदंशशान्त्यर्थं भैरवेण प्रकीर्त्तितः ॥

लेपः ।

विषतिन्दुलौहपात्रे मलात्ते निम्बुकद्रवैः ।
घर्षेत्स्नुहासुधामूलं प्रत्येकं माषिकं दृढ़म् ॥
तुल्यं तदनुसूतञ्च लौहदण्डेन तद्युतम् ।
सर्वं तदेकतां यातं तेन लिङ्गं प्रलेपयेत् ।
लेपे शुष्के पुनर्लेपं दद्यात् शुष्के पुनस्तथा ।
शुष्कं न स्त्रंसयेल्लेपं शुष्कस्योपरि दापयेत् ॥

रसशेखरः ।

पारदश्चाहिफेनश्च हिङ्गुलञ्चरक्तिकम् ।
अयःपात्रे निम्बकाष्ठे मर्दयेत्तुलसीद्रवैः ॥
तस्मिन् संमूर्च्छिते दद्याद्दरदं रससम्मितम् ।
मर्दयेच्च तुलस्यैव ततश्चैतानि दापयेत् ॥

जातीकोषफले चैव मांसीमोचरसमाक्षिकाम् ।
आकारकरभञ्चैव दार्व्वीश्यद्राक्षिकाम्मति ॥
मर्द्दयेत्तुलसीतोयैरेतैर्वा द्विगुणं शुभम् ।
दद्यात् खदिरसारञ्च वटिका चणकप्रभा ॥
सायं द्वे द्वे प्रयोक्तव्ये च लवणाम्लञ्च वर्जयेत् ।
गलत्कुष्ठं तथा स्फोटान् दुष्टान् गर्द्दभिकामपि ।
ये स्युर्व्रणा नृणामन्ये उपदंशपुरःसराः ।
तान् सर्वान् नाशयत्याशु सिद्धोऽयं रसेश्वरः ॥

इति भैषज्यरत्नावल्यामुपदंशाधिकारः समाप्तः

## अथ शूकदोषाधिकारः ।

हितञ्च सर्पिषः पानं पथ्याञ्चापि विरेचनम् ।
हितः शोणितमोक्षश्च यच्चापि लघुभोजनम् ॥
सर्षपीं लिखितां सूक्ष्मैः कषायैरवचूर्णयेत् ।
तैरेवाभ्यञ्जनं तैलं साधयेद्व्रणरोपणम् ॥
क्रियेयमवमन्थेऽपि रक्तं स्राव्यं तथोभयोः ।
अष्ठीलायां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ॥
कुम्भिकायां हरेद्रक्तं पक्वायां शोधिते व्रणे ।
तिन्दुकत्रिफलालोध्रैर्लेपस्तैलञ्च रोपणम् ॥

मलज्यां क्षरत्मायामवमेव क्रियाक्रमः।
स्वेदयेत् क्वथितं स्निग्धं नाड़ीस्वेदेन बुद्धिमान्॥
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत्॥
उत्तमाख्यान्तु पिड़कां सञ्छिद्य वड़िशोद्धृताम्।
कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत्॥
क्रमः पित्तविसर्पोक्तः पुष्करी मूढ़योर्हितः।
त्वक्पाके स्पर्शहान्याञ्च सेचयेन्मृदितं पुनः॥
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत्॥
रसक्रिया विधातव्या लिखिता शतपोनके।
पृथक्पर्ण्यादिसिद्धन्तु तैलं देयमनन्तरम्॥
रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे॥
कषाय कल्कसर्पींषि तैलचूर्णं रसक्रियाम्।
शोधने रोपणे चैव वीक्ष्य वीक्ष्यावचारयेत्॥
अर्बुदं मांसपाकञ्च विद्रधिं तिलकालकम्।
प्रत्याख्याय प्रकुर्वीत भिषक् तेषां प्रतिक्रियाम्॥
सर्वेषां शूकदोषाणां क्रिया व्रणवदाचरेत्।
उपदंशाधिकारोक्तमौषधं शूकदोषतः॥

## दार्वीतैलम्।

दार्वी सुरसयष्ट्याह्व गृहधूमनिशायुगैः।
तैलमभ्यञ्जने पाने मेढ्ररोगं निवारयेत्॥

इति भैषज्यरत्नावल्यां शूकदोषाधिकारः समाप्तः।



# अथ प्रमेहाधिकारः ।



स्थूलः प्रमेही बलवानिहैकः
कृशस्तथान्यः परिदुर्बलश्च ।
संबृंहणं तत्र कृशस्य कार्य्यं
संशोधनं दोषबलाधिकस्य ॥
ऊर्द्ध्वं तथाधश्च मलेऽपनीते
मेहेषु सन्तर्पणमेव कार्य्यम् ।
संशोधनं नार्हति यः प्रमेही
तस्य क्रिया संशमनी विधेया ॥
ये विष्किरा ये प्रतुदा विहङ्गा-
स्तेषां रसैर्जाङ्गलजैर्मनोज्ञैः ।
मन्थाः कषाया रसचूर्णलेहा
मसूरमुद्गा लवकश्च भक्ष्याः ॥

श्यामाक कोद्रवोद्दाल गोधूम चणकाढ़की ।
कुलत्थाश्च हिता भोज्ये पुराणा मेहिनां सदा ॥
जाङ्गलं तिक्त शाकञ्च यवान्नञ्च शमो वधु ॥
रूक्ष मुद्वर्त्तनं गाढ़ं व्यायामो निशिजागरः ।
यच्चान्यत् श्लेष्मपित्तघ्नं वहिरन्तश्च तद्धितम् ॥
सर्वमेहहरो धात्र्या रसः क्षौद्रनिशायुतः ।
कषाय स्त्रिफलादारु मूस्तकै रथवा कृतः ॥
त्रिफला दारुदार्व्यब्द क्वाथः क्षौद्रेण मेहहा ॥
त्रिफला लोह शिलाजतु पथ्या चर्णञ्च क्षौद्रमेकैकम्

मधुनामरा स्वरस एव वर्षान् मेहानिवारयति ।
प्रत्येकं त्रिफलादि चतुर्णात् चूर्णं मधुना लेह्यम् ।
पीतः सारो गुडूच्या वामधुना मेहनाशनः ॥
शतावर्य्या रसं गीत्वा चौरेण सह यः पिवेत् ।
प्रमेहा विंशति स्तस्य क्षयं यान्ति न संशयः ॥
आम दुग्धं समजलं यः पिवेत्प्रातरुत्थितः ।
निसंशयं शुक्रमेहः पुराणस्तस्य नश्यति ॥
पलाश पुष्प तोलैकं सितायाः अर्द्धतोलकम् ।
पिष्टं शीताम्भसा पीतं मेहं हन्ति न संशयः ॥
स्फाटिकं चूर्णमादाय नारिकेलोदरे क्षिपेत् ।
तत्फलं पङ्क मध्ये तु स्थापयेदेक रात्रकम् ॥
प्रातरानीय सजलं चूर्णं पेयं प्रयत्नतः ।
अनेन चिरकालीनो मेहो नश्यति निश्चितम् ॥
व्यायाम जात मखिलं भजन्मेहान् व्यपोहति ।
पादतश्छत्ररहितो भिक्षाशी मुनिवद्यतः ।
योजनानां शतं गच्छेदधिकं वा निरन्तरम् ॥
मेहान् जेतुं वने वापि नीवारामलकाशनः ॥

## कुशावलेहः ।

कुशः काशो वीरणच कृष्णेक्षुः खगण्डस्तथा ।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥
अष्टभागावशेषन्तु कषाय मवतारयेत् ।
खण्डप्रस्थं समादाय लेहवत्साधु साधयेत् ॥
अवतार्य्य ततः पश्चाच्चूर्णीमानि दापयेत् ।

मधुकं कंकटी बीजं ककोड़मपुषं तथा ॥
शुभामलक पत्राणि त्वगेला नागकेशरम् ।
वरुणाद्मता प्रत्यङ्कु प्रत्येक मच समितम् ॥
प्रमेहान् विंशतिं हन्ति मूत्राघातां स्तथाश्मरीः
वातिकान् पैत्तिकां श्चापि श्लेष्मिकान् सान्निपातिकान्
हन्त्यरोचक मत्युग्रं बलपुष्टिकरं परम् ॥

## शिलाजतु प्रयोगः ।

शालसारादि तोयेन भावितं यच्छिलाजतु ।
पिवेत्तेनैव संशुद्ध देहः पिष्टं यथाबलम् ॥
जाङ्गलानां रसैः सार्द्धं यस्मिन्जीर्णे च भोजनम् ।
कुर्य्यादेवं तुलां यावदुपयुञ्जीत मानवः ॥
मधुमेहं विहायासौ शर्करा मश्मरीं तथा ।
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥
माक्षिकं धातुमप्येवं युञ्ज्यादस्याप्ययं गुणः ॥

## सालसारादि लेहः ।

सालसारादिवर्गस्य क्वाथे तु घनतां गते ।
दन्तीलोध्र शिवा कान्तलोहश्चाम्ररजः क्षिपेत् ॥
घनीभूत मदग्धञ्च प्राश्य मेहान् व्यपोहति ॥

## दाड़िमाद्यं घृतम् ।

दाड़िमस्य तु बीजानि क्रिमिघ्नस्य च तण्डुलाः ।
रजनीचविकाजाजीविफलानागरं कणा ॥
त्रिकण्टकस्य बीजानि यमानी धान्यकं तथा ।

वृक्षाम्लं चपला कोलं सिन्धूत्थञ्च समांशुतम् ॥
कल्कैश्च समैरेभिर्घृत प्रस्थं विपाचयेत् ।
पाने भोज्ये च दातव्यं सर्व्वर्त्तुषु च मात्रया ॥
प्रमेहान् विंशति विधान् मूत्राघातां स्तथाश्मरीम् ।
कृच्छ्रं सुदारुणञ्चैव हन्यादेतन्न संशयः ॥
विबन्धानाहशूलघ्नं कामलाज्वर नाशनम् ।
दाड़िमाद्यं घृतं नाम्ना अश्विभ्यां निर्म्मितं पुरा ॥

अत्र चपला पिप्पलीमूलमिति वृन्दः गजपिप्पलीति-पद्मसेन त्रिपुर कवीन्द्रौ ।

## वृहद्दाड़िमाद्यं घृतम् ।

चतुःषष्टिपलं पक्वदाड़िमस्य सुकुट्टितम् ।
चतुर्गुणं जलं दत्त्वा चतुर्भागावशेषितम् ॥
क्वाथेन वस्त्रपूतेन घृत प्रस्थं विपाचयेत् ।
दाड़िमं चविकाजाजी क्रिमिघ्नं रजनीद्वयम् ॥
द्राक्षा खर्ज्जूर मुञ्जात मुस्तक गजपिप्पली ।
अजमोदामहाद्रे काकाकोलीनागरं वचा ॥
देवाह्वाचविकाकुष्ठं काश्मरी मधुयष्टिका ।
श्यामेन्द्रवारुणी मूर्वा शुभा शृङ्गी धनीयकम् ॥
कुलत्थश्च महामेदा निम्बश्च वृहतीद्वयम् ।
दर्ब्बोत्पलं वरावासा समङ्गा सिन्धुवारकम् ।
कल्कश्चैषां युक्तियोगाद् ग्राह्यो हि परिभाषया ।
प्रमेहं वातिकं हन्ति पैत्तिकं श्लैष्मिकं तथा ॥
हृच्छूलं वस्तिजं शूलं मूत्राघातांस्त्रयोदश ।

हिक्कां श्वासञ्च कासञ्च यक्ष्माणं सर्वकर्षिणम्॥
स्वरक्षयमुरोरोगं रक्तपित्तमरोचकम्।
ये च प्रमेहजा रोगा स्तान् सर्व्वान् नाशयत्यपि।
दाड़िमाद्यमिदं सर्व्वं प्रमेहानां निसूदनम्।
अश्विभ्यां निर्म्मितं घृतप्रमेहकरिकेशरी॥

## महादाड़िमाद्यं घृतम्।

दाड़िमस्य फलप्रस्थं प्रस्थञ्च यवतण्डुलम्।
कुलत्थं प्रस्थ मादाय घृतप्रस्थं विपाचयेत्॥
शतावरी रस प्रस्थं गव्य दुग्धञ्च तत्समम्॥
कल्कःसार्द्ध पिचुर्द्राक्षा खर्ज्जूरं त्रिफला तथा॥
रेणुका चाष्टवर्गञ्च देवदारु निशाद्वयम्।
जिङ्गी कुष्ठक मेला च विदार्य्यतिबला तथा॥
शिलाल्वचमुशीरञ्च शुद्धं कृष्णाभ्र चूर्णकम्।
प्रमेहान् विंशतिं हन्ति श्लेष्मजान् सन्निपातजान्॥
बृंहणञ्च विशेषेण सर्व्वमेह हरं परम्।
अश्विभ्यां निर्म्मितं सिद्धं दाड़िमाद्य मिदं महत्॥

## अथ रसप्रयोगः।

## शुक्रमातृकावटी।

गोक्षुर बीजं त्रिफला.पत्रमेला रसाञ्जनम्।
धान्यकं चविका जीरं तालीशं टङ्ग दाड़मी॥
प्रत्येकार्द्धपलं दत्त्वा गुग्गुलोः कर्षमेव च।
रसाभ्र गन्धलौहानां प्रत्येकञ्च पलं क्षिपेत्॥

सर्वमेकीकृतं वैद्यो दृढ़योगेन मर्दयेत् ।
घृतभाण्डे तु संस्थाप्य माषमेकञ्च भक्षयेत् ॥
अनुपानं प्रदातव्यं ज्ञाति भेदात् पृथक् पृथक् ।
दाड़िमस्य रसेनैव च्छागदुग्धेन वाऽसा ॥
चन्द्रनाथेन गदिता वटिका शुक्रमातृका ।
प्रमेहान् विंशतिं हन्ति वातपित्तकफोद्भवान् ॥
द्वन्द्वजान् सन्निपातोत्थान् मूत्रकृच्छ्राश्मरोगदान् ।
बलवर्णाग्निजननी ज्वरदोष निसूदनी ।
दाड़िम रसेनैव वटी कार्य्या ।

## मेहमुद्गरोरसः ।

रसाञ्जनं विड़ं दारु विल्व गोक्षुर दाड़िमम् ।
प्रत्येकं तोलकं देयं लौह चूर्णन्तु तत्समम् ॥
पलैकं गुग्गुलं दत्त्वा घृतेन वटिकां कुरु ।
प्रमेहान् विंशतिं हन्ति साध्यासाध्य मथापिवा ॥
मूत्रकृच्छ्रं तथा पाण्डुं धातुस्थञ्च ज्वरं जयेत् ।
हलीमक रक्तपित्तं वातपित्तकफोद्भवम् ।
ग्रहणीमामदोषञ्च मन्दाग्नित्व मरोचकम् ॥
एतान् सर्वान्निहन्त्याशु वृक्षमिन्द्राशनिर्यथा ॥

## विड़ङ्गादिलौहः ।

विड़ङ्ग त्रिफला मुस्तैः कणया नागरेण च ।
जीरकाभ्यां युतो हन्ति प्रमेहानतिदारुणान् ॥
लौहो मूत्रविकारांश्च सर्वानेव विनाशयेत् ।

पञ्चाननोरसः ।

सूतं गन्धं मृतं लौहं मृतमभ्रं समांशिकम् ।
सर्वेषां द्विगुणं वङ्गं मधुना मर्दयेद्दिनम् ॥
भक्षयेत्प्रातरुत्थाय शीततोयं पिवेदनु ।
प्रमेहान् विंशतिं हन्ति मूत्राघातां स्तथाश्मरीम् ॥
मूत्रकृच्छ्रं हरेदुग्र मयं पञ्चाननो रसः ॥

मेहकुलान्तकोरसः ।

मृत वङ्गं मृतञ्चाभ्रं शुद्ध पारद गन्धकम् ।
भूनिम्बं पिप्पलीमूलं त्रिकटु त्रिफला त्रिवृत् ॥
रसाञ्जनं विडङ्गाब्द विल्व गोक्षुर दाड़िमम् ।
प्रत्येकं तोलकं ग्राह्यं शुद्धमभ्रजतोः पलम् ॥
गोपालकर्कटीमूल स्वरसैर्वटिकां कुरु ।
प्रमेहां विंशतिं हन्ति मूत्रकृच्छ्रं हलीमकम् ॥
अश्मरीं कामलां पाण्डुं मूत्राघात मरोचकम् ।
अनुपानं प्रयोक्तव्यं छागोदुग्धं पयोऽथवा ॥
धात्री फलस्य निर्य्यासं क्वाथं कोलत्थजं पिवेत् ॥

मेहानलोरसः ।

भस्मसूतं मृतं वङ्गं तुल्यं चोग्रेण मर्दयेत् ।
द्विगुञ्जं भक्षयेन्नित्यं मेहं हन्ति चिरोत्थितम् ॥
गुञ्जामूलं पिवेच्चानु चोरेरेव प्रशाम्यति ॥

चन्द्रकला ।

सूताभ्रवङ्गा रस भस्म सर्व-
येतत्समानं परिभावयेत्तु ।

गुड़ूचिका शाल्मलिका कषाये-
वल्लप्रमाणां मधुना ततश्च ॥
वद्वा गुडीं चन्द्रकलेति संज्ञां
मेहेषु सर्वेषु नियोजयेत ॥

### तारकेश्वररसः ।

मृतं सूतं मृतं लौहं मृतं वङ्गाभ्रकं समम् ।
मर्दयेन्मधुना चाह्ना रसोऽयं तारकेश्वरः ॥
माषमात्रं लिहेत् चौद्रैर्वहुमूत्रापनुत्तये ।
श्वोड़ुम्बरं पक्वफलं चर्णितं मधुना लिहेत् ॥

### सोमेश्वरीरसः ।

शालार्जुनक लोध्रञ्च कदम्बागुरु चन्दनम् ।
अग्निमन्थ निशाद्वन्द्व धात्रीदाड़िम गोत्तुरम् ॥
जम्बु वीरणमूलञ्च भागमेषां पलार्द्धकम् ।
रसगन्धक धान्याब्द मेला पत्रञ्च पद्मकम् ॥
लौहं रसाञ्जनं पाठा विड़ङ्गं टङ्ग जीरकम् ।
प्रत्येकं शाणकं ग्राह्यं पलार्द्धं गुग्गुलोरपि ॥
घृतेन वटिकां कृत्वा खादेत् षोड़श रक्तिकाम् ।
गहनानन्दनाथेन रसो यत्नेन निर्मितः ॥
सोमेश्वरो महातेजा वातमेहाग्निहन्त्यलम् ।
एकजं द्वन्द्वजं चोग्रं सन्निपात समुद्भवम् ॥
उपद्रव समायुक्तं चिरकाल समुद्भवम् ।
महाघातं मलकृच्छ्रं कामलाञ्च हलीमकम् ।

भगन्दरोपदंशौ च विविधान् पिडकाव्रणान्।
विस्फोटार्बुद कण्डु च वातपित्तार्त्तपित्तके॥
यकृत् प्लीहोदरं गुल्मं सूलार्शः श्वास विद्रधीः।
सोमरोगं निहन्त्याशु चिरकालानुवन्धिनम्॥
बलवर्णाग्निजननो ग्रहवैगुण्यनाशनः।
छागीदुग्धानुपानेन नारिकेलोदकेन वा॥
शीतेन पाकतैलेन यवयूषादि योगतः।
युक्तया प्रयोज्यो भिषजा रसो दोषविदाशयम्॥

## सर्वेश्वरो रसः।

स्वर्णं रूप्यं मौक्तिकञ्च विशुद्धञ्च शिलाजतु।
लोहमभ्रं तथा ताप्यं मधुयष्टी च पिप्पली॥
मरिचं विशकञ्चेति सर्वमेकत्र कारयेत्।
विमर्द्यं प्रहरं यत्नात्कज्जलाकृति सन्निभम्॥
केशराज भृङ्गराज शक्राशन रसे पृथक्।
प्रमेहं विविधं हन्ति मधुमेहं सुदुर्जयम्॥
वातपित्त समुद्भूतं तथा कफ समुद्भवम्।
सर्वेश्वरो रसो नाम्ना प्रमेहकुलनाशनः॥

## वेदविद्यावटी।

पारदाभ्रक कान्तानां नागभस्म समं समम्।
दिनं क्षीरसैर्मर्द्यं वालुकायन्त्रगं पुनः॥
उद्धृत्य चूर्णयेत् सम्यं जारिताभ्रं शिलाजतु।
ताप्यं मण्डूर वैक्रान्तं काशीशं तुल्यमेव च॥

सर्वं सर्वसमं चूर्णं कल्कयेच्च ततः पुनः।
मुस्तं चन्दनं पुन्नागं नारिकेलस्य मूलकम्॥
कपित्थं रजनी दार्वी चूर्णं सर्वसमं भवेत्।
जम्बीराणां द्रवैर्मर्द्यं द्विमाषं वटकीकृतम्॥
वेदविद्या वटी नाम्ना भक्षणात्सर्वमेहजित्।
मधु धात्रीरसश्चानु क्षौद्रैरपि गुडूचिकाः॥

वङ्गेश्वरः।

रसस्य भस्मना तुल्यं वङ्गभस्म प्रयोजयेत्।
अस्य माषद्वयं हन्ति मेहान् क्षौद्रसमन्वितम्॥

बृहद्वङ्गेश्वरो रसः।

वङ्गभस्म रसं गन्धं रूप्यं कर्पूरमभ्रकम्।
कर्षं कर्षं मानमेषां सूतार्द्धं हेम मौक्तिकम्॥
केशराजरसैर्भाव्यं द्विगुञ्जाफलमानतः।
प्रमेहान् विंशतिं हन्ति साध्यासाध्यं न संशयः॥
मूत्रकृच्छ्रं तथा पाण्डुं धातुस्थञ्च ज्वरं जयेत्।
हलीमकं रक्तपित्तं वातपित्तकफोद्भवम्॥
ग्रहणीमामदोषञ्च मन्दाग्नित्वमरोचकम्।
एतान् सर्वान् निहन्त्याशु वृक्षमिन्द्राशनिर्यथा॥

वङ्गाष्टकम्।

रसं गन्धं मृतं लौहं मृतरूप्यञ्च खर्परम्।
मृताभ्रकं मृतं ताम्रं सर्वतुल्यञ्च वङ्गकम्॥
पुटेद्गजपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत्।

रक्तिद्वय प्रमाणेन मधुना लेहयेन्नरम् ॥
निशाचूर्णं चौद्रयुतं पिवेद्वाभीरसं ह्यनु।
वङ्गाष्टकमिदं ख्यातं महादेव प्रकाशितम् ॥
प्रमेहान् विंशतिं हन्ति आमदोषं विसूचिकाम्।
विषमज्वर गुल्मार्शो मूत्रातीसार पित्तजित् ॥
वीर्य्य वृद्धिं करोत्याशु सोमरोग निवर्हणम् ॥

## वसन्तकुसुमाकरः।

पृथग् द्वौ हाटकं चन्द्रस्त्रयो वङ्गाहिकान्तकाः।
चत्वारो मृतनभ्रञ्च प्रवालं मौक्तिकं तथा ॥
भावना गव्यदुग्धेन भावनेक्षु रसेन च।
वासा लाचा रसोदोच्य रम्भाकन्दप्रसूनकैः ॥
शतपत्ररसेनैव मालत्याः कुसुमेन च।
पश्चान्मृगमदैर्भाव्यं सुसिद्धो रसराड् भवेत् ॥
कुशुमाकर विख्यातो वसन्तपद पूर्वकः।
गुञ्जाद्वयेन संसेव्यः सिताज्यमधु संयुतः ॥
वलोपलितहृन्मेध्यः कामदः सुखदः सदा।
मेहघ्नः पुष्टिदः श्रेष्ठः पुत्रप्रसवकारणम् ॥
चयकासघ्नः उन्माद श्वास रक्त विषापहः।
सिता चन्दन संयोगादम्लपित्तादिरोगजित् ॥

## चन्द्रप्रभादि वटिका।

चन्द्रप्रभा वचामुस्ता भूनिम्ब सुरदारवः।
हरिद्रातिविषादार्वी पिप्पलीमूल चित्रकम् ॥
त्रिवृद्दन्ती पत्रकञ्च त्वगेला वंशलोचना।

प्रत्येकं कर्षमात्राणि कुर्य्यादेतानि बुद्धिमान् ॥
धान्यकं त्रिफला चव्यं विड़ङ्गं गजपिप्पली।
सुवर्णमाक्षिकं व्योषं द्वौ क्षारौ लवणत्रयम् ॥
एतानि टङ्कमात्राणि संग्रह्णीयात् पृथक् पृथक्।
द्विकर्षं हतलौहं स्याच्चतुष्कर्षा सिता भवेत् ॥
शिलाजतुकर्षं स्यादष्टौ कर्षाश्च गुग्गुलोः।
विधिना योजितैः रेतैः कर्त्तव्या गुटिका शुभा ॥
चन्द्रप्रभेति विख्याता सर्वरोग प्रणाशिनी।
निहन्ति विंशतिं मेहान् कृच्छ्र मष्टविधं तथा ॥
चतस्रश्चाश्मरी रुद्ध्मूत्राघातां स्त्रयोदश।
अण्डवृद्धिं पाण्डुरोगं कामलाञ्च हलीमकम् ॥
कासं श्वासं तथा कुष्ठमग्निमान्द्य मरोचकम्।
वातपित्तकफव्याधीन् बल्याहृष्यारसायनी ॥
समाराध्य शिवं तस्मात् प्राप्ताद्गुड़िका मिमाम्।
प्राप्तवांश्चन्द्रमा यस्मात्तस्माच्चन्द्रप्रभा स्मृता ॥

## मेहमिहिर तैलम्।

पञ्चमूलयुता धात्री दाड़िमानां तुलां पचेत्।
जलद्रोणे स्थिते पादे तैलप्रस्थं विपाचयेत् ॥
क्षीरं तैल समं कल्कान् निम्ब भूनिम्ब गोक्षुरम्।
दाड़िमं रेणुकं विल्वं दारुदार्व्वी बलाहकान्।
त्रिफला तगरं द्राक्षा जम्बाम्रवल्कलाभयम् ॥
नाम्नेदं मेहमिहिरं सर्वमूत्रामयापहम् ॥
हस्तपाद शिरोदाहं दौर्ब्बल्यं कृशतां तथा।

क्षीणेन्द्रिया नष्टशुक्राः क्षीणाश्चापि ये नराः॥
तेषां शुक्रञ्च बलञ्च वयःस्थापनमेव च॥

प्रमेहमिहिरतैलम्।

शतपुष्पा देवकाष्ठं मुस्तकञ्च निशाद्वयम्।
मुर्व्वा कुष्ठं वाजिगन्धा चन्दनद्वय रेणुकम्॥
कटुकी मधुकं रास्ना त्वगेला ब्रह्मयष्टिका।
चविका धान्यकं वत्सं पूतिकागुरु पत्रकम्॥
त्रिफला नलिका बाला बला चातिबला तथा।
मञ्जिष्ठा सरलं पद्मं लोध्रं मधुरिका वचा।
अजाजी शुण्ठीरजाती वासा तगरपादुका॥
एतेषां कार्षिकैर्भागै स्तैलप्रस्थं विपाचयेत्।
शतावर्य्यारसं तुल्यं लाक्षारस चतुर्गुणम्॥
मस्तु लाक्षारसैस्तुल्यं क्षीरं तुल्यं प्रदापयेत्।
द्रवैरेतैः पचेत्तैलं गन्धं दत्त्वा यथाक्रमम्॥
एतत्तैलवरं श्रेष्ठ मभ्यङ्गाद्वाततापहम्।
विषमाख्यान् ज्वरान् हन्ति मेदो मज्जगतानपि॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्।
क्षीणेन्द्रिये तथा शस्तं ध्वजभङ्गे विशेषतः॥
दद्यात्तैलं विशेषेण फलमस्य च कथ्यते।
दाहं पित्तं पिपासाञ्च छर्द्दिञ्च मुखशोषणम्।
प्रमेहान् विंशतिञ्चैव नाशयेद्विकल्पतः।
प्रमेहमिहिरं नाम्ना रतिनाथेन भाषितम्॥

इन्द्रवटी।

मृतं सूतं मृतं वङ्ग मर्जुनस्य त्वचा सिता।

तुल्यांशं मर्दयेत् खल्ले शाल्मल्या मूलजैर्द्रवैः ॥
दिनान्ते वटिका कार्य्या माषमात्रा प्रमेहहा ।
एषा चन्द्रवटी नाम्ना मधुमेह प्रशान्तये ॥
त्रुटिं शाल्मलि मूलानां मधुना चानुपाययेत् ॥

## मेहमुद्गरवटिका ।

रसाञ्जनं विड़ं दारु विल्व गोक्षुर दाड़िमाः ।
भूनिम्बः पिप्पलीमूलं त्रिकटु स्त्रिफला त्रिवृत् ॥
प्रत्येकं तोलकं देयं लौह चूर्णन्तु तत्समम् ।
पलैकं गुग्गुलुं दत्वा घृतेन वटिकां कुरु ॥
माषैका निर्म्मिता चेयं मेहमुद्गर संज्ञिनी ।
श्रीमद्गहननाथेन लोक निस्तार कारिणी ॥
अनुपानं प्रकर्त्तव्यं छागीदुग्धं दलञ्च वा ।
विंशन्मेहं निहन्त्याशु मूत्रकृच्छ्रं हलीमकम् ॥
अश्मरीं कामलां पाण्डुं मूत्राघात मरोचकम् ।
षड़र्शांसि व्रणं कुष्ठं भगन्दर मसूरिकाम् ॥
सुखिने यदि कर्त्तव्या त्रिसुगन्धि समन्विता ॥

## सोमनाथरसः ।

हिङ्गुल सम्भवं सूतं धात्रिधारस मर्द्दितम् ।
रण्डाशोधित गन्धञ्च तेनैव कज्जलीकृतम् ।
तद्द्वयोर्द्विगुणं लौहं कन्यारस विमर्द्दितम् ।
अभ्रकं वङ्गकं रौप्यं खर्परं माक्षिकं स्तथा ॥
सुवर्णञ्च समं सर्वं प्रत्येकञ्च रसार्द्धकम् ।

तत्सर्वं कन्यका द्रावैर्मर्दयेद्भावयेत्तथा॥
भेकपर्णीरसेनैव गुञ्जाढ्य वटीं कृताम्।
मधुना भक्षयेच्चापि सोमरोग निवृत्तये॥
प्रमेहान् विंशतिं हन्ति बहुमूत्रञ्च सोमनम्।
मूत्रातिसारमत्युग्रं मूत्राघातं सुदारुणम्॥
मूत्रदोषं बहुविधं प्रमेहं मधुसंज्ञकम्।
हस्तिमेहमिक्षुमेहं नानामेहान् विनाशयेत्॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सोमसंज्ञितम्॥
नाशयेद्बहुमुत्रञ्च प्रमेहमविकल्पतः॥
सोमनाथरसश्चायं चरकेण विनिर्मितः।
हथ्याद्व्यतमो ह्येष मूत्रदोषकुलान्तकृत्॥

देवदार्वरिष्टः।

तुलार्द्धं देवदारु स्याद्वासायाः पलविंशतिः।
मञ्जिष्ठेन्द्रयवा दन्ती तगरं रजनीद्वयम्॥
रास्ना क्रमिघ्नं मुस्तञ्च शिरीषं खदिरार्जुनौ।
भागान् दशपलान् दद्याद्यवान्यावत्सकस्य च॥
चन्दनस्य गुडूच्याश्च रोहिण्याश्चित्रकस्य च।
भागानष्टपलानेतानष्टद्रोणेऽम्भसः पचेत्॥
द्रोणशेषे कषाये च पूते शीते प्रदापयेत्॥
धातक्याः षोडशपलं माक्षिकस्य तुलात्रयम्॥
व्योषस्य द्विपलं दद्यात् त्रिजातक चतुःपलम्।
चतुःपलं प्रियङ्गोश्च द्विपलं नागकेशरम्।
सर्वाण्येतानि सञ्चूर्ण्य घृतभाण्डे निधापयेत्।

मासादूर्द्धं पिबेदेनं प्रमेहं हन्ति दुस्तरम् ॥
वातरोग महाश्मरीं मूत्रकृच्छ्राणि नाशयेत्।
देवदार्वादिकोऽरिष्टो दद्रुकुष्ठ विनाशनः ॥

इति भैषज्यरत्नावल्यां प्रमेहाधिकारः समाप्तः



## सोमरोगाधिकारः।



### बहुमूत्र।

### निदानम्।

स्त्रीषामति प्रसङ्गाद्वा शोकाद्वापि श्रमादपि।
आभिचारिकदोषाच्च गरदोषात्तथैव च ॥
आपः सर्वशरीरेभ्यः क्षुभ्यन्ति प्रस्रवन्ति च।
तस्मात्ताः प्रच्युताः स्थानान्मूत्र मार्गं व्रजन्ति च ॥
प्रसन्ना विमलाः शीता निर्गन्धा नीरुजः सिताः।
स्रवन्ति चातिमात्रन्तु दौर्वल्यं गतिहीनता ॥
शिरसः शिथिलत्वञ्च मुखतालु विशोषणम्।
सोमरोग इतिख्यो देहे सोमक्षयानृणाम् ॥
सोऽतिक्रान्तं क्रमेणैव सर्वेषाञ्च मनीषिणः।

मूत्रातिसार मप्येवं तमाशुवंलनाशनम् ।
तेन तृष्णाभिभूतोऽसौ जलं पिवति चाधिकम् ।
कदलीनां फलं पक्वं धात्रीफलरसं मधु ।
शर्करापयसापीतमपां धारण मुत्तमम् ॥
कदलीनां फलं पक्वं विदारीञ्च शतावरीम् ।
क्षीरेण पाययेत्प्रात रपां धारण मुत्तमम् ॥
धात्रीफलस्य रसकं मधुना च पिवेत्सदा ।
बहुमूत्र चयं कुर्य्यात् क्षीरेण वासकस्य च ।
तालकन्दञ्च तरुणं खर्ज्जूरं कदलीफलम् ।
पयसा पाययेत्प्रातर्मूत्रातीसार नाशनम् ॥
माषचूर्णं समधुकं विदारी शर्करा मधु ।
पयसा पाययेत्प्रातः सोमरोगविनाशनम् ।

## वृहद्धात्री घृतम् ।

धात्रीफल रस प्रस्थं विदारी स्वरसं तथा ।
क्षीरस्यापि शतावर्य्याः प्रस्थं प्रस्थं रसस्य च ॥
त्वपञ्चरस प्रस्थं दत्त्वा प्रस्थं घृतस्य च ।
पचेन्मृदग्निना वैद्यः पाकं ज्ञात्वा विधानतः ॥
एला लवङ्ग त्रिफला कपित्थफलमेव च ।
सजलं सरलं मांसी कदलीकन्दमेव च ॥
उत्पलस्य च कन्दानि कल्कं दत्त्वा विचक्षणः ।
ततः कल्कं परिस्राव्य चूर्णं दद्यात्पलं पलम् ॥
मधुकं त्रिवृता चैव चारकं वृद्धदारकम् ।
शर्करायाः पलान्यष्टौ मधुनश्च पलाष्टकम् ।

चूर्णं दत्त्वा सुमथितं स्निग्ध भाण्डे निधापयेत् ।
सोमरोगं निहन्त्याशु तृष्णां दाहमरोचकम् ॥
मूत्राघातं मूत्रकृच्छ्रं नाशयेद्बहुमूत्रकम् ।
पित्तजान् विविधान् व्याधिन् वातजांश्च सुदारुणान्
करोति शुक्रोपचयं बलवर्णकरं परम् ।
नानारूप विकारघ्नं विशेषाद्बहुमूत्रनुत् ॥

स्वल्पधात्रीघृतम् ।

विनाकल्कं स्वल्पधात्री घृत मेतन्निगद्यते ।
सर्वं तुल्यं गुणैरेर पथ्यापथ्यं तदेव हि

कदल्यादि घृतम् ।

कदलीकन्दनिर्य्यासे तत्प्रसून तुलां पचेत् ।
चतुर्भागावशेषेऽस्मिन् घृत प्रस्थं विपाचयेत् ॥
चन्दनं सरल मांसी कर्दलीमूलकं तथा ।
एला लवङ्ग त्रिफला कपित्थफल मेव च ।
औदकानि च कन्दानि न्यग्रोधादि गण स्तथा ।
कल्के नानेन संसिद्धं सोमरोग निवारणम् ॥
मूत्ररोगानशेषांश्च प्रभूतान् शुक्रपिच्छिलान् ।
प्रमेहान् विंशतिश्चैव मूत्रघातां स्त्रयोदश ॥
बहुमूत्रं विशेषेण मूत्रकृच्छ्रं तथाश्मरीम् ।
पीतं घृतं निहन्त्याशु विष्णुचक्र मिवासुरान् ।
कदल्यादि घृतं नाम विष्णुना परिकीर्त्तितम् ॥

सिद्धफलम् ।

न्यग्रोधादिगणो यथा।

न्यग्रोधोडुम्बराश्वत्थपियालप्लक्षवेतसम्।
आम्रो जम्बूद्वयं कोलं मधूकं तिन्दुकोऽर्जुनः॥
तिलकः कटुको नीपो गर्दभाण्डोऽथ किंशुकः॥

हेमनाथरसः।

सूतं गन्धं हेमताप्यं प्रत्येकं कोलसम्मितम्।
अयश्चन्द्रं प्रबालञ्च वङ्गञ्चार्द्धं विनिक्षिपेत्॥
फणिफेनस्य तोयेन कदलीकुसुमेन च।
उडुम्बररसेनापि सप्तधा परिमर्द्दयेत्॥
वल्लमात्रां वटीं खादेद्यथा व्याध्यनुपानतः।
प्रमेहान् विंशतिं हन्ति बहुमूत्रं सुदारुणम्॥
सोमरोगं क्षयञ्चैव श्वासं कासमुरःक्षतम्।
हेमनाथरसो नाम्ना कृष्णात्रेयेण भाषितः॥

वसन्तकुसुमाकररसः।

वैक्रान्तस्य च भागैकं द्विभागं हेमभस्मनः।
अभ्रकस्य च भागौ द्वौ मुक्ताविद्रुमयोस्तथा॥
वङ्गभस्म त्रिभागं स्यात् रसस्य भस्मनस्तथा।
चत्वारोऽस्य च भागाश्च सर्वमेकत्र मर्द्दितम्॥
जम्बीराद्भिश्च गोदुग्धे कशेरोद्भववारिभिः।
वृषद्रवैरिक्षुनीरैः सप्तधा भावयेत् पृथक्॥
भावितो रसराजः स्यात् वसन्तकुसुमाकरः।
वल्लोऽस्य मधुना लीढ़ः सोमरोगं क्षयं नयेत्॥

मूत्रातिसारं मेहांश्च मूत्राघाताश्मरी रुजम् ।
तृष्णादाहं तालुशोषं नाशयेन्नात्र संशयः ॥
बलं पुष्टिकरो वृष्यः सर्व्वरोगनिबर्हणः ।
जीर्णज्वरं श्वासं क्षयरोगं तथाग्नुताम् ॥
नातःपरतरं किञ्चिद्रसायनमिहेष्यते ॥

रसभस्म तदभावे मूर्च्छितरसः । मूत्रातिसारे सोमरोगे च रसायनम् ।

इति भैषज्यरत्नावल्यां सोमरोगाधिकारः समाप्तः ।

## अथौपसर्गिकमेहाधिकारः ।



बहुसङ्करसम्भोगप्रक्लिन्नेन्द्रियया पुमान् ।
स्त्रिया सङ्गम्य संमूढो गदमाप्नोति दारुणम् ॥
मूत्रनाड्यन्तरस्थाना त्वगस्य श्लेष्मवाहिणी ।
व्रणितावाहयेत् क्लेदं व्रणमेहः स उच्यते ॥
औपसर्गिकमेहश्च तस्य नामान्तरं मतम् ।
मेह आगन्तुकश्चापि स कैश्चित्परिभाष्यते ॥
आरभ्य सङ्गमतिथिं संख्यया या च सप्तमी ।
एतद्दिवसपर्यन्ते काले प्रायो जायते गदः ॥

कण्डूः शिश्नाग्रतस्तस्य समुत्थानं मुहुर्मुहुः ।
तीव्रवेदनया चापि मुहुर्मूत्रप्रवर्त्तनम् ॥
स्फीतिर्लिङ्गस्य लौहित्यं कोषप्रान्ते च वेदना ।
कदाचित् क्लेदसंरुद्धमार्गत्वाद्विरलं स्रवेत् ।
मूत्रं दाहेन घोरेण द्विधारं वा प्रवर्त्तते ।
क्षरेद्वा क्षतजं मेढ्रान्मूत्रकाले कदाचन ॥
सन्ततं तनुरास्रावः स्रवेदादौ ततोऽतनुः ।
स तावत्सु मराशुष्यन् पौतिमानं प्रयाति च ॥
कालो लघ्वीं व्यथां कुर्य्याद्व्याधिश्च दुष्प्रतिक्रियम् ।
आमवाताक्षिरोगाद्या ज्ञेयास्तस्य ह्युपद्रवाः ॥

## औपसर्गिकमेहस्य चिकित्सा ।

व्रणमेही त्यजेद्व्यवायं सोऽहितो यतः ।
स्त्रियाश्च परिभुक्ताया आमयं जनयेच्च तम् ॥
भेषजं पानमन्नञ्च निषेवेतानुलोमनम् ।
व्रणघ्नं मूत्रजननं क्रियामुष्णां विवर्जयेत् ।
कोष्णे जात्या वराया वा क्वाथे शिश्नं निमज्जयेत् ।
वेदनोपशमस्तेन व्याधेश्च बलसंक्षयः ॥
आभानिर्य्यासतोयञ्च यवक्षारयुतं पिबेत् ।
सजलं क्षीरमामं वा व्रणमेहनिवृत्तये ।
पिबेद्वा शारिवाक्वाथं सक्षारनरसारकम् ॥
श्यामामनन्तां कट्वीञ्च वीजं गोक्षुरसम्भवम् ।
गन्धाश्मनरसाराभ्यां क्वाथयित्वा जलं पिबेत् ॥
एवं सुरभिपत्रञ्च मेहमागन्तुकं हरेत् ॥

वराभापिप्पलीनाञ्च प्रमेहविनिवृत्तये ।
कुर्य्यादुत्तरवस्तिञ्च कषायेण प्रयत्नत: ॥

महाभ्रवटिका ।

त्रि: सप्तकृत्व: सम्भाव्य भृङ्गराजाभसाभ्रकम् ।
तेन गन्धं रसं लौहं हेमचाभ्रार्द्धसम्मितम् ॥
वराक्वाथेन संमर्द्य वटिकां रक्तिकोन्मिताम् ।
औपसर्गिकमेहस्य नाशाय दापयेद्भिषक् ॥

कन्दर्परस: ।

रसं गन्धं प्रवालञ्च काञ्चनं गिरिमृत्तिका ।
वैक्रान्तं रजतं शङ्खं मौक्तिकञ्च समं समम् ॥
न्यग्रोधस्य कषायेण भावयित्वा च सप्तधा ।
वल्लोन्मानां वटीं कृत्वा त्रिफलाक्वाथवारिणा ॥
सुरप्रियस्यार्जुनस्य क्वाथेनाभाम्भसापि वा ।
औपसर्गिकमेहस्य शान्त्यर्थं विनियोजयेत् ॥

इति भैषज्यरत्नावल्यामौपसर्गिकमेहाधिकार: समाप्त:



## शुक्रमेहाधिकार: ।



शुक्रमेहे प्रथमत: क्रिया संशोधनी हिता ।
रेतसो रक्षणं तत्र कार्य्यञ्चातिप्रयत्नत: ॥

त्रिफला दारु दार्व्यब्दं पार्थत्वग् रक्तचन्दनम् ।
त्रिफला मुस्तकं दारु कुष्ठागुरुकशेरुकम् ॥
ताम्बूलामयशैवालं श्लोकपादसमापनाः ।
कषायाः शमयन्त्याशु शुक्रमेहं न संशयः ॥
शाल्मल्याः स्वरसो ज्ञेयः शुक्रमेहनिसूदनः ॥
स्वप्ने शुक्रच्युतिर्न स्यायदि चाद्यात्सुरप्रियम् ।
सकर्पूराहिफेनस्य सेवनेच तदर्थकृत् ॥

## कामधेनूरसः ।

सिन्दूरमभ्रं नागञ्च कर्पूरं हेममाक्षिकम् ।
खर्परं रजतञ्चापि मर्दयेत्कमलाम्भसा ॥
ततो गुञ्जामिताः कृत्वा वटीश्छायाप्रशोषिताः ।
एकैकां दापयेदासां कसेरुस्वरसेन च ॥
प्रमेहान् विंशतिं हन्ति शुक्रमेहं विशेषतः ।
ज्वरं जीर्णञ्च यक्ष्माणं कामधेन्वभिधो रसः ॥

## शिलाजत्वादिवटी ।

शिलाजत्वभ्रहेमानि लौहं गुग्गुलुटङ्कनम् ।
केशराजस्य तोयेन मर्दयेद्दिवसद्वयम् ॥
वल्लमानां वटीं कृत्वा शैवालसलिलेन च ।
शीतः प्रातः प्रयुञ्जीत शुक्रमेहनिवृत्तये ॥

## चन्दनादिचूर्णम् ।

चन्दनं शाल्मलीपुष्पं त्रिजातं रजनीद्वयम् ।
अनन्तां शारिवां मुस्तमुशीरं यष्टिकामले ॥

स्वर्णपत्रीं शुभां भार्गीं देवदारु हरीतकीम्।
सर्वं द्विगुणितं लौहञ्चैवात्र परिमर्दयेत्॥
प्रमेहान् विंशतिः श्वासः कासो जीर्णज्वरस्तथा।
प्राशनादस्य नश्यन्ति दुर्नामानि च कामला॥

चन्दनमत्र श्वेतम्।

## माक्षिकादिचूर्णम्।

माक्षिकं पारदं गन्धं खर्परं गिरिमृत्तिकाम्॥
शिलाजत्वभ्रलौहानि शाल्मल्याः कुसुमं त्वचम्॥
विदारीं गोक्षुरं बीजञ्चैकत्र परिमर्दयेत्।
माषमात्रं प्रयुञ्जीत शुक्रमेहनिवृत्तये॥

## शाल्मलीघृतम्।

शाल्मलीद्रवसंयुक्तं सर्पिश्छागीपयोऽन्वितम्।
अश्वगन्धां वरीं रास्नां मुशलीं विश्वभेषजम्॥
अनन्तां मधुकं द्राक्षां दत्त्वा च पलामानतः।
पचेन्मन्दाग्निना वैद्यः पात्रे मृत्यरिनिर्मिते॥
प्रमेहान्निखिलान् हन्ति शुक्रमेहं विशेषतः।
क्लैव्यं धातुक्षयं शोषं कासञ्चैतद्धरं घृतम्॥

## चन्दनासवः।

चन्दनं बालकं मुस्तं गाम्भारीं नीलमुत्पलम्।
प्रियङ्गुं पद्मकं लोध्रं मञ्जिष्ठां रक्तचन्दनम्॥
पाठां किराततिक्तञ्च न्यग्रोधं पिप्पलं शटीम्।
पर्पटं मधुकं रास्नां पटोलं काञ्चनारकम्॥

आम्रत्वचं मोचरसं प्रत्येकं पलमात्रकम्।
धातकीं षोड़शपलां द्राक्षायां पलविंशतिम्॥
जलद्रोणद्वये क्षिप्ता शर्करायास्तुलां तथा।
गुड़स्यार्द्धतुलाञ्चापि मासं भाण्डे निधापयेत्॥
चन्दनासव इत्येष शुक्रमेहविनाशनः।
बलपुष्टिकरो हृद्यो वह्निसन्दीपनः परः॥
अभिष्यन्द्यतितीक्ष्णञ्च पानानं वह्निसूर्य्ययोः।
सन्तापं स्त्रीप्रसक्तिञ्च वेगरोधं प्रजागरम॥
क्रोधं शोकं दिवानिद्रां लङ्घनञ्चातिचिन्तनम्।
अत्यालस्यमसत्सङ्गं शुक्रमेहे विवर्ज्जयेत्।
सुपाच्यं शुक्रकृच्चान्नं सत्संसक्तिञ्च सत्कथा।
शान्तिग्रन्थस्याध्ययनं हितान्यत्र शचिन्तनम्॥

इति भैषज्यरत्नावल्यां शुक्रमेहाधिकारः समाप्तः।



## अथ प्रमेहपिड़काधिकारः।



प्रमेहपिड़कायान्तु हितं शोधनमुच्यते।
सर्पिस्तैलञ्च कुष्ठघ्नं विविध्यान्न च योजयेत्॥

अनन्तां शारिवां द्राक्षां त्रिवृतां स्वर्णपत्रिकाम्।
कट्वीं हरीतकीं वासां पिचुमर्दं निशायुगम्॥
बीजं गोक्षुरजञ्चापि क्वाथयित्वा जलं पिबेत्।
नाशं शान्ति प्रमेहोत्था अनेन पिड़का ध्रुवम्॥
मुद्गपर्णी माषपर्णी त्रिवृद्दारग्वधः शटी॥
वृद्धदारकबीजञ्च नीलिन्येला हरीतकी॥
श्यामानन्ता देवपुष्पमित्येषां साधुसाधितः।
क्वाथो हन्यात्प्रमेहोत्थाः पिड़काः क्षिप्रमेव हि॥

## मकरध्वजरसः।

सिन्दूरं हेमलौहञ्च देवपुष्पं सचन्द्रकम्।
जातीफलं मृगमदञ्चैकत्र परिमर्दयेत्॥
पर्णाम्भसा ततः कुर्य्याद्वटिकां वल्लसम्मिताम्।
सेवितश्छागपयसा प्रमेहांस्तत्कृतान् गदान्॥
क्लैव्यं धातुक्षयं कासं जीर्णञ्च विषमं ज्वरम्।
रसोऽयं नाशयेत्तूर्णं मकरध्वजसंज्ञकः॥

## शारिवादिलौहम्।

शारिवा नीलिनी रास्ना गुड़ूच्येला च चित्रकः।
माषशूरणश्रङ्गित्यत्रिवृद्धात्रीकाभयाः॥
एभिर्युक्तमयो हन्ति प्रमेहपिड़का दश।
वातरक्तं षड्शांसि त्वग्दोषान् निखिलानपि॥

## वृहच्छ्यामाघृतम्।

श्यामा वरा बला पद्मं विदारी नीलमुत्पलम्।

अष्टवर्गश्च मधुकमश्वगन्धा शतावरी ॥
अजमोदा हरिद्रे द्वे मञ्जिष्ठा चन्दनद्वयम् ।
द्राक्षा प्रसारणीमूलं सविश्वा कटुरोहिणी ॥
एषां कर्षमितैर्भागैर्घृतप्रस्थं पचेद्भिषक् ।
श्यामा शतावरीचूर्णां विदार्य्याः स्वरसं तथा ॥
छागीपयश्च तत्तुल्यं दत्त्वा मन्देन वह्निना ।
सिद्धमेतद् घृतं पात्रे स्थापयेदथ मृन्मये ॥
प्रमेहांस्तत्कृतान् व्याधिन् क्लीवतां वातशोणितम् ।
शुक्रक्षयं रक्तपित्तं हृद्रोगं धातुशोषणम् ॥
नाशयेन्नात्र सन्देहः श्यामाघृतमिदं बृहत् ।
बालानां पुष्टिजननं गर्भदोषहरं परम् ॥

## शारिवाद्यासवः ।

शारिवां मुस्तकं लोध्रं न्यग्रोधं पिप्पलं शटीम् ।
अनन्तां पद्मकं वालं पाठां धात्रीं गुडूचिकाम् ॥
उशीरचन्दनद्वन्द्वं यमानीं कटुरोहिणीम् ।
पत्रमेलाद्वयं कुष्ठं स्वर्णपत्रां हरीतकीम् ॥
एषां चतुःपलान् भागान् सूक्ष्मचूर्णीकृतान् शुभान् ।
जलद्रोणद्वये क्षिप्त्वा दद्याद् गुड़तुलात्रयम् ॥
पलानि दशधातक्या द्राक्षां षष्टिपलां तथा ।
मासं संस्थापयेद्भाण्डे संवृते मृण्मये शुभे ॥
शारिवाद्यासवस्यास्य पानान्मेहाश्च विंशतिः ।
शराविकादयः सर्वाः पिड़कास्तत् कृताश्च याः ॥
चोपदंशस्त्रिकरोगाश्च वातरक्तं भगन्दरम् ।

सर्व्व एते शमं यान्ति व्याधयो नात्र संशयः ॥
पानमन्नमभिष्यन्दि दध्न तीक्ष्णञ्च दुर्जरम् ।
वेगरोधं व्यवायञ्च व्यायामं निशिजागरम् ॥
सुरां सुतीक्ष्णां मत्स्यञ्च पलाण्डुञ्च रसोनकम् ।
त्यजेत् सूर्य्याग्निसन्तापं प्रमेहजगदातुरः ॥

इति भैषज्यरत्नावल्यां प्रमेहपिड़काधिकारः समाप्तः

## अथ ध्वजभङ्गाधिकारः ।

क्लैव्यस्य लक्षणं संख्यां निदानञ्चाह ।
क्लीवः स्यात् सुरताशक्तस्तद्भावः क्लैव्यमुच्यते ।
तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते ।
तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते ।
ध्वजपतत्यधो नृणां क्लैव्यं समुपजायते ॥
द्वेष्यस्त्रीसंप्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम् ।
कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः ।
पित्ताच्छुक्रक्षयो दृष्टः क्लैव्यं तस्मात् प्रजायते ॥
अतिव्यवाय शीलो यो न च वाजीक्रियारतः ।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ।

महता मेढ्ररोगेण चतुर्थी क्लीवता भवेत्।
वीर्य्यवाहिशिराच्छेदान्मे हनानुन्नतिर्भवेत्।
बलिनः क्षुब्धमनसो निरोधाद्‌ ब्रह्मचर्य्यतः।
षष्ठं क्लैव्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तजम्॥

बलिनः पुष्टस्य, क्षुब्धमनसः कामात् चलितमनसः, ब्रह्मचर्य्यमम ैथुनं तस्मात् निरोधात् शुक्रस्य क्लैव्यं भवति।

जन्मप्रभृति यत् क्लैव्यं सहजं तद्धि सप्तमम्।
असाध्यं सहजं क्लैव्यं मर्म्मच्छेदाच्च यद्भवेत्॥

मर्म्मच्छेदात् वीर्य्यवाहिशिराच्छेदात्।

## अथ क्लैव्यचिकित्सा।

क्लैव्यानामिह साध्यानां कार्य्यो हेतुविपर्य्ययः।
मूलं चिकित्सितं यस्मान्निदानपरिवर्जनम्॥

## अश्वगन्धाघृतम्।

अश्वगन्धा पलशतं शुभदेशे समुत्थितम्।
पुण्येऽहनि समुद्धृत्य साधयेत् सम्यक् चूर्णितम्।
द्रोणेऽम्भसि पचेत्तावद्यावत्पादावशेषितम्।
सर्पिः प्रस्थं पचेत्तेन गव्यं क्षीरं चतुर्गुणम्॥
कषायं छागमांसस्य दद्याच्छतद्वयस्य च।
कल्कानि सम्यक्पिष्टानि कर्षमात्राणि योजयेत्॥
काकोल्यौ द्वय मेदे द्वे मेदे चाथ जीवकम्।
स्वयङ्गुप्ता ऋषभकाम्रेला मधुकमेव च॥
शटीका मुद्गपर्णी च जीवन्ती चपला बला।

नारायणी विदारी च दत्त्वा सम्यग्विपाचयेत्।
सिता चतुष्पलं शीते क्षिपेन्मधुपलाष्टकम्।
क्षौद्रा कर्षं पयः शीतं शीतञ्चानुपिवेज्जलम्॥
वृद्धबालक्षतक्षीणाः क्षीणमांसबलेन्द्रियाः।
दृष्टितेजोबलारोग्यं लभन्ते प्राश्य मानवाः॥
अवेक्षप्रतिवर्षोऽपि युवेव स्त्रीसहस्रगः।
वन्ध्यातीतवयाः स्त्री च लभते पुत्रमुत्तमम्॥
एतन्निर्म्मितमश्विभ्यामश्वगन्धाघृतं महत्।
क्षीणे रेतसि कर्त्तव्या सर्वा शुक्रकरी क्रिया॥

## अमृतप्राश घृतम्।

छागमांसतुलाश्चैव वाजिगन्धां तथैव च।
जलद्रोणे विपक्तव्यं कुर्यात्पादावशेषितम्।
घृतप्रस्थं पचेत्तेन अजाक्षीरं चतुर्गुणम्।
मूर्च्छनार्थं प्रदातव्यं कुङ्कुमञ्च द्विकार्षिकम्॥
बलामूलञ्च गोधूमञ्चाश्वगन्धा तथामृता।
गोक्षुरञ्च कशेरुञ्च त्रिकटु च सधन्यकम्।
तालाङ्कुरं त्रैफलञ्च कस्तूरी बीजवानरी।
मेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी॥
दार्व्वी प्रियङ्गु मञ्जिष्ठा नतं तालीशपत्रकम्॥
एलापत्रत्वचं नागं जातीकुसुमरेणुकम्॥
सरलं जातिकोषञ्च सूक्ष्मैलोत्पलसारिवा।
मूलं विल्वस्य जीवन्ती कर्कटह्वा उडुम्बरम्॥
प्रत्येकं कर्षमात्राणि पेषयित्वा विनिक्षिपेत्।

शतावरीरसं दत्त्वा कल्कचूर्णं समाचरेत्।
शाल्मलीमूलचूर्णन्तु चूर्णाद्धि समाहरेत्॥
चूर्णार्द्धं विजयाचूर्णं विशुद्धं तत्र दापयेत्।
सर्वमेकत्र संयोज्य छागीक्षीरेण पेषयेत्॥
मोदकार्थे सिता देया पाकयोग्या तथा मधु।
नातिबाष्पश्च धूमान्ते पाचयेन्मन्दवह्निना॥
चातुर्जातं सकर्पूरं सैन्धवं सकटुत्रयम्।
सञ्चूर्ण्य च ततो देयं द्रव्यं किञ्चिन्निधापयेत्॥
पाकं ज्ञात्वा कर्षमितं मोदकं परिकल्पयेत्।
भूतनाथे सुरपतौ रतिनाथे तथैव च॥
हुतभुक्ते गणनाथे मोदकाग्र्यं निवेदयेत्।
मूलमन्त्रं समुच्चार्य्य हुताशने समर्पयेत्॥
काञ्चने राजते काचे मृद्भाण्डे वा निधापयेत्।
प्रातःकाले शुचिर्भूत्वा हरगौरीं प्रपूजयेत्॥
कालानलभवं बीजं सतिलं घृतसंयुतम्।
गव्यक्षीरं सितायुक्तमनुपेयञ्च पायसम्॥
विलासार्थं प्रदोषे च मोदकं परिषेवयेत्।
चिरमाद्यप्रयोगेण कामान्धो जायते नरः॥
कामज्वरो भवेत्तावद्यावन्नारीं न गच्छति।
स सहस्रं वरारोहा रमयत्यपि सोत्तमः॥
न च लिङ्गस्य शैथिल्यं वेगवीर्य्यं विवर्द्धयेत्।
प्रमदाप्राणवाहुल्यं मत्तवारणविक्रमः॥
वामावश्यकरो रम्य ऊर्द्ध्वरेता भवेन्नरः।
कामतुल्यं भवेद्रूपं स्वरः परभृतोपमः॥

खङ्गतुल्या भवेल्लिङ्गं वृद्धोऽपि तरुणायते ।
अष्टोत्तरं भजेद्यस्तु भवेत्तस्य सुधोपमम् ॥
वीर्य्यवृद्धिकरं श्रेष्ठं जरामृत्युविनाशनम् ।
अपस्मारज्वरोन्मादक्षयानिलगदापहम् ॥
कासं श्वासं सशोथञ्च भगन्दरगुदामयम् ।
अग्निमान्द्यमतीसारं विविधं ग्रहणीगदम् ।
बहुमूत्रं प्रमेहञ्च शिरोरोगमरोचकम् ।
हन्ति सर्वान् गदान् घोरान् वातपित्तबलासजान् ॥
वन्ध्या च मृतवत्सा च नष्टपुष्पा च या भवेत् ।
बहुपुत्रा जीववत्सा भवेदस्य निषेवणात् ॥
हरते सूतिकारोगं वृक्षमिन्द्राशनिर्यथा ।
मोदकं मदनानन्दं सर्वरोगे महौषधम् ॥
कथितं देवदेवेन रावणस्य हितार्थिना ॥

कामिनीदर्पघ्नः ।

कज्जलीकृतसुगन्धकशम्भो
स्तुल्यमेव कनकस्य हि बीजम् ।
मर्द्दयेत्कनकतैलयुतं स्यात्
कामिनीमदविधूनन एषः ॥
अस्य वल्लक मधो सितयाक्तं
सेवितं हरति मेहगदोषान् ।
वीर्य्यदार्ढ्यकरणं कमनीयं
द्रावणं निधुवने वनितानाम् ॥

## स्वल्पचन्द्रोदयमकरध्वजः ।

जातीफलं लवङ्गञ्च कर्पूरं मरिचन्तथा ।
प्रत्येकन्तोलकं दत्त्वा सुवर्णस्य च माषकम् ॥
मण्डजं माषमानञ्च सर्वतुल्यमथेश्वरम् ।
ततो मर्द्दयेत् खल्वे चतुर्गुञ्जां वटीञ्चरेत् ॥
एष चन्द्रोदयो नाम रसो वाजीकरः परः ।
हन्ति रोगानशेषांश्च बलवीर्य्याग्निवर्धनः ॥

## वृहच्चन्द्रोदयमकरध्वजः ।

पलं मृदु स्वर्णदलं रसेन्द्रात्
पलाष्टकं षोड़शगन्धकस्य ।
शोणैः सुकार्पासभवैः प्रसूनैः
सर्वं विमर्द्याथ कुमारिकाद्भिः ॥
तत्काचकुम्भे निहितं सुगाढ़े
मृत्कर्पटैर्भिर्द्दिवसत्रयञ्च ।
पचेत् क्रमाग्नौ सिकताख्ययन्त्रे
ततो रजः पल्लवरागरम्यम् ॥
निगृह्य चैतस्य पलम्पलानि
चत्वारि कर्पूररजस्तथैव ।
जातीफलं सोषणमिन्द्रपुष्पं
कस्तूरिकाया इह शाणमेकम् ॥
चन्द्रोदयोऽयं कथितोऽस्य माषो
भुक्तोऽहिवल्लीदलमध्यवर्त्ती ।

महोत्सवानां प्रमदायतानां
गर्वाधिकत्वं प्रभवत्यवश्यम् ॥
घृतं घनीभूतमतीव दुग्धं
मृदूनि मांसानि समस्तकानि ।
माषान्नपिष्टानि भवन्ति पथ्या-
न्यानन्ददायीन्यपराणि चात्र ॥
वलीपलितनाशनस्तनुभृतां वयः स्तम्भनः
समस्तगदखण्डनः प्रचुररोगपञ्चाननः ।
गृहेऽपि गृहभूपतिर्भवति यस्य चन्द्रोदयः
स पञ्चशरदर्पितो मृगदृशां भवेद्वल्लभः ॥

## सिद्धसूतः ।

मुक्ताफलं शुद्धसूतं सुवर्णं रूप्यमेव च ।
यवक्षारश्च तत्सर्वं तोलकैकं प्रकल्पयेत् ॥
रक्तोत्पलपत्रतोयैर्मर्द्दयेत्पुत्तलीकृतम् ।
मर्द्दयेच्च पुनर्दत्त्वा गन्धकं तदनन्तरम् ॥
चिपिटा काचघटीमध्ये सन्निरुध्य त्रियामकम् ।
सिकताख्ये पचेच्छीते सिद्धसूतन्तु भक्षयेत् ॥
पञ्चरत्तिप्रमाणेन सुपक्वोशर्करान्वितम् ।
शुक्रवृद्धिं करोत्येष ध्वजभङ्गञ्च नाशयेत् ॥
दुर्बलं वपुरत्यर्थं बलयुक्तं करोत्यसौ ।
सुशर्करं घृतं क्षीरं शालयः स्निग्धमामिषम् ॥
पारावतश्च मांसञ्च तित्तिरिश्च सदा हितः ॥

### कामदीपकः ।

सितं पुनर्णवामूलं शाल्मलीरसभावितम् ।
शाल्मलीसत्वनिर्य्यासं दद्यात्तत्र समं समम् ॥
गन्धकं सर्वतुल्यञ्च भर्जयेच्छाणमानकम् ।
अनुपानं प्रकुर्वीत ततः क्षीरं पलद्वयम् ॥
अयं चण्डालिनीयोगोऽगम्याप्यत्र हि गम्यते ।
निषेधान्निधनं याति करणात्कामरूपधृक् ।
ओं सिद्धिरस्तु ॥

### सिद्धशाल्मलीकल्पः ।

भूकुष्माण्डं तालमूली धात्री चैव पुनर्नवा ।
समभागं समाहृत्य भागार्द्धं गन्धकन्तथा ॥
तदर्द्धं पारदं शुद्धं कज्जलीकृत्य निक्षिपेत् ।
श्वेतशाल्मलितोयेन सप्तधा भावयेत्ततः ॥
माहिषेण च दुग्धेन तच्चूर्णं भावयेत्पुनः ।
शुष्कं तच्चूर्णयेद्यत्नाल्लेहयेन्मधुसर्पिषा ।
अनेनाशीतिवर्षोऽपि शतधा रमते स्त्रिया ।
ऊर्द्धलिङ्गः सदा तिष्ठेत् कामदेव इव स्वयम् ॥
ज्वरादिरोगनिर्मूक्तः संसारसुखमश्नुते ।
शाणमेकन्तु कर्त्तव्यं दुग्धमत्रानुपानकम् ॥

### पञ्चशरः ।

रसेन सह शाल्मलिजेन सूतं
निमग्नधाराधि अर्कि विमर्द्यं ।

पृथक् तयोः कर्ज्जिकां विपक्कां
घृते रसः पञ्चपदीऽयमुक्तः ॥
कल्कोऽश्विगन्धोदकसंप्रयुक्तो
वीर्य्यातिवृद्धिं कुरुतेऽस्य गुनम्।
मांसाकमर्थं गुड़पायसञ्च
पयः पिवेच्चाश्विमत्र सिद्धम् ॥

त्रिकण्टकाद्यो मोदकः।

गोक्षुरेक्षुरवीजानी वाजीगन्धा शतावरी।
मुषली वानरीवीजंयष्टि नागबला बला ॥
एषाञ्चूर्णं दुग्धसिद्धं गव्येनाज्येन भर्जितम्।
सितया मोदकं कृत्वा भक्ष्यं वाजीकरं परम् ॥
चूर्णादष्टगुणं क्षीरं घृतञ्चूर्णसमं स्मृतम्।
सर्वतो द्विगुणं खण्डं खादेदग्निबलं यथा ॥
वाजीकराणि भूरीणि संग्रह्य रचितो यतः।
तस्माद्बहुषु योगेषु योगोऽयं प्रवरो मतः ॥

रसाला।

दध्नोर्द्धाढ़कमीषदम्लमधुरं खण्डस्य चन्द्रद्युतेः
प्रस्थं क्षौद्रपलञ्च पञ्च हविषः शुण्ठ्याश्चतुर्माषकान्।
एलामाषचतुष्टयं मरिचतः कर्षं लवङ्गं तथा
दत्त्वा शुक्लपटे शनैः करतलेनोन्मथ्य विस्रावयेत् ॥
मृद्भाण्डे मृगनाभिचन्दनरसस्पृष्टेऽगुरुद्धूपिते
कर्पूरेण सुगन्धिकं तदखिलं संशोध्य संस्थापयेत्।

स्वस्थार्थं मधुरैश्वरेण रचिता श्रेष्ठा रसाला स्वयं
भोक्तुर्मन्मथदीपनी सुखकरी कान्तेव नित्यं प्रिया ॥

## चन्दनादितैलम् ।

द्रव्याणि चन्दनादिस्तु चन्दनं रक्तचन्दनम् ।
पत्तङ्गमथ कालीयागुरु ह्यथागुरूणि च ॥
देवद्रुमः ससरलः पद्मकं तुणिकोऽपि च ।
कर्पूरो मृगनाभिश्च लताकस्तूरिकापि च ॥
सिह्लकः कुङ्कुमं नव्यं जातीफलकमत्र च ।
जातीपत्रं लवङ्गञ्च सूक्ष्मैला महती च सा ॥
कक्कोलफलकं त्वक् च पत्रकं नागकेशरम् ।
बालकञ्च तथोशीरं मांसी दारुसितापि वा ॥
मुरा कर्पूरकश्चापि शैलेयं भद्रमुस्तकम् ।
रेणुका च प्रियङ्गुश्च श्रीवासो गुग्गुलुस्तथा ॥
लाक्षा नखश्च रालश्च धातकी कुसुमं तथा ।
ग्रन्थिपर्णश्च मञ्जिष्ठा तगरं सिक्थकं तथा ॥
एतानि शाणमानानि कल्कीकृत्य शनैः पचेत् ।
तैलं प्रस्थमितं सम्यगेतत्पात्रे शुभे क्षिपेत् ॥
अनेनाभ्यक्तगात्रस्तु वृद्धोऽशीतितमोऽपि यः ।
शुभ्रो भवति युक्ताश्वः स्त्रीणामत्यन्तदुर्लभः ॥
वन्ध्यापि लभते गर्भं षण्ढोऽपि तरुणायते ।
अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ॥
चन्दनादि महातैलं रक्तपित्तं क्षयं ज्वरम् ।
दाहप्रस्वेददौर्गन्ध्यं कुष्ठं कण्डूं विनाशयेत् ॥

पुष्पधन्वा।

हरजभुजगलौहच्छाभ्रकं वङ्गचूर्णं
कनकविजययष्टी शाल्मली नागवल्ली।
घृत मधु सितदुग्धं पुष्पधन्वा रसेन्द्रो
रमयति शतरामा दीर्घमायु र्बलञ्च॥
कनकादि क्वाथेन भावयित्वा घृतादिभिर्योजयेत्॥

पूर्णचन्द्रः।

सूताभ्रलौहं कपिलाजतु स्याद्
विडङ्गताप्ये मधुना घृतेन।
पिष्टं प्रशस्तं खलु पूर्णचन्द्रो
माषोऽस्य पुष्ट्यै भवति प्रशस्तः॥

कामाग्निसन्दीपनः।

पलपरिमितशुद्धं सूतकं गन्धतुल्यं
दरदकुनटितुल्यं भावितं शृङ्गवेरैः।
तदनु कनकबीजैर्भावितं सप्तवारं
तदनु सितजयन्त्या भृङ्गराजैश्च सर्वम्॥
पुटितमुपरि शुष्कं काचकूप्यान्तु क्षिप्तं
षड़हमुपरि पाच्यं वालुकायन्त्रकेन॥
एलाजातीचन्द्रैर्मृगमदसहितैः सोषणैः साभ्रगन्धै-
स्तुल्यैर्वल्लप्रमाणं प्रतिदिनमशितं प्रातरुत्थाय शुद्धे।
ओजः पुष्टि विवर्द्धनोऽतिबलकृत्सर्वेन्द्रियानन्दनः
सर्वातङ्कहरो रसायनवरः कामाग्निसन्दीपनः॥
इति भैषज्यरत्नावल्यां ध्वजभङ्गाधिकारः समाप्तः।



## अथ मुष्कवृद्धिरोगाधिकारः।



सक्षीरं वा पिबेत्तैलं मासमेरण्डसम्भवम्।
पूनर्नवायास्तैलं वा तैलं नारायणं तथा॥
पानेवस्तौ क्वचोस्तैलं पेयं वा दध्यकाम्भसा।
एतत्सर्वं वातिकेऽति प्रशस्तम्।
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम्।
क्षीरपीष्टैः प्रदेहः स्याद्दाहशोथरुजापहः॥
पैत्तिके।
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम्।
सर्वपित्तहरं कार्य्यं रक्तजे रक्तमोक्षणम्॥
श्लेष्मवृद्धिमुष्णवीर्य्यैर्मूत्रपिष्टैः प्रलेपयेत्।
पीतदारुकषायञ्च पिबेन्मूत्रेण संयुतम्॥
स्विन्नं मेदः समुत्थञ्च लेपयेत्सुरसादिना।
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः॥
रास्ना यष्ट्यमृतैरण्डवला गोक्षुरसाधितः।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुवुतैलेन मिश्रितः॥
तैलमेरण्डजं पीत्वा वलासिद्धपयोऽन्वितम्।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः॥
भृष्टो रुवुकतैलेन कल्कः पथ्यासमुद्भवः।
कृष्णा सैन्धव संयुक्तो वृद्धिरोग हरः परः॥
हरीतकीं मूत्रसिद्धां पिप्पलीं सैन्धवञ्च कृत्वा एरण्डते

लेन भुक्तां खादेत् अकुपाकमुखौक्तेन कल्केन योगोऽयं समाहं सेव्यः तन्त्रान्तरसंवादादिति भानुः।

तथा व्रणमथाभ्याश सेपो हविष्करः परः।
मत्यभिष्यन्दिगुर्वोमसेवनाच्छिवयं गतः।
करोति ग्रन्थिवत् शोथं दोषो वङ्क्षणसन्धिषु॥
ज्वरशूलाङ्गदाहाढ्यं तं ब्रध्नमिति निर्दिशेत्॥

## विल्वादिचूर्णम्।

मूलं विल्वकपित्थयोररलुकस्याग्नेर्बृहत्योर्द्वयोः
श्यामापूतिकरञ्जशिग्रुतरोर्बिम्बौषधावल्करम्।
कृष्णाग्रन्थिकचव्यपञ्चलवणक्षाराजमोदान्वितं
पीतं काञ्जिककोष्णतोयमथितैश्चूर्णीकृतं ब्रध्नजित्॥
अजाक्षीरेण गोधूमकल्कं कुन्दुरुकस्य वा।
प्रलेपनं सुखोष्णं स्याद् ब्रध्नशूलहरं परम्॥
सततमाले तु वै काके विशस्ते तु प्रवेशयेत्।
व्रध्नं मुहूर्त्तं मेधावी तत्क्षणादरुजं भवेत्॥
अजाजी हपुषा कुष्ठगोधूमवदराणि च।
काञ्जिकेन समं पिष्ट्वा कुर्य्याद् ब्रध्ने प्रलेपनम्॥

## बृहत्सैन्धवाद्यं तैलम्।

सैन्धवं मदनं कुष्ठं शताह्वां निचुलं वचाम्।
ह्रीवेरं मधुकं भार्गीं देवदारु सनागरम्॥
कट्फलं पौष्करं मेदां चविकां चित्रकं शटीम्।
विडङ्गातिविषे श्यामां रेणुकां नीलिनीं त्रिवृताम्॥

विल्वाजमोदे कृष्णाञ्च दन्तीं रास्नां प्रपिष्य च।
साध्यमैरण्डजं तैलं तैलं वा कफवातनुत् ॥
बस्तोदावर्त्तगुल्मार्शः प्लीहमेहाड्य मारुतान्।
आनाहमश्मरीञ्चैव हन्यात्तदनुवासनात् ॥
घृतं सौरेश्वरं योज्यं बध्नवृद्धिनिवृत्तये ॥

## गन्धर्वहस्ततैलम्।

शतमैरण्डमूलस्य पलं शुण्ठ्याः यवाढ़कम्।
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ॥
तेन पादावशेषेण पयसा तत्समेन च।
प्रस्थमैरण्डतैलस्य तस्य लाभ्य चतुःपलम् ॥
त्रिपलं शृङ्गवेरस्य गर्भं दत्त्वा विपाचयेत्।
तत्पिवेत्प्रयतः शुद्धो नरः क्षीरान्नभुक् सदा ॥
अन्त्रवृद्धिं जयत्याशु तैलं गन्धर्वहस्तकम् ॥

## शतपुष्पाद्यं घृतम्।

शतपुष्पामृतादारुचन्दनं रजनीद्वयम्।
जीरके द्वे वचानागभिफलागुग्गुलत्वचम् ॥
मांसी सकुष्ठपद्मैलारास्नाशृङ्गी च चित्रकम् ॥
क्रिमिघ्नमश्वगन्धा च शैलेयं कटुरोहिणी ॥
सैन्धवं तगरञ्चैव कुष्ठजाती विसैः समैः।
एतैश्च कार्षिकैः कल्कैर्घृतप्रस्थं विपाचयेत् ॥
वृषगुडूचिकैरण्डविल्वपत्रभवो रसः।
कण्टकार्य्यास्तथा प्रस्थं क्षीरप्रस्थं विनिक्षिपेत् ॥

सिद्धमेतद् घृतं पीत मन्त्रवृद्धिं व्यपोहति।
वातवृद्धिं पित्तवृद्धिं मेदोवृद्धिमथापि वा॥
मूत्रवृद्धिं श्लीपदञ्च यकृत् प्लीहानमेव च।
शतपुष्पाद्यमेतद्धि घृतं हन्ति न संशयः॥

हरीतकीं मूत्रसिद्धां सतैलां लवणान्विताम्।
प्रातः प्रातश्च सेवेत कफवातामयापहम्॥

गुग्गुलुं रुबुतैलं वा गोमूत्रेण पिबेन्नरः।
वातवृद्धिं निहन्त्याशु चिरकालानुवर्त्तिनीम्॥
निष्पिष्टमारनालेन रूपिकामूलवल्कलम्।
लेपो हन्त्यामयं हन्ति वध्नमूलमपि ध्रुवम्॥

गव्यं घृतं सैन्धवसंप्रयुक्तं
शम्बूकभाण्डे निहितं तदेव।
सप्ताहमादित्यकरैर्विपक्वं
हन्यात् स्तरण्डश्चिरजं प्रवृद्धम्॥

सैन्धवञ्च घृताभ्यक्तं ताम्रभाजनमातपे।
प्रतप्तमूर्णया घृष्टं तन्मलञ्च समाहरेत्॥
कुरण्डं म्रक्षयेत्तेन सनिर्विघ्नं दिवानिशम्।
कुरण्डं तेन संक्षिप्तं नास्तीत्याह पुनर्वसुः॥

गोमूत्रसिद्धां रुबुतैलभृष्टां
हरीतकीं सैन्धवसम्प्रयुक्ताम्।
पिबेन्नरः कोष्णजलानुपानां
निहन्ति वृद्धिं चिरजां प्रवृद्धाम्।

ऐन्द्रीमूलभवञ्चूर्णं रुबुतैलेन मर्द्दितम्।
गवाक्षीपयसा पीतं सर्व्ववृद्धिहरं परम्॥

वचा सर्षपकल्केन लेपोऽण्डविविनाशनः।
बहुवारस्य बीजञ्च पिष्ट्वा तत्काद्र्कैः सह।
कुरण्डं नाशयेद्‌ध्रुवं लेपनान्नात्र संशयः॥
घृतैर्नीलोत्पलमूलं पिष्ट्वा लिम्पेत् कुरण्डकम्।
अथवा लेपनं कुर्य्यान्मण्डूकशोणितैः॥

भक्तोत्तरीयम्।

अभ्रकं गन्धकञ्चैव पिप्पली लवणानि च।
त्रिक्षारं त्रिफला चैव हरितालं मनःशिला॥
पारदश्चाजमोदा च यमानी शतपुष्पिका।
जीरकं हिङ्गु मेथी च चित्रकश्चविका वचा॥
दन्ती च त्रिवृता मुस्तं शिला च मृतलौहकम्।
अञ्जनं निम्बबीजानि पटोलं वृद्धदारकम्॥
सर्वाणि चाक्षमात्राणि सूक्ष्मचूर्णानि कारयेत्।
शतं कानकबीजानि शोधितानि प्रयोजयेत्॥
एतदग्निविवृद्ध्यर्थं सुधिभिः परिकीर्त्तितम्।
शोफदाभ्यन्तवृद्धिश्च वातवृद्धिश्च दारुणाम्॥
अरुचिश्चामवातञ्च शूलं वातसमुद्भवम्।
गुल्मश्चैवोदरव्याधीन्नाशयत्याशु तत्क्षणात्॥
भक्तोत्तरमिदञ्चूर्णमश्विभ्यां निर्मितं पुरा।

वातारिः।

रसभागो भवेदेको गन्धको द्विगुणो मतः।
त्रिगुणा त्रिफला ग्राह्या चतुर्भागश्च चित्रकः॥
गुग्गुलः पञ्चभागः स्यादेरण्डतैलमर्दितः।

त्रिमात्र पूर्वकं चूर्णं तेनैव सह मर्दयेत्।
गुड़िकां कर्षमात्रान्तु भक्षयेत्प्रातरेव हि।
नागरैरण्डमूलानां क्वाथं तदनुपाययेत्॥
अभ्यङ्गैरण्डतैलेन स्वेदयेत् पृष्ठदेशकम्।
विरेके तेन सञ्जाते स्निग्धमुष्णञ्च भोजयेत्॥
वातारिसंज्ञको ह्येष रसो निर्वातसेवितः।
अन्त्रवृद्धिं निहन्त्येव ब्रह्मचर्य्यपुरःसरः॥
अनुपानञ्च तिलजं मार्द्र्कं द्रवसंयुतम्॥

इति भैषज्यरत्नावल्यां मुष्कवृद्धिव्रध्नाधिकारः समाप्तः।

# अथ श्लीपदाधिकारः।

लङ्घनालेपनस्वेदरेचनै रक्तमोक्षनैः।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत्॥
लङ्घनं प्रथमतः लेपस्वेदादयो नवे पुराणे च।
धुस्तूरैरण्डनिर्गुण्डी वर्षाभू शिग्रु सर्षपैः।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम्॥
निष्पिष्टमारनालेन रूपिकामूलवल्कलम्।
प्रलेपात् श्लीपदं हन्ति बद्धमूलमपि स्थिरम्॥
पिण्डारकतरुसम्भववन्दाकशिफा जयति सर्पिषा पीता।
श्लीपदमुग्रं नियतं बद्धा सूत्रेण जङ्घायाम्॥

हितश्चालेपने नित्यं चित्रको देवदारु वा ।
सिद्धार्थशिग्रुकल्को वा सुखोष्णो मूत्रपेषितः ॥
स्नेहस्वेदोपनाहांश्च श्लीपदेऽनिलजे भिषक् ।
कृत्वा गुल्फोपरि शिरां विध्येत्तच्चतुरङ्गुले ॥
गुल्फस्याधः शिरां विध्येत् श्लीपदे पित्तसम्भवे ।
पित्तघ्नीञ्च क्रियां कुर्य्यात्पित्तार्बुदविसर्पवत् ॥
मञ्जिष्ठां मधुकं रास्नां सहिंस्रां सपुनर्नवाम् ।
पिष्ट्वारनालैर्लेपोऽयं पित्तश्लीपदशान्तये ॥
शिरां सुविदितां विध्येदङ्गुष्ठे श्लेष्मश्लीपदे ।
मधुयुक्तानि वा तीक्ष्णकषायाणि पिबेन्नरः ॥
पिबेत्सर्षपतैलेन श्लीपदानां निवृत्तये ।
पूतिकरञ्जच्छदजं रसं वापि यथाबलम् ॥
अनेनैव प्रकारेण पुत्रजीवकजं रसम् ॥
काञ्जिकेन पिबेच्चूर्णं मूलं वा वृद्धदारजम् ।
रजनीं गुड़संयुक्तां गोमूत्रेण पिबेन्नरः ॥
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥
गन्धर्वतैलभृष्टां हरीतकीं गोजलेन यः पिबति ।
श्लीपदबन्धनमुक्तो भवत्यसौ सप्तरात्रेण ॥
धान्याम्लं तैलसंयुक्तं कफवातविनाशनम् ।
दीपनञ्चामदोषघ्नमेतच्छ्लीपद नाशनम् ॥
गोधावतीमूलयुक्तां खादेन्माषेण्डरीं नरः ।
जयेच्छ्लीपदकोपोत्थं ज्वरं सद्यो न संशय ॥
श्लीपदघ्नो रसोऽभ्यासात्कृष्णातैलसंयुतः ॥

## वृद्धदारकसमचूर्णम् ।

त्रिकटु त्रिफला चव्यं दार्व्वी वरुणगोक्षुरम् ।
अलम्बुषां गुडूचीञ्च समभागानि चूर्णयेत् ॥
सर्व्वेषाञ्चूर्णमाहृत्य वृद्धदारस्य तत्समम् ।
काञ्जिकेन च तत्पेयमक्षमात्रं प्रमाणतः ॥
जीर्णे च परिहारं स्याद्भोजनं सर्व्वकामिकम् ।
नाशयेत् श्लीपदं स्थौल्यमामवातञ्च दारुणम् ॥
गुल्मकुष्ठानिलहरं वातश्लेष्मज्वरापहम् ॥

## पिप्पल्याद्यचूर्णम् ।

पिप्पली त्रिफला दारु नागरं सपुनर्नवम् ।
भागैर्हि पलिकैरेषां तत्समं वृद्धदारकम् ॥
काञ्जिकेन पिवेच्चूर्णं कर्षमात्रं प्रमाणतः ।
जीर्णे च परिहारं स्याद्भोजनं सर्व्वकामिकम् ॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च ।
अग्निञ्च कुरुते घोरं भस्मकञ्च नियच्छति ॥

## कृष्णाद्योमोदकः :

कृष्णा चित्रकदन्तीनां कर्षमर्द्धपलं पलम् ।
विंशतिश्च हरीतक्या गुड़स्य तु पलद्वयम् ॥
मधुना मोदकं खादन् श्लीपदं हन्ति दुस्तरम् ॥

## सौरेश्वरघृतम् ।

सुरसा देवकाष्ठञ्च त्रिकटु त्रिफले तथा ।
लवणान्यथ सर्व्वाणि विड़ङ्गान्यथ चित्रकम् ।

चविका पिप्पलीमूलं गुग्गुलुर्हवुषा वचा।
यवाग्रजश्च पाठा च मल्ली ला वृद्धदारकम्॥
कल्कैश्च कार्षिकैरेभिर्घृतप्रस्थं विपाचयेत्।
दशमूलकषायेण धान्ययूषद्रवेण च॥
दधिमस्तु समायुक्तं प्रस्थं प्रस्थं पृथक् पृथक्।
पक्वं स्यादुद्धृतं कल्कात्पिवेत्कर्षत्रयं हविः॥
श्लीपदं कफवातोत्थं मांसरक्ताश्रितश्च यत्।
मेदःश्रितश्च वातोत्थहन्यादेव न संशयः॥
अपचीं गण्डमालाञ्च अन्त्रवृद्धिं तथार्बुदम्।
नाशयेद्ग्रहणीदोषं श्वयथुं गुदजानि च॥
परमग्निकरं हृद्यं कोष्ठक्रिमिविनाशनम्॥

विडङ्गादितैलम्।

विडङ्गमरिचार्केषु नागरे चित्रके तथा।
भद्रदार्वेलकाह्वे च सर्वेषु लवणेषु च॥
तैलं पक्वं पिवेद्वापि श्लीपदानं निवृत्तये॥

नित्यानन्दरसः।

हिङ्गूलसम्भवं सूतं गन्धकं मृतताम्रकम्।
कांस्यं वङ्गं हरीतालं तुत्थं शङ्खं वराटिका॥
त्रिकटु त्रिफला लौहं विडङ्गं पटुपञ्चकम्।
चविका पिप्पलीमूलं हवुषा च वचा तथा॥
शटी पाठा देवदारु एला च वृद्धदारकम्।
त्रिवृता चित्रकं दन्ती ग्रन्थीला तु पृथक् पृथक्॥
एतानि समभागानि सञ्चूर्ण्य गुडकीकृतम्।

हरीतकीरसं दत्त्वा दग्रगुञ्जोन्मितं शुभम्॥
एकैकं भक्षयेन्नित्यं शीतञ्चानुपिबेज्जलम्।
श्लीपदं कफवातोत्थं रक्तमांसाश्रितञ्च यत्॥
मेदोगतं धातुगतं निहन्ति नात्र संशयः।
अर्बुदं गण्डमालाञ्च वातरक्तं सुदारुणम्॥
कफवातोद्भवं रोगमन्त्रवृद्धिञ्चिरन्तनीम्।
वातरक्ते वातकफे गुदरोगे क्रिमौ तथा॥
अग्निवृद्धिं करोत्येष बलवर्णञ्च सुस्थताम्।
श्रीमद्गहननाथेन निर्मितो विश्वसम्पदे॥
नित्यानन्दरसश्चायं महाश्लीपदनाशनः।
रक्तजे पित्तजे चापि श्लीपदे योजयेदमुम्॥
नातः परतरं किञ्चिद्विद्यते श्लीपदामये॥

त्रिवृता चित्रकं दन्ती गृहीत्वा तु पृथक् पृथक् इत्यत्र त्रिवृच्चित्रकदन्तीनां भावयित्वा रसैः पृथक् इति सारकौमुद्यां पाठः कुत्रापि वा एतत्पद्यार्द्धं नास्त्येव। शटी पाठा देवदारु एला च वृद्धदारकम् इत्यत्र शटी पाठा देवदारु अगेला वृद्धदारकमिति पाठान्तरम्।

### श्लीपदगजकेशरी।

व्योषास्तत्रयमानी च सूतोऽग्निर्गन्धकं शिला।
सौभाग्यं जयपालञ्च चूर्णमेकत्र कारयेत्॥
भृङ्गगोक्षुरजम्बीरार्द्रकतोयैर्विमर्दयेत्।
अस्य रक्तिद्वयं खादेदुष्णतोयानुपानतः॥
श्लीपदं दुस्तरं हन्ति श्लोहामं हन्ति सेवितः॥

श्लीपदारिः ।

निम्बं खदिरसारञ्च मधुना चाष्टमाषकम् ।
गवां मूत्रेण पिष्टा तु पिबेत् श्लीपदशान्तये ॥

इति भैषज्यरत्नावल्यां श्लीपदाधिकारः समाप्तः ।



# अथ गलगण्डगण्डमालापचीग्रन्थ्यर्बुदाधिकारः



यवमुद्गपटोलानि कटुरूक्षञ्च भोजनम् ।
छर्दिं सरक्तमुक्तिञ्च गलगण्डे प्रयोजयेत् ॥
तण्डुलोदकपिष्टेन मूलेन परिलेपितः ।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति ॥
सर्षपान् शिग्रुबीजानि शणबीजातसी यवान् ।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ॥
गलगण्डा ग्रन्थयश्च गण्डमालाः सुदारुणाः ।
प्रलेपात् तेन शाम्यन्ति विलयं यान्ति चाचिरात् ॥
जीर्णकर्कारुकरसो विटसैन्धवसंयुतः ।
नस्येन हन्ति तरुणं गलगण्डं न संशयः ॥
जलकुम्भीकजं भस्म पक्वं गोमूत्रगालितम् ।
पिबेत् कोद्रवभक्ताशी गलगण्डप्रशान्तये ॥
सूर्य्यावर्त्तरसौ नाभ्यां गलगण्डोपनाहने ।
स्फोटास्रावैः शमं यान्ति गलगण्डा न संशयः ॥

तिक्तालाबुफले पक्वे सप्ताहमुषितं जलम्।
मद्यं वा गलगण्डघ्नं पानात्पथ्यानुसेविनः॥
कटुफलवल्कलतगरैर्घर्षो गलगण्डरोगमयं हन्ति।
घृतमिश्रं पीतमपि श्वेतगिरिकर्णिकामूलम्॥
मक्षिकामूत्रविमिश्रं लौहमलं संस्थितं घटे मासम्।
अन्तर्धूमविदग्धं लिह्यान्मधुनाथ गलगण्डे॥
जिह्वायाः पार्श्वतोऽधस्तात् शिरा द्वादश कीर्त्तिताः॥
तासां स्थूलशिरे द्वेऽधश्छिन्द्यात्ते च शनैः शनैः॥
वडिशेनैव संगृह्य कुशपत्रेण बुद्धिमान्।
स्रुते रक्ते व्रणे तस्मिन्दद्यात् सगुड़मार्द्रकम्॥
भोजनाद्यानभिष्यन्दि युषः कौलत्थ इष्यते॥
कर्णयुग्मबहिः सन्धिमध्यभ्यासे स्थितञ्च यत्।
उपर्युपरि तच्छिन्द्यां गलगण्डे शिरात्रयम्॥

## तुम्बीतैलम्।

विडङ्गक्षारसिन्धूत्थ रास्नाग्नि व्योषदारुभिः।
कटुतुम्बीफलरसे कटुतैलं विपाचितम्॥
चिरोत्थमपि नस्येन गलगण्डं विनाशयेत्॥

## अमृताद्यन्तैलम्।

तैलं पिबेच्चामृतवल्लि निम्ब-
हिंस्राहयी वत्सकपिप्पलीभिः।
सिद्धं बलाभ्याञ्च सदेवदारु
हिताय नित्यं गलगण्डरोगी॥
माक्षिकाढ्यं सततपीतः क्वाथो वरुणमूलजः।

गण्डमालां हरत्याशु चिरकालानुबन्धिनीम् ॥
पिष्टा ज्येष्ठाम्बुना पीताः काञ्चनालत्वचः शुभाः।
विश्वभेषजसंयुक्ता गलगण्डापहाः पराः॥

## काञ्चनगुड़िका।

त्रिफलायास्त्रयो भागा व्योषाच्च द्विगुणो मतः।
तस्माच्च द्विगुणं ज्ञेयं काञ्चनारस्य वल्कलम्॥
एकीकृते तु चूर्णेऽस्मिन् समो देयोऽथ गुग्गुलुः।
क्षौद्रं दशगुणं दद्यात्त्रिफला चूर्णतो भिषक्॥
सर्वासु गण्डमालासु गलगण्डे तथैव च।
नाड़ीव्रणेषु गण्डेषु गुड़िकेयं प्रशस्यते॥

## सिन्दूरादितैलम्।

चक्रमर्दकमूलस्य कल्कं कृत्वा विपाचयेत्।
केशराजरसे तैलं कटुकं मृदुनाग्निना॥
पाकशेषे विनिक्षिप्य सिन्दूरमवतारयेत्।
एतत्तैलं निहन्त्याशु गण्डमालां सुदारुणाम्॥
आरग्वधशिफां क्षिप्रं पिष्ट्वा तण्डुलवारिणा।
सम्यङ्नस्य प्रलेपाभ्यां गण्डमालां समुद्धरेत्॥
गण्डमालामयार्त्तानां नस्यकर्मणि योजयेत्।
निर्गुण्ड्याश्च शिफां सम्यग्वारिणा परिपेषिताम्॥
घोषातकीनां स्वरसेन नस्यं
तुम्ब्यास्तु वा पिप्पलिसंयुतेन।
तैलेन वारिष्टभवेन कुर्य्याद्
गलोत्थकुष्ठेन समाक्षिकेण॥

ऐन्द्र्या वा गिरिकर्ण्या वा मूलं गोमूत्रकोमलः ।
गण्डमालां हरत्येव चिरकालोत्थितामपि ॥
अलम्बुषादलोद्भूतं स्वरसं द्विपलं पिबेत् ।
अपच्या गण्डमालायाः कामलायाश्च नाशनम् ॥
गलगण्डं गण्डमालां कुरण्डञ्च विनाशयेत् ।
पिष्टं ज्येष्ठाम्बुना लेपात् मूलं ब्राह्मणयष्टिजम् ॥
छुछुन्दर्य्या विपक्वञ्च यथा तैलवरं ध्रुवम् ।
अभ्यङ्गान्नाशयेत् क्षिप्रं गण्डमालां सुदारुणाम् ।
छुछुन्दर्य्याः कल्कः जलञ्चतुर्गुणम् । अस्य प्रधान्यात् काथ कल्कौ इति चक्रः ।

आखोटकतैलम् ॥

गण्डमालापहन्तैलं सिद्धं आखोटकत्वचा ॥
आखोटकत्वचाक्वाथ कल्काभ्यामिति गदाधरः । कल्कमानेन जलञ्चतुर्गुणमित्यन्ये ।

बिम्बादितैलम् ।

बिम्बाश्वमारनिर्गुण्डी साधितं वापि नावनम् ॥

निर्गुण्डीतैलम् ।

निर्गुण्डी स्वरसे वाथ लाङ्गलीमूलकल्कितम् ।
तैलं नस्याद्विहन्त्याशु गण्डमालां सुदारुणाम् ॥
वनकार्पासिकामूलं तण्डुलैः सह योजितम् ।
पक्वा पूपलिकाः खादेदपची नाशनाय तु ॥
शोभाञ्जनं देवदारु काञ्जिकेन तु पेषितम् ।
कोष्णं प्रलेपतो हन्यादपची मतिदुस्तराम् ॥

सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह ।
छागमूत्रेण संपिष्टमपचीघ्नं प्रलेपनम् ॥
अश्वत्थकाष्ठं निपुणं गवां दन्तञ्च दाहयेत् ।
वराहमज्जसंयुक्तं भस्म हन्त्यपचीव्रणान् ॥
दण्डोत्पलभवं मूलं यद्वं पुष्येऽपचीं जयेत्
अपामार्गस्य वाच्छिन्द्याच्छिन्नातत्यगते शिरे ।

## व्योषाद्यन्तैलम् ।

व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च ।
तैलमेभिः शृतं नस्यात्कृच्छ्रामप्यपचीं जयेत् ॥

## चन्दनाद्यन्तैलम् ।

चन्दनं साभया लाक्षा वचा कटुकरोहिणी ।
एभिस्तैलं शृतं पीतं समूलामपचीं जयेत् ॥

## गुञ्जाद्यन्तैलम् ।

गुञ्जाहयारिष्टश्यामार्कं सर्षपैर्मूत्रसाधितम् ।
तैलन्तु दशधा पञ्चाङ्गुलालवणपञ्चकैः
मरिचैश्चूर्णितैर्युक्तं सर्वावस्थागतां जयेत् ।
अभ्यङ्गादपचीं नाडीं वल्मीकार्बुदव्रणान् ॥
ग्रन्थिष्वामेषु कुर्वीत भिषक् शोथप्रतिक्रियाम् ।
पक्वानुत्पाट्य संशोध्य रोपयेद् व्रणभेषजैः ॥
हिंस्रा सरोहिण्यमृता तथैव
गण्डीरपाकविश्वागुरुकष्णगन्धाः ।

गोपित्तमिश्रैः सह तालपत्री
ग्रन्थौ विधेयोऽनिलजे प्रलेपः॥
जलायुकाः पित्तकृते हिताश्च
क्षीरोदकाभ्यां परिषेचनञ्च।
काकोलवर्गस्य तु शीतलानि
पिबेत्कषायाणि सशर्कराणि॥
द्राक्षारसेनेक्षुरसेन वापि।
चूर्णं पिबेद्वापि हरीतकीनाम्॥
मधुकजम्ब्वर्जुनवेतसानां
त्वग्भिः प्रदेहानवतारयेच्च।
हृतेषु दोषेषु यथानुपूर्व्या
ग्रन्थौ भिषक् श्लेष्मसमुद्भवे तु॥
विकङ्कतारग्वधकाकणन्ती-
काकादनी तापसवृक्षमूलैः।
आलेपयेदेन मलावुभार्गी-
करञ्जकाला मदनैश्च विद्वान्॥
दन्तीचित्रकमूलत्वक् सौधार्कपयसी गुडः।
भल्लातकास्थि कासीसं लेपाद्भिन्द्याच्छिलामपि॥
ग्रन्थ्यर्बुदादिजिल्लेपो माहिषाहकीटजः॥
सर्जिकामूलकक्षारः शङ्खचूर्णसमन्वितः।
प्रलेपो विहितस्तीक्ष्णो हन्ति ग्रन्थ्यर्बुदादिकान्॥
ग्रन्थीनमर्मप्रभवान् पक्वान्
उद्धृत्य चाग्निं विदधीत वैद्यः।

भारैश्च चैतान् प्रतिसारयेत्तु
सर्वांश्च संलिख्य यथोपदेशम् ॥
अन्यार्बुदानाञ्च यतोऽविशेषः
प्रदेशहेत्वाकृतिदोषदूष्यैः
ततश्चिकित्से क्रिमयर्बुदानि
विधानविद् ग्रन्थिचिकित्सितेन ॥
वातार्बुदे चाप्युपनाहनानि
स्निग्धैश्च मांसैरथ वेसवारैः।
स्वेदं विदध्यात् कुशलस्तु नाड्या
शृङ्गेण रक्तं बहुशो हरेच्च ॥
स्वेदोपनाहा मृदवश्च पथ्याः
पित्तार्बुदे काय विरेचनञ्च ॥
विघृष्य चोडुम्बर शाक गोजी-
पत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत्।
श्लक्ष्णीकृतैः सर्जरस प्रियङ्गु-
पत्तङ्ग लोध्राञ्जन यष्टिकाह्वैः ॥
लेपनं शङ्खचूर्णेन सह मूलकभस्मना।
कफार्बुदापहं कुर्य्याद् अश्मरादिषु विशेषतः ॥
शिग्रावपिण्याककुलत्थकल्कै-
र्मांसप्रगाढैर्दधिमर्दितैश्च।
लेपं विदध्यात् क्रिमयो यथात्र
मुच्छन्त्यपत्यान्यथ मक्षिका वा ॥
अल्पावशिष्टं क्रिमिभिः प्रजग्धं
लिखेत्ततोऽग्निं विदधीत पश्चात्।

यद्वाल्पमूलं त्रपुताम्रसीसैः
संवेष्ट्यपत्रैरथवायसैर्वा ।
क्षाराग्निशस्त्राण्यवतारयेच्च
मुहुर्मुहुः प्राणमवेक्षमाणः ।
यदृच्छया चोपगतानि पाकं
पाकक्रमेणोपचरेद्यथोक्तम् ॥

उपोदिकारसाभ्यक्तास्तत्पत्रपरिवेष्टिताः ।
प्रणश्यन्त्यचिरान्नॄणां पिड़कार्बुदजातयः ॥

उपोदिका काञ्जिकतक्रपिष्टा
तयोपनाहो लवणेन मिश्रः ।
हृष्टोऽर्बुदानां प्रशमाय कैश्चिद्-
दिने दिने रात्रिषु मर्मजानाम् ॥

लेपोऽर्बुदजिद्रम्भामोचकभस्म शूकशङ्खचूर्णकृतः ।
सरटरुधिरार्द्रं गन्धकयवाग्रजविड़ङ्गनागरैर्वाथ ॥

स्नुहा गण्डीरिका स्वेदो नाशयेदर्बुदानि च ।
सीसकेनाथ लवणैः पिण्डारकफलेन च ॥

हरिद्रा लोध्रपत्तङ्गगृहधूममनःशिलाः ।
मधु प्रगाढ़ो लेपोऽयं मेदोऽर्बुदहरः परः ॥

एतामेव क्रियां कुर्य्यादशेषां शर्करार्बुदे ॥

इति भैषज्यरत्नावल्यां गलगण्डगण्डमालापची
ग्रन्थ्यर्बुदाधिकारः समाप्तः ।

# अथ शीतपित्तोदर्दकोठाधिकारः।



अभ्यङ्गः कटुतैलेन सेकश्चोष्णाम्बुभिस्तथा।
उदर्दे वमनं कार्य्यं पटोलारिष्टवारिणा॥
त्रिफला पुरकृष्णाभिर्विरेकश्चात्र शस्यते।
विसर्पोक्तममृतादिं भिषगत्र प्रयोजयेत्॥
सगुड़ं दीप्यकं यस्तु खादेत्पथ्यान्नभुङ् नरः।
तस्य नश्यति सप्ताहा दुदर्दः सर्वदेहजः॥
दूर्वानिशा युतोलेपः कच्छूपामाविनाशनः।
क्रिमि दद्रुहरश्चैव शीतपित्तापहः स्मृतः॥
क्षारसैन्धवतैलेन गात्राभ्यङ्गं प्रकारयेत्॥
अग्निमन्थभवं मूलं पिष्टं पीतञ्च सर्पिषा।
शीतपित्तोदर्दकोठान् सप्ताहादेव नाशयेत्॥
कुष्ठोक्तञ्च क्रमं कुर्य्यादम्लपित्तघ्नमेव च।
सर्पिः पीत्वा महातिक्तं कार्य्यं रक्तस्य मोक्षणम्॥
कर्षं गव्यघृतस्यापि कर्षार्द्धं मरिचस्य च।
एकीकृत्य पिबेत्प्रातः शीतपित्तविनाशनम्॥

## हरिद्राखण्डः।

हरिद्रायाः पलान्यष्टौ षट्पलं हविषस्तथा।
क्षीराढ़केन संयुक्तं खण्डसार्द्धपलं तथा॥
पचेन्मृद्वग्निना वैद्यो भाजने मृण्मये दृढ़े।
त्रिकटु त्रिजातकञ्चैव त्रिमिन्नं त्रिवृता तथा॥

त्रिफला केशरं मुस्तं लौहं प्रतिपलं पलम्।
सञ्चूर्ण्य प्रक्षिपेत्तत्र कर्षमेकन्तु भक्षयेत्॥
कण्डूविस्फोटदद्रूणां नाशनं परमौषधम्।
प्रतप्तकाञ्चनाभासो देहो भवति नान्यथा॥
शीतपित्तोदर्दकोठान् सप्ताहादेव नाशयेत्।
हरिद्रा नामतः खण्डः कण्डूनां परमौषधम्॥

## बृहत् हरिद्राखण्डः।

निशाचूर्णस्य कुडवं त्रिवृत्पलचतुष्टयम्।
अभया तत्समं देयं सार्द्धप्रस्थद्वयं सिता॥
दार्वी मुस्ता यमान्यौ द्वौ चित्रकं कटुरोहिणी।
अजाजी पिप्पली शुण्ठी त्रिजातं क्रिमिकण्टकम्॥
अमृता वासकं कुष्ठं त्रिफला चव्यधान्यकम्।
मृतलौहं समाभ्रञ्च प्रत्येकं कोलसम्मितम॥
पचेन्मृद्वग्निना वैद्य भाजने मृन्मये नवे।
कर्षार्द्धञ्च ततः खादेदुष्णतोयानुपानतः॥
शीतपित्तोदर्दकोठकण्डूपामा विचर्चिकाम्।
जीर्णज्वर क्रिमिं पाण्डु शोथादिंश्च विनाशयेत्॥

इति भैषज्यरत्नावल्यां शीतपित्तोदर्दकोठा-
धिकारः समाप्तः।



## अथ मसूरिकाधिकारः ।

चैत्रासितभूतदिने रक्तपताकान्विता गुडूची भवने ।
धवलितकलसे न्यस्ता पापरोगं दूरतो धत्ते ॥
नारीणां वामपार्श्वस्थं नराणामपसव्यगम् ।
पापरोगभयं दूरात् शिवाक्षि विनिवारयेत् ॥
शिवाक्षीत्यत्र हरीतकी बीजमिति नीलकण्ठः
शृगालाक्षीति केचित् ।
ज्वरे जाते स्नुहीनाम्बु तिष्ठेन्निर्वातवेश्मनि ।
मज्जास्रेन्द्रियाचूर्णगात्रं वस्त्रेण बन्धयेत् ॥
रुद्राक्षं मरिचैर्युक्तं पीतं पर्युषिताम्भसा ।
व्यहात्तापहरं हन्ति दृष्टं वारसहस्रशः ॥
सर्वासां वमनं पथ्यं पटोलारिष्टवत्सकैः ।
कषायैश्च वचा वत्स यष्ट्याह्वफलकल्कितैः ॥
सक्षौद्रं पाययेद् ब्राह्मा रसं वा हेलमोचिकम् ।
वान्तस्य रेचनं देयं शमनं चाबले नरे ॥
सुषवीपत्रनिर्य्यासं हरिद्राचूर्णसंयुतम् ।
रोमान्ती ज्वरविस्फोटमसूरी शान्तये पिबेत् ॥
उष्ट्रकण्टकमूलं वाप्यनन्ता मूलमेव वा ।
दिशिरहीतं ज्येष्ठाम्बु पीतं हन्ति मसूरिकाम् ॥
तद्वत् शृगालकण्टकमूलञ्च व्युषिताम्भसा ।
निशाचिञ्चाच्छदे शीतवारि पीते तथैव च ।
व्युषिताम्भना समरिचं पिवेच्छीतकपर्दकम् ॥

यावत्संख्या मसूर्य्यस्तावद्भिः शीतलैर्दलैः।
छिन्नै राजुरनाम्ना तु गुडो वेति न वर्द्धते॥
व्युषितं वारि सक्षौद्रं पीतं दाहगुडोहरम्।
तर्पणं वातजायां प्राक्लाजचूर्णैः सशर्करैः।
भोजनं तिक्तयूषैश्च प्रत्युद्रामां रसेन वा॥

पटोलादि।

पटोलकुण्डलीमुस्त वृषधन्वयवासकैः।
भूनिम्ब निम्बकटुका पर्पटैश्च शृतं जलम्॥
मसूरीं शमयेद्रामां पक्वाञ्चैव विशोषयेत्।
नातः परतरं किञ्चिद्विस्फोटज्वरशान्तये।

अमृतादिः।

अमृतादिकषायञ्च विसर्पोक्तं प्रशो जयेत्।
अमृतादि यथा अमृतवृषपटोल मुस्तक सप्तपर्ण
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे।
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू-
रपनयति मसूरीं शीतपित्तं ज्वरञ्च॥

सौवीरेण तु सम्पिष्टं मातुलुङ्गस्य केशरम्।
प्रलेपात्पाचयत्याशु दाहञ्चाशु नियच्छति॥

पाददाहं प्रकुरुते पिड़का पादसम्भवा।
तत्र सेकं प्रशंसन्ति बहुशस्तण्डुलाम्बुना॥
पाककाले तु सर्वासां विशोषयति मारुतः।
तस्मात्संवृंहणं कार्य्यं नतु पथ्यं विशोषणम्॥

गुड़ूचीं मधुकं द्राक्षां मोरटं दाड़िमैः सह।

पाककाले तु दातव्यं भेषजं गुड़संयुतम् ॥
तेन पाकं व्रजत्याशु मच वायुः प्रकुप्यति ॥
लिहेद्वा बादरचूर्णं पाचनार्थं गुड़ेन तु ।
अनेनाशु विपच्यन्ते वातपित्तकफात्मिकाः ॥
शूलाध्मानपरीतस्य कम्पमानस्य वायुना ।
धन्वमांसरसाः शस्ता ईषल्लेश्वसंयुताः ॥
पिबेदम्भ स्तप्तशीतं भावितं खदिराशनैः ।
शौचे वारि प्रयुञ्जीत गायत्री बहुवारजम् ॥
जातीपत्रं समञ्जिष्ठं दार्वीं पुगफलं शमी ।
धात्रीफलं समधुकं क्वथितं मधुसंयुतम् ॥
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते ॥
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ।
पञ्चवल्कलचूर्णेन क्लेदिनीमवचूर्णयेत् ।
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥
क्रिमिपातभयाच्चापि धूपयेत्सरलादिभिः ॥
वेदना दाहशान्त्यर्थं सुतानाञ्च विशुद्धये ।
सगुग्गुलुं वराक्वाथं युञ्ज्याद्वा खदिराष्टकम् ॥
कृष्णाभयारजो लिह्यान्मधुना कण्ठशुद्धये ।
तथाष्टाङ्गावलेहस्य करड्ढ्याद्र्कादिभिः ॥
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ।
कुर्य्याद् व्रणविधानञ्च तैलादीन् वर्जयेच्चिरम् ॥
घण्टाकर्णं शिवं गौरीं विष्णुं विप्रञ्च पूजयेत् ।
आचरेज्जपहोमादीन् व्रतं रोगहरं तथा ॥
अगदानि विषघ्नानि रत्नानि विविधानि च ।

धारयेद्वाचयेद्वापि वैनतेयस्य संहिताम्॥
दुष्टव्रणास्तु तास्वेव श्लोकानिमान् हरेद्बुधः।
व्रणशोषहरं योगमाचरेत्तत्प्रशान्तये॥
विद्वद्भिः सिञ्चमानैश्च प्रक्रियास्तु पुनः पुनः।
भक्त्या पठेत्पाठयेच्च शीतलायाः स्तवं शुभम्॥

इति भैषज्यरत्नावल्यां मसूरिकाधिकारः समाप्तः।



## अथ वातरक्ताधिकारः।



वायुः प्रवृद्धो वृद्धेन रक्तेनावरितः पथि।
क्रुद्धः सन्दूषयेद्रक्तं तज्ज्ञेयं वातशोणितम्॥
उत्तानमथ गम्भीरं द्विविधं वातशोणितम्॥
त्वङ्मांसाश्रयमुत्तानं गम्भीरन्त्वन्तराश्रयम्॥
आढ्कयश्चणका मुद्गा मसूराः समकुष्ठकाः।
युषार्थे बहुसर्पिष्काः प्रशस्ता वातशोणिते॥
पुराणा यवगोधूमनीवाराः शालियष्टिकाः।
भोजनार्थे हिता गव्यमाहिषाजपयो हितम्॥
हरीतकीः प्राश्य समं गुडेन
तिस्रोऽथवा पञ्चततो गुडूच्याः।
क्वाथोऽनुपीतः शमयत्यवश्यं
प्रभिन्नमाजानुजवातरक्तम्॥

पटोलादियोगः।

पटोल कटुका भीरु त्रिफलामृतसाधितम्।
क्वाथं पीत्वा जयेज्जन्तुः सदाहं वातशोणितम्।
पित्तोत्तरे योगोऽयम्॥

सम्पाकामृतवासाना मेरण्डस्नेहसंयुतम्।
पिवा क्वाथमसृग्वातं क्रमात्सर्वाङ्गजं जयेत्॥

गोधूमचूर्णाजपयो घृतञ्च
सच्छागदुग्धो रुबुवीजकल्कः
लेपो विधेयः शतधौतसर्पिः
सेके पयश्चाविकमेव शस्तम्॥

गुडूच्याः स्वरसञ्चूर्णं कल्कं वा क्वाथमेव वा।
प्रभूतकालमासेव्यमुच्यते वातशोणितात्॥
लेपे पिष्टास्तिलास्तद्वद् भृष्टाः पयसी निर्वृताः॥

निम्बादिचूर्णम्।

निम्बामृताभया धात्री प्रत्येकञ्च पलोन्मितम्।
सोमराजी पलं शुण्ठी विडङ्गैडगजाः कणाः॥
यमानी चोग्रगन्धा च जीरकं कटुकं तथा।
खदिरं सैन्धवं क्षारं द्वे हरिद्रे च मुस्तकम्।
देवदारु तथा कुष्ठं कर्षं कर्षं प्रदापयेत्।
सर्वं सञ्चूर्णितं कृत्वा शुभवस्त्रेण छानयेत्॥
शाणमात्रन्तु भोक्तव्यं छिन्नाक्वाथं पिवेदनु।
मासमात्रप्रयोगेण भवेत्काञ्चनसन्निभः॥
वातशोणितमत्युग्रं स्विन्नमौडुम्बरं तथा।

कोठं चर्म्मदलाख्यञ्च किभ पामा च विद्रुता।
कण्डु विचर्च्चिकाकारदद्रुमण्डलकिटिभम्।
सर्वाङ्गे च निहन्त्याशु दुर्नामन्द्राग्निवर्द्धनम्॥
वातवातरक्तं शोथमुदरं सर्वकफिपम्।
प्लीहानं गुल्मरोगञ्च पाण्डुरोगं सकामलम्॥
सर्वान् कण्डूव्रणांश्चैव हरते नात्र संशयः।
हतनिम्बादिकं चूर्णं प्राहनागार्जुनो मुनिः॥

## गुडूचीतैलम्।

गुडूची क्वाथकल्काभ्यां सिद्धं तैलं प्रयत्नतः।
वातरक्तं निहन्त्याशु नात्र कार्य्या विचारणा॥

## मध्यमगुडूचीतैलम्।

गुडूचीक्वाथ कल्काभ्यां सिद्धं तैलं पयः समम्।
वातरक्तं निहन्त्याशु साध्यासाध्यमथापि वा॥
एकजं द्वन्द्वजञ्चैव तथैव सान्निपातिकम्।
नाशयेत्तिमिरं घोरं गुडूचीतैलमुत्तमम्॥

## बृहद्गुडूचीतैलम्।

शतं छिन्नरुहायाश्च जलद्रोणे विपाचयेत्।
तेन पादावशेषेण तैलप्रस्थं विपाचयेत्।
क्षीरं चतुर्गुणं दद्यात्कल्कानेतान् प्रयत्नत।
अश्वगन्धा विदारी च काकोल्यौ हरिचन्दनम्॥
शतावरी चातिबला श्वदंष्ट्रा इक्षुतोदयम्।
क्रिमिघ्नं त्रिफला रास्ना माषमाषा च शारिवा॥

जीवन्ती ग्रन्थिकं क्षौमं बाकुची मेकपर्णिका।
विशाला ग्रन्थिपर्णञ्च मञ्जिष्ठा चन्दनं शिवा॥
शताह्वा सप्तपर्णी च कार्षिकान्युपकल्पयेत्।
पानाभ्यञ्जन नस्येषु वातरक्ते प्रयोजयेत्॥
वातरक्तमुदावर्त्तं कुष्ठान्यष्टादशैव तु।
हनुस्तम्भं प्रमेहञ्च कामलां पाण्डुतां जयेत्॥
विस्फोटञ्च विसर्पञ्च नाड़ीव्रणभगन्दरम्।
विचर्च्चिकां गात्रकण्डूं पाददाहं विशेषतः॥
एतत्तैलवरं श्रेष्ठं वलीपलितनाशनम्।
पात्रेयनिर्मितञ्चैव बलवर्णकरं स्मृतम्॥

## विषतिन्दुकतैलम्।

विषतरुफलमज्जप्रस्थयुग्मञ्च शिग्रु
स्वरस लकुचवारि प्रस्थमेकैकशश्च।
कनकवरुणचित्रापत्रनिर्गुण्डिकाद्रुक्
स्वरस तुरगगन्धा वैजन्ती रसश्च॥
पृथगिति परिकल्प्य प्रस्थयुग्मेन युग्मं
विषतरुफलमज्जा तुल्यतैलं विपक्वम्।
वचनसरलयष्टि कुष्ठ सिन्धुत्थयुग्मं
दहनतिमिरकृष्णा कल्कयुक्तं सुसिद्धम्॥
हरति सकलवातान् घोररूपा न साध्यान्।
प्रतिदिनमनुलेपात्सुप्तवातस्य जन्तोः॥
कुष्ठमष्टादशविधं द्विविधं वातशोणितम्।
वैवर्ण्यं त्वग्गतान् दोषानाशयत्याशु मर्दनात्॥

रुद्रतैलम् ।

पुनर्नवा निशानिम्बं वार्त्ताकु बृहतीद्वयम् ।
कण्टकारी करञ्जञ्च निर्गुण्डी वृषमूलकम् ॥
अपामार्गं पटोलञ्च धुस्तूरं दाड़िमीफलम् ।
जयन्ती मूलकं दन्ती प्रत्येकं कार्षिकद्वयम् ॥
त्रिफलायाः प्रदातव्यं द्विकर्षञ्च पृथक् पृथक् ।
दत्त्वाच्छिन्नरुहायाश्च द्वात्रिंशच्च पलानि च ॥
पाचयेद्भाजनं तोयञ्चतुर्भागावशेषितम् ।
कटुतैलस्य च प्रस्थं दुग्धञ्च तत्समं भवेत् ॥
वासकस्वरसप्रस्थं मन्दमन्देन वह्निना ।
गन्धं शटी च काकोली चन्दनं ग्रन्थिकं नखी ॥
पूतिक केशरं कुष्ठं हन्त्यरस्थिमज्जगं पुनः ।
हस्तपादाङ्गुली सन्धि गलितं स्फुटितं तथा ॥
कृष्णं श्वेतं तथा रक्तं नानावर्णं सदाहकम् ॥
पामां विचर्चिकां कण्डूं छायां त्वचञ्च कालिनीम् ।
मसूरिकां मण्डलञ्च ज्वलनञ्च विसर्पकम् ।
नाड़ीव्रणं मर्महीनं गात्रवैवर्ण्यं दद्रुकम् ॥
निहन्ति रक्तदोषञ्च भास्करस्तिमिरं यथा ॥

महारुद्रतैलम् ।

पुनर्नवा निशानिम्बं वार्त्ताकुं दाड़िमीफलम् ।
वृहत्यौ पूतिकामूलं वासकं सिन्धुवारकम् ॥
पटोलपत्रं धूस्तूरमपामार्गं जयन्तिका ।
दन्ती वरा पृथक् सर्वं कर्षद्वयमितं पुनः ॥

विषस्य द्विपलं देयं पृथक् क्षौमं पलत्रयम्।
प्रस्थञ्च सार्षपं तैलं प्रस्थाम्बु वृषपत्रजम्॥
गुडूच्यास्तु चतुःषष्टि पलक्वाथरसेन च।
वारिप्रस्थेन पक्तव्यं महारुद्रमिदं शुभम्॥
वातरक्तं निहन्त्याशु नानादोष समुद्भवम्।
अष्टादशविधं कुष्ठं हन्ति वर्णाभिवर्द्धनम्॥
क्रिमिं दुष्टव्रणञ्चैव दाहं कण्डूं निहन्ति च।
अस्विद्यनं महास्वेदमभ्यङ्गादेव नश्यति॥
वासारुद्रगुडूचीतैल मित्यस्य संज्ञान्तरम्।

## कैशोरगुग्गुलुः।

वरमहिषलोचनोदरसन्निभवर्णस्य गुग्गुलोः प्रस्थम्
प्रक्षिप्य तोयराशौ त्रिफलाञ्च यथोक्तपरिमाणाम्॥
द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नेन।
विपचेदप्रमत्तो दर्व्या सङ्घट्टयन् मुहुर्यावत्॥
अर्द्धक्षयितं तोयं जातं ज्वलनस्य सम्पर्कात्।
अवतार्य वस्त्रपूतं पुनरपि संसाधयेदयः पात्रे॥
सान्द्रीभूते तस्मिन्नवतार्य हिमोपलप्रख्ये।
त्रिफला चूर्णार्द्धपलं त्रिकटोश्चूर्णं षडक्षपरिमाणम्॥
क्रिमिरिपुचूर्णार्द्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः।
अमृतायाः पलमेकं सर्पिषश्च पलाष्टकं क्षिपेदमलम्॥
उपयुज्य चानुपानं यूषं क्षीरं सुगन्धिसलिलञ्च।
इच्छाहारविहारी भेषजमुपयुज्य सर्वकालमिदम्॥
तनुरोधि वातशोणितमेकजमथ द्वन्द्वजं चिरोत्थञ्च।

जयति स्नुतपरिशुष्कं स्फुटितञ्चाजानुजञ्चापि ॥
व्रणकासकुष्ठगुल्मश्वयथूदरपाण्डुमेहांश्च ।
मन्दाग्निञ्च विबन्धं प्रमेहपिडकाश्च नाशयत्याशु ॥
सततं निषेव्यमाणः कालवशाद्धन्ति सर्वगदान् ।
अभिभूय जरादोषं करोति कैशोरिकं रूपम् ॥
प्रत्येकं त्रिफलाप्रस्थो जलमत्र षडाढ़कम् ।
पाकायत्तं फलं पाके क्वाथे पाकप्रधानता ॥
तस्मात् क्वाथविधौ नित्यं यतितव्यं चिकित्सके ॥

## रसाभ्रगुग्गलुः ।

कर्षद्वयं पारदस्य लौहं गन्धञ्च तत्समम् ।
लौहगन्धसमञ्चाभ्रं गुग्गुलुं कुड़वद्वयम् ॥
अमृताया रसप्रस्थे रसप्रस्थे फलत्रिके ।
सान्द्रीभूते रसे तस्मिन् गर्भं दत्त्वा विचक्षणः ॥
त्रिकटु त्रिफला दन्ती गुड़ूची चेन्द्रवारुणी ।
विड़ङ्गं नागपुष्पञ्च त्रिवृता च सुचूर्णितम् ॥
प्रत्येकं कर्षमादाय सर्वमेकत्र कारयेत् ।
भक्षयेत् कोलमात्रन्तु छिन्नाक्वाथानुपानतः ॥
वातरक्तं महाघोरं स्फुटितं गलितं जयेत् ।
अष्टादशविधं कुष्ठं क्रिमिरोगाश्मरीं तथा ॥
भगन्दरं गुदभ्रंशं श्वेतकुष्ठं सकामलम् ।
अपचीं गण्डमालाञ्च पामाकण्डूविचर्च्चिकाः ॥
चर्म्मकीलं महादद्रु नाशयेन्नात्र संशयः ॥
वातरक्तविनाशाय धन्वन्तरिकृतः पुरा ।

रसाभ्रगुग्गुलुः ख्यातो वातरक्तेऽमृतोपमः ॥

## वातरक्तान्तकोरसः।

पारदं गन्धकं लौहं घनं तालं मनःशिला।
शिलाजतु पुरं शुल्वं समभागं विचूर्णयेत् ॥
विडङ्गत्रिफला व्योषमब्धिफेनं पुनर्नवा।
देवदारु चित्रकञ्च दार्व्वीं श्वेतापराजिता ॥
चूर्णमेषां पृथक् तुल्यं सर्वमेकत्र भावयेत्।
त्रिफला भृङ्गराजस्य रसेनैव त्रिधा त्रिधा ॥
सम्भाव्य भक्षयेत्पश्चान्माषमात्रं दिने दिने।
कृत्वानुपानं निम्बस्य पत्रं पुष्पं त्वचं समम् ॥
शाणमात्रं घृतैः कुर्य्यात्सर्ववातविकारनुत्।
वातरक्तं महाघोरं गम्भीरं सर्वजं जयेत् ॥
सर्वोपद्रव संयुक्तं साध्यासाध्यं निहन्त्ययम् ॥

## द्वादशायसः।

गरुत्मान् दरदस्तीक्ष्णं सर्वाख्यो वङ्गशुक्तिके।
शुल्वञ्च गगनं फेनं रुधिरञ्च त्रिनेत्रकम् ॥
पातालनृपतिश्चैव वह्निमूलं सरामठम्।
त्रिकटु त्रिफला शिग्रु अजमोदा यमानिका ॥
पिप्पलीमूलभार्गी च लशुनं जीरकद्वयम्।
आर्द्रकस्य रसेनैव वटिकां कारयेद्भिषक् ॥
वातरक्तं महाकुष्ठं गलिताङ्गं त्रिदोषजम्।
शोथं कण्डूञ्च रुधिरं सर्वमेतद्व्यपोहति ॥

मन्दानलामवातघ्नं श्वासघ्नं जलोदरम्।
प्राणाग्निकर्षणं जिह्वानां सर्वरोगं विनाशयेत्॥

छिन्नोद्भवा कषायेण सेव्यं शुद्धं शिलाजतु।
पञ्चकर्मविशुद्धेन वातरक्तप्रशान्तये॥

कुष्ठोक्तोऽप्यत्र दातव्यः श्रीमद्धातालकेश्वरः।
सर्वेश्वरश्च दातव्यस्तस्मिन् कुर्य्यादिमं विधिम्॥

रक्ताधिक्ये रक्तमोक्षः पादे बाहौ ललाटके।
कर्त्तव्यो रक्तरोगेषु कुष्ठिनाञ्च विशेषतः॥

बलिनो बहुदोषस्य वयःस्थस्य शरीरिणः।
परं प्रमाणमिच्छन्ति प्रस्थं शोणितमोक्षणे॥

तालेन निहतं ताम्रं रसगन्धकसंयुतम्।
बहुधा पुटितं तालं वातरक्ते महौषधम्॥

## गुडूच्यादिलौहम्।

गुडूचीसारसंयुक्तं त्रिकत्रयसमायुतम्।
वातरक्तं निहन्त्याशु सर्वरोगहरं ह्ययः॥

गुडूचीं कुट्टयित्वा प्रागस्थजले संमर्द्य अधःपतितसारो विशुष्को ग्राह्यः। त्रिकत्रयं त्रिफलात्रिकटुत्रिमदाः। सर्वसमं लौहम्।

## महारुद्रगुडूचीतैलम्।

अमृतायास्तुलां सम्यग् जलद्रोणे विपाचयेत्।
पिचुमर्दत्वचं तुलां भाजनप्रमितां तथा॥
जलद्रोणे विनिष्क्वाथ्य ग्राह्यं पादावशेषितम्।

प्रस्थञ्च कटुतैलस्य गोमूत्रञ्चापि तत्समम् ॥
अमृता वागुजी कुष्ठी करवीरफलत्रिकम् ।
दाड़िम निम्बबीजञ्च रजन्यौ हस्तीदयम् ॥
नागवला त्रिकटुकं पत्रं मांसी पुनर्नवा ।
ग्रन्थिकं त्रिकसाह्वाह्वा शतपुष्पा च चन्दनम्
शारिवे द्वे सप्तपर्णी गोमयस्य रसस्तथा ।
एषां कर्षमितैर्भागैः साधयेन्मृदुनाग्निना ॥
वातरक्तं निहन्त्याशु सर्वोपद्रवसंयुतम् ।
कुष्ठञ्चाष्टादशविधं विसर्पञ्च व्रणामयम् ॥
महारुद्रगुडूच्याख्यं तैलं भुवनदुर्लभम् ॥
दिवास्वप्नाग्निसन्तापं व्यायामं मैथुनं तथा
कटूष्णगुर्वभिष्यन्दि लवणाम्लानि वर्जयेत् ॥

इति भैषज्यरत्नावल्यां वातरक्ताधिकारः सम



## अथ कुष्ठाधिकारः ।

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं श्रेष्ठम् ॥
पुराणधान्यानि च जाङ्गलानि
मांसानि मुद्गश्च पटोलयुक्ताः ।

यवादयश्चाथ हिताः पुराणा
घृतानि शाकानि च तिक्तकानि ॥
तन्त्रान्तरे । पुराणाः शालिगोधूममुद्गाद्याः
कुष्ठिनो हिताः ।
तिक्तशाकं जाङ्गलञ्च पानादौ खदिरोदकम् ॥
ये लेपाः कुष्ठानां युज्यन्ते निर्गतास्रदोषाणाम् ।
संशोधिताशयानां सद्यः सिद्धिर्भवेत्तेषाम् ॥
दूर्वाभया सैन्धवचक्रमर्द
कुठेरकाःकाञ्जिक तक्रपिष्टाः ।
एभिः प्रलेपैरपि वद्धमूलां
कण्डूञ्च दद्रुञ्च निवारयन्ति ॥
तुल्यो रसःशालतरो स्नुह्याः
सचक्रमर्दोऽप्यभया विमिश्रः ।
पानीय भक्तेन तदम्लपिष्टो
लेपःकृतो दद्रुगजेन्द्रसिंहः ॥
विडङ्गैडगजाकुष्ठनिशा सिन्धुत्थ सर्षपैः ।
धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठविनाशनः ॥
एडगज कुष्ठसैन्धव सौवीर सर्षपैः क्रिमिघ्नैः ।
क्रिमिसिध्म दद्रुमण्डल कुष्ठानां नाशनो लेपः ॥
तन्त्रान्तरेऽपि । कुष्ठ सैन्धव सिद्धार्थ क्रिमिघ्नैड-
गजैः समैः । दद्रुमण्डल कुष्ठघ्नं लेपनं काञ्जिकान्वितम् ॥
इति रविगुप्तः ।
पर्णानि पिष्ट्वा चतुरङ्गुलस्य
तक्रेण पर्णान्यथ काकमाच्याः ।

तैलान्न गात्रस्य नरस्य कुष्ठा-
न्युद्धर्त्तयेद्दुष्टदलच्छदैश्च ॥
विड़ङ्ग सैन्धव शिवा मनःशिला सर्षप करञ्जरजनीभिश्च ।
गोजल पिष्टोलेपः कुष्ठहरो दिवसनाथ समः ॥
कासमर्दकमूलञ्च काञ्जिकेन प्रपेषितम् ।
दद्रुकिटिमकुष्ठानि जयेदेतत्प्रलेपनात् ॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत् ।
दद्रुकिटिम कुष्ठानि हन्ति सिध्मान मेव च ॥
चक्राह्वयं दधिक्षीर भावितं मूत्र संयुतम् ।
रवितप्तं हि किञ्चित्तु लेपनं किटिमापहम् ॥
शिखरी रसेन सुपिष्टं मूलकवीजं प्रलेपितं सिध्मम् ।
क्षारेण वा कदल्या रजनी मिश्रेण नाशयति ॥
सक्षारं गन्धकं लेपात्कटु तैलेन सिध्मजित् ।
कासमर्दक वीजानि मूलकानां तथैव च ॥
गन्धाश्मचूर्ण मिश्राणि सिध्मानां परमौषधम् ॥
उपदेशात्काञ्जिक पिष्टैर्लेपः ।
गन्धपाषाण चूर्णेन यवक्षारेण लेपितम् ।
सिध्म नाशं व्रजत्याशु कटु तैल युतेन च ।
द्वयं समं कटु तैलेन लेपः ।
कुष्ठं मूलकवीजं प्रियङ्गवः सर्षपा स्तथा रजनी ।
एतत्केशरषष्ठं निहन्ति बहुवार्षिकं सिध्म ॥
नीलकुरण्टक पत्रै रालिप्य गात्रमति बहुशः ।
लिम्पेन्मूलकवीजैः पिष्टै स्तक्रेण सिध्मनाशाय ॥
एड़गजा तिल सर्षप कुष्ठं मागधिका लवणत्रयमस्तु ।

पूतीकृतं दिवसत्रयमेतदन्ति विचर्चिकादद्रुकुष्ठम् ॥
सिन्दूर मरिच चूर्णं महिषी नवनीत संयुतं बहुशः।
लेपाद्विहन्ति पामां तैलं करवीरसिद्धं वा ॥
पारदं शङ्ख गन्धश्च शिला चोत्तरवारुणी।
प्रपुन्नाडश्च सर्षपो मेघनादाग्नि लाङ्गली ॥
भल्लातं गृहधूमश्च तुम्बि गुञ्जा स्नुही पयः।
अरिष्टश्च गुडूच्यौद्रं वागुजीवीज तुल्यकम् ॥
गोमूत्रैरारनालैर्वा पिष्ट्वा लेपञ्च कारयेत्।
दद्रुमण्डल कण्डूश्च विचर्चीञ्च विनाशयेत् ॥
मनःशिलाले मरिचञ्च तैल-
मार्कं पयः कुष्ठहरः प्रलेपः ॥
विष वरुण हरिद्रा चित्रकागारधूम-
मनल मरिचदुर्वा चीरमर्क स्नुहीभ्याम्।
दहति पतित मांसं कुष्ठजातौ स्वशेषाः
कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम् ॥
अत्र अनलं भल्लातकः।
भल्लातक द्वीपि सुधार्कं मूलं
गुञ्जाफल त्र्यूषक शङ्ख चूर्णम्।
तुल्यं सकुष्ठं लवणानि पञ्च
चारद्वयं लाङ्गलिकाञ्च पक्वा ॥
स्नुह्यर्कं दुग्धे घनमायसस्थं
शलाकया तद्विदधीत लेपम्।
कुष्ठे किलासे तिलकालके च
अशेषदुर्नामसु चर्मकीले।

एषां समभाग चूर्णं कुष्माण्डयोः क्षीरे दत्त्वा किञ्चित्पाकं कुर्य्यात् । अथवा क्षीरद्वयं चतुर्गुणचूर्णं पादिकं लेपयोग्यं पाकं कुर्य्यात् शलाकया कुष्ठस्थाने दद्यात् ।

स्नुक्काण्ड शुषिरे दग्ध्वा गृहधूमं ससैन्धवम् ।
अन्तर्धूमं तैलयुक्तं लेपाद्धन्ति विचर्चिकाम् ॥

स्नुहीनलकि सैन्धवं गृहधूमञ्च समभागं प्रपूर्य्यस्याभ्यन्तरे कृत्वा शरावेण पिधाय दग्ध्वा पिष्ट्वा कटुतैलेन लेपः ।

स्नुक्काण्डे सर्षपात्कल्कः करीषानलपाचितः ।
लेपाद्विचर्चिकां हन्ति रागवेग इव त्रपाम् ॥

नारिकेलोदरेभ्यस्तु तण्डुलः पूतितां गतः ।
लेपाद्विपादिकां हन्ति चिरकालानुबन्धिनीम् ॥

तिल कुसुम लवण मोजल कटु तैलं लौह भाजने कृत्वा ।
शोषित मर्कमयुखैः पादस्फुटनं निहन्ति लेपेन ॥

## उन्मत्ततैलम् ।

उन्मत्तकस्य बीजेन माणकक्षार वारिणा ।
कटुतैलं विपक्तव्यं शीघ्रं हन्ति विपादिकाम् ॥

अब्जलाजं कासमर्दं चक्रमर्दं निशायुगम् ।
माणिमन्थञ्च तुल्यांश मस्तु काञ्जिक पेषितम् ॥
कण्डूं कच्छूं जयत्युग्रां सिद्ध एष प्रयोगराट् ॥

कोमल सिंहास्यदलं सनिशं सुरभीजलेन पिष्टम् ।
दिनत्रयेण नियतं क्षपयति कच्छूं विलेपनतः ॥

वागस्य ङणजा कुष्ठ कृष्णाभिशुद्धिका कृता ।

वस्तमूत्रेण सम्पिष्टा लेपाच्छ्वित्र विनाशिनी ॥

पूतीकार्कस्नुङ्नरेन्द्र द्रुमाणां
मूत्रैः पिष्टाः पल्लवाः सौमनाश्च।
लेपाच्छ्वित्रं हन्ति दद्रु व्रणांश्च
कुष्ठान्यर्शांस्यस्त्रनाडी व्रणांश्च॥

गज चित्रव्याघ्रचर्ममसीतैल विलेपनात्।
श्वित्रं नाशं व्रजेत् किम्बा पूतिकीट विलेपनात्॥
कुड़वोऽवल्गुज बीजात् हरिताल चतुर्थ भाग संमिश्रः।
मूत्रेण गवां पिष्टः सवर्णकरणः परं श्वित्रे॥
आयुर्वेदसारेऽपि। कुड़वो वागुजी बीजात् हरिताल
पलान्वितः।

गवां मूत्रेण संपिष्य लेपनात् श्वित्रनाशनम्॥
धात्री खदिरयोः क्वाथं पीत्वा च मधु संयुतम्।
शङ्ख कुन्देन्दुधवलं जयेच्छ्वित्रं नसंशयः॥
धात्री खदिरयोः क्वाथमवल्गुजरजोऽन्वितम्।
पीत्वा शङ्खेन्दुकुन्दाभं हन्ति श्वित्रं नसंशयः॥

क्षारे सुदग्धे गजलण्डजे च
गजस्य मूत्रेण बहुस्रुते च।
द्रोण प्रमाणं दशभाग युक्तं
दत्त्वा पचेद्बीजमवल्गुजस्य॥
एतद्यदा चिक्कणतामुपैति
तदा सुसिद्धां गुड़िकां प्रकुर्य्यात्।
श्वित्रं प्रलिम्पेद्दश तेनघृष्टं
तदा व्रजत्याशु सवर्ण भावम्॥

हस्तिपुरीषभस्मनो भस्मपञ्चाशत्पलाधिकपलशतद्वयं ग्राह्यं या .ऽऽदकात् दशमांशेन किञ्चिन्न्यूनत्रयोदशमाषाधिक पञ्चाशत्पलानि।

श्वेतजयन्तीमूलं पीतं पिष्टञ्च पयसैव।
श्वित्रं निहन्तिनियतं रविवारे वैद्यनाथाज्ञा॥

गुञ्जाफलाग्नि चूर्णन्तु लेपितं श्वेतकुष्ठनुत्।
शिलापामार्गं भस्मापि प्रलिप्तः श्वित्रं विनाशयेत्॥

## श्वित्रपञ्चानन तैलम्।

एरण्ड तुलसी वीजंवागुजी चक्रमर्दकम्।
तिक्तकोषातकी वीजं क्षुष्टाङ्कोठस्य वीजकम्॥
गोमूत्र दधिदुग्धैश्च पचेदाज्यं मूत्रकैः।
कल्कं दत्त्वाशिला काशी पथ्या कुष्ठं विडङ्गकम्॥
कटु तैलञ्च तल्लेपाद्दोषन्न घृष्ट्वा विलेपनैः।
पञ्चानन मिदं तैलं श्वेत कुष्ठ कुलापहम्॥

## आरग्वधाद्यं तैलम्

आरग्वधं धवं कुष्ठं हरितालं मनःशिला।
रजनीद्वय संयुक्तं पचेत्तैलं विधानवित्॥
एतेनाभ्यञ्जनादेव क्षिप्रं श्वित्रं विनश्यति॥

## श्वेतारिः।

शुद्धसूतं समं गन्धं त्रिफलां भृङ्गवागुजीम्।
भल्लातकं तिलं कृष्णं निम्बवीजं समं समम्।
मर्दयेद् भृङ्गजद्रावैः शोष्यं पेष्यं पुनः पुनः।

घृतं कुर्य्यात् विषमार्ह रसः श्वेतारिकी भवेत् ॥
भल्लातकं मांसमावस्तु खादेत् श्वेतं विनाशयेत् ॥

पिबति सकटुतैलं गन्धपाषाण चूर्णं
रविकिरण सुतप्तं पामनो यः प्रभाते म् ।
त्रिदिन तदनुसिक्तः चीरभोजी च शीघ्रं
भवति कनकक्षीर्त्तिः कामरूपी मनुष्यः ॥

तीव्रेण कुष्ठेन परीत देहो
यः सोमराजीं नियमेन खादेत् ।
संवत्सरं क्लष्णतिल द्वितीयां
स सोमराजीं वपुषातिशेते ॥

घर्म्मसेवी कदुष्णेन वारिणा वागुजीं पिबेत् ।
चीरभोजी च सप्ताहात् कुष्ठी कुष्ठं व्यपोहति ॥
अवल्गुज बीजकर्षं पीत्वा कोष्णेन वारिणा ।
भोजनं सर्पिषा कार्य्यं सर्व्वं कुष्ठ विनाशनम् ॥

सहस्रशो दृष्टफलोऽयं योगः ।

छिन्नायाः स्वरसो वापि सेव्यमानो यथाबलम् ।
जीर्णेघृतेन भुञ्जीत मुद्गयूषोदनेन च ॥
अपि पूतिशरीरोऽपि दिव्यरूपी भवेन्नरः ।
यः खादेदभयारिष्ट मरिष्टामलकानि वा ॥
स जयेत्सर्व्वकुष्ठानि मासादूर्द्धं न संशयः ॥

पञ्चनिम्बम् ।

निम्बस्य पत्रं मूलानि सत्वकपुष्प फलानि च ।
चूर्णितानि घृतचौद्र संयुतानि दिने दिने ॥

लिह्यात्पिबेद्वा मूत्रेण संयुक्तागुरुद्रवेण वा ।
मदिरामलतोयेन पयसा वा यथाबलम् ।
भुञ्जीत घृतयूषाद्यैः शाल्यन्नं पयसापि वा ।
सर्वकुष्ठविसर्पार्शोनाडीदुष्टव्रणानपि ॥
कामलाञ्च मदान्ध्यां तथा पित्तकफास्रजान् ।
संवत्सर प्रयोगेण सर्वव्याधिविवर्जितः ॥
जयत्येतत्पञ्चनिम्बं रसायनमनुत्तमम् ॥

पञ्चनिम्बम् ।

पुष्पकाले च पुष्पाणि फलकाले फलानि च ।
संचूर्ण्य पिचुमर्दस्य त्वङ्मूलानि दलानि च ।
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत् ।
त्रिफला त्र्यूषणं ब्राह्मी श्वदंष्ट्रारुष्कराग्निकाः ॥
विडङ्गसारवाराही लौहचूर्णामृताः समाः ।
हरिद्राद्वयावल्गुज व्याधिघाताः सशर्कराः ॥
कुष्ठेन्द्रयव पाठाश्च कृत्वा चूर्णं सुसंयुतम् ।
खदिरासन निम्बानां घनक्वाथेन भावयेत् ॥
सप्तधा पञ्चनिम्बञ्च मार्कवस्वरसेन च ।
स्निग्ध शुद्ध तनुर्धीमान् योजयेच्च शुभे दिने ॥
मधुना तिक्तहविषा खदिरासन वारिणा ।
सेव्य मुष्णाम्बुना वापि कोल वृद्ध्या पलं पिबेत् ॥
जीर्णे च भोजनं कार्यं स्निग्धं लघु हितञ्चयत् ॥
विचर्चिकौडुम्बर पुण्डरीक-
कपाल दद्रूकिटिमालसादि ।

शतारुविस्फोट विसर्पपामां
कुष्ठ प्रकोपं विविधं किलासम्॥
भगन्दरं श्लीपद वातरक्तं
जड़ाख्यनाड़ीव्रण शीर्षरोगान्।
सर्वान् प्रमेहान् प्रदरांश्च सर्वान्
दंष्ट्राविषं मूलविषं निहन्ति॥
स्थूलोदरः सिंह समोदरश्च
सुश्लिष्टसन्धिर्मधुनोपयोगात्।
समोपयोगादपि ये दशन्ति
सर्पादयो यान्ति विनाशमाशु।
जीवेच्चिरं व्याधि जराविमुक्तः
शुभे रतश्चन्द्रसमान कान्तिः॥

निम्बस्य पुष्पफलमूलदलत्वचां प्रत्येकं भागद्वयं त्रिफलादेः प्रत्येकमेको भागः। अग्निचित्रकं, वाराही वाराहीकन्दः तदभावे चर्मकारालुकं लौहचूर्णं शोधित पुटितसुजीर्णं लौहचूर्णम्। क्वाथनीय द्रव्यं गृहीत्वा अष्टभागावशिष्टः क्वाथो ग्राह्यः तेन निम्बादि चूर्णस्य भावनासप्तधा एवं भृङ्गराज रसेन सप्तधा भावना। स्निग्धशुद्धतनुत्वं स्नेहक्रिया वमन विरेचनादि।

## अमृतागुग्गुलुः।

अमृतायाः पलशतं दशमूल्या स्तथा शतम्।
पाठा मूर्वा बलातिक्ता दार्वी गन्धर्वहस्तकाः॥
एषां दशपलान् भागान् बिभीतक्याः शतं हरेत्।

द्वे प्रस्थे च हरीतक्या आमलक्यास्तथा शतम्।
जलद्रोणवधे पक्त्वा अष्टभागावशेषितम्।
प्रस्थं गुग्गुलु माहृत्य प्रस्थार्द्धञ्च घृतं पचेत्॥
पाकसिद्धौ प्रदातव्यं गुडूच्याः सत्वमेव च।
पलद्वयं तथा शुण्ठ्याःपिप्पल्याच पलद्वयम्॥
ततो मात्रां प्रयुञ्जीत ज्ञात्वा दोष बलाबलम्।
अष्टादशसु कुष्ठेषु वातरक्त गदेषु च॥
कासश्वासामवातञ्च अग्निमान्द्यं भगन्दरम्।
पीनसञ्च प्रतिश्यायं शोथञ्च जठरं तथा॥
एतान् रोगान् निहन्त्याशु भास्करस्तिमिरं यथा॥

अथ वातरक्ते प्रशस्तः।

पञ्चतिक्तघृतगुग्गुलुः।

निम्बामृता वृष पटोल निदिग्धिकानां
भागान् पृथक् दशपलान् विपचेद्घटेऽपाम्।
अष्टांशशेषित रसेन सुनिश्चितेन
प्रस्थं घृतस्य विपचेत्पिचुभाग कल्कैः॥
पाठा विडङ्ग सुरदारु गजोपकुल्या
द्विक्षार नागर निशा मिशिचव्य कुष्ठैः।
तेजोवती मरिच वत्सक दीप्यकाग्नि
रोहिण्यरुष्कर वचा कणमूल युक्तैः॥
मञ्जिष्ठयातिविषया वरया यमान्या
संशुद्ध गुग्गुलु पलैरपि पञ्चसंख्यैः।
तत्सेवितं विधमति प्रबलं समीरं
सन्ध्यस्थि मज्जगत मप्यथ कुष्ठ मीदृक्॥

नाड़ीव्रणार्बुद भगन्दर गण्डमाला
जत्रूर्द्ध सर्वगद गुल्म गुदोत्थ मेहान्।
यक्ष्मारुचिश्वसन पीनस कास शोथ-
हृत्पाण्डुरोग गल विद्रधि वातरक्तम्॥

क्वाथारम्भसमये गुग्गुलुं सप्तपोट्टलिकायां बद्ध्वा दोला यन्त्रेण स्विन्नं कृत्वा तस्मिन् क्वाथ जलेनक्षालयित्वा घृते निक्षिप्य पचेत्। दोष्यकं जीरा इति प्राचीनाः।

## करवीरतैलम्।

श्वेत करवीरमूलं विषांशकं साधितं गोमूत्रे।
चर्मदल सिध्म पामा विस्फोट क्रिमिकिटिमजित्तैलम्॥

मृतस्य कृष्णसर्पस्य शिरःपुच्छान्त वर्जितम्।
अन्तर्धूम कृतं भस्मवागुजीतैल मिश्रितम्॥
एतेन मर्दनादेव गलत्कुष्ठं विनश्यति॥

## कुष्ठराक्षसतैलम्।

सूतकं गन्धकं कुष्ठं सप्तपर्णञ्च चित्रकम्।
सिन्दूरञ्च रसोनञ्च हरितालं मनःशिलाम्॥
आरग्वधस्य बीजानि जीर्णतास्त्रं समं शिला।
प्रत्येकं कर्षमेतेषां कटुतैलं पलाष्टकम्॥
साधयेत् सूर्य्यतापेन सर्वकुष्ठ विनाशनम्।
श्लिप्तमौड़ुम्बरं कच्छूं मांसवृद्धिं भगन्दरम्॥
विचर्चिकाञ्च पामाञ्च वातरक्तं कुष्ठराक्षसम्।

गम्भीरञ्च तथोत्तानं नाशयेदस्य प्रयोगात्।
कुष्ठराक्षस नामेदं सावर्ण्यं करं परम्।
अश्विभ्यां निर्मितं ह्येतल्लोकानुग्रहहेतवे॥

कुष्ठकालानलतैलम्।

सूतं गन्धं शिला तालं काञ्जिकैर्मर्दयेद्दिनम्।
तल्लिप्त वस्त्रवर्त्तीं तां तैलाक्तां ज्वालयेदधः।
स्थिते पात्रे पतेत्तैलं गृहीत्वा लेपयेत्ततः।
कुष्ठस्थानं विशेषेण सर्वकुष्ठं हरत्यलम्॥
इदं कालानलं तैलं वातकुष्ठे महौषधम्॥

एषां समं काञ्जिकं सर्वेषां द्विगुणं तिलतैलम्। कल्कं वस्त्रे संलिप्य संशोष्य वर्त्तिं कुर्य्यात् तां तैलाक्तां संदंशिकाया ज्वालयित्वा उपरि तैलं दत्त्वा पतितं तैल मधःपात्रे गृह्णीयात्। कुष्ठस्थाने दद्यात्सिद्धफलः प्रयोगः।

षड्बिन्दुतैलम्।

सिन्दूरामृत तालगैरिक हलाजाजी गदत्रूषण-
कृत्यापाण रसोन वाण दहन स्नुह्यर्क दुग्धैर्निशा।
राजी गन्धक हिङ्गुभिः परिमितैः शुक्तया पचेत्सार्षपं
तैलं प्रस्थमितं घृतस्य कुडवं पात्रं तथार्कार्द्रसम्॥
गोमूत्रञ्च तथा विनीय सकलं पूतंस्रुतं रोगिणे
दद्यात्कुष्ठ विचर्च्चिकादिषु भिषङ् नाम्ना तु षड्बिन्दुकम्॥
सर्वकुष्ठे सर्वव्रणे सर्वगलितमप्यतै।

त्रिशतैलम्।

नतामांसी हरिद्रे द्वे अर्कं तगरमेव च।

करवीर वचा कुष्ठं आस्फोता रक्तचन्दनम्॥
मालती सिन्धुवारश्च मञ्जिष्ठा सप्तपर्णकम्।
एषामर्द्ध पलान् भागान् विषस्य द्विपलं तथा॥
चतुर्गुणे गवांमूत्रे तैलप्रस्थं विपाचयेत्।
श्वित्र विस्फोट किटिभ कीटलूता विचर्चिका:॥
कण्डू कच्छु रिकायाश्च ये व्रणा विषदूषिता:।
ते सर्वनाशं मायान्ति तमः सूर्य्योदये यथा॥
विषतैल मिदं नाम्ना सर्वव्रण विशोधनम्॥

## सोमराजीतैलम्।

सोमराजीं हरिद्रे द्वे सर्षपा: कुष्ठमेव च।
करञ्जैड़गजावीजं पत्राण्यारग्वधस्य च॥
विपचेत्सार्षपं तैलं नाड़ीदुष्टव्रणापहम्।
अनेनाशु प्रशाम्यन्ति कुष्ठान्यष्टादशैव तु॥
नीलिका पिड़का व्यङ्गा गम्भीरं वातशोणितम्।
कण्डु कच्छु प्रशमनं दद्रु पामा निवारणम्॥

## वृहत्सोमराजीतैलम्।

सोमराजी तुला क्वाथे तथा दद्रु घ्नस्य च।
गोमूत्रस्य तथा पात्रे कल्कं दत्त्वा विचक्षण:॥
विपचेत्कार्षिकैर्भागै: प्रस्थं तैलन्तु सार्षपम्।
चित्रकं लाङ्गलाख्या च नागरं कुष्ठमेव च॥
हरिद्रा नक्तमालञ्च हरितालं मन:शिला।
आस्फोतार्कं करवीरं सप्तपर्णञ्च गोमयम्॥

खदिरो निम्बपत्रञ्च मरिचं कासमर्दकम्।
एतानि श्लक्ष्णपिष्टानि कल्कं कृत्वा विचक्षणः॥
हन्ति सर्वाणि कुष्ठानि क्रिमि दुष्टव्रणानि च।
किटिमं दद्रु जातञ्च गात्रवैवर्ण्य मेव च॥
विशीर्णं चर्म्ममांसादि दृढ़ीकरणमुत्तमम्।
पाण्डुरोगं तथा कण्डूं विसर्पं हन्ति दारुणम्
ये चान्ये त्वग्गता रोगा स्तांस्तुशीघ्रं व्यपोहति॥

### मरिचाद्यं तैलम्।

मरिचाल शिलाब्दार्कं पयोऽश्वारि जटा त्रिवृत्
शकृद्रस विशालाख्य निशायुग्मदारुचन्दनैः॥
कटुतैलात्पचेत्प्रस्थं द्रव्यैर्विपलान्वितैः।
सगोमूत्रै स्तदभ्यङ्गात् दद्रु श्वित्र विनाशनम्॥
सर्व्वेष्वपि च कुष्ठेषु तैल मेतत्प्रशस्यते॥

### वृहन्मरिचाद्यं तैलम्।

मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम्॥
विशाला करवीरञ्च हरितालं मनःशिला।
चित्रको लाङ्गलाख्या च विड़ङ्गं चक्रमर्द्दकम्॥
शिरीषं कुटजो निम्बः सप्तपर्णः स्नुहामृता।
शम्पाको नक्तमालोऽब्दं खदिरं पिप्पली वचा॥
ज्योतीष्मती च पलिका विषस्य द्विपलं भवेत्।
आढ़कं कटुतैलस्य गोमूत्रञ्च चतुर्गुणम्॥
कृत्वाथ लौह पात्रे वा शनैर्मृद्वग्निना पचेत्।

पक्वा तैल वरं ह्येतन्नाशयेत् कुष्ठकान् व्रणान् ॥
पामा विचर्चिका दद्रु कण्डू विस्फोटकानि च।
वलयः पलितं छाया नीलीव्यङ्गं तथैव च ॥
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यञ्च जायते।
प्रथमे वयसि स्त्रीणां यासां नस्यन्तु दीयते ॥
परामपि जरां प्राप्य न स्तना यान्ति नम्रताम्।
बलीवर्द्दखुरक्षुण्णो वा गजोऽश्वा वायुपीड़ितः ॥
एभिरभ्यञ्जने गाढ़ं भवेन्मारुत विक्रमः ॥

## कान्दर्पसारतैलम्।

सप्तपर्णं करञ्जञ्च ब्राह्मी गुड़ूची पिचुमर्द्दकम्।
शिरीषञ्च महातिक्ता जया तुम्बी म्लानदनी ॥
निशा दशपलान् भागान् जलद्रोणे विपाचयेत्।
तैलप्रस्थं समादाय गोमूत्रञ्च चतुर्गुणम् ॥
आरग्वधो भृङ्गराजो जया धुस्तूरराजयः।
ऐन्द्राग्नमांनि खर्जूरं गोमयार्कं स्नुहीच्छदम् ॥
तैलतुल्यं प्रदातव्यं स्वरसञ्च पृथक् पृथक्।
महाकाल वचा ब्राह्मी तुम्बरानि गदपुत्रिका ॥
कुचेला कुलका दार्व्विर्मेघनामा च ग्रन्थिका।
शम्पाक मर्कवीरञ्च कासुन्देश्वरमूलकम्।
आखुजिह्वी महातिक्ता विशाला च्छविपत्रकम् ॥
पूतिकास्फोत मूर्वा च सप्तपर्णं शिरीषकम् ॥
कुटजं पिचुमर्द्दञ्च महानिम्बं तथैव च।
गुड़ूची चक्ररेखा च सोमराट् चक्रमर्द्दकम्।

तुम्बुरु भङ्ग षष्ठ्याह्व कुन्दुरु कटुरोहिणी ।
शटी दार्वी विड़ङ्गञ्च ग्रन्थिकागुरुपुष्करम् ॥
कर्पूरं कट्फलं मांसी सुरेलाटरूषाभयम् ।
एतेषां कार्षिकैः कल्कैर्नाम्ना कम्पर्य उच्यते ॥
अष्टादश विधं कुष्ठं ग्रन्थि मज्जगतं तथा ।
हस्त पादाङ्गुली सन्धि गलितं सर्वसन्धिषु ॥
अधिकानि च मांसानि यस्य गात्रे भविष्यति
नासाकर्णास्य वैकल्यं मेकाकार वपुस्तथम् ॥
श्वेतं रक्तं तथा कुष्ठं नानावर्णं विपादिकम् ।
पामादिस्फोटका नीलो क्रिमिहर्षं तथैव च ॥
कीटदद्रु मसूरी च किटिभं रक्तमण्डलम्
कुष्ठ मौड़ुम्बरं पद्मं महापद्मं तथैव च ।
गलगण्डार्बुदं हन्याद्गण्डमालां भगन्दरम् ।
वातजं पित्तजञ्चैव श्लेष्मजं सान्निपातिकम् ॥
एकोल्वणं द्व्युल्वणञ्च कुष्ठं हन्यान्न संशयः ॥

अमृतभल्लातकम् ।

भल्लातकानां पवनोद्धतानां
वृन्तच्युतानाञ्च यदाढ़कं स्यात् ।
तच्चेष्टका चूर्णकणैर्विघृष्य
प्रक्षालयित्वा विसृजेत्प्रवाते ॥
शुष्कं पुनस्तद्विदलीकृतञ्च
ततः पचेदप्सु चतुर्गुणासु ।
तत्पादशेषं परिपूतशीतं
चौरैपतुल्येन पुनः पचेत् ॥

तत्पादशेषं पुनरेव शीतं
घृतेन तुल्येन पुनः पचेत्तु ।
ततश्च या शर्करया विकीर्णं
ततः खजीनोन्मथितं विधाय ॥
तत्समरात्तादुपजातं वीर्य्यं
सुधारसादप्यधिकत्वमेति ।
प्रातर्विबुद्धः कृतदेवकार्य्यो
मात्राञ्च खादेत् स्वशरीर योग्याम् ॥
न चान्नपाने परिहार्य्यमस्ति
न चातपे चाध्वनि मैथुने च ।
यथेष्ट चेष्टो विहितोपयोगाद्
भवेन्नरः काञ्चनराशि गौरः ॥
अनन्य मेधा नरसिंह तेजा
हृष्टेन्द्रियोऽव्याहत बुद्धिसत्त्वः ।
दन्ताश्च शीर्णाः पुनरुद्भवन्ति
केशाश्च शुक्लाः पुनरेव दिव्याः ॥
नीलाञ्जनालि प्रतिमा भवन्ति
त्वचो विवर्णाः पुनरेव दिव्याः ।
विशीर्ण कर्णाङ्गुलि नासिकोऽपि
क्रिम्यर्दितो भिन्नगलोऽपि कुष्ठी ॥
सोऽपि क्रमादङ्कुरिताग्रशाख-
स्तरुर्यथा भाति नभोऽम्बुसिक्तः ।
उष्ट्रान् मयूरान् जयति स्वरेण
बलेन नागस्तुरगी जवेन ॥

रसायनस्यास्य नरः प्रसादाद्
बृहस्पतेरप्यधिकोऽपि बुद्ध्या।
धन्यान् विशालान् प्रभवन्ति दोषान्
गृह्णाति शीघ्रं न च नश्यते तु।
कुर्वन्निमं कल्पमनल्पबुद्धि-
र्जीवेन्नरो वर्षशतानि पञ्च।
राजाश्रयं सर्वरसायनानां
चकार योगं भगवानगस्त्यः॥

महाभल्लातकगुडः।

निम्बं गोपारुणा कट्वी त्रायन्ती त्रिफला घनम्।
पर्पटावलाजानन्ता वचा खदिर चन्दनम्।
पाठा शुण्ठी शटी भार्गी वासा भूनिम्ब वल्कलम्।
श्यामेन्द्रवारुणी मूर्वा विड़ङ्गेन्द्र विषानलम्॥
हस्तिकर्णामृताद्रेका पटोलं रजनीद्वयम्।
कर्णारग्वध सप्ताह्व कर्णवेत्रोत्कटाफलम्॥
भूकन्दं त्वपपर्णश्च जिङ्गी पद्माट मूषली।
विष्वक्सेना च कैटर्य्यं शरपुङ्खाथ कञ्चुकी॥
एषां द्विपलिकान् भागान् जलद्रोणे विपाचयेत्।
अष्टभागावशिष्टन्तु कषाय मवतारयेत्॥
भल्लातक सहस्राणि त्रीणिच्छित्वाम्भसोऽम्बसि।
चतुर्भागावशेषन्तु कषाय मवतारयेत्॥
तौ कषायौ समादाय वस्त्रपूतौ च कारयेत्।
गुड़स्य तु तुल्यां ताभ्यां कषायाभ्यां पचद्भिषक्॥

भल्लातक सहस्राणां मज्जानं तत्र दापयेत्।
त्रिकटु त्रिफला मुस्त सैन्धवानां पलं पलम्॥
दीप्यकस्य पलञ्चैक चातुर्जातं पलाग्निकम्।
सर्व्वमेव प्रक्षिपेद्‌ गन्धकस्य चतुःपलम्॥
स्निग्धभाण्डे विनिक्षिप्य स्थापयेत्तु ग्रहो भिषक्।
महाभल्लातकोह्येष महादेवेन निर्म्मितः॥
जगतस्तु हितार्थाय जयेत्त्वौत्र निषेवितः।
श्वित्र मौडुम्बरं दद्रु मृष्यजिह्वं सकाकणम्॥
पुण्डरीकञ्च चर्म्माख्यं विस्फोटं मण्डलं तथा।
कण्डू कपाल कण्डूञ्च पामाञ्च सविपादिकाम्॥
वातरक्त मूदावर्त्तं पाण्डुरोगं व्रण क्रिमीन्।
अर्शांसि षट्‌प्रकाराणि कासंश्वासं भगन्दरम्॥
तदभ्यासेन पलित मामवातं सुदुस्तरम्।
अनुपाने प्रयोक्तव्यं क्षिप्ता क्वाथं पयोऽथवा॥
भोजने च तथा योज्य मुष्णञ्चान्नं विशेषतः॥

## अमृताङ्कुरलौहम्।

हुताशमुख संशुद्धं पलमेकं रसस्य वै।
पलं लौहस्य ताम्रस्य पल भल्लातकस्य च॥
गन्धकस्य पलञ्चैक मभ्रकस्य च गुग्गुलोः।
हरीतकी विभीतक्योश्चूर्णं कर्षद्वयं द्वयोः॥
अष्टमाषाधिकं तत्र धात्र्याः पाणितलानि षट्।
घृतं द्वग्रष्टगुणं लौहात् दाडिमात् त्रिफला जलम्।
एवं कृत्वा पचेत्पात्रे लौहे च विधिपूर्वकम्।

पाकं मेतस्य जानीयात् कुशलो लौहपाकवत् ॥
विधुः प्रातरुत्थाय गुरुदेवद्विजार्चकः ।
रक्तिकाद्वि क्रमेणैव घृत भ्रामर मर्द्दितम् ॥
लौहे लौहस्य दण्डेन कुर्य्यादेतद्रसायनम् ।
अनुपानञ्च कुर्वीत नारिकेलोदकं पयः ॥
सर्वकुष्ठ हरं श्रेष्ठं वलीपलित नाशनम् ।
पाण्डुमेहामवातघ्नं वातरक्त रुजापहम् ॥
क्रिमिशोथाश्मरीशूलदुर्नामवातरोगनुत् ।
क्षयं हन्ति महाश्वासमत्यर्थं शुक्रवर्द्धनम् ॥
अग्निसन्दीपनं हृद्यं कान्त्यायुर्बलवृद्धिकृत् ॥

विवर्ज्य शाकाम्लमपि स्त्रियञ्च
सेव्यो रसो जाङ्गलजाविकानाम् ।
शाल्योदनं षष्टिक माज्यमुद्ग
क्षौद्रं गुड़ क्षीर मिहक्रियायाम् ॥
शालिञ्च गुर्व्वादि हरेत् करञ्ज
शिलाजतु क्षौद्रयुतं पयश्च ।
सर्पिर्युतान् भक्षयतो विहङ्गान्
प्रपूर्य्यते दुर्बल देह धातुः ॥
कृष्णस्य पक्षस्य सिते तु पक्षे-
ष्विपञ्चरात्रेण यथा शशाङ्कः ॥

पाकलक्षणं यथा ।

अक्ले निष्पीड़ितं सूक्ष्मस्थूलतन्तौ घने दृढ़े ।
समुद्रा जायते व्याप्तं न निःसरन्ति रश्मिभिः ॥

नच पच्यते कर्ष्मी तदा सिद्धिं विनिर्दिशेत् ॥

हुताश मुख संज्ञकं ईद कल्पकाभ्यां कज्जली कृत्य प्रस्तरभाजने पिष्टिकाकाम्यां ततः पिष्टिकोपरि तप्त-ताम्रभाजनं निवेशनीयं ततः किञ्चित्पर्पटीं कृतो भूतायां षोड़शांश टङ्कनक्षारं दत्वा अन्य मूषिकायां कृत्वा यावद्गन्धक सम्बन्धो नोपलभ्यते तावतेव ध्मातव्यम्। एवमग्नौ स्थिरोकृत्य वसस्य प्र०१। एवं लौहादि गुग्-ग्लन्तानां प्रत्येकं प्र १ घृतं प्र १६ सर्वमेकी कृत्य लौह-पात्रे त्रिफलाक्वाथेन पचनीयं शेष पाके प्रक्षेपार्थं यथोक्त भागं त्रिफला चूर्णम्।

## उदयभास्करः।

गन्धकेन हतं ताम्रं दशभागं समुद्धरेत्।
उषणं पञ्चभागं स्यादमृतञ्च द्विभागिकम् ॥
दातव्यं कुष्ठिने सम्यगनुपानस्य योगतः।
गलिते स्फुटिते चैव विपुले मण्डले तथा ॥
विचर्चिका दद्रुपामा सर्वकुष्ठ प्रशान्तये।

## रसमाणिक्यम्।

तालकं वंशपत्राख्यं कुष्माण्डसलिले क्षिपेत्।
सप्तधा वा त्रिधा वापि दध्नाम्लेन तथैव च ॥
शोधयित्वा पुनः शुष्कं चूर्णयेत्तण्डुलाकृतिम्।
तत शरावके यन्त्रे स्थापयेत्कुशली भिषक् ॥
वदरी पत्रयोस्ते न लेपनं कारयेत्ततः।
[illegible] मधःपात्रं तावज्ज्वाला प्रदीपयेत् ॥

खादिरक्षीरं समुद्धृत्य मांस्यिकाभो भवेद्रसः।
घृतक्षीरे च संमर्द्य खादयेद्रक्तिकाद्वयम्॥
संपुज्य देवदेवेशं कुष्ठरोगाद्विमुच्यते।
स्फुटितं गलितं कुष्ठं वातरक्तं भगन्दरम्॥
नाड़ीव्रणं व्रणं दुष्टमुपदंशं विचर्चिकाम्।
नाशायेत् संभवान् रोगान् बलात् हन्यात्सुदारुणान्॥
पुण्डरीकञ्च चर्माख्यं विस्फोटं मण्डलं तथा॥

## तालकेश्वरः।

कुष्माण्ड त्रिफला तैल कन्या काञ्जिक भावितम्।
तालकं तुल्य गन्धं स्यादर्द्धं पारद मर्दितम्॥
अजाक्षीरेण निम्बूक कन्यातोयैर्दिन त्रयम्।
प्रत्येकं भावयेत् शुष्कं चक्रिकाकारतां गतम्॥
विपचेद्धण्डिका मध्ये पलाशक्षार मध्यगम्।
यामान् द्वादश शीतेऽस्मिन् प्रयोज्यं रक्तिकाद्वयम्॥
हन्त्यष्टादश कुष्ठानि रोमविध्वंसनं तथा।
द्विविधं वातरक्तञ्च नाड़ीदुष्ट व्रणानि च॥
कवोटिकां विना केवल क्षार मध्यगं कृत्वापचेत्।

## तालकेश्वरः।

दद्रुघ्नवानाख्यि रसं दत्त्वा तालं सुचूर्णितम्।
पुनःपुनश्च संमर्द्य शुष्कं कृत्वा पुटेद्बहेत्॥
दृढ़स्थाल्यां घृतं क्षारं पलाशस्याप्युपर्यधः।
ततोऽग्निका प्रदातव्या दिनरात्रिं सतं भवेत्।

शुक्लवर्णं यदा न स्यात्तदा दद्यो मधूमकम् ।
तदा प्रातर्ज्जलं तस्य कर्षैकं विनाशनम् ॥
गलत्कुष्ठं वातरक्तं नाडीव्रणं भगन्दरम् ।
शीतपित्तं महादद्रु चर्म्मकुष्ठविनाशनम् ॥
पथ्यं मधुरं चणकं मुद्गयूषं यथेच्छया ॥
इति दृष्टफलोऽयं फिरिङ्गिमतः ।

## महातालकेश्वरः ॥

संमर्द्य तालकं शुद्धं वंशपत्राख्यमुत्तमः ।
कुष्माण्डनीरैः सम्भाव्य त्रिदिनं शोषयेत्पुनः ॥
घृतकन्याद्रवैर्भूयो भावयेच्च दिनत्रयम् ।
संमर्द्य काञ्जिकेनैव दध्यम्लेन विमर्द्दयेत् ॥
संमर्द्य चूर्णं सलिले रसे पौनर्नवे पुनः ।
त्रिदिनं मर्द्दयित्वा तु कारयेत् खटिकाकृतिम् ॥
स्थाल्यां दृढतरायान्तु पलाशक्षारसञ्चयम् ।
उपर्य्यधस्तालकस्य क्षारं दत्त्वा शरावकैः ॥
पिधाय लेपयेद्यत्नात्पूरयेत् क्षारसञ्चयम् ।
पुनारुद्ध्य शरावेण लेपयेत्तद्दृढं ततः ॥
द्वात्रिंशद्यामपर्य्यन्तं वह्निज्वाला प्रदीपयेत् ।
एवं सिद्धेन तालेन गन्धतुल्येन मेलयेत् ।
द्वयोस्तुल्यं जीर्णताम्रं वालुकायन्त्रगं पचेत् ।
अयं तालेश्वरो नाम रसः परमदुर्लभः ॥
हन्त्यष्टादशकुष्ठानि वातशोणितनाशनः ।
रक्तमण्डलमत्युग्रं स्फुटितं गलितं तथा ॥

बहुरूपं सर्वजातं नामभिर्हृषितञ्च यत्।
दुष्टव्रणञ्च वीसर्पं सन्तोषञ्च विनाशयेत्॥
दृष्टो वारसहस्रञ्च रोगमारणकेसरी॥

पञ्चतिक्तघृतम्।

निम्बं पटोलं व्याघ्रीञ्च गुडूचीं वासकं तथा।
कुर्य्याद्दशपलान् भागान् एकैकस्य सुकुट्टितान्॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम्।
घृतप्रस्थं पचेत्तेन त्रिफलागर्भसंयुतम्॥
पञ्चतिक्तमिदं ख्यातं सर्पिः कुष्ठविनाशनम्।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्॥
विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति।
दुष्टव्रणं क्रिमीनर्शः पञ्चकासांश्च नाशयेत्॥

पृथ्वीसारतैलम्।

चित्रकस्याथ निर्गुण्ड्या हयमारस्य मूलतः।
नाड़ीचवीजाच्छिखतः काञ्जिपिष्टं पलं पलम्॥
करञ्जतैलाष्टपलं काञ्जिकस्य पलं पुनः।
मिश्रितं सूर्य्यसंपक्वं तैलं कुष्ठव्रणास्रजित्॥

खदिरारिष्ट।

खदिरस्य तुलार्द्धन्तु देवदारु च तत्समम्।
वाकुची द्वादशपला दार्वीस्यात्पलविंशतिः॥
त्रिफला विंशतिपलाश्चाष्टद्रोणेऽम्भसः पचेत्।
कषाये द्रोणशेषे च पूते शीते विनिःक्षिपेत्॥

तुलार्धं माक्षिकस्य तुलैका शर्करा मता ।
धातक्या विंशतिपलं कक्कोलं नागकेशरम् ॥
जातीफलं लवङ्गैला त्वक्पत्राणि पृथक् पृथक् ।
पलोन्मितानि कृष्णाया दद्यात्पलचतुष्टयम् ॥
घृतभाण्डे विनिक्षिप्य मासादूर्द्ध्वं पिबेत्ततः ।
महाकुष्ठानि हृद्रोगं पाण्डुरोगार्बुदं तथा ॥
गुल्मं ग्रन्थिं क्रिमीन् कासं तथा प्लीहोदरं जयेत् ।
एष वै खदिरारिष्टः सर्वकुष्ठनिवारणः ॥

इति भैषज्यरत्नावल्यां कुष्ठाधिकारः समाप्तः ।



## अथार्शोऽधिकारः ।

दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्त्तितः ।
भेषजक्षारशस्त्राग्नि साध्यत्वादाद्य उच्यते ॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अनुपानौषधद्रव्यं तत्सेव्यं नित्यमर्शसैः ॥
शुष्कार्शसां प्रलेपादिक्रिया तीक्ष्णा विधीयते ।
स्राविणां रक्तमालोक्य क्रिया कार्य्यास्रपैत्तिकी ॥
स्नुक्क्षीरं रजनीयुक्तं लेपाद्दुर्नामनाशनम् ।
कोषातकीरजोघर्षान्निपतन्ति गुदोद्भवाः ॥

अर्कक्षीरं स्नुहीक्षीरं तिक्ततुम्ब्याश्च पल्लवाः ।
करञ्जो बस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥
अर्शोघ्नी गुदजा वर्त्तिगुञ्जा कोषाफलोद्भवा ।
ज्योत्स्निका मूलकल्केन लेपो रक्तार्शसां हितः ॥
तुम्बीबीजं सोद्भिदन्तु काञ्जिपिष्टं गुडान्वयम् ।
अर्शोहरं गुदस्थं स्यादृधिमादिमलप्लुतः ॥
महारोगप्रदेशस्य पथ्या कोषातकी रजः ।
सफेनं लेपतो हन्ति लिङ्गवर्त्तिनंसंशयः ॥
अपामार्गोद्भवान्मूलात् क्षारः सहरितालकः ।
लिङ्गार्शो लेपतो हन्ति चिरजातमसंशयम् ॥
वातातिसारवद्भिन्नवर्चा स्यर्शा सूपाचरेत् ।
उदावर्त्तविधानेन गाढविट्कानि चासकृत् ॥
विडिवद्ध ष्ठितं तक्रं यमानी विटसंयुतम् ।
वातश्लेष्मार्शसां तक्रात्परं नास्तीह भेषजम् ॥
तत्प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा ।
न विरोहन्ति गुदजाः पुनस्तक्रसमाहिताः ॥
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ।
तक्रं वा यदि वा तत्र जातमर्शोहरं पिबेत् ॥
पित्तश्लेष्मप्रशमनी कच्छु कण्डू रुजापहा ।
गुदजान्नाशयत्याशु योजिता सगुडाभया ॥
सगुडां पिप्पलीयुक्तामभयां घृतभर्जिताम् ।
त्रिवृद्दन्तियुतां वापि भक्षयेदानुलोमिकीम् ॥
तिलारुष्करसंयोगं भक्षयेदग्निवर्द्धनम् ।
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम् ।

गोमूत्राध्युषितां दद्यात्सगुडां वा हरीतकीम् ।
पञ्चकोलयुतं वापि तक्रमर्शः प्रदापयेत् ॥
सूरणं शोणजं कन्दं पक्त्वाग्नौ पुटपाकवत् ।
अद्यात्सतैललवणं दुर्नाम्नां विनिवृत्तये ॥
छिन्नं वार्त्ताकुफलं घोषायाः क्षारजेन सलिलेन ।
तद्घृतभृष्टं युक्तं गुडेनाद्धमितो योऽर्त्ति ॥
पिबति च न्यून तक्रं तस्याशेवातिदृढगुदजानि ।
यान्ति विनाशं पुंसां सहजान्यपि सप्तरात्रेण ॥
असितानां तिलानाञ्च प्रकुञ्चं शीतवार्य्यनु ।
खादतोऽर्शांसि नश्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥

नागराद्योमोदकः ।

सनागरारुष्करवृद्धदारकं
गुडेन यो मोदकमत्त्युदारकम् ।
अशेषदुर्नामकरोगदारकं
करोति वृद्धं सहसैव दारकम् ॥
चूर्णं चूर्णसमो देयो मोदके द्विगुणो गुडः ॥

लवणोत्तमादिचूर्णम् ।

लवणोत्तमवह्निकलिङ्गयवान्
चिरबिल्वमहापिचुमर्दयुतान् ।
पिब सप्तदिनं मथितालुलितान्
यदि मर्दितुमिच्छसि पायुगदान् ॥

स्वल्पशूरणमोदकः ।

मरिचमहौषधचित्रकसूरणभागा यथोत्तरं द्विगुणाः ।

सर्वैसमो गुड़भागः सेव्योऽयं मोदकः सिद्धफलः ॥
ज्वलनं ज्वलयति जाठरमुन्मूलति गुल्मशूलगदान् ।
निःशेषयति श्लीपदमवश्यमर्शांसि नाशयत्याशु ॥

## वृहच्छूरणमोदकः ।

शूरणषोड़शभागा वह्नेरष्टौ महौषधस्यातः ।
अर्द्धेन भागयुक्तिर्मरिचस्य ततोऽपि चार्द्धेन त्रिफल
कणा समूला तालीशारुष्करक्रिमिघ्नानाम् ।
भागा महौषधसमा दहनांशा तालमूली च ॥
भागः शूरणतुल्यो दातव्यो वृद्धदारकस्यापि ।
भृङ्गैले मरिचांशे सर्वाण्येकत्र सञ्चूर्ण्य ।
द्विगुणेन गुड़ेन युतः सेव्योऽयं मोदकः प्रकामघनैः ।
गुरुवृष्य भोज्य रहितैर्घृतैरसूपद्रव्यं कुर्य्यात् ॥
भस्मकमनेन जनितं पूर्वमगस्तस्य प्रयोगराजेन ।
भीमस्य मारुतेरपि येन तौ महाशनौ जातौ ॥
अग्निबलवृद्धिहेतुर्न केवलं शूरणो महावीर्य्यः ।
प्रभवति शस्त्रक्षाराग्निभिर्विनाप्यर्शसामेषः ॥
श्वयथुश्लीपदगरजिद्ग्रहणीघ्न तथाहिक्कामनिलजाम् ।
नाशयति बलीपलितं मेधां कुरुते वृषत्वञ्च ॥
हिक्कां श्वासं कासं सराजयक्ष्मप्रमेहांश्च ।
प्लीहानञ्चाथोग्रं हन्तीति रसायनं पुंसाम् ॥

## शोथादुग्रालोगुड़ः ।

त्रिवृत्तेजोवती दन्ती श्वदंष्ट्रा चित्रकं शठी ।
गवाक्षी मुस्तविश्वाह्व विड़ङ्गानि हरीतकी ॥

पलोन्मितानि चैतानि प्रत्येकञ्चाम्लवृक्षकात् ।
षट्‌पलं कण्टकार्य्याश्च पूरणस्य च मोक्षकम् ॥
जलद्रोणद्वये क्वाथ्यचतुर्भागावशेषितम् ।
पूतन्तु तं रसं भूयः क्वाथेष्वपि त्रिगुणो गुड़ः ॥
लेहं पचेत्तु तं तावत् यावद्दार्व्वी प्रलेपनम् ।
अवताय्यं ततः पश्चाच्चूर्णीभूतानि दापयेत् ॥
त्रिवृत्तेजोवती कन्दचित्रकान् द्विपलांशिकान् ।
एला त्वक्सरिचश्चापि गजाह्वाश्चापि षट्‌पलम् ॥
द्वात्रिंशत्पलमेवात्र चूर्णं दत्त्वा निधापयेत् ।
ततोमात्रां प्रयुञ्जीत जीर्णे क्षीररसाशनः ॥
पञ्चगुल्मान् प्रमेहांश्च पाण्डुरोगं हलीमकम् ।
जयेदर्शांसि सर्व्वाणि तथा सर्व्वोदराणि च ॥
दीपयेद्ग्रहणीं मन्दां यक्ष्माणमपकर्षति ।
पीनसे च प्रतिश्यायें आढ्यवाते तथैव च ॥
अयं सर्व्वगदेष्वेव कल्याणो लेह उत्तमः ।
दुर्नामारिरयञ्चाष्ट दृष्टो वारसहस्रशः ॥
भवन्त्येनं प्रयुञ्जानः शतवर्षं निरामयाः ।
आयुषो दैर्घजननो वलीपलितनाशनः ॥
रसायनवरश्चैव मेधाजनन उत्तमः ॥
गुड़ः श्रीबाहुशालोऽयं दुर्नामारिः प्रकीर्त्तितः ॥
सुखमर्द्दः खरस्पर्शी गन्धवर्णरसान्वितः ।
पीड़ितो भजते मुद्रां गुड़ः पाकमुपागतः ॥

प्राणदागुड़िका ।

त्रिपलं शृङ्गवेरस्य चतुर्थं मारिचस्य च ।

पिप्पल्याः कुडवार्द्धञ्च पथ्यायाः पलमेव च ॥
तालीशपत्रस्य पलं पलाद्धं केशरस्य च।
द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात् ॥
सूक्ष्मैलाकर्षमेकञ्च कर्षस्त्वङ्मृणालयोः।
गुडात्पलानि त्रिंशञ्च चूर्णमेकत्र कारयेत् ॥
अक्षप्रमाणा गुडिका प्राणदेति प्रकीर्त्तिता।
पूर्व्वं भक्षाच्चपश्चाच्च भोजनस्य यथाबलम् ॥
मद्यं मांसरसं यूषं चीरं तोयं पिवेदनु।
हन्यादर्शांसि सर्व्वाणि सहजान्यस्रजान्यपि ॥
वातपित्तकफोत्थानि सन्निपातोद्भवानि च।
पानात्यये मूत्रकृच्छ्रे वातरोगे गलग्रहे ॥
विषमज्वरे च मन्देऽग्नौ पाण्डुरोगे तथैव च।
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा ॥
श्वासकासपरीतानामेषा स्यादमृतोपमा।
शुण्ठ्याः स्थानेऽभया देया विड्ग्रहे पित्तवायुजे ॥
प्राणदायां सिता देया चूर्णमानाच्च चतुर्गुणा।
अम्लपित्ताग्निमान्द्यादौ प्रयोज्या गुदजातुरे ॥
पक्वेनं गुडकाः कार्य्या गुडेन सितयाथवा।
परं हि वह्निसंसर्गाल्लघिमानं भजन्ति ताः ॥
रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक्।
दुष्टास्रे निगृहीते तु शूलानाहावसृग्गदाः ॥
अर्कक्वाथः सजिम्बो वा किम्बा बिल्वशलाटवः।
योज्या रक्तार्शसैस्तद्वत् ज्योतिष्कामूललेपनम् ॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात्।

दधिसरं मथिताभ्यासात् गुदजाः शाम्यन्ति रक्तवहा ॥
समङ्गोत्पल मोचाख्यतिरीट तिलचन्दनैः ।
छागक्षीरं प्रयोक्तव्यं गुदजे शोणितात्मके ॥
कोमलं नलिनीपत्रं पिष्ट्वा खादेत्सशर्करम् ॥
प्रातराजं पयः पीत्वा रक्तस्रावाद्विमुच्यते ॥
सशर्करं कृष्णं तिलस्य कल्कं
वस्तीपयोभिः पिबति प्रभाते ।
सद्यो हरत्येवगुदोत्थ रक्तं
योगोऽयमित्थं गिरिश प्रयुक्तः ॥
कौटजं कल्क मादाय पिष्ट्वा तक्रे पचुद्धिमान् ।
पीत्वा रक्तार्शसो रक्तस्रुतिमाशु नियच्छति ॥
तण्डुल सलिलो पेतं कल्क मपामार्गजं तिवतः ।
क्षीर मनुपाय्य भीरोगुं दजाः शाम्यन्ति रक्तवहाः ॥
दाडि मस्य रसः पेयः शर्करामधुरीकृतः ॥

## कुटजलेहः ।

कूटजत्वक् पल शतं जलद्रोने विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥
वस्त्रपूतं पुनः क्वाथं पचेल्लेहत्वमागतम् ।
भल्लातकं विडङ्गानि त्रिकटु त्रिफले तथा ॥
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च ।
वचामतिविषां बिल्वं प्रत्येकञ्च पलंपलम् ॥
गुडत्पलानि त्रिंशच्च चूर्णीकृत्य विनिक्षिपेत् ।
मधुनः कुडवं दद्याद्घृतस्य कुडवं तथा ॥

हन्ता लौहः शमयति परो रक्तसङ्गुद्भवम् ।
वातिकं पैत्तिकञ्चापि श्लैष्मिकं सान्निपातिकम्
ये च दुर्नामजा रोगास्तान् सर्वान्नाशयत्यपि ।
अम्लपित्तमतीसारं पाण्डुरोगमरोचकम् ॥
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ।
अनुपानं घृतं दध्ना मधु तक्रं जलं पयः ॥
रोगानीकविनाशाय कौटजो लौह उत्तमः ॥

अग्निमुखं लौहम् ।

त्रिवृच्चित्रक निर्गुण्डी स्नुही मुण्डिरिका झटा ।
प्रत्येकशोऽष्ट पलिका जलद्रोणे विपाचयेत् ॥
पलत्रयं विडङ्गाच्च व्योषं कर्षत्रयं पृथक् ।
त्रिफलायाः पलं पञ्च शिलाजतु पलं न्यसेत् ॥
दिव्यौषधि हतस्यापि वैकृन्त हतस्य वा ।
पलद्वादशकं देयं रुक्म लौहस्य चूर्णितम् ॥
पलैश्चतुर्विंशत्याज्याम्मधुशर्करयोरपि ।
घनीभूते सुशीते च दापयेद्वतारिते ॥
एतदग्निमुखं नाम दुर्नामान्तकरं परम् ।
मन्दमग्निं करोत्याशु कालाग्निसमतेजसम् ॥
पर्वतानपि जीर्य्यन्ति प्राशनादस्य देहिनाम् ।
गुरुवृष्यानुपानानि पयो मांसरसोहितः ॥
दुर्नाम पाण्डुश्वयथु कुष्ठ प्लीहोदरापहम् ।
अकाल पलितं हन्यादामवातं गुदामयम् ॥
न स रोगोऽस्ति यश्चापि न निहन्ति शयादिदम

करीर काञ्जिकादीनि कषायादीनि वर्जयेत् ॥

## माषयूषाद्यं लौहम् ।

माष यूष भल्लात तिलकल्को समन्वितम् ।
त्रिफलत्रय समायुक्तमयो कुर्य्यात् मायनम् ।

## नित्योदितरसः ।

मृत सूतार्क लौहाभ्र विषं गन्धं समं समम् ।
सर्वतुल्यां शभल्लातफलमेकत्र चूर्णयेत् ॥
द्रवैः शूरण माणोत्थैर्भाव्यं खल्ले दिनत्रयम् ।
माषमात्रं लिहेदाज्ये रसैवार्शांसि नाशयेत् ॥
रसो नित्योदितो नाम गुदोद्भव कुलान्तकः ॥

## रसगुडिका ।

रसस्तु पादिक तुल्या विडङ्ग मरिचाभ्रकाः ।
गङ्गापात्रङ्ज रसे खल्लयित्वा पुनः पुनः ॥
रक्तिमात्रा गुदार्शोघ्नी वह्निरत्नयं दीपनी ॥
कण्टकिफलाम्लमुषलवारो गोरोचना जलम् ।
लेपमात्रेण विस्राव्य रसान् हन्ति गुदाङ्कुरान् ॥
भावितं रजनीचूर्णैः स्नूहीक्षीरे पुनः पुनः ।
बन्धनात्सुदृढ़ं सूत्रं छिनत्त्यर्शो न संशयः ॥
वेगावरोधं स्त्रीपृष्ठयान् मुत्कटकासनम् ।
यथास्वं दोषलञ्चान्नमर्शसः परिवर्जयेत् ॥

## चन्द्रप्रभागुडिका ।

क्रिमिरिपुदहनव्योषत्रिफलामरदारुचव्यभूनिम्बम् ।

मागधीमूलमुस्तं यवक्षारकाधातुमाक्षिकञ्चैव ॥
लवणचारनिशायुग कुलत्थक गजकणातिविषा ॥
कर्पांशकान्येव समानि कुर्य्यात्
पलाष्टकं चाश्मजतोर्विशुद्धात्
निष्पन्न शुद्धस्य पुरस्य धीमान्
पलद्वयं लौहरजस्तथैव ॥
सिता चतुष्कं पलमत्र वांश्या
निकुम्भ कुम्भ त्रिसुगन्धि युक्तम्।
चन्द्रप्रभेयं गुडिका प्रयोज्या
अर्शांसि निर्नाशयते षड़ेव ॥
भगन्दरं पाण्डुककामलाञ्च
निर्नष्टवह्नेः कुरुते च दीप्तिम्।
हन्त्यामयान् पित्तकफानिलोत्थान्
नाडीगते मर्मगते व्रणे च ॥
ग्रन्थ्यर्बुदे विद्रधिराजयक्ष्म-
मेहे भगाख्ये प्रबले च योज्या।
चक्षुःचये चाश्मरिमूत्रकृच्छ्रे
शुक्रप्रवाहेऽप्युदरामये च ॥
तक्रानुपानन्त्वथ मस्तुपानं
आजो रसो जाङ्गलजो रसो वा।
पयोऽथवा शीत जलानुपानं
बलेन नागस्तुरगो यवेन ॥
दृष्ट्या सुपर्णः श्रवणे वराहः
कान्त्या रतीशो धिषणश्च बुद्ध्या।

न पानभोज्ये परिहार्यमस्ति
न शीतवातातपमैथुनेषु ।
मधु समश्नन् कालप्रचारम्
प्राप्ता गुडी चन्द्रमसः प्रसादात् ॥
शुक्रदोषान्निहन्त्यष्टौ प्रमेहानपि विंशतिम् ।
वलीपलित निर्मुक्तो वृद्धोऽपि तरुणायते ॥
वृद्धवैद्योपदेशेन पलार्द्धं रसगन्धकम् ।
केवलं मूर्च्छितं वापि पलं वा दापयेद्रसम् ॥
अभ्रकञ्च त्रिपलञ्चित्पलमानं भिषग्वरः ।
संमर्द्य मधुसर्पिर्भ्यामादौ रक्तिचतुष्टयम् ॥
भक्ष्यं हृत्वा यथा शक्ति यावन्मास चतुष्टयम् ।
त्रिवृद्दन्ती त्रिजातानां कर्षमानं पृथक् पृथक् ॥

## पिप्पल्याद्यं तैलम् ।

पिप्पलीमधुकं बिल्वं शताह्वां मदनं वचाम् ।
कुष्ठं शठीं पुष्कराख्यं चित्रकं देवदारु च ॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम् ।
अर्शसां मूढ़वातानां तत् श्रेष्ठमनुवासनम् ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणे रुजम् ॥
पिच्छास्रावं गुदे शोथं वातवर्चोविनिग्रहम् ।
उत्थानं बहुशो यच्च जयेत्तैवानुवासनात् ॥

## अभयारिष्टः ।

अभयायास्तुलामेकां मृद्वीकार्द्धतुलां तथा ।

विडङ्गस्य द्रव्यपलं मधूककुसुमस्य च ॥
चतुर्द्रोणे जले पक्त्वा द्रोणमेकावशेषयेत् ।
शीतीभूते रसे तस्मिन् पूते गुडतुलां क्षिपेत् ॥
श्वदंष्ट्रां त्रिवृतां धान्यधातकीमिन्द्रवारुणीम् ।
चव्यं मधुरिकां शुण्ठीं दन्तीं मोचरसन्तथा ॥
पलयुग्ममितं सर्वं पात्रे भवति चक्रये ।
क्षिप्तां संबध्य तन्मात्रं मासमात्रन्निधापयेत् ॥
ततो जातरसं ज्ञात्वा परिस्राव्य रसन्नयेत् ।
बलं कोष्ठञ्च वह्निञ्च वीक्ष्य मात्रां प्रयोजयेत् ॥
अर्शांसि नाशयेच्छीघ्रमष्टावुदराणि च ।
वर्च्चोमूत्रविविबन्धघ्नो वह्निं सन्दीपयेत्परम् ॥

इति भैषज्यरत्नावल्यां अर्शोऽधिकारः समाप्तः ।



## अथ भगन्दराधिकारः ।



गुदस्य श्वयथुं दृष्ट्वा विशोष्य शोधयेत्ततः ।
रक्तावसेचनं कार्य्यं यथा पाकं न गच्छति ॥

उपवासादिना शोषयेत् वमन विरेचनादिना शोधयेत् । रक्तावसेचनं जलौकादिभिः ।

वटपत्रेष्टका शुण्ठी गुडूच्यः सपुनर्नवाः ।

संपिष्टाः पिडकावस्थे लेपः शस्तो भगन्दरे ॥
स्नुह्यर्कं दुग्धदार्वीभिर्वर्तिं कृत्वा विचक्षणः ।
भगन्दर गतिं ज्ञात्वा पूरयेत्तां प्रयत्नतः ॥
एषा सर्वशरीरस्थां नाडीं हन्यान्नसंशयः ॥

तिलाभयालोध्र मरिष्टपत्रं
निम्बं वचा लोध्रमगारधूमम् ।
भगन्दरे नाडुपदंशयोश्च
दुष्टव्रणे शोधनरोपणोऽयम् ॥

समभाग पिष्टं लेपद्वयम् ।
त्रिफलारस संपिष्ट विड़ालास्थि प्रलेपनम् ।
भगन्दरं निहन्त्याशु दुष्टव्रण हरं परम् ॥
भगन्दरं प्रत्यहन्तु सुधौतं त्रिफलाम्बुना ।
त्रिफलारस पिष्टेन मार्जारास्थ्नाच लेपयेत् ॥
खरास्र पक्वभूरोह चूर्णलेपो भगन्दरम् ।
हन्ति दन्त्यश्मरातिविषालेप स्तद्वच्छुनोऽस्थि वा
जम्बूक मांसं भक्षयेत्प्रकारे व्यञ्जनादिभिः ।
अजीर्णं वर्जी मासेन मुच्यते च भगन्दरात् ॥

नवकार्षिकोगुग्गुलुः ।

त्रिफला पुरकृष्णानां त्रिपञ्चैकांश योजिता ।
गुड़िका शोथ गुल्मार्शो भगन्दर हिता स्मृता ॥

सप्तविंशतिको गुग्गुलुः ।

त्रिकटु त्रिफला मुस्तविड़ङ्गामृत
शटैला पिप्पलीमूलं हवुषा सुरदारु च ॥

तुल्य वैडङ्गकारं चव्यं विशाला रजनीद्वयम् ।
विडसौवर्चले चारौ सैन्धवं गजपिप्पली ॥
यावन्त्येतानि चूर्णानि तावद्दिगुण गुग्गुलुः ।
कोल प्रमाणां गुडिकां भक्षयेन्मधुना सह ॥
कासं श्वासं तथा शोथमर्शांसि च भगन्दरम् ।
हृच्छूलं पार्श्वशूलञ्च कुक्षिवस्तिगुदे रुजम् ॥
अश्मरीं मूत्रकृच्छ्रञ्च अन्त्रवृद्धिं तथा क्रिमीन् ।
चिरज्वरोपसृष्टानां क्षयोपहतचेतसाम् ॥
आनाहञ्च तथोन्मादं कुष्ठानि चोदराणि च ।
नाडी दुष्टव्रणान् सर्वान् प्रमेहं श्लीपदं तथा ॥
सप्तविंशतिको ह्यन्ति सर्वरोग निसूदनः ॥

## विष्यन्दनतैलम् ।

चित्रकार्कौ त्रिवृत्पाठे मलपूहयमारकौ ।
सुधां वचां लाङ्गलिकीं हरितालं सुवर्चिकाम् ॥
ज्योतिष्मतीञ्च संहृत्य तैलं धीरो विपाचयेत् ।
एतद्विष्यन्दनं नाम तैलन्दद्याद्भगन्दरे ॥
शोधनं रोपणञ्चैव सावर्ण्यकरणम्परम् ॥
चित्रकादीनां कल्कः जलेन चतुर्गुणेन पाकः । विष्यन्दयति विशोधयतीति विष्यन्दनम् ।

## करवीराद्यं तैलम् ।

करवीर निशा दन्ती लाङ्गली लवणाग्निभिः ।
मातुलुङ्गार्क वत्साह्वैः पचेत्तैलम्भगन्दरे ॥

निशाद्यं तैलम्।

निशार्कक्षीर सिन्धग्निपुराश्वहन वत्सकैः।
सिद्धमभ्यञ्जने तैलं भगन्दरविनाशनम्॥

सैन्धवाद्यं तैलम्।

सैन्धवं चित्रकं दन्ती पलाशश्चेन्द्रवारुणी।
गोमूत्रेऽष्टगुणे पक्वा यावच्छेषाष्टशेषितम्॥
क्वाथपादं पचेत्तैलं कल्कः कषायसंमतम्।
पचेत्तैलावशेषञ्च तेन लेप्यं भगन्दरम्॥
असाध्यं साधयत्याशु पक्वं क्रिमिकुलान्वितम्॥

नारायणोरसः।

दरदं पार्वती पुष्पं कुनटी पुरुषो रसः।
शोधितं गन्धको दैत्यः सैन्धवातिविषा वचा॥
शरपुङ्खा विडङ्गञ्च यमानी गजपिप्पली।
मरिचार्कौ च वरुणो धूनकञ्च हरीतकी॥
संमर्द्य कटुतैलेन गुटिकां कारयेद्भिषक्।
नाडीव्रण प्रवाहञ्च गण्डमालां विचर्च्चिकाम्॥
चिरदुष्टव्रणं दद्रु पूतिकर्णं शिरोगदम्
हस्तपाद परिस्फोटं दुःसाध्यञ्च भगन्दरम्॥
एतान् रोगान् निहन्त्याशु प्रभिन्नमिवकेशरी।
ग्रन्थान्तरे अस्यैव अश्वगजाङ्कुश संज्ञा।

चित्रविभाण्डको रसः।

शुद्ध सूतं द्विधा गन्धं कुमारीरस मर्द्दितम्॥

चरहान्ते गोधकं कृत्वा ताम्रं तेन प्रलेपयेत् ॥
द्वयोः समं भस्मपूर्वं भाण्डे बद्धा विपाचयेत् ।
त्रियामान्ते समुद्धृत्य स्वाङ्गशीतं विचूर्णयेत् ॥
जम्बीरस्य द्रवैः पिष्ट्वा बद्धा सम्पुटे पचेत् ।
गुञ्जैकं मधुनाज्येन लिह्याद्धन्ति भगन्दरम् ॥
मुषली लशुनं चानु चारनालयुतं पिबेत् ।
कर्त्तव्यो मधुराहारो दिवास्वप्नश्च मैथुनम् ॥
वर्जयेत् शीतलाहारं रसे चित्रविभाण्डके ।

## ताम्रप्रयोगः ।

ताम्रपत्रं स्वोचीरे निर्गुण्डी स्वरसे तथा ।
त्रिकण्टजे चक्रीरसे ताम्रं दग्ध्वाभिषेचिता ॥
रसस्यार्द्धपलं शुद्धं गन्धकस्य पलं तथा ।
कज्जल्यर्द्धेन जम्बीर प्लुतेन ताम्रतः पलम् ॥
परिलिप्याथ मूषायां दद्यात्त्रिपुटान लघून् ।
संमर्द्य मधु सर्पिर्भ्यां ततोरक्तिमितं लिहेत् ॥
भगन्दरे सर्वभवे कार्य्यं सर्वव्रणेषु च ॥

इति भैषजरत्नावल्यां भगन्दराधिकारः समाप्तः

# अथ विद्रधिविकारः।



जलौका पातनं शस्तं सर्वस्मिन्नेव विद्रधौ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोद्भवं विना॥
वातघ्न मूलकल्कैस्तु वसा तैल घृतान्वितैः।
सुखोष्णा बहलो लेपः प्रयोज्यो वातविद्रधौ॥

मांसक्काथे यत्तैलं निःसरति सा वसा इति भानुः।

स्वेदोपनाहाः कर्त्तव्याः शिग्रुमूल समन्विताः।
यव गोधूम मुद्गैश्च सिद्ध पिष्टैश्च लेपयेत्॥
विलीयते क्षणेनैवमपक्कश्चैव विद्रधिः॥

यवादि स्विन्नं कृत्वा पिष्ट्वा पुनरपि मनागुष्णं कृत्वा लेपनम्।

पुनर्नवा दारु विश्व दशमूलभवाम्भसा।
गुग्गुलुं रुवुतैलं वा पिबेन्मारुतविद्रधौ॥
पैत्तिकं शर्करा लाज मधुकैः शारिवा युतैः।
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीर चन्दनैः॥
पञ्चवल्कल कल्केन घृत मिश्रेण लेपनम्।
यष्ट्याह्व शारिवा दूर्वा नलमूलैः सचन्दनैः॥
क्षीर पिष्टैः प्रलेपस्तु पित्तविद्रधि नाशनः॥
इष्टका सिकता लौह गोशकृत्तुषपांशुभिः।
मूत्रपिष्टैश्च सततं स्वेदयेत् श्लेषविद्रधिम्॥

गोमूत्र पिष्टमिष्टकादिकमुत्स्विद्य एरण्डादिपत्रैर्वा स्वेदः।

पित्त विद्रधिवत्सर्वां क्रिया निरवशेषतः।
विद्रध्योः कुशलः कुर्य्यादृतागन्तु निमित्तयोः॥
शोभाञ्जनक निर्यूहो हिङ्गुसैन्धव संयुतः।
अचिराद्विद्रधिं हन्ति प्रातःप्रातर्निषेवितः॥
शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत्।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः॥
श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च।
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत्॥
शमयति पाठामूलं क्षौद्रयुतं तण्डुलाम्भसा पीतम्
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य॥
अपक्वे त्वेतदुद्दिष्टं पक्वे तु व्रणवत्क्रिया॥

इति भैषज्यरत्नावल्यां विद्रध्यधिकार समाप्तः।



## अथ ऊरुस्तम्भाधिकारः।



श्लेष्मणः क्षपणं यत्स्याच्च मारुत कोपनम्।
तत्सर्वं सर्वदा कार्य्यं मूरुस्तम्भस्य भेषजम्॥
तस्य न स्नेहनं कार्य्यं न वस्तिर्नविरेचनम्।
सर्वो रुक्षक्रमः कार्य्यस्तत्रादौ कफ नाशनः॥
पश्चाद्वात विनाशाय कृत्स्नः कार्य्यः क्रियाक्रमः॥

शिलाजतुं गुग्गुलुं वा पिप्पलीमथ नागरम्।
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा॥
भल्लातकामृता शुण्ठी दारुपथ्या पुनर्नवाः।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भ निवर्हणाः॥
पिप्पली पिप्पलीमूल भल्लात क्वाथ एव वा।
कल्को वा समधुर्देय ऊरुस्तम्भविनाशनः॥
त्रिफला चव्य कटुकं ग्रन्थिकं मधुना लिहेत्।
ऊरुस्तम्भ विनाशाय पुरं मूत्रेण वा पिबेत्॥
अत्र कटुकं त्रिकटु॥
लिह्याद्वा त्रिफला चूर्णं क्षौद्रेण कटुकायुतम्।
सुखाम्बुना पिबेद्वापि चूर्णं षड्धरणं नरः॥

षड्धरणो योग उक्त एव वातव्याधौ अत्र दशमूली-
रसेन गुग्गुलुः शिवफलः।
पिप्पली वर्द्धमानो वा माक्षिकेण गुडेन वा।
स्नेहवर्जी पिबेच्च चूर्णं षड्धरणं नरः॥
हितमुष्णाम्बु वा कट्वित्पिण्याकादिगणैः कृतम्॥
क्षौद्रसर्षपवल्मीक मृत्तिका संयुतं भिषक्।
गाढ़मुत्सादनं कुर्य्यादूरुस्तम्भे प्रलेपनम्।

धुस्तूरपत्ररसेन सिग्रुपत्ररसेन वा सर्वं पिष्ट्वा गाढ़ं
प्रलिप्य वस्त्रादिना वेष्ट्य बन्धयेत्॥

## गुञ्जाभद्रोरसः।

निष्कत्रयं शुद्धसूतं निष्कद्वादशगन्धकम्।
गुञ्जाबीजञ्च षड्निष्कं निष्कं जैपालबीजकम्॥

जयाजम्बीरधुस्तूरकाकमाची द्रवैर्द्दिनम्॥
भावयित्वा मटीं कुर्य्याद्द् घृतैर्गुञ्जाचतुष्टयीम्॥
गुञ्जाभद्रो रसो नाम्ना हिङ्गुसैन्धवसंयुतः।
शमयत्येव नो चित्रमूरुस्तम्भं सुदुर्जयम्॥

इति भैषज्यरत्नावल्यामूरुस्तम्भाधिकारः समाप्तः



## अथ भग्नाधिकारः

आदौ भग्नं विदित्वा तु सेचयेत् शीतलाम्बुना
पङ्केनालेपनं कार्य्यं बन्धनञ्च कुशान्वितम्॥
सुश्रुतोक्तन्तु भग्नेषु वीक्ष्य बन्धादिमाचरेत्।
अवनामितमुन्नह्येदुन्नतञ्चावपीड़येत्॥
अञ्छेदतिक्षिप्तमधोगतञ्चोपरि वर्त्तयेत्।
आलेपनार्थं मञ्जिष्ठा मधुकञ्चाम्लपेषितम्॥
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम्।
सप्तरात्रात्सप्तरात्रात्सौम्येष्वृतुषु मोक्षणम्॥
कर्त्तव्यं स्यात्त्रिरात्राच्च तथाग्नेयेषु जानता।
काले च समशीतोष्णे पञ्चरात्राद्विमोचयेत्॥
न्यग्रोधादिकषायञ्च सुशीतं परिषेचने।

पञ्चमूली विपक्वन्तु क्षीरं दद्यात्सवेदने ॥
सुखोष्णमवचार्य्यं वा तत्र तैलं विजानता ।
मांसं मांसरसः सर्पिः क्षीरं यूषः सतीनजः ॥
बृंहणं चान्नपानं स्याद्देयं भग्नाय जानता ।
सृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ॥
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ।
सघृतेनास्थिसंहारं लाक्षा गोधूममर्ज्जुनम् ॥
सन्धियुक्तेऽस्थिभग्ने च पिबेत् क्षीरेण मानवः ॥
रसोनं मधु लाक्षाज्यं सिताकल्कं समश्नताम् ।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥
[illegible] वा त्रिसुगन्धिकम् ।
अपक्वक्षीरपीतं स्यादस्थिभग्नप्ररोहणम् ॥

क्षीरं सलाक्षा मधुकं ससर्पिः
स्याज्जीवनीयस्य सुखावहञ्च ।
भग्नः पिबेत्त्वक् पयसार्ज्जुनस्य
गोधूमचूर्णं सघृतेन वाथ ॥

लाक्षागुग्गुलुः ।

लाक्षास्थिसंहृत्ककुभाश्वगन्धा-
चूर्णीकृता नागबला पुरश्च ।
सम्भग्नमुक्तास्थिरुजं निहन्या-
दङ्गानि कुर्य्यात् कुलिशोपमानि ॥
अतोऽस्यऽत्रोपदिष्टत्वात्तुल्यचूर्णं च गुग्गुलुः ।

आभागुग्गुलुः ।

आभाफलत्रिकव्योषैः सर्वैरेभिः समीकृतैः ।

तुल्यो गुग्गुलुरायोज्यो भग्नसन्धिप्रसाधकः॥
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः।
प्रतिसार्य्य कषायैश्च शेषं भग्नवदाचरेत्॥
भग्नं नैति यथा पाकं प्रयतेत तथा भिषक्।
वातव्याधिविनिर्द्दिष्टान् स्नेहानत्र प्रयोजयेत्॥

## गन्धतैलम्।

रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले।
दिवा दिवैव संशोष्य क्षीरेण परिभावयेत्॥
तृतीयं सप्तरात्रन्तु भावयेन्मधुकाम्बुना।
ततः क्षीरं प्र[illegible]
काकोल्यादिं सयष्ट्याह्वं मञ्जिष्ठां सारिवां तथा।
कुष्ठं सर्ज्जरसं मांसीं सुरदारु सचन्दनम्।
शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णानि योजयेत्।
पीड़नार्थञ्च कर्त्तव्यं सर्वगन्धैः शृतं पयः॥
चतुर्गुणेन पयसा तत्तैलं पाचयेत् पुनः।
एलामंशुमतीं पत्रं जीवन्तीं तुरगं तथा॥
लोध्रं प्रपौण्डरीकञ्च तथा कालानुसारिवाम्
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम्॥
पिष्ट्वा शृङ्गाटकञ्चैव प्रागुक्तान्यौषधानि च।
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाग्निना॥
एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु।
आक्षेपके पक्षघाते तालुशोषे तथार्दिते॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे।

बाधिर्य्यं तिमिरं चैव ये च स्त्रीषु क्षयं गताः ॥
पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने ।
शीवास्वन्धीरसां दृष्टिरनेनैवोपजायते ॥
मुखञ्च पद्मप्रतिमं सुसुगन्धिसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् ॥
राजार्हमेतत्कर्त्तव्यं राज्ञामेव विचक्षणैः ।
तिलचूर्णसमन्वत्र मिलितञ्चूर्णमिष्यते ॥
लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।
व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च ॥

इति भैषज्यरत्नावल्यां भग्नाधिकारः समाप्तः ।



## अथ व्रणशोथशारीरव्रणाधिकारः ।

आदौ विम्लापनं कुर्य्याद्द्वितीयमवसेचनम् ।
तृतीयमुपनाहन्तु चतुर्थीं पाटनक्रियाम् ॥
पञ्चमं शोधनं कुर्य्यात् षष्ठं रोपणमिष्यते ।
एते क्रमा व्रणस्योक्ताः सप्तमो वैकृतापहः ॥

विम्लापयतीति विम्लापनं कर्त्तर्य्यनट् एतेन वहनस्नेहप्रलेपादीनां ग्रहणमिति भानुदासः ।

व्रणी स्वयर्थु रायासात्तु च रागच जागरात्।
तौ च रुक् च दिवास्वप्नात्ताच मृत्युच मैथुनात्॥
धत्तूरमूलं सलवणमुष्णं व्रणस्थित्यारम्भे।
दत्तं लेपान्नियतं व्रणशोथं हरति बहुदुष्टम्॥
कल्कः काञ्चिकसंपिष्टः स्निग्धश्चास्फोटकल्कः।
सुपर्ण इव नागानां वातशोथविनाशनः॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसवल्कलैः।
ससर्पिष्कैः प्रलेपः स्यात् शोथनिर्वापणः परः॥
समभागपिष्टैर्घृतमिश्रैर्लेपः।
न रात्रौ लेपनं दद्याद्दत्तञ्च पतितं तथा।
न च पर्युषितं शुष्यमाणं नैवावधारयेत्।
शुष्यमाणमुपेक्षेत प्रदेयं पीड़नं प्रति।
न चापि मुखमालिम्पेत्तेन दोषः प्रसिध्यते
रक्तावसेचनं कुर्य्यादादावेव विचक्षणः।
थे महति संरब्धे वेदनावति वा व्रणे॥
ा न याति शमं लेपस्वेदसेकापतर्पणैः।
सोऽपि नाशं व्रजत्याशु शोथः शोणितमोक्षणात्॥
एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः।
रक्तं हि व्यक्ततां याति तस्य नास्ति न चास्ति रुक्
स चेद्देवमुपक्रान्तः शोथो न प्रशमं व्रजेत्।
तस्योपनाहैः पक्कस्य पाटनं हितमुच्यते।
बालवृद्धासहक्षीणभीरूणां योषितामपि।
मर्म्मोपरि च जाते च पक्के शोथे च दारणम्॥
गवां दन्तं जले घृष्टं बिन्दुमात्रं प्रलेपनात्।

अत्यन्तकठिने चापि शोथपाचनभेदनम्॥
कटुतैलान्वितैर्लेपात् पनसपत्रास्थिभस्मभिः।
चयः शाम्यति गण्डस्य प्रकोपः स्फुटतिद्रुतम्॥
कपोत गृध्र कङ्कानां पुरीषमपि दारणम्॥

तिलाष्टकम्।

तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद् घृतम्।
मधुकं निम्बपत्रञ्च लेपः स्याद् व्रणशोधनः॥
निम्बपत्रं तिलादन्तौ त्रिवृत्सैन्धव माक्षिकम्।
दुष्टव्रण प्रशमनो लेपः शोधनकेशरी॥
एकं वा शारिवा मूलं सर्वव्रण विशोधनम्॥
सप्तदल दुग्ध कल्कः शमयति दुष्टव्रणं लेपात्।
मधुयुक्ता शरपुङ्खा दुष्टव्रणरोपणी कथिता॥
मानुषशिरः कपालं तदस्थि लेपनं मूत्रेण।
रोपणमिदं क्षतानां योगशते रप्यसाध्यानाम्॥
सुपर्वोपल पत्तूर कर्णमोट कुठेरकाः।
पृथगेते प्रलेपेन गम्भीरव्रण रोपणाः॥
लौह कुद्दालके घृष्ट्वा लिम्पाकफल वारिणा।
श्वेतार्क सम्भवं मूलं लेपं दद्यात् क्षतोपरि॥
अपि योगशतासाध्यं क्षतं हन्ति न संशयः॥
श्वेतकरवीमूलस्वरसं द्विपलोन्मितम्।
पलाष्टक मिदं गव्यक्षीर मेकत्र मिश्रयेत्॥
दधिकृत्वा तद्दावस्थं निर्मथ्य नवनीतकम्।
गृहीत्वा तेन लेपेन क्षतं हन्ति चिरोत्थितम्॥

आस्फोतोत्थव निर्य्यासः घृतं हन्ति चिरत्थितम्

ये क्लेद पाक स्रुति गन्ध वन्तो-
व्रणा महान्तः सरुजः सशोथाः।
प्रयान्ति ते गुग्गुलु मिश्रितेन
पीतेन शान्ति त्रिफला रसेन॥

## सप्ताङ्गगुग्गुलुः

विडङ्ग त्रिफला व्योष चूर्णं गुग्गुलुना समम्।
सर्पिषा वटिकां कृत्वा खादेद्वा हितभोजनः।
दुष्ट व्रणापची मेह कुष्ठ नाडी विशोधनः।

## जात्याद्यं घृतं तैलञ्च।

जातीनिम्ब पटोलपत्र कटुका दार्व्वी निशा शारिवा-
मञ्जिष्ठाभय सिक्थ तुत्थ मधुकैर्नक्ताह्वबीजैः समैः।
सर्पिः सिद्ध मनेन सूक्ष्म वदना मर्म्माश्रिताः स्राविणो-
गम्भीराः सरुजाव्रणाः सगतिकाः शुष्यन्ति रोहन्ति च॥
एवं तैलमपि।

## गौराद्यं घृतं तैलञ्च।

गौरा हरिद्रा मञ्जिष्ठा मांसी मधुकमेव च।
प्रपौण्डरीकं ह्रीवेरं भद्रमुस्तं सचन्दनम्॥
जातीनिम्ब पटोलञ्च करञ्जं कटुरोहिणी।
मधूच्छिष्टं समधुकं महामेदा तथैव च।
पञ्चवल्कल तोयेन घृत प्रस्थं विपाचयेत्।
एष गौरी महायोगः सर्व्वव्रण विशोधनः॥

आगन्तु सहजाश्चैव दुष्टिदोषोत्थाश्च ये व्रणाः ।
विषमामपि नाडीं च शोधयेत् शीघ्रमेव तु ।
गौराद्यं जातिकाद्यश्च तैलमेव प्रसाध्यते ।
तैलं सूक्ष्मानने दुष्टे व्रणे गम्भीर एव च ।

## वृहज्जात्यादाद्यं तैलम् ।

जाती निम्ब पटोलानां नक्तमालस्य पल्लवाः ।
सिक्थकं मधुकं कुष्ठं द्वे निशे कटुरोहिणी ।
मञ्जिष्ठा पद्मकं लोध्रं अभया पद्मकेशरम् ।
तुत्थकं शारिवा बीजं नक्तमालस्य दापयेत् ॥
एतानि समभागानि पिष्ट्वा तैलं विपाचयेत् ।
विषव्रणं समुत्पन्न स्फोटक कुष्ठ।।पा ॥
दद्रुवीसर्प रोगेषु कीटरोगेषु सर्वशः ।
सद्यः शस्त्र प्रहारेषु दंष्ट्राविद्धेषु चैवहि ॥
नखदन्तक्षते देहे दुष्ट मांसापकर्षणम् ।
स्रवणार्थमिदं तैलं हितं शोधनरोपणम् ।

## वीपरीतमल्लतैलम् ।

सिन्दूर कुष्ठ विष हिङ्गुरसोन चित्र-
बाणाङ्घ्रि लाङ्गलिक कल्क विपक्वतैलम्
प्रसाद मल्लयुत क्षत् क्षतलूनफेनं
क्लिन्नव्रण प्रशमने विपरीत मल्लः ॥
खड्गाभिघातगुरुगण्डमहोपदंश-
नाडीव्रणविचर्चिककुष्ठपामाः ।

एतान्निहन्ति विपरीतकमल्लनाम
तैलं यथेष्टमयनान्न भोजनस्य ॥

## व्रणराक्षस तैलम् ।

कुड़वं सार्षपं तैलं तदर्द्धं गोघृतस्य च ।
एकीकृत्य पचेत्तत्तु सूर्य्यपत्ररसेन तु ॥
चित्रपत्र पलं कल्कं कृत्वा तत्र विपाचयेत् ।
तत्कल्कं स्रावयित्वा तु चूर्णमेषां विनिक्षिपेत् ॥
गन्धकं शुद्ध सिन्दूरं हरितालं मनःशिला ।
हरिद्रागैरिकं राजी कर्षार्द्धं प्रतिभागिकम् ॥
भागार्द्धं पारदस्यापि कज्जलीकृत्य मिश्रयेत् ।
घृतेन भावयित्वा तु तप्तं कृत्वा प्रलेपयेत् ॥
कण्डूं विचर्च्चिकां पामां क्लेदं कुष्ठं सुदुस्तरम् ।
वातरक्तं व्रणान् सर्वान् विषविस्फोटदद्रुकम् ॥
निहन्त्याशु महाश्चिन्त्यं तैलन्तु व्रणराक्षसम् ।
चित्रपत्रपलं कल्कमित्यत्र तस्य पत्र पलं कल्कमिति क्वचित्पाठः तस्येति अर्कस्य ।

## व्रणराक्षस तैलम् ।

सूतकं गन्धकं तालं सिन्दूरञ्च मनःशिला ।
रसोनञ्च विषं ताम्रं प्रत्येकं कर्षमाहरेत् ॥
कुड़वं सार्षपं तैलं साधयेत् सूर्य्यतापतः ।
नाड़ीव्रणञ्च विस्फोटं मांसवृद्धिं विचर्च्चिकाम् ॥
दद्रुकुष्ठापची कण्डू मण्डलानि व्रणां स्तथा ।
व्रणराक्षस नामेदं तैलं हन्ति गदान् बहून् ॥

विडङ्गादिः।

विडङ्गं ग्रन्थिकं रास्ना कुटजत्वक्फलानि च।
पाठैलवालुकं धात्री भार्गीम् पञ्चपलान् पृथक्।
अष्टद्रोणेऽम्भसः पक्त्वा कुर्य्यात् द्रोणावशेषितम्।
पूते शीते क्षिपेत्तत्र क्षौद्रं पञ्च शतत्रयम्॥
धातकीं विंशतिं पञ्च त्रिजातं त्रिपलं तथा।
प्रियङ्गु काञ्चनाराणां सलोध्राणां पलं पलम्
व्योषस्य च पलान्यष्टौ चूर्णीकृत्य प्रदापयेत्।
घृतभाण्डे विनिक्षिप्य मासमेकं विधारयेत्॥
ततः पिबेद्यथाहं तु जयेद्विद्रधिं सुस्थितम्।
उरुस्तम्भाश्मरी मेहान् प्रत्यष्ठीलाभगन्दरान्॥
गण्डमालां हनुस्तम्भं विडङ्गारिष्ट संज्ञकः॥
नवं धान्यं माषास्तिलगुडकुलत्थाम्लमधुराः
सतीला निष्पावा हरितक मजानूप पिशितम्।
हिमाम्भो वल्लूरं लवण कटुकं पिष्ट विकृति-
र्दधिक्षीरं तक्रं व्रणिषु सकलं दोषजननम्॥

इति भैषज्यरत्नावल्यां व्रणशोथशारीरव्रणा-
धिकारः समाप्तः।



## अथ सद्योव्रणाधिकारः ।



सद्यः क्षतं व्रणं वैद्यः सशूलं परिषेचयेत् ।
यष्टिमधुक युक्तेन किञ्चिदुष्णेन सर्पिषा ॥
अपामार्गस्य संसिक्तं पत्रोत्थेन रसेन तु ।
सद्यो व्रणेषु रक्तन्तु प्रहर्त्तं परितिष्ठति ॥
कर्पूर पूरितं बद्धं सघृतं संप्ररोहति ।
सद्यःशस्त्रक्षतं पुंसां व्यथापाक विवर्जितम् ॥
शुनोजिह्वाग्रमसूर्यैः सद्यः क्षतविरोहणः ॥
इति सामासिकः कार्य्यः सद्योव्रण हितोविधिः ।
समाहात्यरतः कुर्य्यात् शारीरव्रणवत् क्रियाः ॥
प्रसङ्गादत्र अग्निदग्ध व्रणचिकित्सा लिख्यते ।
पित्त विद्रधि वीसर्प शमनं लेपनादिकम् ।
अग्निदग्धव्रणे सम्यक् प्रयुञ्जीत चिकित्सकः ॥
तिलश्चैवाग्निना दग्धं यवभस्म समन्वितम् ।
अग्निदग्धव्रणं नश्येदनेनैवानुलेपनात् ॥
तिलतैलैर्यवान् दग्ध्वा समं कृत्वा तु लेपयेत् ।
तेनैव लेपनादाशु वह्निदग्धः सुखीभवेत् ॥
सद्योदग्धस्य मधुना लेपं कृत्वा भिषग्वरः ।
तत्पृष्ठे यवचूर्णेन लेपःस्यादाहशान्तये ॥
महिषी नवनीतेन क्षीरेण पेषयेत्तिलम् ।
तेन लेपेन दग्धाङ्गं सदाहं सुखमश्नुते ॥
सहाराष्ट्री जटा लेपाद्दग्ध पृष्ठावचर्चनम् ।

जीर्णगेह तृणाकूर्चं दग्धव्रणे हितं परम् ॥

अन्तर्दग्ध कुठेरको हस्तमलं लेपान्निहन्ति व्रणं
अश्वत्थस्य विशुष्क वल्कल कृतं चूर्णं तथा गुग्गुलात् ।
अभ्यङ्गाद्विनिहन्ति तैल मखिलं गण्डूपदैः साधितम्
पिष्टाः शाल्मलि तूलकैर्जलगता लेपास्तथा वालुकाः ॥

### जीरकघृतम् ।

जीरक पक्कं पयाग्निमन्थक सर्जरसमिश्रितं हरति ।
घृतमभ्यङ्गात्पावक दग्धज दुःखं क्षणार्द्धेन ॥

### पाटलीतैलम् ।

सिद्धं कल्ककषायाभ्यां पाटल्याः कटुतैलकम् ।
दग्धव्रणरुजास्राव दाह विस्फोट नाशनम् ॥

### मञ्जिष्ठाद्यं तैलम् ।

मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा तैलं विपाचयेत् ।
सर्वेषामग्निदग्धानामेतद्रोपणमिष्यते ॥

कालीयकलताम्रास्थि हेम काला रसोत्तमैः ।
लेपः स गोमयरसः सवर्णीकरणः परः ॥

चतुष्पदां हि लोमत्वक् खुरशृङ्गास्थि भस्मना ।
तैलाक्ता लेपिता भूमिर्भवे द्रोमवती पुनः ॥

इति भैषज्यरत्नावल्यां सद्योव्रणाधिकारः समाप्तः ।

# अथ नाड़ीव्रणाधिकारः ।



नाड़ीनां गतिमन्विष्य शस्त्रेणापाट्य कर्म्मवित् ।
सर्व्वव्रण क्रमं कुर्य्याच्छोधनं रोपणादिकम् ॥
नाड़ीं वातकृतां साधु पाटितां लेपयेद्भिषक् ।
प्रत्यक्पुष्पीफलयुतै स्तिलैः पिष्टैः प्रलेपयेत् ।
पैत्तिकीं तिल मञ्जिष्ठा नागदन्ती निशायुगैः ।
श्लैष्मिकीं तिल यष्ट्याह्व निकुम्भारिष्ट सैन्धवैः ।
शल्यजां तिल मध्वाज्यैर्लिप्त्वा बन्धन माचरेत् ॥
आरग्वध निशाकाला चूर्णाज्य क्षौद्रसंयुता ।
सूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥

घोण्टाफलत्वङ् मदनात्फलानि
पूगस्य च त्वग्लवणञ्च मुख्यम् ।
स्नुह्यर्क दुग्धेन सहैव कल्को-
वर्त्तीकृतो हन्त्यचिरेन नाड़ीम् ॥

वर्त्तीकृतं माक्षिक सम्प्रयुक्तं
नाड़ीघ्नमुक्तं लवणोत्तमं वा ।
दुष्टव्रणे यद्विहितञ्च तैलं
तत्सेव्यमानं गतिमाशु हन्ति ॥

जात्यर्क शम्पाक करञ्ज दन्ती-
सिन्धूत्थ सौवर्च्चल यावशूकैः ।
वर्त्तिः कृता हन्त्यचिरेण नाड़ीं
स्नुक्क्षीरपिष्टा सह चित्रकेण ।

माहिषं दधि कोद्रवान्नं शिशिरं कदलीफलं चिरविरूढाम् ।
भक्तं कुष्ठलिकाभव मतिदाहकरीं नाडीं शमयेत् ॥
अथ दुर्बल भीरूणां गतिर्मर्माश्रिता च या ।
क्षारसूत्रेण तां छिन्द्यान्न तु शस्त्रेण बुद्धिमान् ॥
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम् ।
सूचीं निदध्याद्गत्यन्ते चोन्नम्याशु च निर्हरेत् ॥
सूत्रस्यान्तं समानीय गाढ़ं बन्धं समाचरेत् ।
ततः क्षारबलं वीक्ष्य सूत्रमन्यत्प्रवेशयेत् ॥ १
क्षाराक्तं मतिमान् वैद्यो यावन्न भिद्यते गतिः ।
भगन्दरेऽप्येष विधिः कार्यो वैद्येन जानता ॥
अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत् ।
सूचीभिर्यववक्त्राभिराचितं वा समन्ततः ॥
मूलं सूत्रेण बध्नीयाच्छिन्ने चोपचरेद् व्रणम् ॥

समाङ्गगुग्गुलुः ।

गुग्गुलु त्रिफला व्योषैः समांशैराज्ययोजितः ।
नाडी दुष्टव्रणशूल भगन्दर विनाशनः ॥

स्वर्जिकाद्यं तैलम् ।

स्वर्जिका सिन्धु दन्त्यग्नि रूपिकानल नीलिकाः ।
खरमञ्जरियीजानि तैलं गोमूत्र पाचितम् ॥
दुष्टव्रण प्रशमनं कफनाड़ीव्रणापहम् ॥

कुम्भीकाद्यं तैलम् ।

कुम्भीक खर्जूर कपित्थ बिल्व-
वनस्पतीनान्तु शलाटुवर्गं ।

हत्वा कषायं विफलेन तैल-
मावाप्य तुल्या सरल प्रियङ्गु ॥
सौगन्धिका मोचरसाहिपुष्पा-
लोध्राणि दत्वा खलु धातकीच ।
एतेन शल्यप्रभवा हि नाड़ी
रोहेद्व्रणो वै सुखमाशु चैव ॥

भल्लातकाद्यं तैलम् ।

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विड़ङ्ग रजनीद्वय चित्रकैश्च ।
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाड़ीं कफानिलकृतामपचीं व्रणांश्च ॥

निर्गुण्डी तैलम् ।

समूलपत्रां निर्गुण्डीं पीडयित्वा रसेन तु ।
तेन सिद्धं समं तैलं नाड़ीव्रण विशोधनम् ॥
हितं पामापचीनान्तु पानाभ्यञ्जन नावनैः ।
विविधेषु च रोगेषु तथा सर्वव्रणेषु च ॥

हंसपादी तैलम् ।

हंसपाद्यरिष्टपत्रं जातीपत्रं ततो रसैः ।
तत्कल्कैश्च पचेत्तैलं नाड़ीव्रण विरोहनम् ॥

इति भैषज्यरत्नावल्यां नाड़ीव्रणाधिकारः समाप्तः ।



# अथ शिरोरोगाधिकारः।

वातिके शिरसोरोगे स्नेह स्वेदान् सनावनान्।
पानान्नमुपनाहांश्च कुर्य्याद्वातामयापहान्॥
कुष्ठमेरण्डमूलञ्च लेपात्काञ्जिक योजितम्।
शिरोऽर्त्तिं नाशयत्याशु चूर्णं वा मुचकुन्दजम्॥

शिरोवस्तिः।

आशिरो व्यायतं चर्म्म कृत्वाष्टाङ्गुल मूच्छ्रितम्।
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत्॥
निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत्।
धारयेदारुजः शान्तेर्यामं यामार्द्धमेव वा॥
शिरोवस्तिर्जयत्येष शिरोरोगं मरुद्भवम्।
हनुमन्याक्षि कर्णार्त्ति मर्द्दितं मस्तकम्पनम्॥
पैत्ते घृतं पयः सेकाः शीतलेपाः सनावनाः।
जीवनीयानि सर्पींषि पानान्नञ्चापि पित्तनुत्॥
कफजे लङ्घनं स्वेदो रुक्षोष्णैः पाचनात्मकैः।
तीक्ष्णावपीडधूमाश्च तीक्ष्णाश्च कवडग्रहाः॥

शारिवादिर्लेपः।

शारिवोत्पल कुष्ठानि मधुकं चाम्लपेषितम्।
सर्पिस्तैल युतो लेपः सूर्य्यावर्त्तार्द्धभेदयोः॥

शारिवादिभिः समभागैः काञ्जिकपिष्टैर्घृततैलेन सहितैर्लेपः।

सूर्य्यवत्सभवं चौक्तं कर्म्मैव सुपेमितम् ।
वेदनानाशनो लेपः सूर्य्यावर्त्तार्द्धभेदयोः ॥
सूर्य्यावर्त्ते विधातव्यं नस्यकर्म्मादि भेषजम् ।
पाययेत्सगुड़ं सर्पि घृतपूर्णंश्च भोजयेत् ॥
सूर्य्यावर्त्ते शिरावेधी लावण्यं चौर सर्पिषा ।
हितः चार घृताभ्यास स्ताभ्याञ्चैव विरेचनम् ॥
कृतमालपल्लव रसे खरमञ्जरीकल्कसिद्ध नवनीतम् ।
नस्येन जयति नियतं सूर्य्यावर्त्तं सुदुर्वारम् ॥
दशमूली कषायन्तु सर्पिः सैन्धव संयुतम् ।
नस्य मर्द्धावभेदघ्नं सूर्य्यावर्त्तं शिरोऽर्त्तिजित् ॥
शिरीष मूलकवीजैरवपीड़ञ्च योजयेत् ।
अवपीड़ो हितो वा स्याद्वचापिप्पलिभि कृतः ॥
जाङ्गलानि च मांसानि कारयेदूपनाहकम् ।
तेनास्य शाम्यते व्याधिः सूर्य्यावर्त्तः सुदारुणः ॥
भृङ्गराजरस श्छागक्षीरान्तरोऽर्कं तापितः ।
सूर्य्यावर्त्तं निहन्त्याशु नस्येनैव प्रयोगराट् ॥
एष एव विधिः कार्य्यः कार्य्यश्चार्द्धावभेदके ॥
पिवेत्सशर्करं चीरं नीरं वा नारिकेलजम् ।
सुशीतं वापि पानीयं सर्पिर्वानस्ततस्तयोः ॥
तिलात्मकं सनलदं सचौद्र लवणान्वितम् ।
तेनास्य लेपयेत् शीर्षं मर्द्धभेद व्यपोहति ॥
सविड़ङ्गं तिलं कृष्णं समं कृत्वा प्रपेषयेत् ।
नस्यकर्म्मणि दातव्य मर्द्धभेदं विनाशयेत् ॥

समांशं सिद्धितं कृत्वा नस्यम्।
अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तहितो विधिः।
शिरावेधश्च कर्त्तव्योऽनन्तवात प्रशान्तये॥
आहारश्च विधातव्यो वातपित्त विनाशनः॥
सूर्य्यावर्त्ते हितं शस्तं शङ्खके स्वेदवर्जितम्।
क्षीरसर्पिः प्रशंसन्ति नस्यःपानञ्च शङ्खके॥
शतावरीं कृष्णतिलान् मधुकं नीलमुत्पलम्।
दूर्वां पुनर्नवाञ्चापि लेपं साध्ववतारयेत्॥
शीत तोयावसेकांश्च क्षीर सेकांश्च शीतलान्॥
कल्कांश्च क्षीर वृक्षाणां शङ्खकस्य प्रलेपनम्।
क्रौञ्च कादम्ब हंसानां शकलाः कच्छपस्य च।
रसैः संवृंहणस्याथ तस्य शङ्खक सन्धिजाः॥
जङ्घास्तिस्रः शिराः प्राज्ञो भिद्यादेव न ताड़येत्॥
गिरिकर्णी फलरसं मूलञ्च नस्य माचरेत्।
मूलम्वा वन्धयेत्कर्णे शीघ्रं हन्ति शिरोव्यथाम्॥
गुञ्जाकरञ्जवीजञ्च तयोः कल्को जले कृतः।
मरिचैर्भृङ्गराजैश्च शीघ्रं हन्ति शिरोव्यथाम्॥
नागरकल्कविमिश्रं क्षीरं नस्येन योजितं पुंसाम्।
नानादोषोद्भूतां शिरोरुजां हन्ति तीव्रतराम्॥

षड्विन्दु तैलम्।

एरण्ड मूलं तगरं शताह्वा
जीवन्ति रास्ना सह सैन्धवञ्च।

यष्टं विड़ङ्गं मधुयष्टिका च
विश्वौषधं चाप्यतिलस्य तैलम्।
छागं पयस्तैलं विमिश्रितञ्च
चतुर्गुणे भृङ्गरसे विपक्वम्।
षड़्विन्दवो नासिकया विधेया
निघ्नन्ति शीघ्रं शिरसो विकारान्।
च्युतांश्च केशाश्चलितांश्च दन्तान्
दुर्बद्धमूलांश्च दृढ़ीकरोति।
सुपर्णदृष्टिप्रतिमञ्च चक्षु-
र्वाह्वोर्बलञ्चाप्यधिकं ददाति॥

मयूराद्यं घृतम्।

दशमूली बला रास्ना मधुकैस्त्रिपलैः सह।
मयूरं पक्षपित्तान्त्रशकृत्पादास्यवर्जितम्॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत्।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम्।
कर्णनासाक्षिजिह्वास्यगलरोगविनाशनम्।
मयूराद्यमिदं सर्पिर्जत्रूर्द्ध्वगदापहम्॥
आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान्।
कल्केनानेन विपचेत्सर्पिरूर्द्ध्वगदापहम्॥
दशमूलादिना तुल्यो मयूर इह कथ्यते।
अन्ये त्वाकृतिमानेन मयूरग्रहणं विदुः॥
यकृत्पादास्यवर्जितम् इत्यपि पाठः।

मयूराद्यं घृतम्।

शतं मयूरमांसस्य दशमूलबलातुलाम्।

द्रोणेऽम्भसः पचेत् सुत्वा तस्मिन् पादावशेषिते ततः ॥
निषिच्य पयसो द्रोणं कर्षेणाश्च सुतारकम् ।
प्रापौण्डरीकं वर्गांश्चैवविजीवनश्च संयजेः ॥
मेधा वृद्धि स्मृतिकर मूर्द्धगत महावहम् ।
मायूरमेतन्निर्द्दिष्टं सर्व्वानिलहरं परम् ॥
मन्याकर्ण शिरोनेत्र वजापस्मार नाशनम् ।
विषवातामय श्वास वृक्षमी ज्वर कासनुत् ॥

## गुञ्जातैलम् ।

विशुद्धं तिलतैलञ्च तत्समं काञ्जिकं भवेत् ।
आरनाल समं भृङ्गद्रवं कृत्वा प्रदापयेत् ॥
मन्दाग्निना ततः पाच्यं यावत्तैल स्थितं भवेत् ।
तलमध्ये प्रदातव्यं पिष्ट गुञ्जापल द्वयम् ।
उत्तार्य्य तैल शेषन्तु दिनैकं तत्तुरक्षयेत्।
शिरोरोगेषु दुष्टेषु महशीर्षे सुदारुणे ॥
भृङ्गक कर्णपीड़ासु नश्यन्ति नात्र संशयः ।
गुञ्जातैल मिति ख्यातं हन्तं हन्ति शिरोव्यथाम् ॥

## षड्बिन्दुमूल तैलम् ।

पञ्च पञ्च पलं नीत्वा पञ्चमूलीयुगात् पृथक् ।
विपाचयेत् जलद्रोणे चाष्ट भागावशेषितम् ॥
आर्द्रकस्य रस प्रस्थं शिग्रुश्चव्याच्चतत्समं भवेत् ।
पञ्चकोलञ्च तुगञ्च जीरकद्वय सर्षपम् ॥
सैन्धवञ्च यवक्षारं त्रिफला च निशाद्वयम् ।
तोयञ्च द्विगुणं कृत्वा जलसमं विदुः ॥

सर्वैरेभिः पचेत्तैलं शिरोरोगं व्यपोहति ।
ऊर्द्ध जत्रुज रोगञ्च वातश्लेष्म गद्वापहम् ॥
एकाङ्गे द्वन्दजे चैव तथैव सान्निपातिके ।
अर्द्धावभेदके चैव सूर्य्यावर्त्ते प्रशस्यते ॥
पानाभ्यञ्जन नस्ये च कर्णरोगे च शस्यते ॥

सिद्धफल मिदम् ।

महादशमूल तैलम् ।

दशमूल पलशतं जलद्रोणे विपाचयेत् ।
तेन पादावशेषेण कटु तैलाढ़कं पचेत् ॥
जम्बीराद्र्क धुस्तूर स्वरसं तैल तुल्यतः ।
कल्कः कणाद्धता दार्व्वी शतपुष्पा पुनर्नवा ॥
शिग्रु पिप्पलिका तिक्ता करञ्जं कृष्णजीरकम् ।
सिद्धार्थकं वचा शुण्ठी पिप्पली चित्रकं शटी ॥
देवदारु बला रास्ना सूर्य्यावर्त्तक कट्फलम् ।
निर्गुण्डी चविका गैरी ग्रन्थिकं शुष्कमूलकम् ॥
यमानी जीरकं कुष्ठ मजमोदा च ताड़कम् ।
एतेषां पलिकैर्भागै विंपचेन्मतिमान् भिषक् ॥
हन्ति श्लेष्माण मभ्यङ्ग पानात्कास व्यपोहति ।
निहन्ति विविधान् व्याधीन् कफवात समुद्भवान्
शिरोमध्य गतान् रोगान् शोथान् हन्ति व्रणानपि

हृहद्दशमूल तैलम् ।

दशमूलीशतं ग्राह्यं तथा धुस्तूरकस्य च ।
शतं पुनर्नवायाश्च निर्गुण्ड्याश्च शतं तथा ॥

एतैः कषायैर्विपचेत् कटुतैलाढ़कं भिषक्।
वासा वचा देवदारु शटी रास्ना सयष्टिका॥
मरिचं पिप्पली शुण्ठी कारवी वट्फलं तथा।
करञ्जशिग्रु कुष्ठञ्च विश्वा च वनभिण्डिका॥
चित्रकञ्च पृथग्भागान् दत्त्वा चैषां पलोन्मितान्।
श्लैष्मिकं सन्निपातोत्थं वातश्लेष्मोद्भवं तथा॥
कर्णशूलं शिरःशूलं नेत्रशूलञ्च दारुणम्।
निहन्ति दशमूलाख्यं तैलमेतन्न संशयः॥

## दशमूल तैलम्।

दशमूल क्काथ कल्काभ्यां निर्गुण्डीरस संयुतम्।
कटुतैलं समादाय पचेत्प्रस्थं भिषग्वरः॥
सन्निपातं हरेदेतत् शिरोरोगं तथैव च।
अस्थिसन्धिकफ प्रायान् रोगान् हन्ति न संशयः॥

## दशमूल तैलम्।

दशमूल क्काथ कल्काभ्यां तैल प्रस्थं विपाचयेत्।
चतुर्गुणं पयो दत्त्वा शनैर्मृद्वग्निना भिषक्॥
दशमूल मितिख्यातं शोथं हन्ति सुदारुणम्।
नस्ये नाकालपलितं ज्वरारोचक नाशनम्॥
अभ्यङ्गेनैव सर्वञ्च शिरःशूलं विनाशयेत्।

## दशमूलतैलम्।

दशमूलो कषायेण अष्टाङ्ग कल्क संयुतम्।
क्षीरञ्च द्विगुणं दत्त्वा तैलप्रस्थं विपाचयेत्॥
शिरोऽर्त्तिं नाशयेदेतद्भास्कर स्तिमिरं यथा।

वातशूलं पित्तशूलं कफशूलं त्रिदोषजम्॥
सूर्य्यावर्त्तमभिष्यन्दं जलदोषञ्च नाशयेत्।
दशमूल मिदं तैलं शिरोरोग निसूदनम्॥

## स्वल्पदशमूल तैलम्।

दशमूल क्वाथ कल्काभ्यां कटुतैलं विपाचयेत्।
सन्निपातज्वरश्वासकासान् हन्ति सुदारुणान्॥

## धूस्तूरतैलम्।

धूस्तूर क्वाथ कल्काभ्यां कटुतैलं विपाचयेत्।
सन्निपात ज्वर श्लेष्म शोथ शीर्षार्त्ति दाहनुत्।
कर्णग्रहहरं चास्थिसन्धिग्रहविनाशनम्॥

## मध्यम दशमूल तैलम्।

दशमूली करञ्जश्च निर्गुण्डी च जयन्तिका।
धुस्तूरः षट्पलान भागान् जलद्रोणे विपाचयेत्॥
पादशेषे रसे तैलं कटु प्रस्थं विपाचयेत्।
तत्कल्कान् दापयेत्तत्र भागान् षट्तोलकान् पृथक्।
वातश्लेष्म समुद्भूतं शिरोरोगं व्यपोहति।
कासं पञ्चविधं शोथं जीर्णज्वर मपोहति॥
दशमूल मिदं तैलं शिरः कर्णाक्षिरोगनुत्।
मन्यास्तम्भ मन्यहर्ति श्लीपदञ्च विनाशयेत्॥
दशमूल मिदं तैलमश्विभ्यां निर्मितं पुरा॥

## कनकतैलम्।

कनकार्कं वचा दूर्वा वासकी बैजयन्तिका।

निर्गुण्डी मूलिका भार्गी निशोथश्च पुनर्नवा ॥
बदरी विजयापत्रं श्रीफलं बृहती तथा ।
चित्रकश्च कुष्ठीमूलमग्निमन्थो व्यक्त्वकम् ॥
चिञ्चण्डी गोमठी च पत्रमारग्वधस्य च ।
प्रत्येकं द्विपलञ्चैषां स्नुक्क्रियात्तत्त्वचादपि ॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ।
प्रस्थञ्च कटुतैलस्य पाचयेत्तीव्रवह्निना ॥
द्रव्याण्येतानि सर्वाणि कल्कितानि प्रदापयेत् ।
चक्षुःशूलं शिरःशूलं श्लीपदं मांसरक्तजम् ॥
आमवातश्च हृच्छूलं हन्ति च गलगण्डकम् ।
शोथं बाधिर्य्यमुदरं कासं हन्ति न संशयः ॥
दूर्वायां पतिते विन्दौ शुष्कतां याति तत्क्षणात् ।
कनकाख्यमिदं तैलं कफरोगकुलान्तकम् ॥

## महाकनकतैलम् ।

कनकस्य रसप्रस्थं प्रस्थं वर्षाभुवस्तथा ।
निर्गुण्डी स्वरसप्रस्थं दशमूलरसस्य च ॥
पारिभद्ररसप्रस्थं प्रस्थं वरुणकस्य च ।
तैलप्रस्थं समादाय भिषग् यत्नाद्विपाचयेत् ॥
कल्कैरर्द्धपलैरेतैः शुण्ठीमरिच सैन्धवैः ।
पुनर्नवा कर्कटकशेलुत्वक् पिप्पली युगैः ॥
तत्साधुसिद्धं विज्ञाय शुभे पात्रे निधापयेत् ।
वातश्लेष्मजनं सर्वमामवातं भगन्दरम् ॥
सन्निपातभवं शोथं शोषमाशु विनाशयेत् ।

ये केचिद्व्याधयः सन्ति सर्व्वे त्रिकाः सान्निपातिकाः ॥
तान् सर्व्वान्नाशयत्याशु सूर्य्यस्तम इवोदितः ॥

## रुद्रतैलम्।

जैपालद्रोणधुस्तूर शिग्रु शक्राशनस्य च।
सूर्य्यावर्त्तस्य सूर्य्यस्य पत्राणां स्वरसं पृथक् ॥
जम्बीरशृङ्गवेरस्य रसं दत्त्वा समं समम्।
कटुतैलस्य पात्रन्तु शोधयित्वा पचेद्भिषक्।
रजनीयुग्ममञ्जिष्ठा कटुफलं कृष्णजीरकम्।
त्रिकटुः पिप्पलीमूलं शारिवे द्वे विडङ्गकम् ॥
रास्नादारु बला निम्बं मुस्तकं चन्दनं तथा।
परशू द्वौ स्नुहीमूलं मूर्व्वापामार्गमूलकम् ॥
स्वरसद्रव्यमेतेषां कल्कं दत्त्वा तु पादिकम्।
मृत्पात्रे सुदृढ़े चैव पाचयेत्तीव्रवह्निना।
बलासमूर्द्धगञ्चैव नाशयेत्त्रिदिनाद् ध्रुवम्।
मुखनासाक्षिरोगांश्च कफशोणितसंस्रवान् ॥
शिरोरोगं सन्निपातं श्लीपदं गलगण्डकम्।
अभ्यङ्गान्नाशयेदेतान् पानात् कासं व्यपोहति ॥
कालाग्निरुद्रेण प्रोक्तं रुद्रतैलमिदं पुरा ॥

## तमराजतैलम्।

लवलीनां रसप्रस्थं शिग्रुधुस्तूरयोस्तथा।
वासकस्य रसप्रस्थं तथा निर्गुण्डिकार्कयोः ॥
दशमूलरसप्रस्थं करञ्जवलयोस्तथा।
पयगीतेः पचेद्धीमान् तैलप्रस्थञ्च सार्षपम् ॥

कल्कः कणा वचा शुण्ठी पिप्पलीमूलचित्रकम्।
कट्फलं वनयां पथ्यं जीरकं शतपुष्पिका॥
पुनर्नवा हरिद्रा च देवदारु च लाङ्गली।
शुष्कमूलककुष्ठञ्च यासकं कृष्णजीरकम्॥
स्नुह्यर्कक्षीरजैपालमूलं नागदलं तथा।
विड़ङ्गं सैन्धवं क्षारं चन्दनं शिग्रमुत्पलम्॥
मरिचं मधुकं रास्ना शृङ्गी व्याघ्री वरुणकम्।
•एतेषां कार्षिकैः कल्कैर्विपचेत् पाकविद्भिषक्॥
अभ्यङ्गाच्छूकं हन्ति पानात्कासं व्यपोहति।
श्वयथुश्चोदरं शूलं शिरोरोगं सुदुस्तरम्॥
शिरःशूलं नेत्रशूलं कर्णशूलञ्च दारुणम्।
त्रयोदशसन्निपातान् वातश्लेष्मगलग्रहान्॥
एकजं द्वन्द्वजञ्चैव तथैव सान्निपातिकम्।
सर्वं शोथं निहन्त्येव ज्वरं प्लीहानमेव च॥
श्लेष्मरोगं निहन्त्याशु भास्करस्तिमिरं यथा।
तम्रराजमिदं तैलमूर्द्ध्वजत्रुगदापहम्॥

तम्रराजतैलम्।

धुस्तूरं पूतिकं पीता जयन्ती सिन्धुवारकम्।
शिरीषं हिज्जलं शिग्रुदशमूलं समं भवेत्॥
प्रस्थं प्रस्थं समादाय कटुतैलं समांशकम्।
जलद्रोणे विपक्तव्यं ग्राह्यं पादावशेषितम्॥
गोमूत्रस्याढ़कं दत्त्वा शनैर्मृद्वग्निना पचेत्।
मदनं चम्पकं कुष्ठमजाजी विश्वभेषजम्॥

कट्फलं वचा मुस्तं छिक्कां त्रिफलमेव च।
हरितालं जवापुष्पमव्रतं कुनटी तथा॥
कर्कटं चन्दनं शियु यमानी व्याघ्रपादपि।
एतेषां कार्षिकैर्भागैः समभागं प्रकल्पयेत्॥
तन्नराजमितिख्यातं महादेवेन निर्मितम्॥
सन्निपातं महाघोरं शिरोरोगं महोत्तरम्॥
शिरःशूलं नेत्ररोगं कर्णशूलञ्च दारुणम्॥
ज्वरं दाहं महाघोरं स्वेदञ्चैव महोत्तरम्॥
कामलां पाण्डुरोगञ्च सहलीमकपीनसम्।
त्रयोदशसन्निपातं हन्ति सद्यो न संशयः

## बृहत्किङ्किनीतैलम्।

किङ्किनी प्रस्थमेकञ्च प्रस्थं सहचरस्य च।
कृष्णाधुस्तूरकप्रस्थं प्रस्थञ्च सिन्धुवारकम्॥
पचेत्तान् जलं दत्त्वा पादशेषं समुद्धरेत्।
तैलप्रस्थं विपक्तव्यं द्रव्याणीमानि दापयेत्॥
यष्टीकणा पयोदञ्च गन्धकं कुष्ठमेव च।
समुद्रान्ता तथा शृङ्गी किङ्किनीबीजस्वर्णकम्॥
रास्ना मधुरिका झिण्टीमूलमीश्वरमेव च।
विषमाधूकमञ्जिष्ठा शोभाञ्जनत्वचं तथा॥
एषां कर्षद्वयञ्चैव पिष्ट्वा चात्र समावपेत्।
निहन्ति पूतिकर्णञ्च कर्णस्रावं सकण्डुकम्॥
कर्णनादं कर्णशोथं वाधिर्य्यं दारुणं तथा।
शिरोरोगं नेत्ररोगं मन्यास्तम्भं गलग्रहम्॥

एतान् रोगान् निहन्त्याशु छत्रनिद्रामनिर्यथा ॥

अर्द्धनारीनाटकेश्वरः ।

वराटं टङ्कनं शुद्धं पञ्चभागसमन्वितम् ।
नवभागं मरिचस्य विषभागत्रयं मतम् ॥
स्तन्येन वटिकां कृत्वा नस्यं दद्याद्भिषग्वरः ।
शिरोविकारान् विविधान् हन्ति सूर्य्यावर्त्तानपि ॥

शिरःशूलाद्रिवज्ररसः ।

पलं रसं पलं गन्धं पलं लौहं पलं विद्रुत् ।
गुग्गुलोः पलचत्वारि तदर्द्धं त्रिफलारजः ॥
कुष्ठं मधुकपिप्पल्यौ शुण्ठी गोक्षुरं क्रिमिनाशनम् ।
दशमूलञ्च प्रत्येकं तोलकं वस्त्रशोधितम् ॥
क्वाथेन दशमूलस्य यथा सम्परिभावयेत् ।
घृतयोगात् प्रकर्त्तव्या माषिका वटिका शुभा ॥
छागीदुग्धानुपानेन पयसा मधुनाथवा ।
शिरःशूलप्रद्रिवज्रोऽयं चक्रनाथेन भाषितः ॥
एकजं द्वन्द्वजञ्चैव त्रिदोषजनितं तथा ।
वातिकं पैत्तिकं सर्वं शिरोरोगं विनाशयेत् ॥

इति भैषज्यरत्नावल्यां शिरोरोगाधिकारः समाप्तः ।



# अथ मूर्च्छाधिकारः।

सेकावगाहौ मणयः सहाराः
शीताः प्रदेहा व्यजनानिलाश्च।
शीतानि पानानि च गन्धवन्ति
सर्वासु मूर्च्छास्वनिवारितानि॥

रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः।
मद्यजायां वमेन्मद्यं निद्रां सेवेद्यथासुखम्॥
विषजायां विषघ्नानि भेषजानि प्रयोजयेत्॥

कोलमज्जोषणोशीरकेशरं शीतवारिणा।
पीतं मूर्च्छां जयेल्लीढ्वा कृष्णां वा मधुसंयुताम्॥
पिबेद्दुरालभा क्वाथं सघृतं भ्रमशान्तये।
त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि वा।
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते॥

रसायनानां शिलाजत्वादिरसायनप्रयोगाणाम्।
कौम्भं सर्पिर्दशाब्दिकम्।

मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुड़ार्द्रकं प्रातः।
समाहात् पथ्यभुजो मदमूर्च्छा कामलोन्मादान्॥

अञ्जनान्यवपीड़श्च धूमः प्रधमनानि च।
सूचिभिस्तोदनं शस्तं दाहः पीड़ा नखान्तरे॥
लुञ्चनं केशलोम्नाञ्च दन्तैर्दंशनमेव च।
आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने॥
गुड़ं पिप्पलीमूलस्य चूर्णेनातिचितं लिहन्।

चिरादपि च संनष्टां निद्रामाप्नोत्य संशयम् ॥
इक्षवः पीतको माषाः सुरा मांसं घृतं पयः।
गोधूमगुड़मत्स्याश्च निद्रां कुर्वन्ति देहिनाम् ॥
शङ्खाशनमजाक्षीरं पादलेपास्तथैव च ॥

अश्वगन्धारिष्टः।

तुलार्द्धं चाश्वगन्धायाः मूषल्याः पलविंशतिः।
मञ्जिष्ठाया हरीतक्या रजन्योर्मधुकस्य च ॥
रास्ना विदारी पार्थानां मुस्तकत्रिवृतोरपि।
भागान् दशपलान् दद्यादनन्ताश्यामयोस्तथा ॥
चन्दन द्वितयस्यापि वचायाश्चित्रकस्य च।
भागानष्टपलान् क्षुण्णानष्टद्रोणेऽम्भसः पचेत् ॥
द्रोणशेषे कषायेऽस्मिन् पूते शीते प्रदापयेत्।
धातक्याः षोड़शपलं माक्षिकस्य तुलात्रयम् ॥
व्योषस्य द्विपलञ्चापि त्रिजातकचतुःपलम्।
चतुःपलं प्रियङ्गोश्च द्विपलं नागकेशरम् ॥
मासादूर्द्धं पिबेदेनं पलार्द्धपरिमाणतः।
मूर्च्छायापस्मृती शोषमुन्मादमपि दारुणम् ॥
कार्श्यमर्शांसि मन्दत्वमग्नेर्वातभवान् गदान्।
अश्वगन्धाद्यरिष्टोऽयं पीतो हन्यादसंशयम् ॥

इति भैषज्यरत्नावल्यां मूर्च्छाधिकारः समाप्तः।



# अथ उन्मादाधिकारः।

उन्मादे वातिके पूर्वं स्नेहपानं विरेचनम्।
पित्तजे कफजे वान्तिः परो वस्त्यादिकः क्रमः॥
यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते।
उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययोः॥
ब्राह्मी कुष्माण्डफलषड्ग्रन्था शङ्खपुष्पिका स्वरसाः।
उन्मादहृतो दृष्टाः पृथगेते कुष्ठमधुमिश्रिताः॥
सम्भोज्य पिकमांसं वा निर्वाते स्थापयेत्सुखम्।
स्वप्ना स्मृतिमतिभ्रंशं सञ्ज्ञां लब्ध्वा प्रबुध्यते॥
अपक्वचटकक्षीरपानमुन्माद नाशनम्॥
तत्र चटकमांसं शुष्कीकृत्य तच्चूर्णं दुग्धेन सह पातव्यम्।
कुष्माण्डकबीजकल्कः पीतो विनाशयत्यपि।
उन्मादरोगमत्युग्रं मधुना दिवसत्रयम्॥
उन्मादे समधुः पेयः शुद्धो वा तालशाखजः।
रसो नस्येऽभ्यञ्जने च सार्षपं तैलमिष्यते॥
बद्धं सार्षपतैलाक्तमुत्तानञ्चातपे न्यसेत्॥
पुराणमथवा सर्पिः पिबेत्प्रातरतन्द्रितः॥
शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम्।
ताड़नञ्च मनोबुद्धिस्मृतिसंवेदनं हितम्॥
तर्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम्।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः॥

कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान्।
परस्परप्रतिद्वन्द्वै रेभिरेव शमं नयेत्॥
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते।
तस्य तत्सदृशप्राप्त्या सान्त्वाश्वासैश्च तं जयेत्॥
सर्पिःपानादिरागन्तौ मान्त्रादिश्चेष्यते विधिः।
पूजा बल्युपहारेष्टि होममन्त्राञ्जनादिभिः॥
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक्॥
देवर्षि पितृगन्धर्वैरुन्मत्तस्य च बुद्धिमान्।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरमेव च॥

पानीयकल्याणकं घृतम्।

विशाला त्रिफला कौन्ती देवदार्वेलवालुकम्।
स्थिरा नतं हरिद्रे द्वे शारिवे द्वे प्रियङ्गुकम्॥
नीलोत्पलैला मञ्जिष्ठा दन्ती दाड़िमकेशरम्।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम्॥
विड़ङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ।
अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः॥
चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत्।
अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये।
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके।
वम्यर्शो मूत्रकृच्छ्रेषु विसर्पोपहतेषु च॥
कण्डूपाण्ड्वामयोन्माद विषमेह गरेषु च।
दोषोपहत चित्तानां गद्गदानामरेतसाम्।
शस्तं स्त्रीणाञ्च वन्ध्यानां वर्णायुर्बलवर्द्धनम्।

अलक्ष्मीपापरक्षोघ्नं सर्वग्रह निवारणम् ।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥

क्षीरकल्याणकं घृतम् ।

द्विजलन्तु चतुःक्षीरं क्षीरकल्याणकन्त्विदम् ॥

स्वल्पचैतसघृतम् ।

पञ्चमूल्यावकाश्मर्यौ रास्ना रण्डत्रिवृद्बलाः ।
मूर्वा शतावरी चेति क्वाथ्यैर्द्विपलिकैरिमैः ॥
कल्याणकस्य चाङ्गेन तद्घृतं चैतसं स्मृतम् ।
सर्वचेतोविकाराणां शमनं परमं मतम् ॥
घृतप्रस्थोऽत्र कर्त्तव्यः क्वाथो द्रोणाम्भसा घृतात् ।
चतुर्गुणोऽत्र सम्पाद्यः कल्कः कल्याणकैरितः ॥

हिङ्ग्वाद्यं घृतम् ।

हिङ्गु सौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् ।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥
अपस्मारं महाघोरं सुचिरोत्थं जयेद्ध्रुवम् ॥

महापैशाचिकं घृतम् ।

जटिला पूतना केशी चारटी मर्कटी वचा ।
त्रायमाणा जया वीरा चोरकं कटुरोहिणी ॥
कायस्था शूकरीच्छत्रा सातिच्छत्रा पलङ्कषा ।
महापुरुषदन्ता च वयःस्था नाकुलीद्वयम् ॥
कटम्भरा वृश्चिकाली स्थिरा चैव मृतं घृतम् ।
चातुर्थकज्वरोन्मादग्रहापस्मार नाशनम् ॥

महापैशाचिकं नाम घृतमेतद्यथामृतम्।
मेधाबुद्धिस्मृतिकरं बालानाञ्चाङ्गवर्द्धनम्॥
कृष्णा मरिच सिन्धुत्थ मधु गोपित्त निर्मितम्।
अञ्जनं सर्वभूतोत्थ महोन्माद विनाशनम्॥
निम्बपत्र वचा हिङ्गु सर्पनिर्मोक सर्षपैः।
डाकिन्यादिहरो धूपो भूतोन्मादविनाशनः॥
कार्पासास्थिमयूरपिच्छवृहती निर्माल्यपिन्डीतकै-
स्त्वग्वांशी वृषदंशविट्तुषवचा केशाहि निर्मोककैः।
गोशृङ्गद्विपदन्तहिङ्गु मरिचैस्तुल्यैस्तु धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नः स्मृतः॥

## शिवाघृतम्।

शिवायास्तु सुपूतायाः पञ्चाशत्पललात्पलम्।
पञ्च पञ्च समादाय पञ्चमूलीयुगात्पृथक्॥
कुट्टयित्वा चतुःषष्टि शरावैरम्भसः पचेत्।
ज्ञात्वा पादावशेषेण तेन क्वाथोदकेन च॥
क्षीरस्याष्टाभिराज्यस्य शरावाणां चतुष्टयम्।
यष्टीमधुकमञ्जिष्ठा कुष्ठचन्दन पद्मकैः॥
विभीतकशिवा धात्री वृहतीतगरपादिकैः।
विडङ्गदाडिमी देवदारुदन्ती हरेणुभिः॥
तालीशकेशरश्यामा विशाला शालपर्णिभिः।
प्रियङ्गु मालतीपुष्प काकोली युगलोत्पलैः॥
हरिद्रायुगलानन्ता मेदेला हरिवालुकैः।
सप्तश्रिपर्णिकैरेभिः कार्षै रन्नसमन्वितैः॥

सिद्धमेतद्‌ घृतं यच्च तस्मै निगदितं शृणु ।
देवासुर ग्रहग्रस्ते मानसे राक्षसक्षते ॥
गन्धर्वधर्षिते चैव पितृग्रह निपीड़िते ।
भूतैरप्यभिभूते च पिशाचैश्च परिप्लुते ॥
भुजङ्गम गृहीते च तथा जाङ्गल भक्षिते ॥
यक्षैरपि परिक्षिप्ते भयैरप्यर्द्दिते भ्रमम्‌ ॥
ग्रस्यते सर्ववाते च सर्वापस्मार एव च ।
शोषे सोरःक्षते कासे पीनसे च महात्यये ॥
मेहे मूत्रग्रहे चैव ज्वरे जीर्णे च ग्रस्यते ।
वृष्यं पुनर्नवकरं वन्ध्यानामपि पुत्रदम्‌ ।
श्रीविन्ध्यवासिपादेन सिद्धिदं समुदाहृतम्‌ ॥
शिवाघृतमिदं नाम्ना शिवाबोन्मादिनां सदा ॥
शृगाल वर्हिणोः पाके पुंमांसं तत्र दापयेत्‌ ॥
तैलं नारायणं वापि महानारायणं तथा ।
हितमत्र प्रयोक्तव्य मिति चक्रेण भाषितम्‌ ॥

उन्मादगजाङ्कुशः ।

त्रिदिनं कनक द्रावैर्महाराष्ट्री रसैः पुनः ।
विषमुष्टि द्रवैः सूतं समुत्थाप्यार्कचक्रिकाम्‌ ॥
कृत्वा तप्तां सगन्धास्तां युक्त्या वन्धन माचरेत्‌ ॥
तत्सम' कानकं बीजमभ्रकं गन्धकं विषम्‌ ॥
मर्दयेत्‌ त्रिदिनं सर्वं वल्लमात्रं प्रयोजयेत्‌ ।
दोषोन्मादं द्रुतं हन्ति भूतोन्मादं विशेषतः ॥

भूताङ्कुशो रसः ।

सूतायस्तार ताम्रञ्च मुक्ता चापि समं समम्‌ ।

सूतपादं तथा वज्रं तालं गन्धं मनःशिला ॥
तुल्यं तिलाञ्जनं शुद्धमब्धिफेनं रसाञ्जनम् ।
पञ्चानां लवणानाञ्च प्रतिभागं रसोन्मितम् ॥
भृङ्गराज चित्रा वज्रीदुग्धेनापि विमर्दयेत् ।
दिनान्ते पिण्डितं कृत्वा रुद्धा गजपुटे पचेत् ॥
भूताङ्कुशो रसो नाम नित्यं गुञ्जाद्वयं लिहेत् ।
आर्द्रकस्य रसेनापि सर्वोन्मादे भूतजिद्रसः ।
माहिषञ्च घृतं क्षीरं गुर्वन्नमपि भोजयेत् ।
अभ्यङ्गः कटुतैलेन हितो भूताङ्कुशे रसे ॥

इति भैषज्यरत्नावल्यामुन्मादाधिकारः समाप्तः ।



## अथापस्माराधिकारः ।

वातिकं वस्तिभिः प्रायः पैत्तं प्रायो विरेचनैः ।
श्लैष्मिकं वमनप्रायै रपस्मारमुपाचरेत् ।
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ।
तदेव सर्पिषायुक्तं धूपनं परमं स्मृतम् ॥
नकुलोलूकमार्जार गृध्रकीटाहि काकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥

मनोह्वा तार्क्ष्यजञ्चैव शकृत्पारावतस्य च।
अञ्जनं हन्त्यपस्मारमुन्मादञ्च विशेषतः॥
घ्नन्ति राक्षसी कुष्ठ पूतना केशचोरकैः।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम्॥
जतुकाशकृता तद्वत् दग्धैर्वा वस्तलोमभिः।
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभिः॥
जलूका चर्मचटका।
यः खादेत् क्षीरभक्ताशी माक्षिकेण वचारजः।
अपस्मारं महाघोरं स चिरोत्थं जयेद् ध्रुवम्॥
उद्बन्धितनरग्रीवापाशं दग्ध्वा कृता मसी।
शीताम्बुना समं पीता हन्त्यपस्मारमुद्धतम्॥
प्रयोज्यं तैललशुनं पयसा वा शतावरी।
ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम्॥
स्वल्पपञ्चगव्यं घृतम्।
गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम्।
सिद्धं चातुर्थकोन्माद ग्रहापस्मारनाशनम्॥
बृहत्पञ्चगव्यं घृतम्।
द्वे पञ्चमूले त्रिफलां रजन्यौ कुटजत्वचम्।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम्॥
शम्पाकं फल्गुमूलञ्च पौष्करं सदुरालभम्।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते॥
भार्गीं पाठां त्रिकटुकं त्रिवृता निचुलानि च।
श्रेयसी चाढकी मूर्वा दन्ती भूनिम्बचित्रकौ॥

द्वे शारिवे रोहितकं भूतीकां मदयन्तिकाम्।
क्षिपेत्पिष्टाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत्॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः।
पञ्चगव्यमिदं ख्यातं महत्तदमृतोपमम्॥
अपस्मारे ज्वरे कासे श्वयथावुदरे तथा।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके॥
अलक्ष्मी ग्रहरक्षोघ्नं चातुर्थकविनाशनम्॥

## महाचैतसं घृतम्।

शणास्त्रिवृत्तथैरण्डो दशमूली शतावरी।
रास्ना मागधिका शिग्रुक्वाथ्यं द्विपलिकं भवेत्॥
विदारी मधुकं मेदे द्वे काकोल्यौसिता तथा।
एभिः खर्जूरमृद्वीका भीरु मुञ्जातगोक्षुरैः॥
चैतसस्य घृतस्याङ्गैः पक्तव्यं सर्पिरुत्तमम्।
महाचैतससंज्ञन्तु सर्वापस्मारनाशनम्॥
गरोन्मादप्रतिश्याय तृतीयकचतुर्थकान्।
पापालक्ष्मीं जयेदेतत्सर्वग्रहनिवारकम्॥
श्वासकासहरञ्चैव शुक्रार्त्तवविशोधनम्।
घृतमानं क्वाथविधिरिह चैतसवन्मतः॥
कल्कश्चैतसकल्कोक्तद्रव्यैः सार्द्धश्च पादिकः।
नित्यं मुञ्जातकाप्राप्तौ तालमस्तकमिष्यते॥

## कुष्माण्डघृतम्।

कुष्माण्डस्वरसे सर्पिरष्टादशगुणे पचेत्।
यष्ट्याह्वकल्कं तत्पानमपस्मारविनाशनम्॥

पलङ्कषाद्यं तैलम् ।

पलङ्कषा वचा पथ्या वृश्चिकाल्यर्कसर्षपैः ।
जटिला पूतना केशी लाङ्गली हिङ्गुचोरकैः ॥
लशुनातिविषा चित्रा कुष्ठैर्विड्भिश्च पक्षिणाम्
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥
सिद्धमभ्यञ्जनात्तैलमपस्मारविनाशनम् ।
अभ्यङ्गे सार्षपं तैलं वस्तमूत्रे चतुर्गुणे ।
सिद्धं स्याद्गोशकृन्मूत्रैः स्नानोत्सादनमेव च ॥

चण्डभैरवः ।

मृतसूतार्कलौहञ्च ताम्रं गन्धं मनःशिला ।
रसाञ्जनञ्च तुल्यांशं गोमूत्रे चापि मर्द्दयेत् ॥
तं गोलं द्विगुणं गन्धं लौहपात्रे क्षणं पचेत् ॥
पञ्चगुञ्जामितं भक्ष्यमपस्मारहरं परम् ॥
हिङ्गु सौवर्चलं कुष्ठं गवां मूत्रेण सर्पिषा ।
कर्षमात्रं पिबेच्चानु रसेऽस्मिंश्चण्डभैरवे ॥

इति भैषज्यरत्नावल्यामपस्माराधिकारः समाप्तः ।



## अथ मदात्ययाधिकारः ।



मन्थः खर्जूरमृद्वीका वृक्षाम्लाम्लिकदाडिमैः ।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥

द्रवालोड़िततालजमस्तः खर्जूरादिभिर्युक्तो मस्त इत्यर्थः खर्जूरादीनां द्रवो ग्राह्य इति भानुः ।

मद्यं सौवर्च्चलव्योषयुक्तं किञ्चिज्जलान्वितम् ।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥
मुद्गयूषः सितायुक्तः स्वादुर्वा पैशितो रसः ।
पित्तपानात्यये योज्याः सर्वतश्च क्रिया हिमाः ॥
पानात्यये कफोद्भूते लङ्घनञ्च यथाबलम् ।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः ॥
मर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम् ।
आभिः क्रियाभिः सिद्धाभिः शमं याति मदात्ययः ॥
सच्छर्दिमूर्च्छातिसारं मद्यं पुगफलोद्भवम् ।
सद्यः प्रशमयेत्पीतमात्स्ये वारिशीतलम् ॥
वन्यकरीषघ्राणात् जलपानाल्लवणभक्षणाद्वापि ।
शाम्यति पूगफलमदश्चूर्णकजा शर्करा कवलात् ॥
कुष्माण्डरसः सगुड़ः शमयति मदमाशु मदनकोद्रवजम् ।
धस्तूरजञ्च दुग्धं सशर्करं पानयोगेन ॥
मद्यं पीत्वा यदि ना तत्क्षणमवलेढ़ि शर्करां सघृताम् ।
जातु न मदयति मद्यं तनागपि प्रथितबोध्यमपि ॥

एलाद्यो मोदकः ।

एलां मधुकमग्निञ्च रजन्यौ द्वे फलत्रयम् ।
रक्तशालिं कणां द्राक्षां खर्जूरञ्च तिलं यवम् ॥
विदारीं गोक्षुरं बीजं त्रिवृताञ्च शतावरीम् ।
सञ्चूर्ण्य मोदकं कुर्य्यात्सितया द्विः प्रमाणया ॥

धात्रीरसेनापि पयसा मुद्गयूषेण वा समम् ।
पिबेद्यथाप्रमाणन्तु प्रातर्मत्ताम्बिकां गदी ॥
मद्यपानसमुत्थाना विकारा निखिला अपि ।
सेवनादस्य नश्यन्ति व्याधयोऽन्ये च दारुणाः ॥

## फलत्रिकाद्यचूर्णम् ।

फलत्रिकं त्रिवृच्छ्यामा ईक्षुरं च महौषधम् ।
अजमोदा यमानी च दार्वी लवणपञ्चकम् ॥
शतपुष्पा वचा कुष्ठं त्रिसुगन्धं सवालुकम् ।
सर्वाण्येतानि सञ्चूर्ण्य पिबेच्छीतेन वारिणा ॥
पानात्ययादिरोगाणां हरेऽस्मिन् दीपने ।
संग्रहण्यशोऽर्ध्वंवेऽप्येतदेवौषधं समम् ॥

## महाकल्याणवटी ।

हेमाभ्रञ्च रसं गन्धमयो मौक्तिकमेव च ।
धात्रीरसेन संमर्द्य गुञ्जामात्रां वटीञ्चरेत् ॥
भक्षयेत्प्रातरुत्थाय तिलक्षोद्रमधुप्लुतैः ।
सिताक्षौद्रयुतां वापि नवनीतेन वा सह ॥
मद्यपानजा रोगा वातजाः कफपित्तजाः ।
गदाः सर्वे विनश्यन्ति ध्रुवमस्य निषेवणात् ॥

## बृहद्धात्रीतैलम् ।

धात्रीफलरसप्रस्थं शतमूलीरसं तथा ।
विदारीस्वरसप्रस्थं प्रस्थं वस्तपयः पृथक् ॥
बलायायाश्वगन्धायाः कुलत्थस्य रसस्य च ।

पृथक् क्वाथांश भागश्च तैलमस्थेन संपचेत् ॥
जीवनीयो गणो मांसी मञ्जिष्ठा चेन्द्रवारुणी।
शारिवाद्वयशैलेय शतपुष्पा पुनर्नवाः ॥
चन्दनद्वयनेला त्वक् कमलं कदलीफलम्।
वचागुर्वभया धात्रीत्येतान् कल्कान् पचेत्तथा ॥
मर्दनादस्य तैलस्य गदाः पानात्ययादयः।
पलायन्ते सुदूरं हि सिंहत्रस्ता मृगा इव ॥

।

श्रीखण्डं मरिचं मांसीं रजन्यौ चित्रकं घनम्।
उशीरं तगरं द्राक्षाचन्दनं नागकेशरम् ॥
पाठां धात्रीं कणाव्यं लवङ्गञ्चेलवालुकम्।
लोध्रञ्चार्द्धपलोन्मानं जलद्रोणद्वये क्षिपेत् ॥
द्राक्षां यष्टिपलां तत्र गुडस्य च तुलात्रयम्।
धातकीं द्वादशपलाञ्चैकत्र परियोजयेत्।
मासं संस्थाप्य मृद्भाण्डे वस्त्रपूतं रसं नयेत्।
पाययेन्मात्रया वैद्यो वयोवह्न्याद्यपेक्षया ॥
पानात्ययं परमदं पानाजीर्णञ्च नाशयेत्।
पानविभ्रममत्युग्रं श्रीखण्डासव आशु च ॥

इति भैषज्यरत्नावल्यां मदात्ययाधिकारः समाप्तः।



# अथ नेत्ररोगाधिकारः ।

लङ्घनालेपनस्वेदसिराव्यधविरेचनैः ।
उपाचरेदभिष्यन्दानञ्जनाश्च्योतनादिभिः ॥

श्रीवासातिविषालोध्रैश्चूर्णितैरल्पसैन्धवैः ॥
अव्यक्तेऽक्षिगदे कार्य्यं पोतल्या गुण्ठनं बहिः ॥

अक्षिकुक्षिभवा रोगाः प्रतिश्याय व्रणज्वराः
पञ्चैते पञ्चरात्रेण प्रशमं यान्ति लङ्घनात् ॥
स्वेदः प्रलेपस्तिक्ताज्यं सेको दिनचतुष्टयम् ।
लङ्घनश्चाक्षिरोगाणामामानां पाचनानि षट् ।
अञ्जनं पूरणं क्वाथपानमामे न शस्यते ॥
धात्रीफलनिर्य्यासो नवलक् कोपं निहन्ति पूरणतः
सक्षौद्रसैन्धवो वापि शिग्रुपल्लवरसः सेकः ॥
दार्व्वी रसाञ्जनं वापि स्तन्ययुक्तं प्रपूरणम् ।
निहन्ति शीघ्रं दाहाश्रु वेदनाः स्यन्दसम्भवाः ॥
करवीरतरुणकिसलयच्छेदोद्भवसलिलसम्पूर्णम् ।
नयनयुगं भवति दृढं सहसैव तत्समाल्कपितम् ॥
शिखरिजमूलं ताम्रभाजनके स्तोकसैन्धवोन्मिश्रम् ॥
मस्तुनि घृष्टमरणात् हरति च नवलोचनात्कोपम् ॥

सैन्धवदारुहरिद्रा गैरिकपथ्या रसाञ्जनैः पिष्टैः
दत्वा बहिः प्रलेपो भवत्यशेषाक्षिरोगहरः ॥
तथा सावरकं लोध्रं घृतभृष्टं विडालकः ॥
क्वाथ्या हरीतकी क्वचद् घृतभ्रष्टा विडालकः ।

आलक्योऽक्ष्णोर्बहिर्लेपो बिडालक उदाहृतः॥

गिरिमृच्चन्दनमागरखटिकाम्बुयोजितबहिर्लेपः।
कुरुते वचया मिश्रो लोचनमगदं नसन्देहः॥
भूम्यामलकी घृष्टा सैन्धवयुक्ता वारि योजिता ताम्रे।
याता घनत्वमक्ष्णोर्जयति बहिर्लेपतः पीड़ाम्॥

सामान्याभिष्यन्दे।

भूम्यामलकीमूलं ताम्रभाजने काञ्जिकसैन्धवयोगेन घृष्टं घनीभूतं चक्षुषि लेपात्पीड़ां हरति।

आश्च्योतनं मारुतजे क्वाथो बिल्वादिभिर्हितः।
कोष्णः सैरण्ड बृहती तर्कारी मधुशिग्रुभिः॥
एरण्ड पल्लवे मूलेत्वचि वाजपयः शृतम्।
कण्टकार्य्याश्च मूलेषु सुखोष्णं सेचने हितम्॥
सम्यक्कोऽक्षिगदे कार्य्यं मञ्जनादिक मिष्यते।
प्रशस्तवर्त्मता चक्ष्णोः संरम्भाश्रुप्रशान्तता॥
मन्दवेदनता कण्डूः पक्वाक्षिगद लक्षणम्॥
अञ्जनादि क्रियाकार्य्ये निखिलेनाभिधास्यते॥
बृहतेरण्ड मूलत्वक्शिग्रोर्मूलं ससैन्धवम्।
अजाक्षीरेण पिष्टं स्याद्वर्त्तिर्वाताक्षिरोगनुत्॥
हरिद्रे मधुकं द्राक्षां देवदारु च पेषयेत्।
आजेन पयसा श्रेष्ठ मभिष्यन्दे तदञ्जनम्॥

पूर्ववद्वर्त्तिः।

गैरिकं सैन्धवं कृष्णा तगरञ्च यथोत्तरम्।
पिष्टं द्विरंशतोऽद्भिर्वा गुड़िकाञ्जनमिष्यते॥
प्रपौण्डरीकयष्ट्याह्वनिशामलक पद्मकैः।

शीतैर्मधुसमायुक्तैः सेकः पित्ताक्षिरोगनुत् ॥
द्राक्षा मधुक मञ्जिष्ठा जीवनीयैः शृतं पयः।
प्रातराश्चोतनं शस्तं शोथशूलाक्षिरोगिणाम् ॥

निम्बस्य पत्रैः परिलिप्य लोध्रं
स्वेद्याग्निना चूर्णं मथापि कल्कम्।
आश्चोतनं मानुष दुग्ध युक्तं
पित्तास्रवातापहमक्षि युक्तम् ॥

कफजे लङ्घनं स्वेदं नस्यं तिक्तान्न भोजनम्।
तीक्ष्णैः प्रधमनं कुर्य्यात्तीक्ष्णैश्चैवोपनाहनम् ॥

फणिज्झकास्फोत कपित्थ विल्व-
पत्तुर पीलूसुरसार्ज भङ्गैः।
स्वेदं विदध्यादथवा प्रलेपं
वर्हिष्ठ शुण्ठीसुरदारु कुष्ठैः ॥

शुण्ठीनिम्बदलैः पिण्डः सुखोष्णो स्वल्प सैन्धवैः।
धार्य्यश्चक्षुषि संक्षेपात् शोथ कण्डूव्यथापहः ॥
वल्कलं पारिजातस्य तैल काञ्जिक सैन्धवम्।
कफोद्भूताक्षि शूलघ्नं तरुणं कुलिशं यथा ॥

ससैन्धवं लोध्रमथाज्य भृष्टं
सौवीर पिष्टं सितवस्त्र बद्धम्।
आश्चोतनं तन्नयनस्य कार्य्यं
कण्डूञ्च दाहञ्च रुजाञ्च हन्यात् ॥

स्निग्धैरुष्णैश्च वातोत्थः पित्तजो मृदुशीतलैः।
तीक्ष्णैरुष्णाश्च विशदैः प्रशाम्यति कफात्मकः ॥
तीक्ष्णोष्ण मृदुशीतानां व्यत्यासात्सान्निपातिकः

तिरीट त्रिफला यष्टी शर्करा भद्रमुस्तकैः।
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्द नाशनः॥
कशेरुमधुकानाञ्च चूर्णमम्बर संवृतम्।
न्यस्तमप्स्वान्तरीक्षासु हितमाश्च्योतनं भवेत्॥
दार्व्वी पटोलं मधुकं सनिम्बं पद्मकोत्पलम्।
प्रपौण्डरीकं चैतानि पचेत्तोये चतुर्गुणे॥
विपाच्य पादशेषन्तु तद्भुवैः कुड़वम्पचेत्।
शीतीभूते तत्र मधु दद्यात्पादांशिकं ततः॥
रसक्रियैषा दाहाश्रु रागशोथरुजापहा॥
तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम्।
अक्ष्णोरपि समन्ताच्च पातनन्तु जलौकसः॥
पित्ताभिष्यन्द शमनो विधिश्चाप्युपपादितः॥
शिग्रु पल्लव निर्य्यासः सुघृष्टस्ताम्रसंपुटे।
घृतेन धूपितो हन्ति शोथ घर्षाश्रु वेदनाः॥
पिष्टैर्निम्बस्य पत्रैरति विमलतरैर्जाति सिन्धूत्थ मिश्रै-
र्न्नागर्भं दधाना पटुतर गुड़िका पिष्ट लोध्रेन भृष्टा।
तूर्णं सौवीरसान्द्रे रतिररभिष भिर्वेष्टिता सा समन्तात्
चक्षुःकोपप्रशान्तिं चिरमुद दृशां भ्राम्यमाणा करोति॥

विल्वाञ्जनम्।

विल्वपत्र रसः पूतः सैन्धवाज्य समन्वितः।
शुल्वे वराटिका घृष्टो धूपितो गोमयाग्निना॥
पयसालोड़ितश्चाक्ष्णोः पूरणाच्छोथ शूलनुत्।
अभिष्यन्देऽधिमन्थे च स्रावे रक्ते च शस्यते॥
विल्वपत्र रसं सार्द्धं निघृष्टं ताम्रभाजने।

सिन्धूत्थ कटुतैलाक्तं कुर्य्यादेव रसादिषु ॥
सलवण कटुतैलं काञ्जिकं कांस्यभाजे
घनितमुपल घृष्टं धूपितं गोमयाग्नौ ।
सपवन कफ कोपं हाम दुग्धावसिक्तं
जयति नयन शूलं स्राव शोथं सरागम् ॥
तरुस्य विद्यामलक रसः सर्व्वाक्षि रोगनुत् ।
पुराणं सर्व्वथा सर्पिः सर्व्वनेत्रामयापहम् ॥
अयमेव विधिः सर्व्वो मन्यादिष्वपि शस्यते ।
अशान्तौ सर्व्वथा मन्ये भ्रुवोरुपरि दाहयेत् ॥
जलौकः पातनं शस्तं नेत्रपाके विरेचनम् ।
शिरावेधं प्रकुर्व्वीत सेकलेपांश्च शुक्रवत् ॥
विभीतक शिवा धात्री पटोलारिष्ट वासकैः ।
क्वाथो गुग्गुलुना पेयः शोथ पाकाक्षि शूलहा ॥
पिल्लञ्च सव्रणं शुक्रं रागादींश्चापि नाशयेत् ॥

षडङ्गघृतगुग्गुलुः ।

एतैश्चापि घृतं पक्वं रोगांस्तांश्च व्यपोहति ॥

वासकाद्यः ।

अटरूषाभया निम्ब धात्री मुस्ताक्ष कूलकैः ।
रक्तस्रावं कफं हन्ति चक्षुष्यं वासकादिकम् ॥
क्वाथस्य पानं चक्षुषि सेकश्च इति द्वयाः ।

हहद्वासादिः ।

वासा घनं निम्ब पटोल पत्रं
तिक्तामृता चन्दन वत्सकत्वक् ।

कलिङ्गदार्वी दहनानि शुण्ठी
भूनिम्ब धात्र्यावभया विभीतम्॥
श्यामा घनः क्वाथ मथाष्टभागं
पिवेदिमं पूर्वदिने कषायम्।
तैमिर्य्यं कण्डू पटलार्बुदञ्च
शुक्रं तथा सव्रणमव्रणञ्च।
निहन्ति सर्व्वान्नयनामयांश्च
भृगूपदिष्टं नयनामयेषु॥

पथ्यास्तिस्रो विभीतक्यः षड्धात्रो द्वादशैव तु।
प्रस्थार्द्धं सलिले क्वाथ मष्टभागावशेषितम्॥
पीत्वाभिष्यन्द मास्रावं रागञ्च तिमिरं जयेत्।
संरम्भ राग शूलाश्रु नाशनं दृक् प्रसादनम्॥
नेत्रे त्वभिहिते कुर्य्याच्छीतमाश्च्योतनादिकम्।

दृष्टेः प्रसाद जननं विधिमाशु कुर्य्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः।
स्वेदाग्निधूम भयशोक रुजाभितापै-
रभ्याहृतानपि तथैव भिषक् चिकित्सेत्॥

आगन्तु दोषं प्रसमीक्ष्य कार्य्यं
वैद्योषधा स्वेदनमादितश्च।
आश्च्योतनं स्त्रीपयसा च सद्यो
यच्चापि पित्त क्षतजापहं स्यात्।
सूर्य्योपरागानलविद्युतांश्च
विलोकनेनोपहतेक्षणस्य।

सन्तर्पणं स्निग्ध हिमादि कार्य्यं
साय निषेव्याश्चिपका प्रयोगाः ॥

निम्बाब्द त्रिफला दार्वी सिता मधुक संयुतम्।
अभिघाताक्षि शूलघ्नं नारीक्षीरेण पूरणम् ॥
उत्कटाङ्कुरजस्तद्वत् स्वरसो नेत्र पूरणे ॥
आजं घृतं क्षीरपात्रं मधूकञ्चोत्पलानि च।
जीवकर्षभकौ चापि पिष्टा सर्पिर्विपाचयेत् ॥
सर्वनेत्राभिघातेषु सर्पिरेतत्प्रशस्यते ॥

सैन्धवं दारु शुण्ठी च मातुलुङ्ग रसो घृतम्।
स्तन्योदकाभ्यां कर्त्तव्यं शुक्रपाके तदञ्जनम् ॥

वाताभिष्यन्दवच्चापि वाते मारुत पर्य्यये।
पूर्वभक्तं हितं सर्पिः क्षीरं वाप्यथ भोजने ॥
वृक्षादन्यां कपित्थे च पञ्चमूले महत्यपि।
सक्षीरं कर्कट रसे सिद्धञ्चापि पिबेद् घृतम् ।
अभिष्यन्द मधीमन्थं रक्तोत्थ मथवार्जुनम् ।
शिरोत्पातं शिराहर्षं मन्यांश्चास्रभवान् गदान् ॥
स्निग्धस्याज्येन कोष्णेन शिरावेधैः शमं नयेत् ॥

असाध्य पित्त शान्त्यर्थं कुर्य्याल्लेपान् सुशीतलान्।
तैलकं त्रैफलं सर्पि जीर्णं वा केवलं हितम् ॥
शिरावेधं विना कार्य्यः पित्तस्यन्दहरो विधिः ॥

सर्पिः क्षौद्राञ्जनञ्च स्याच्छिरोत्पातस्य भेषजम्।
तद्वत्सैन्धव कासीसं स्तन्य पिष्टञ्च पूजितम् ॥
शिराहर्षेऽञ्जनं कुर्य्यात् फाणितं मधुसंयुतम्।
मधुना तार्क्ष्यशैलं वा कासीसं वा समाक्षिकम् ।

अथ शुक्ल प्रशान्त्यर्थं षडङ्ग गुग्गुलुं पिवेत् ।
करञ्जय फल मज्जा तिन्दुकं वप्य मेव च ।
कांस्ये निघृष्टं स्तन्येन घृत शुक्लार्त्ति रागजित् ॥

अथ शुक्लहरीवर्त्तिः ।

चन्दनं गैरिकं लाक्षा मालतीकलिकाः समाः ।
व्रणशुक्लहरी वर्त्तिः शोणितस्य प्रसादनी ॥
शिरया वाहयेद्रक्तं जलौकाभिश्च लोचनात् ।
अश्वमज्जाञ्जनं सायं स्तन्येन शुक्लनाशनम् ॥
एकं वा पुण्डरीकञ्च छागक्षीरावसेचितम् ।
रागाश्रु वेदनां हन्यात् शतपाकाद्ययाजकाः ॥
तुत्थकं वारिणायुक्तं शुक्लं हन्त्यक्षि पूरणात् ॥
समुद्रफेन दध्याण्ड त्वक् सिन्धुत्थैः समांशिकैः ।
शिग्रुवीज युतैर्वर्त्तिः शुक्लघ्नी शिग्रु वारिणा ॥

धात्रीफलं निम्ब कपित्थ पत्रं
यष्ट्याह्व लोध्रं खदिरं तिलाश्च ।
क्वाथः सुशीतो नयने निषिक्तः
सर्वप्रकारं विनिहन्ति शुक्लम् ॥

जातीपुन्नाग पत्रेण परिभावित वारिणा ।
श्यामाक्वाथाम्बुना वाथ सेचनं कुसुमापहम् ॥
दध्याण्डत्वक् शिलाशङ्ख काच चन्दन गैरिकैः ।
तुल्यैरञ्जन योगोऽयं पुष्पार्मादि विलेखनः ॥
शिरीष वीज मरिच पिप्पली सैन्धवैरपि ।
शुक्ले प्रघर्षणं कार्य्यमथवा सैन्धवेन च ॥

बहुशः पलाशकुसुमस्वरसैः परिभाविता जयत्यचिरात्
नक्ताह्वबीजवर्त्तिः कुसुमचयं हन्तु चिरजमपि ॥
सैन्धव त्रिफला कृष्णा कटुका शङ्खनाभयः।
सताम्र रजसो वर्त्तिः पिष्टा शुक्रविनाशिनी ॥
चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम्।
क्रमवृद्ध मिदं चूर्णं शुक्रादि विलेखनम् ॥

दन्तवर्त्तिः।

दन्तैर्दन्ति वराहोष्ट्रगवाश्वाजखरोद्भवैः।
सशङ्ख मौक्तिकाम्भोधिफेनैर्मरिचपादिकैः ॥
क्षतशुक्रमपि व्याधिं दन्तवर्त्तिं निवर्त्तयेत्।
शङ्खस्य भागाश्चत्वारस्ततोऽर्द्धेन मनःशिला।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन सैन्धवम् ॥
एतच्चूर्णाञ्जनं श्रेष्ठं शुक्रयोस्तिमिरेषु च।
एषाच्चूर्णं मधुना विमर्द्याञ्जनम्।
ताप्यं मधुकसारो वा बीजमक्षस्य सैन्धवम्।
मधुनाञ्जनयोगाः स्युश्चत्वारः शुक्रशान्तये ॥
वटक्षीरेण संयुक्तं श्लक्ष्णं कर्पूरजं रजः।
क्षिप्रमञ्जनतो हन्ति शुक्रञ्चापि घनोन्नतम् ॥
तालस्य नारिकेलस्य तथैवारुष्करस्य च।
करीरस्य तु वंशानां कृत्वा क्षारं परिस्रुतम् ॥
करभास्थिकृतं चूर्णं क्षारेण परिभावितम्।
सप्तकृत्वोऽष्टकृत्वो वा श्लक्ष्णं चूर्णन्तु कारयेत् ॥
एतच्छुक्रेषु साध्येषु कृष्णीकरणमुत्तमम् ॥

व्रणानि शुक्राण्यसाध्यानि तेषां प्रसममञ्जनम्॥

## पटोलाद्यं घृतम्।

पटोलं कटुका दार्वी निम्बं वासा फलत्रिकम्।
दुरालभां पर्पटकं त्रायन्तीञ्च पलोन्मिताम्॥
प्रस्थ मामलकानाञ्च क्वाथयेन्नल्वणेऽम्भसि।
पादशेषे रसे तस्मिन् घृत प्रस्थं विपाचयेत्॥
कल्कै र्भूनिम्ब कुटज मुस्त यष्ट्याह्व चन्दनैः।
सपिप्पलीकै स्तत्सिद्धं चक्षुष्यं शुक्रयोर्हितम्॥
घ्राणकर्णाक्षि वर्त्म त्व मुखरोग व्रणापहम्।
कामला कुष्ठवीसर्प गण्डमालापहं परम्॥

## कृष्णाद्यन्तैलम्।

कृष्णा विडङ्ग मधुयष्टिक सिन्धुजन्म-
विश्वौषधैः पयसा सिद्धमिदं छगल्याः।
तैलं नृणां तिमिर शुक्रशिरोऽक्षि शूल-
पाकात्ययान् जयति नस्य विधौ प्रयुक्तम्॥
अजकां पार्श्वतो विद्वा सूच्या विस्राव्य चोदकम्।
व्रणं गोमय चूर्णेन पूरयेत्सर्पिषा सह॥
सैन्धवं वाजिपादञ्च गोरोचन समन्वितम्।
शेलुत्वग्रस संयुक्तं पूरणं चाजकापहम्॥

## शशकाद्यं घृतम्।

शशकस्य शिरःकल्के शेषाङ्गक्वथिते जले।
घृतस्य कुडवं पक्वं पूरणाच्चाजकापहम्॥

अमृताद्यं घृतम्।

अमृतकस्य कषाये तु सर्पिषः कुडवम्पचेत्।
यष्टि प्रपौण्डरीकस्य कल्केन पयसा समम्॥
कृष्णा पुरयास्कन्धक घृत पाकात्तथाञ्जकाः।
हन्ति भ्रूशङ्खशूलञ्च दाहरागं विशेषतः॥

त्रिफलाघृतमधुयवाः पादाभ्यङ्गाः शतावरी मुद्गाः
चक्षुष्यः पंचपादगैः कथितो भिषग्भिरयम्॥
लिह्यात्सदा वा त्रिफलां सुचूर्णितां
घृतप्रगाढ़ां तिमिरेऽथ पित्तजे।
समीरजे तैलयुतां कफात्मके
मधु प्रगाढ़ां विदधीत युक्तितः॥
कल्कः क्वाथोऽथवा चूर्णं त्रिफलाया निषेवितम्॥
मधुना सर्पिषा वापि समस्त तिमिरापहम्॥
यस्त्रैफलच्चूर्णं मपथ्य वर्ज्जी
सायं समश्नाति हविर्मधुभ्याम्॥
स मुच्यते नेत्रगतैर्विकारै-
र्भृत्यैर्यथा क्षीणधनो मनुष्यः॥
सघृतं वा वराक्वाथं शीलयेत्तिमिरामयी।
जाता रोगा विनश्यन्ति न भवन्ति कदाचन।
त्रिफलायाः कषायेण प्रातर्नयनधावनात्॥
जलगण्डूषैः प्रातर्वदनधृतैश्चाभिः प्रपूर्य मुखरन्ध्रम्।
निर्दयसुखमपि चपयति तिमिराधि मा सद्यः

भुक्त्वा पाथितलं दृष्ट्वा चक्षुषोर्दीयते यदि।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति॥

सुखावतीवर्त्तिः।

कतकस्य फलं शङ्खं त्र्यूषणं सैन्धवं सिता।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला॥
कुक्कुटाण्ड कपालानि वर्त्तिरेषा व्यपोहति।
तिमिरं पटलं काचमर्म शुक्रं तथैव च॥
कण्डूक्लेदार्बुदं हन्ति मलं चाशु सुखावती॥

चन्द्रोदयावर्त्तिः।

हरीतकी वचा कुष्ठं पिप्पली मरिचानि च।
विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला॥
सर्वमेतत्समाहृत्य च्छागक्षीरेण पेषयेत्।
नाशयेत्तिमिरं कण्डूं पटलान्यर्बुदानि च॥
अधिकानि च मांसानि यश्च रात्रौ न पश्यति।
अपि द्विवार्षिकं पुष्पं मासेनैकेन नश्यति॥
वर्त्तिश्चन्द्रोदयानाम नृणां दृष्टि प्रसादनी॥

वृहच्चन्द्रोदयावर्त्तिः।

रसाञ्जनमथैला च कुङ्कुमं समनःशिलम्।
शङ्खनाभिः शिग्रुबीजं शर्करा चाच तत्समौ॥
एषा चन्द्रोदया नाम वर्त्तिश्चक्षुः प्रसादनी।
हन्त्याशुपिच्चटं कण्डूं च तिमिरञ्चापकर्षति॥

हरीतक्यादिवर्त्तिः।

हरीतकी हरिद्रा च पिप्पल्यो लवणानि च।

कण्डूतिमिरजिद्दर्त्तिर्नकृचिअतिकृन्यते ॥

कुमारिकावर्त्तिः ।

अशीति स्तिलपुष्पाणि षष्टिः पिप्पलीतण्डुलाः ।
जातीपुष्पाणि पञ्चाशन्मरिचानि च षोडश ॥
एषा कुमारिका वर्त्तिर्गतं चक्षुर्निवर्त्तयेत् ॥

दृष्टिप्रदावर्त्ति ।

त्रिफलाकुक्कुटाण्डत्वक् कांसीसमयसो रजः ।
नीलोत्पलं विडङ्गानि फेनञ्च सरितांपतेः ॥
आजेन पयसा पिष्टा भावयेत्ताम्रभाजने ।
सप्तरात्र स्थितं भूयः पिष्टं क्षीरेण वर्त्तयेत् ॥
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः ॥

चन्दनाद्या वर्त्तिः ।

चन्दन त्रिफला पूग पलाशतरुशोणितैः ।
जलपिष्टैरियं वर्त्तिं श्रेष्ठ तिमिरापहा ॥

त्रूषणाद्या वर्त्तिः ।

त्रूषण त्रिफला वल्क सैन्धवानि मनःशिला ।
क्लेदोपदेहकण्डूघ्नी वर्त्तिः शस्ता कफापहा ॥

नयनसुखा वर्त्तिः ।

एकगुणा मागधिका द्विगुणा च हरीतकी सलिलपिष्टा
वर्त्तिरियं नयनसुखा तिमिरार्म्म पटल काचाश्रुहरी ॥

चन्द्रप्रभा वर्त्तिः ।

अञ्जनं श्वेतमरिचं पिप्पली मधुयष्टिका ।

विभीतकस्य मज्जन्तु मज्जनाभिर्मनःशिला ॥
एतानि समभागानि अजाक्षीरेण पेषयेत् ।
छायाशुष्कां कृतां वर्त्तिं नेत्रेषु च प्रयोजयेत् ॥
अर्बुदं पटलं काचं तिमिरं रक्तराजिकाम् ।
अधिमांसार्म्मणी चैव यश्च रात्रौ न पश्यति ॥
वर्त्तिश्चन्द्रप्रभा नाम जातान्ध्यमपि नाशयेत् ॥

### पञ्चशतिका वर्त्तिः ।

नीलोत्पलपलशतं सुक्ष्मशतं
यवशतञ्च निस्तुषं ग्राह्यम्
मालत्याः कुसुमशतं पिप्पलीतण्डुलशतञ्च ।
पञ्चशतैर्वर्त्तिर्विहिताञ्जनं
कुर्य्यात्सर्वात्मके नयने
तिमिराशुक्राचपटलेन नास्त्यपरः साधनोपायः ॥
व्योषोत्पलाभयाकुष्ठतार्च्चैर्वर्त्तिः कृता हरेत् ।
अर्वुदं पटलं काचं तिमिराश्मांश्रु निःस्रुतिम् ॥

### नागार्जुनाञ्जनम्

त्रिफला व्योष सिन्धूत्थ यष्टितुत्थ रसाञ्जनम् ।
प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश ॥
द्रव्याण्येतानि सञ्चूर्ण्य वर्त्तिः कार्य्या न भोऽम्बुना ।
नागार्जुनेन लिखिता तन्त्रे पाटलिपुत्रके ॥
नाशिनो तिमिराणाञ्च पटलानां विशेषतः ।
सद्यः प्रकोपं स्तन्येन स्त्रिया विजयते ध्रुवम् ॥

किंशुक स्वरसेनाथपैन्य पुष्पञ्च रक्तताम् ।
अञ्जनाल्लोध्रतोयेन श्रासन्न तिमिरं जयेत् ॥
चिरं संक्षालिते नेत्रे वस्त्र मूत्रे च संयुता ।
उन्मीलयत्यन्धकच्छे च प्रसादं चाधिगच्छति ॥
निशाद्वयाभयामांसी कुष्ठ कृष्णा विचूर्णिता ।
सर्वनेत्रामयान् हन्यादेतल्लोगतमञ्जनम् ॥
पिप्पलीं सतगरोत्पल पत्रमात्रां
वर्त्तयेत्समधुकां सहरिद्राम् ।
एतया घृतमञ्जयितव्यं यः सुपर्ण सममिच्छति चक्षुः
व्योषायश्चूर्णं सिन्धूत्थ त्रिफलाञ्जन संयुता ॥
त्रिफला जल संपिष्टा कोकिला तिमिरापहा ॥
त्रीणि कटूनि करञ्जफलानि
द्वे च निशे सहसैन्धवकञ्च ।
विल्वतरोर्वरुणस्य च मूलं
वारिचरं द्रुमं प्रवदन्ति ॥
हन्ति तमस्तिमिरं पटलञ्च
पिच्चट शुक्र मथार्व्वुदकञ्च ।
अञ्जनकं जनरञ्जनकञ्च
दृष्टं न विनश्यति वर्षशतेऽपि ॥
नीलोत्पलं विडङ्गानिपिप्पली रक्तचन्दनम् ॥
अञ्जनं सैन्धवञ्चैव सद्य स्तिमिर नाशनम् ॥
पत्र गैरिक कर्पूर यष्टि नीलोत्पलाञ्जनम् ।
नागकेशर संयुक्त मक्षेपतिमिरापहम् ॥
शङ्खस्य भागाश्चत्वार स्ततोऽर्द्धेन मनःशिला ।

मनःशिलार्द्धं मरिचं मरिचार्द्धेन पिप्पली ॥
वारिणा तिमिरं हन्ति अर्बुदं हन्ति मस्तुना ।
पिष्टं मधुना हन्ति क्षौद्रेण तदुत्तमम् ॥
हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ।
भद्रमुस्तं विडङ्गानि सप्तमं विश्वभेषजम् ॥
गोमूत्रेण गुड़ी कार्य्या छागमूत्रेण चाञ्जनात् ।
ज्वरांश्च निखिलान् हन्ति भूतावेशं तथैव च ॥
वारिणा तिमिरं हन्ति मधुना पटलं तथा ।
नक्तान्ध्यं भृङ्गराजेन नारीस्तन्येन पुष्पकम् ॥
शिशिरेण परिस्रावमर्बुदं पिष्टं तथा ॥

कज्जलम्।

भूमौ निघृष्टयाङ्गुल्याञ्जनं संशमनं तयोः।
तिमिरकाचकर्म्महरं धूमिकायाश्च नाशनम् ॥
त्रिफला भृङ्ग महौषध मध्वाज्य च्छागपयसि गोमूत्रे ।
नागं सप्तनिषिक्तं करोति गरुड़ोपमं चक्षुः ॥
त्रिफल सलिल धारी भृङ्गराज द्रवे च
[illegible]षि च विषकल्के नीर आज्ये मधूग्रे।
[illegible]निदिन मथ तप्तं सप्तधा सीसमेकं
[illegible]हितमथ पश्चात्कारयेत्तच्छलाकाम् ॥
[illegible]कदयकाले साञ्जना व्यञ्जना वा
[illegible] समेतानप्युपेक्षिता रोगान्
[illegible]मित सित समुत्थान् सन्धि मर्माभिजातान्
ह[illegible]ति नयनरोगान् सेव्यमाना शलाका ॥

चिञ्चापत्ररसं निधाय विमले लौहस्थरे भाजने
मूलं तत्र निघृष्य सैन्धव युतं गोर्म्मं विशोष्यातपे।
तच्चूर्णं विमलाञ्जनेन सहितं नेत्रामये शस्यते
काचार्म्मार्ज्जुन-पिचटे सतिमिरे स्रावञ्च निर्नाशयेत्
चिञ्चा यष्टियोगे सैन्धव ममलं विचूर्ण्य तेनाचि।
सममञ्जयतस्तिमिरं गच्छति वर्षादसाध्यमपि॥
दद्यादुशीर निर्य्यूहे चूर्णितं कणसैन्धवम्।
तच्छृते सघृतं तच्च भूयः चौद्रं चिपेद्‌घने॥
शीते चास्मिन् हितमिदं सर्व्वजे तिमिरेऽञ्जनम्॥
धात्रीरसाञ्जन चौद्र सर्पिर्भिस्तु रसक्रिया।
पित्तानिलाचि रोगघ्नी तैमिर्य्यं पटलापहा॥
शृङ्गवेरं भृङ्गराजं यष्टि तैलेन मिश्रितम्।
नस्यमेतेन दातव्यं महापटल नाशनम्॥
लिङ्गनाशे कफोद्भूते यथावद्विधिपूर्व्वकम्।
विद्धा दैवकृते च्छिद्रे नेत्रं स्तन्येन पुरयेत्॥
ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनैः।
नयनं सर्पिषाभ्यज्य वस्त्रपट्टेन वेष्टयेत्॥
ततो गृहे निराबाधे शयीतोत्तान एव च।
उद्गार कास चवथुष्ठीवनोत्कम्पनानि च॥
तत्कालं नाचरेदूर्द्ध्वं यन्त्रणा स्नेहपीतवत्।
त्र्यहात्त्र्यहाद्धावयेत्तत्कषायैरनिलापहैः॥
वायोर्भयात्त्र्यहादूर्द्ध्वं स्वेदयेदक्षि पूर्व्ववत्।
दशरात्रन्तु संयम्य हितं दृष्टिप्रसादनम्॥
पश्चात् कर्म्म च सेवेत लघ्वन्नञ्चापि मात्रया।

रागश्चोषोऽवर्त्म शोथो वृद्धं ढैकरायता ॥
अधिमन्थादयश्चान्ये रोगाः स्युर्दुष्टवेधजाः ।
अहिताचारतो वापि यथास्वं तानुपाचरेत् ॥
रुजायामक्षिरागे वा भूयो योगान्निबोध मे ॥
कल्किता सघृता दूर्वा यवगैरिकशारिवा ।
मुखालेपे प्रयोक्तव्या रुजारागोपशान्तये ॥
पयस्या शारिवापत्रमञ्जिष्ठा मधुकैरपि ।
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते ॥
वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे ।
काकोल्यादिप्रतीवापं तद्युञ्ज्यात्सर्वकर्मसु ॥
शाम्यत्येवं नचेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत् ।
ततः शिरां दहेद्वापि मतिमान् कीर्त्तितं यथा ॥
दृष्टेरथ प्रसादार्थमञ्जनं शृणु मे शुभे ।
मेषशृङ्गस्य पुष्पाणि शिरीष धवयोरपि ॥
मालत्याश्चापि तुल्यानि मुक्ता वैदूर्य्यमेव च ।
अजाक्षीरेण सम्पिष्य ताम्रे सप्ताह भावयेत् ॥
प्रविधार्य्य तु तद्वर्त्तीर्योजयेदञ्जने भिषक् ।
स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिला ॥
मरिचानि च तां वर्त्तिं कारयेच्चापि पूर्ववत् ॥
रसाञ्जनं घृतं क्षौद्रं तालीशं स्वर्णगैरिकम् ।
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥
नलिनोत्पलकिञ्जल्कं गोशकृद्रससंयुतम् ॥
गुड़िकाञ्जनमेतत्स्याद्दिनरात्र्यन्धयोर्हितम् ॥

नदीज शङ्खत्रिकटूण्यथाञ्जनं
मनःशिला द्वे च निशे यवां शकृत् ।
सचन्दनेयं गुड़िकाथ वाञ्जने
प्रशस्यते रात्रिदिनेष्वपश्यताम् ॥
कणाच्छागयकृन्मध्ये पक्वा तद्रसपेषिता ।
अचिराद्धन्ति नक्तान्ध्यं तद्वत्सक्षौद्रमूषणम् ॥

त्रिफलाद्यं घृतम् ।

त्रिफला क्वाथकल्काभ्यां सपयस्कं शृतं घृतम् ।
तिमिराण्यचिराद्धन्ति पीतमेतन्निशामुखे ॥

महात्रिफलाद्यं घृतम् ।

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरजस्य च ।
वृषस्य च रसप्रस्थं शतावर्य्याश्च तत्समम् ॥
अजाक्षीरं गुडूच्याश्च आमलक्यारसं तथा ।
प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत् ॥
कल्कः कणा सिता द्राक्षा त्रिफला नीलमुत्पलम् ।
मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका ॥
तत्साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत् ।
ऊर्द्धपानमधःपानं मध्ये पानञ्च शस्यते ॥
यावन्तो नेत्ररोगास्तान् पानादेवापकर्षति ।
रक्तजे रक्तदुष्टे च रक्ते चातिस्रुतेऽपि च ॥
नक्तान्ध्ये तिमिरे काचे नीलिका पटलार्बुदे ।
अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे च दारुणे ॥
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च ।

नष्टदृष्टिं मन्ददृष्टिञ्च काचकामप्रदूषिताम् ।
स्रवतो वातपित्ताभ्यां सकण्डूमसकृद्‌दृशः ।
गृध्रदृष्टिकरं सद्यो बलवर्णाग्निवर्धनम् ॥
सर्वनेत्रामयं हन्यात्त्रिफलाद्यं महद्‌घृतम् ॥

त्रिफलाघृतम् ।

त्रिफला त्र्यूषणं द्राक्षा मधुकं कटुरोहिणी ।
प्रपौण्डरीकं सूक्ष्मैला विडङ्गं नागकेशरम् ॥
नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम् ।
कार्षिकैः पयसातुल्यं त्रिगुणं त्रिफलारसम् ॥
घृतप्रस्थं पचेदेतत्सर्वनेत्ररुजापहम् ।
तिमिरं दोषमास्रावं कामलां काचमर्बुदम् ॥
विसर्पं प्रदरं कण्डूं रक्तं श्वयथुमेव च ।
खालित्यं पलितञ्चैव केशानां पतनं तथा ॥
विषमज्वरमर्माणि शुक्रञ्चाशु व्यपोहति ।
अन्ये च बहवो रोगा नेत्रजा ये च वर्त्मजाः ॥
तान् सर्वान् नाशयत्याशु भास्करस्तिमिरं यथा ।
न चैतस्मात्परं किञ्चिद्‌दृषिभिः काश्यपादिभिः ॥
दृष्टिप्रसादनं दृष्टं यथा स्यात् त्रैफलं घृतम् ॥

त्रिफलाद्यं घृतम् ।

फलत्रिकं भीरुकषाय सिद्धं
कल्केन यष्टीमधुकस्य युक्तम् ।
सर्पिः समं क्षौद्रचतुर्थभागं
हन्यात्त्रिदोषं तिमिरं प्रवृद्धम् ॥

### भृङ्गराजतैलम्।

भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च॥
तैलस्य कुडवं पक्वं सद्यो दृष्टिं प्रसादयेत्।
नस्याद्वलीपलितघ्नं मासेनैतन्न संशयः॥
निराकरोति नक्तान्ध्यं सगोमयरसा कणा।
यथा रतेन रमणी रमणस्य महाबलम्॥

### गोमयतैलम्।

गवां शकृत्क्वाथविपक्वमुत्तमं
हितञ्च तैलं तिमिरेषु नस्यतः॥
घृतं हितं केवलमेव पैत्तिके
तथाक्षतैलं पवनात्मकेषु यो:॥

### नृपवल्लभतैलं घृतञ्च।

जीवकर्षभकौ मेदा द्राक्षांशुमती निदिग्धिका बृहती
मधुकं बला विडङ्गं मञ्जिष्ठा शर्करा रास्ना॥
नीलोत्पलं श्वदंष्ट्रा प्रपौण्डरीकं पुनर्नवा लवणम्।
पिप्पल्यः सर्वेषां भागैरक्षांशिकैः पिष्टैः॥
तैलं वा यदि वा सर्पिर्दत्त्वा क्षीरञ्चतुर्गुणं पक्वम्।
आत्रेयनिर्मितमिदन्तैलं नृपवल्लभं शिवम्।
तिमिरं पटलं काचं नक्तान्ध्यं चार्बुदं दिवान्ध्यञ्च।
श्वेतञ्च लिङ्गनाशं नाशयति च नीलिकां व्यङ्गम्॥
मुखनासादौर्गन्ध्यं पलितञ्चाकालजं हनुस्तम्भम्।
श्वासं कासं शोषं हिक्कां तथात्ययं नेत्रे॥

मुखजैश्चमर्दभेदं रोगं वाहुग्रहं शिरःस्तम्भम्।
रोगानथोर्द्ध्वजत्रोः सर्वानचिरेण नाशयति॥
पताव्यं कुर्वन्तेवं नस्यार्थं नृपवल्लभम्।
भस्यांशैः शाणिकैः कल्कैरन्यैर्भृङ्गादितैलवत्॥

अजितन्तैलम्।

तैलस्य पचेत्कुडवं मधुकस्य पलेन कल्कपिष्टेन।
आमलकरसप्रस्थं क्षीरप्रस्थेन संयुतं कृत्वा॥
अजितं नाम्ना तैलन्तिमिरं हन्यान्निमिप्रोक्तम्।
विमलां कुरुते दृष्टिं नष्टामप्यानयेत्तद्वत्॥

दृष्टिजेषु।

अर्म्म तु च्छेदनीयं स्यात्कृष्णप्राप्तं भवेद्यदा।
वड़िशविद्धं मनुष्यस्य त्रिभागस्थान्त वर्जयेत्॥
पिप्पली त्रिफला लाचा लोहचूर्णं ससैन्धवम्।
भृङ्गराजरसे पिष्टं गुड़िकाञ्जनमिष्यते॥
अर्म्म सतिमिरं काचं कण्डूं शुक्रं तथार्जुनम्।
अञ्जनस्नेत्ररोगांश्च हन्यान्निरवशेषतः॥

पुष्पाख्यतार्क्ष्यजसितोदधिफेन शङ्ख-
सिन्धूत्थगैरिकशिला मरिचैः समांशैः।
पिष्टैस्तु माक्षिकरसेन रसक्रियेयं
हन्त्यर्मकाचतिमिरार्जुनवर्त्म रोगान्॥
कौम्भस्य सर्पिषः पानैर्विरेकालेपसेचनैः।
त्राद्धशीतैः प्रशमयेत् शुक्तिकामञ्जनैस्ततः॥
प्रवालमुक्ता वैदूर्य्यं शङ्खस्फाटिकचन्दनम्।

सुवर्णरजतक्षौद्रमञ्जनं कुक्तिकापहम् ॥
शङ्खः क्षौद्रेण संयुक्तः कतकः सैन्धवेन वा ।
सितयार्णवफेनो वा पृथगञ्जनमर्जुने ।
पैत्तं विधिमशेषेण कुर्य्यादर्जुनशान्तये ॥
वैदेहीं श्वेतमरिचं सैन्धवं नागरं समम् ।
मातुलुङ्गरसैः पिष्टमञ्जनं पिष्टकापहम् ॥
शुक्लजेषु ।
भिन्त्वोपनाहं कफजं पिप्पली मधुसैन्धवैः ।
विलिखेन्मण्डलाग्रेण प्रच्छयित्वा समन्ततः ॥
पथ्याक्षधात्री फलमध्यबीजै-
स्त्रिद्व्येकभागैर्विदधीत वर्त्तिम् ।
तयाञ्जयेदश्रुमति प्रगाढ-
मक्ष्णोर्हरेत्कोपमति प्रवृद्धम् ॥
स्रावेषु त्रिफलाक्वाथं यथादोषं प्रयोजयेत् ।
क्षौद्रेणाज्येन पिप्पल्याभिश्रं विध्येत् शिरान्तथा ॥
त्रिफलातुत्थकासीससैन्धवैः सरसाञ्जनैः ।
रसक्रिया क्रिमिग्रन्थौ भिन्ने स्यात्प्रतिसारणम् ॥
सन्धिजेषु ।

## सप्तामृतलौहम् ।

त्रिफलारज आयसचूर्णं
सह यष्टिमधुकं समांशयुक्तम्
मधुना सर्पिषा दिनान्ते
पुरुषो निष्परिहारमाददीत ॥

तिमिरं पलरक्तराजि कण्डू
चपदाभ्यामु दृतीयदाहयुक्ताम् ॥
पटलं सह काचपिल्लक
शमयत्येव निषेवितः प्रयोगः ॥
न च केवलमेव लोचनानां
विहितो रोगनिवर्हणाय पुंसाम्।
दशनश्रवणोत्थकण्ठजानां
प्रशमे हेतुरयं महागदानाम् ॥
पलितानि विनाशयेत्तथाग्निं
चिरनष्टं कुरुते रविप्रचण्डम्।
दयिता भुजपञ्जरोपगूढः
स्फुटचन्द्राभरणासु यामिनीषु ॥
सुरतानि चिरं निषेवतेऽसौ
पुरुषो योगवरं निषेवमाणः।
मुखेन नीलोत्पलचारुगन्धिना
शिरोरुहैरञ्जनमेचकप्रभैः।
भवेच्च गृध्रस्य समानलोचनः
सुखैर्नरो वर्षशतञ्च जीवति ॥

मधुकाद्यं लौहम्।

मधुकं त्रिफलाचूर्णं लौहचूर्णं तथैव च।
भक्षयेन्मधुसर्पिर्भ्यामक्षिरोगप्रशान्तये ॥

नयनचन्द्रलौहम्।

त्रिकटु त्रिफला शृङ्गी शटी रास्ना महौषधम्।

द्राक्षा नीलोत्पलञ्चैव काकोली मधुयष्टिका ॥
वाट्यालकं लेप्रदञ्च मण्डूकपर्ण्यं तथा ।
लौहाभ्रयोः पलं दत्त्वा भावयेदौषधैरिमैः ॥
त्रिफलाक्वाथतैलेन भृङ्गराजरसेन च ।
भावयित्वा वटीकार्य्या वदराखिमिता शुभा ॥
यावन्तो नेत्ररोगाश्च तान्निहन्ति न संशयः ॥
इति सर्वचूर्णसमं लौहाभ्रम्

इति भैषज्यरत्नावल्यां नेत्ररोगाधिकारः समाप्तः ।



## अथ नासारोगाधिकारः ।

सर्वेषु पीनसेष्वादौ निर्वातागारगो भवेत् ।
स्नेहस्वेदप्रधमनं धूमगण्डूषधारणम् ॥
वासो गुरूष्णं शिरसः सुघनं परिवेष्टनम् ।
लघ्वम्लं लवणं स्निग्धमुष्णाभोजनमद्रवम् ॥
पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी ।
सर्पिर्गुडः षडङ्गश्च यूषः पीनसशान्तये ॥
व्योषाद्यचूर्णम् ।
व्योषचित्रकतालीश तिन्तिडीकाम्लवेतसम् ।
सचव्याजाजितुल्यांशमेला त्वक् पत्रपादिकम् ॥

व्योषाग्निचूर्णमिदं पुराणगुड़संयुतम् ।
पीनसश्वासकासघ्नं रुचिपदम् ॥

पाठादितैलम् ।

पाठा द्विरजनीमूर्वा पिप्पली जातिपल्लवैः ।
दन्त्या च तैलं संसिद्धं नस्यं सम्यक् पीनसे ॥

व्याघ्रीतैलम् ।

व्याघ्री दन्ती वचा शिग्रु सुरसा व्योषसैन्धवैः ।
पाचितं नावनं तैलं पूतिनासा गदापहम् ॥
त्रिकटु कविड़ङ्गसैन्धव वृहतीफलशिग्रु दन्तीभिः ।
तैलं गोजलसिद्धं नस्यं स्यात् पूतिनस्यस्य ॥
कलिङ्गहिङ्गुमरिचलाक्षा सुरसकटफलैः ।
व्योषोग्राशिग्रु जन्तुघ्नैरवपीड़ः प्रशस्यते ॥
तैरेव मूत्रसंयुक्तैः कटुतैलं विपाचयेत् ।
अपीनसे पूतिनस्ये शमनं परिकीर्त्तितम् ॥

नासापाके पित्तहरं विधानं

कार्य्यं सर्वं बाह्यमाभ्यन्तरञ्च ।
हृत्वा रक्तं क्षीरिवृक्षत्वचश्च
योज्याः सेके सर्पिषश्च प्रदेहाः ॥
पूयस्रे रक्तपित्तघ्नाः कषाया नावनानि च ॥
शुण्ठीकृष्णा कणा बिल्वद्राक्षा कल्ककषायवत् ।
साधितं तैलमाज्यं वा नस्यं क्षवथुरुक् प्रणुत् ॥
दीप्ते रोगे पैत्तिके पैत्तिकन्तु
कार्य्यं कुर्य्यान्मधुरं शीतलञ्च ।

नासादाहे च ययाबं प्रधानं
स्निग्धा धूमाधूर्ध्वलिङ्ग नित्यम् ॥
वातिके तु प्रतिश्याये पिवेत्सर्पिर्यथाबलम् ॥
पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ॥
पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ।
परिषेकान् प्रदेहांश्च कुर्य्यादपि च शीतलान् ॥
कफजे सर्पिषा स्निग्धतिलमाषविपक्कया ।
यवाग्वा वामयित्वा वा कफघ्नं क्रममाचरेत् ॥
दार्वीङ्गुदी निकुम्भैश्च किणिह्याः स्वरसेन च ।
वर्त्तयोऽस्य कृता योज्या धूमपाने यथाविधि ॥
अथवा सघृतान् शक्तून् कृत्वामलकसम्पुटे ।
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥
यः पिवति शयनकाले शयनारूढ़ः सुशीतलं भुरि ।
सलिलं पीनसयुक्तोमुच्यते तेन रोगेण ॥
पुटपक्कं जयापत्रं सिन्धुतैलसमायुतम् ।
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ॥
सोषणं गुड़संयुक्तं स्निग्धदध्यम्लभोजनम् ।
नवप्रतिश्याय हरं विशेषात् कफपाचनम् ॥
प्रतिश्याये नवे शस्तो यूषश्चिञ्चाच्छदोद्भवः ।
ततः पक्कं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः ॥
शिरसोऽभ्यञ्जनस्वेद नस्य कट्वम्लभोजनैः ।
वमनैर्घृतपानैश्च तान्यथास्वमुपाचरेत् ॥
भक्षयेत्त भक्तमादौ [illegible]।

सञ्जयति सर्वसमुत्थं चिरजातञ्च प्रतिश्यायम् ॥
पिप्पल्यः शिग्रुबीजानि विडङ्गं मरिचानि च।
अवपीड़ः प्रशस्तोऽयं प्रतिश्याय निवारणः ॥
समुत्रपिष्टाश्चोद्दिष्टाः क्रियाः क्रिमिषु योजयेत्।
धावनार्थं क्रिमिघ्नानि भेषजानि च बुद्धिमान् ॥
शेषाणान्तु विकाराणां यथास्वं स्याच्चिकित्सितम् ॥

करवीराद्यन्तैलम्।

रक्तकरवीरपुष्पं जात्यास्तथाशनमल्लिकाश्च।
एतैः समस्तैस्तैलं नासार्शोनाशनं पक्वम् ॥

शिखरितैलम्।

गृहधूमकणा दारु क्षारनक्ताह्वसैन्धवैः।
सिद्धं शिखरिबीजैश्च तैलं नासार्शसां हितम् ॥

चित्रकतैलम्।

चित्रकचविका दीप्यकनिदिग्धिका करञ्जबीजलवणार्कैः।
गोमूत्रयुतैः सिद्धं तैलं नासार्शसां शान्त्यै ॥

चित्रकहरीतकी।

चित्रकस्यामलक्याश्च गुडूच्या दशमूलजम्।
शतं शतं रसं दत्त्वा पथ्याचूर्णाढ़कं गुड़ात् ॥
शतं पचेद् घनीभूते पलद्वादशकं क्षिपेत्।
व्योषत्रिजातयोः क्षारात्पलार्द्धमपरेऽहनि।
प्रस्थार्द्धं मधुनो दत्त्वा यथाग्न्यद्यादयन्नरः।

हृद्येऽग्नेः पथ्यं कासं पीनसं दुस्तरं क्रिमीन् ॥
गुल्मोदावर्त्तदुर्नाम श्वासान् हन्ति सुदारुणान् ।

इति भैषज्यरत्नावल्यां नासारोगाधिकारः समाप्तः



## अथ कर्णरोगाधिकारः ।

कपित्थमातुलुङ्गाम्बु शृङ्गवेररसैः शुभैः ।
सुखोष्णैः पूरयेत् कर्णं कर्णशूलोपशान्तये ॥
शृङ्गवेरञ्च मधु च सैन्धवं तैलमेव च ।
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥
लशुनार्द्रकशिग्रूणां स्वरसो मूलकस्य च ।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥
समुद्रफेनचूर्णेन युक्त्या वाप्यवचूर्णयेत् ।
आर्द्रकसूर्य्यावर्त्तकशोभाञ्जनमूलकस्वरसाः ।
मधुतैलसैन्धवयुताः पृथगुक्ताः कर्णशूलहराः ॥
शोभाञ्जनस्य निर्य्यासस्तिलतैलेन संयुतः ।
व्यक्तोष्णः पूरणः कर्णे कर्णशूलोपशान्तये ।
अष्टानामपि मूत्राणां मूत्रेणान्यतमेन वै ।
कोष्णेन पूरयेत् कर्णं कर्णशूलोपशान्तये ॥
अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम् ।

तैलाक्तमङ्गारपूर्णं निदध्यात् श्रवणोपरि ॥
यत्तैलं स्रवते तस्मात् कलशादङ्गारतापितात् ।
तत्प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥
अर्कपत्रपुटे दग्ध स्नुहीपत्रोद्भवो रसः ।
कदुष्णः पूरणादेव कर्णशूलनिवारणः ॥

दीपिकातैलम् ।

महतः पञ्चमूलस्य काष्ठान्यष्टाङ्गुलानि च ।
क्षौमेनावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥
यत्तैलं स्रवते तेभ्यः सुखोष्णं तत्प्रयोजयेत् ।
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ॥
एवं कुर्य्याद्भद्रकाष्ठे कुष्ठे काष्टे च सारले ।
मतिमान्दीपिकातैलं कर्णशूल निवारणम् ॥

अर्कस्य पत्रं परिणामपीत-
माज्येन लिप्तं शिखिनाग्नितप्तम् ।
आपीड्य [illegible]यं श्रवणे निषिक्तं
निहन्ति शूलं बहुवेदनञ्च ॥
तीव्रशूलातुरे कर्णे सशब्दे क्लेदवाहिनि ।
वस्तमूत्रं क्षिपेत्कोष्णं सैन्धवेनावचूर्णितम् ॥
हिङ्गुतुम्बुरुशुण्ठीभिः साध्यन्तैलन्तु सार्षपम् ।
कर्णशूले प्रधानन्तु पूरणं हितमुच्यते ॥

क्षारतैलम् ।

बालमूलकशुण्ठीनां क्षारो हिङ्गु सनागरम् ।
शतपुष्पा वचा कुष्ठन्दारु शिग्रुरसाञ्जनम् ॥

सौवर्चलं यवक्षारं स्वर्जिकोद्भिदसैन्धवम् ।
भूर्जग्रन्थिविडं मुस्तं मधुशुक्तचतुर्गुणम् ॥
मातुलुङ्गरसश्चैव कदल्या रस एव च ।
तैलमेभिर्विपक्तव्यं कर्णशूलहरम्परम् ॥
बाधिर्य्यं कर्णनादश्च पूयास्रावश्च दारुणः ।
पूरणादस्य तैलस्य क्रिमयः कर्णसंश्रिताः ॥
क्षिप्रं विनाशं गच्छन्ति कृष्णात्रेयस्य शासनात् ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ।
मधुप्रधानं शुक्तन्तु मधुशुक्तं तथापरम् ।
जम्बीरस्य फलरसं पिप्पलीग्रन्थिसंयुतम् ॥
मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् ।
मासेन तज्जातरसं मधुशुक्तमुदाहृतम् ॥
कर्णनादे कर्णक्ष्वेडे कटुतैलेन पूरणम् ।
नादबाधिर्य्ययोः कुर्य्याद्वातशूलोक्तमौषधम् ।

अपामार्गक्षारतैलम् ।

मार्गक्षारजलेन च तत्कृतकल्केन साधितन्तैलम् ।
अपहरति कर्णनादं बाधिर्य्यञ्चापि पूरणतः ॥

स्वर्जिकाद्यं तैलम् ।

स्वर्जिका मूलकं शुष्कं हिङ्गु कृष्णा महौषधम् ।
शतपुष्पा च तैलेन पक्वं शुक्तं चतुर्गुणम् ॥
प्रणादशूलबाधिर्य्यं स्रावञ्चाशु व्यपोहति ॥

दशमूली तैलम् ।

दशमूलीकषायेण तैलप्रस्थं विपाचयेत् ।

एतत्कल्कं प्रशस्तं वाधिर्य्ये परमौषधम्॥

## बिल्वतैलम्।

फलं बिल्वस्य मूत्रेण पिष्ट्वा तैलं विपाचयेत्।
साजक्षीरं तद्धितं स्याद्वाधिर्य्ये कर्णपूरणे॥
एष एव विधिः कार्य्यः प्रशस्ते नस्यपूर्वकः।
गुड़नागरतोयेन नस्यं स्यादुभयोरपि॥

## बिल्वतैलम् तन्त्रान्तरे।

बिल्वगर्भं पचेत्तैलं गोमूत्राजपयोऽन्वितम्।
वाधिर्य्यं पूरयेत्तेन कर्णास्रकफवातजित्॥

## लशुनाद्यं तैलम्

लशुनामलकं तालं पिष्ट्वा तैले चतुर्गुणे।
तैलाच्चतुर्गुणं क्षीरं पाच्यं तैलावशेषकम्।
तत्तैलं पूरयेत् कर्णे वाधिर्य्यं परिणाशयेत्॥
वातोक्तं माषतैलादि वाधिर्य्यादौ तु योजयेत्।
वर्जयेन्मैथुनं क्रोधं रुचं वाधिर्य्यपीड़ितः॥
चूर्णं पञ्चकषायाणां कपित्थ रस संयुतम्।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह॥
मालतीदलरसं मधुना पूरितमथवा गवां मूत्रैः।
दूरेण विभज्यति वै श्रवणयुगं पूतिरोगेण।
हरितालं सगोमूत्रं पूरणं पूतिकर्णजित्॥
सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः।
मधुना संयुतः साधु कर्णस्रावे प्रशस्यते॥

जम्ब्वाम्रपत्रं तरुणं समांशं
कपित्थकार्पासफलञ्च चार्द्रम् ।
कृत्वा रसन्तं मधुना विमिश्रं
स्रावापहं तं प्रवदन्ति तज्ज्ञाः ॥

जम्ब्वाद्यं तैलम् ।

एतैः श्रृतं निम्बकरञ्जतैलं
ससार्षपं स्रावहरं प्रदिष्टम् ॥
पुटपाकविधिस्विन्नो हस्तिविड्जात कन्दजः ।
रसः सतैलसिन्धूत्थः कर्णस्रावहरः परः ॥

शम्बूकतैलम् ।

शम्बूकस्य च मांसेन कटुतैलं विपाचितम् ।
तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति ॥

निशातैलम् ।

निशागन्धपलं पक्वं कटु तैलं पलाष्टकम् ।
धुस्तूरपत्रजरसे कर्णनाड़ीजिदुत्तमम् ॥

कुष्ठाद्यं तैलम् ।

कुष्ठ हिङ्गु वचा दारु शताह्वा विश्वसैन्धवैः ।
पुतिकर्णापहं तैलं वस्तमूत्रेण साधितम् ॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ समाचरेत् ॥
ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥
कर्णपाकस्य भैषज्यं कुर्य्यात् क्षतविसर्पवत् ।
विविध कफहा सर्वैः कर्णकण्डूं व्यपोहति ॥

क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च।
शोधयेत् कर्णगूथन्तु भिषक् सम्यक् शलाकया॥
निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुड़ः।
पूरणात् पूतिकर्णस्य शमनो मधुसंयुतः॥
जातीपत्र रसे तैलं विपक्वं पूतिकर्णजित्।
वरुणार्कं कपित्थाम्र जम्बूपल्लव साधितम्॥
पूतिकर्णापहं तैलं जातीपत्ररसोऽथवा॥
सूर्य्यावर्त्तकस्य रसं सिन्धुवार रसं तथा।
लाङ्गलीमूलज रसं त्र्यूषणेनावचूर्णितम्॥
पूरयेत् क्रिमिकर्णन्तु जन्तूनां नाशनं परम्॥
क्रिमिकर्ण विनाशाय क्रिमिघ्नं योजयेद् विधिम्।
वार्त्ताकु धूमश्च हितः सर्षपस्नेह एव च।
हलीसूर्य्यावर्त्तव्योषस्वरसेनाति पूरिते।
कर्णे पतन्ति सहसा सर्वास्तु क्रिमिजातयः॥
दृष्टं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्र संयुतम्॥
प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके॥

## इन्दुवटी।

शिलाजत्वभ्रलौहानि समानि हेम पादिकम्।
काकमाचीवरीधात्रीपञ्चमांमभसा पृथक्।
भावयित्वा वटीः कुर्य्याद् द्विगुञ्जाफलमानतः।
धात्री तोयेन संमर्द्य प्रातः प्रातः प्रयोजयेत्॥
कर्णनादादयः सर्वे गदा वातोद्भवाश्च ये।
प्रमेहा विंशतिश्चापि नश्यन्त्ये तन्निषेवणात्॥

सुधाविश्राणनादिन्दुर्जगतां तापहारका।
तथैवेन्दुवटी नाम रोगतापनिबर्हणी॥

## सारिवादिवटी।

सारिवां मधुकं कुष्ठं चातुर्जातं प्रियङ्गुकम्।
नीलोत्पलं गुडूचीञ्च देवपुष्पं फलत्रिकम्॥
अभ्रं सर्व्वसमञ्चाभ्रसमं लौहं विभावयेत्।
केशराजाम्बुना पार्थक्वाथेन यवजाम्भसा॥
काकमाचीरसेनापि गुञ्जामूलद्रवेण च।
षड्गुञ्जाप्रमिताः पश्चाद्विदध्याद्वटिका भिषक्॥
धारोष्णेनापि पयसा शतमूलीरसेन वा।
एकैकां योजयेत् प्रातः क्षीरखण्डसलिलेन वा॥
निखिलान् कर्णजान् रोगान् प्रमेहानपि विंशतिम्।
रक्तपित्तं क्षयं श्वासं क्लैव्यं जीर्णज्वरं तथा॥
अपस्मारमदार्शांसि हृद्रोगञ्च मदात्ययम्।
सारिवादिवटी हन्यात् स्त्रीगदानखिलानपि॥

## दार्व्यादितैलम्।

दार्व्याश्च दशमूलस्य क्वाथेन मधुकस्य च।
कदल्याः स्वरसेनापि प्रक्षेप्तैलं तिलोद्भवम्॥
कल्कैः कुष्ठवचाशिग्रुशतपुष्पारसाञ्जनैः।
देवदारु यवक्षार स्वर्जिकाविड़सैन्धवैः॥
कर्णशूलं कर्णनादं बाधिर्य्यं पूतिकर्णकम्।
कर्णक्लेदं जन्तुकर्णं कर्णपाकञ्च दारुणम्॥

कर्णं कण्डूप्रतीनाहौ शोथान् कर्णसमुद्भवान्।
तैलं दार्व्यादिकं हन्ति कर्णस्रावं तथैव च॥

इति भैषज्यरत्नावल्यां कर्णरोगाधिकारः समाप्तः।



## अथ मुखरोगाधिकारः।

ओष्ठप्रकोपे वातोत्थे साल्वणेनोपनाहयेत्।
मस्तिष्के चैव नस्येन तैलं वातहरैः शृतम्॥
सेकोऽभ्यङ्गः स्नेहपानं रसायनमिहेष्यते।
श्रीवेष्टकं सर्जरसं गुग्गुलुं सुरदारु च।
यष्टीमधुक चूर्णं च विदध्यात् प्रतिसारणम्॥

वेधं शिराणां वमनं विरेकं
तिक्तस्य पानन्त्वथ भोजनञ्च।
शीतान् प्रलेपान् परिषेचनञ्च
पित्तोपसृष्टेष्वधरेषु कुर्य्यात्॥

पित्तरक्ताभिभूतोत्थान् जलौकाभिरुपाचरेत्।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः॥
शिरोविरेचनं धूमः स्वेदः कवड़धारणम्।
हृतरक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके।

त्रिकटुः सर्जिका चारः चारश्च यवशूकजः ।
चौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ।
प्रियङ्गु त्रिफला लोध्रं सचौद्रं प्रतिसारणम् ॥
हितञ्च त्रिफला चूर्णं मधुयुक्तं प्रलेपनम् ॥
सर्षप कनकगैरिक धान्य घृत तैल सिन्धु संयुक्तम् ।
सिद्धं सिक्थक मधरेस्फुटितोत्फुटिते व्रणं हरति ॥
शीतादे हृतरक्ते तु तोये नागर सर्षपान् ।
निःक्वाथ्य त्रिफलाञ्चापि कुर्य्याद् गण्डूष धारणम् ॥
प्रियङ्गवश्च मुस्ता च त्रिफला च प्रलेपनम् ।
कुष्ठं दार्वी लोध्रमब्दं समङ्गा
ततः पाठा तेजनी पीतिका च ।
चूर्णं शस्तं घर्षणं तद्द्विजानां
रक्तास्रावं हन्ति कण्डूं रुजाश्च ॥
भद्रमुस्ताभयाव्योषविड़ङ्गारिष्टपल्लवैः ।
गोमूत्र पिष्टैर्गुड़िकां छायाशुष्कां प्रकल्पयेत् ॥
तां विधाय मुखे सुप्याच्चलदन्तातुरो नरः ।
नातः परतरं किञ्चिच्चलदन्तस्य भेषजम् ॥
करञ्ज करवीरार्क मालती ककुभाशनाः ।
शस्यन्ते दन्तपवने ये चाप्येवं विधा द्रुमाः ॥
चलदन्तस्थिरकरं कार्य्यं वकुलचर्वणम् ।
चार्त्तगल दल क्वाथ गण्डूषो दन्तचालनुत् ॥
दन्तचाले हितं श्रेष्ठं तिलोशा चर्वणं सदा ॥
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम् ।

सपञ्च लवण क्षारं सक्षौद्रं प्रतिसारणम्।
दन्तानां तोदहर्षे च वातघ्नाः कवला हिताः॥
माक्षिकं पिप्पली सर्पिर्मिश्रितं धारयेन्मुखे।
दन्तशूलहरं प्रोक्तं प्रधानमिदमौषधम्॥
विस्राविते दन्तवेष्टे व्रणस्तु प्रतिसारयेत्।
लोध्र पत्तङ्ग मधुक लाक्षा चूर्णैर्मधूत्तरैः॥
गण्डूषे क्षीरिणो योज्याः सक्षौद्र घृतशर्कराः॥
शौषिरे हृतरक्ते तु लोध्रमुस्तारसाञ्जनैः।
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः॥
क्रियां परिदरे कुर्य्यात् शीतादोक्तां विचक्षणः॥
संशोध्योभयतः कायं शिरश्चोपकुशे ततः।
काकोदुम्बरिका गोजी पत्रैर्विस्रावयेदसृक्॥
क्षौद्र युक्तैश्च लवणैः सव्योषैः प्रतिसारयेत्।
पिप्पल्यः सर्षपाः श्वेता नागरं नैचुलं फलम्॥
सुखोदकेन संमथ्य कवडं तस्य योजयेत्॥
शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत्।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत्।
क्रिमिदन्तकवच्चात्र विधिः कार्य्यो विजानता॥
छित्त्वाधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत्।
पाठा वचा तेजवती सर्जिका यावशूकजैः॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः॥
पटोलनिम्बत्रिफलाकषायश्चात्र धावने।
शिरोविरेचनञ्च हितो धूमो वैरेचनश्च यः॥

नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत् ।
यं दन्तमधिजायेत नाडी तं दन्तमुद्धरेत् ॥
छित्त्वा मांसानि शस्त्रेण यदि नोपरिगो भवेत् ।
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ॥
गतिर्हि नश्यति ह्यस्थि दशने समुपेक्षिते ।
तस्मात्समूलं दशनमाहरेद्भग्नमस्थि च ॥
उद्धृते तूत्तरे दन्ते शोणितं संप्रसिच्यते ।
रक्तातियोगात् पूर्वोक्ता घोरा रोगा भवन्ति च ॥
चलमप्युत्तरं दन्तमतो नोपहरेद्भिषक् ॥
कषायं जातीमदन कटुक स्वादुकण्टकैः ।
लोध्र खदिर मञ्जिष्ठा यष्ट्याह्वैश्चापि कल्कितम् ॥
तैलं [illegible] ॥
सुखोष्णाः स्नेह कवलाः ससर्पिस्त्रैवृतस्य वा ।
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥
स्नैहिकश्च हितो धूमो नस्यं स्नैहिकमेव च ॥
अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक् ।
लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ॥
दन्तहर्षक्रियाश्चापि कुर्य्यान्निरवशेषतः ।
कपालिका कृच्छ्रसाध्या तत्राप्येषा क्रिया हिता ॥
जयेद्विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम् ।
तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्व्यादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ।
हिङ्गु कोष्णन्तु मतिमान् क्रिमिदन्तेषु दापयेत् ॥
बृहती भूकदम्ब पञ्चाङ्गुल कण्टकारिका क्वाथः ।

गण्डूषस्तैलयुतः सिद्धः स्नेहकैर्व्वातघ्नकः ।
शीतीदाय स्नेहपाकं दुग्धीयात् मुखमेककम् ।
सचर्व्यं दशनविष्टं चूर्णमिश्रिपातनं प्राहुः ॥
चलमुद्धृत्य वा स्थानं दहेत्तु शुषिरस्य वा ।
ततो विदारीयष्ट्याह्वशृङ्गाटककशेरुभिः ॥
तैलं दशगुणक्षीरं सिद्धं नस्ये तु पूजितम् ।
हनुमोक्षे समुद्दिष्टा कार्य्या चार्द्दितवत् क्रिया ॥
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ।
तथाति कठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत् ॥
ओष्ठकोपे त्वनिलजे यदुक्तं प्राक् चिकित्सितम् ।
कण्टकेष्वनिलोत्थेषु तत्कार्य्यं भिषजा खलु ॥
पित्तजेषु विघृष्टेषु निःसृते दुष्टशोणिते ।
प्रतिसारणगण्डूषनस्यञ्च मधुरं हितम् ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये ।
पिप्पल्यादिर्मधुयुतः कार्य्यस्तु प्रतिसारणः ॥
गृह्णीयात् कवलञ्चापि गौरसर्षपसैन्धवैः ।
पटोल निम्ब वार्त्ताकु क्षार यूषैश्च भोजयेत् ॥
जिह्वाजाड्यं माणकभस्म लवण तैल घर्षणं हन्ति ।
ईषेत् कुक्षीरात्तं जम्बीराद्यम्ल चर्व्वणं वापि ॥
कर्कटाङ्घ्रि क्षीरपक्व घृताभ्यङ्गेन नश्यति ।
दन्तशब्दः कर्कटाङ्घ्रिलेपाद्वा दन्तयोजितात् ॥
चरणौ कर्कटस्यापि गोक्षीरेण विपाचयेत् ।
घनताञ्च गते तस्मिन् रात्रौ चरणलेपनात् ॥
दन्तानां कड़मड़ी हन्ति सत्यं सत्यञ्च पार्वति ॥

कृष्णवर्णाश्वपुच्छस्य सप्तकेशेन वेणिका।
तां बद्धा च गले दन्तकण्डमतीं हन्ति मानवः॥
उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत्।
शिरोविरेक गण्डुष धूमैश्चैनामुपाचरेत्॥
व्योषक्षाराभया वह्नि चूर्णं मेतत्प्रघर्षणम्।
उपजिह्वा प्रशान्त्यर्थं मेभिस्तैलं विपाचयेत्॥
छित्त्वा घर्षेद्गले शुण्ठीं व्योषोग्रा क्षौद्र सिन्धुजैः
कुष्ठोषण वचा सिन्धुकणा पाठाश्वैरपि॥
सक्षौद्रै भिषजा कार्य्यं गलशुण्ठ्याः प्रघर्षणम्॥
उपनासाव्यधो हन्ति गलशुण्ठीं विशेषतः।
गलशुण्ठीं हरेत्तद्वच्छे फालीमूलचर्वणम्॥
वचामतिविषां पाठां रास्नां कटुकरोहिणीम्।
निःक्वाथ्य पिचुमर्दञ्च कवलं तत्र योजयेत्॥
क्षारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हितः॥
तुण्डिकेय्यध्रुवे कूर्मे सङ्घाते तालुपुप्पुटे।
एष एव विधिः कार्य्यो विशेषः शस्त्रकर्म्म च॥
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम्।
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः॥
साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणम्।
छर्द्दनं धूमपानञ्च गण्डूषो नस्तकर्म्म च॥
वातिकीन्तु हृतरक्तां लवणैः प्रतिसारयेत्।
सुखोष्णांस्तैलकवलान् धारयेच्चाप्यभीक्ष्णशः॥
प... ...रा क्षौद्रैः पैत्तिकीं प्रतिसारयेत्।
द्रा... परूषक क्वाथो हितश्च कवलग्रहे॥

आगारधूम कट्कैः कफजां प्रतिसारयेत्।
छित्वा विड्‌ङ्ग दन्तीषु सिद्धं तैलं ससैन्धवम् ॥
नस्तःकर्मणि दातव्यं कवड़श्च कफोच्छ्रये।
पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम् ॥
विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत्।
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ॥
उपजिह्विकवच्चापि साधयेदधिजिह्विकाम्।
उन्नाम्य जिह्वामाकृष्य वड़िशेनाधिजिह्वकम् ॥
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादिभिः।
विस्राव्य शोणितं स्वल्पं ततः शोधनमाचरेत्॥
अमर्मस्थं सुपक्वञ्च भेदयेद्गलविद्रधिम् ॥
कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णैर्नस्यादि कर्म्म च।
क्वाथपानन्तु दार्व्वीत्वङ् निम्बद्राक्षाकलिङ्गतः ॥
हरीतकीकषायो वा पेयो माक्षिकसंयुतः।
कटुकातिविषा दारु पाठा मुस्त कलिङ्गकाः ॥
गोमूत्र क्वथिताः पेयाः कण्ठरोगविनाशनाः ॥

## दन्तरोगाशनिचूर्णम्।

जातीपत्र पुनर्नवा तिल कणा कौरण्ट मुस्ता वचाः
शुण्ठीदीप्य हरीतकी च सहृतं चूर्णं मुखे धारयेत्।
वातघ्नं क्रिमिकर्णशूलदहनं सर्वामय ध्वंसनम्।
दौर्गन्ध्यादि समस्त दोष हरणं दन्तस्य रोगाशनिः ॥

## कालकचूर्णम्।

गृहधूमो यवक्षारः पाठा व्योषं रसाञ्जनम्।

तेजोह्वा त्रिफला लोहं चित्रकश्चेति चूर्णितम् ॥
सक्षौद्रं धारयेदेतद्गलरोगविनाशनम्।
कालकं नाम तच्चूर्णं दन्तास्यगलरोगनुत् ॥

पीतकचूर्णम्।

मनःशिला यवक्षारो हरितालं ससैन्धवम्।
दार्व्वी त्वक् चेति तच्चूर्णं माक्षिकेण समायुतम् ॥
मूर्च्छितं घृतयोगेन कण्ठरोगेषु धारयेत्।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्त्तितम् ॥

यवाग्रजं तेजवतीं स पाठां
रसाञ्जनं दारुनिशां सकृष्णाम्।
क्षौद्रेण कुर्य्याद्गुड़िकां सुखेन
तां धारयेत्सर्वगलामयेषु ॥

दशमूलं पिबेदुष्णं यूषं मूलककुलत्थयोः।
क्षीरेक्षुरस गोमूत्र दधिमस्त्वम्लकाञ्जिकैः ॥
विदध्यात् कवलान् वोक्ष्य दोषं तैलघृतैरपि ॥

क्षारगुड़िका।

पञ्चकोलक तालीशपत्रैला मरिचत्वचः।
पलाशमुष्कक क्षार यवक्षाराश्च चूर्णिताः।
गुड़े पुराणे क्वथिते द्विगुणे गुड़िकाः कृताः।
कर्कन्धु मात्राः सप्ताहं स्थिता मुष्ककभस्मनि ॥
कण्ठरोगेषु सर्वेषु धार्य्याः स्युरमृतोपमाः ॥

मृतसिद्धां शिवां तुल्यां मधुरी कुष्ठ बालकैः।
अभ्यस्य मुखरोगांस्तु जयेच्चिरसतामपि ॥

वातात्मकं सरखूर्णैर्लवणैः प्रतिसारयेत्
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥
पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः ।
सर्वः पित्तहरः कार्य्यो विधिर्मधुरशीतलः ॥
प्रतिसारण गण्डूषान् धूमसंशोधनानि च ।
कफात्मके सर्वसरे क्रमं कुर्य्यात्कफापहम् ॥
मुख पाके शिरावेधः शिरःकायविरेचणम् ।
कार्य्यश्च बहुधा नित्यं जातीपत्रस्य चर्वणम् ॥
जातीपत्रामृता द्राक्षा पाठा दार्वी फलत्रिकैः
क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥
पटोल निम्ब जम्बाम्र मालती नवपल्लवैः ।
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥
पञ्चवल्ककषायो वा त्रिफलाक्वाथ एव वा ।
मुखपाकेषु सक्षौद्रः प्रयोज्यो मुखधावने ॥
स्वरसः क्वथितो दार्व्या घनीभूता रसक्रिया ।
सक्षौद्रा मुखरोगासृग्दोषनाड़ीव्रणापहा ॥

सप्तच्छदादिः ।

सप्तच्छदोशीरपटोलमुस्त-
हरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्वराजद्रुम चन्दनैश्च
क्वाथं पिबेत् पाकहरं मुखस्य ॥

पटोलादिः ।

पटोल शुण्ठी त्रिफला विशाला
त्रायन्ति तिक्ता द्विनिशामृतानाम् ।

पीतः कषायो मधुना निहन्ति
मुखे स्थितश्चास्यगदानशेषान् ॥
क्वथितास्त्रिफला पाठा मृद्वीका जातिपल्लवाः ।
निषेव्या भक्षणीया वा त्रिफला मुखपाकहा ॥
कृष्णा जीरक कुष्ठेन्द्रयव चर्वणतस्त्र्यहम् ।
मुखपाके व्रणक्लेद दौर्गन्ध्यमुपशाम्यति ॥
तिला नीलोत्पलं सर्पिः शर्करा चीरमेव च ।
सचौद्रो दग्धवक्त्रस्य गण्डूषो दाहपाकहा ॥
पञ्चयोगाः सर्वत्र मधूपयोगः । तिलक्वाथस्तथा नीलोत्पलक्वाथः ।
तैलेन काञ्जिकेनाथ गण्डूषपयूषी दाहहा ।
घनकुष्ठैलाधान्यक यष्टीमधुलवालुका कवड़ः ।
वदनेऽति पूतिगन्धं हरति सुरालशुनगन्धञ्च ॥
घनादिकं मुखे निक्षिप्य चर्वणीयमिति वृद्धाः ।

## सहाचरतैलम् ।

तुलां श्रुतां नीलसहाचरस्य
द्रोणेऽम्भसः संस्नपयेद्यथावत् ।
पूते चतुर्भागरसे तु तैलं
पचेत् शनैरर्द्धपल प्रमाणैः ॥
कल्कैरनन्ता खदिरारिमेद-
जम्ब्वाम्र यष्टी मधुकोत्पलानाम् ।
तत्तैलमाशु व धृतं मुखेन
स्थैर्यं द्विजानां विदधाति सद्यः ॥

## इरिमेदाद्यं तैलम् ।

इरिमेदत्वक्पलशतमभिनवमापोथ्य खण्डशः कृत्वा ।
तोयाढ़कैश्चतुर्भिर्निःक्वाथ्य चतुर्थशेषेण ॥
क्वाथेन तेन मतिमान् तैलस्याढ़कं शनैर्विपचेत् ।
कल्कैश्च समांशैर्मञ्जिष्ठा लोध्र मधुकानाम् ॥
इरिमेद खदिर कट्फल लाक्षा न्यग्रोधसूक्ष्मैला ।
कर्पूरागुरु पद्मक लवङ्ग कक्कोल जातीनाम् ॥
फल पत्तङ्ग गैरिक वराङ्ग गजकुसुम धातकीनाञ्च ।
सिद्धं भिषग्विदध्यादिदं मुखोत्थेषु रोगेषु ॥
परिशीर्ण दन्तविद्रधि शौषिर शीताद दन्तहर्षेषु ।
क्रिमिदन्त दरणचलित प्रदुष्ट मांसास्यशोषेषु ॥
मुखदौर्गन्ध्येषु च कार्य्यं प्रागुक्तामयेषु तैलमिदम् ।

## लाक्षाद्यं तैलम् ।

तैलं लाक्षा रसं क्षीरं पृथक् प्रस्थं समं पचेत् ।
चतुर्गुणेऽरिमक्वाथे द्रव्यैश्च पलसंमितैः ॥
लोध्र कट्फल मञ्जिष्ठा पद्मकेशर पद्मकैः ।
चन्दनोत्पल यष्ट्याह्वैस्तैलं गण्डूष धारणम् ॥
दालनं दन्तचालञ्च दन्तमोक्षं कपालिकाम् ।
शीतादं पूतिवक्त्रञ्च अरुचिं विरसास्यताम् ॥
हन्यादाशु गदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ॥

## दशनसंस्कारचूर्णम् ।

शुण्ठी हरीतकी मुस्ता खदिरं घनसारकम् ।

गुवाकभस्म मरिचं देवपुष्पं तथात्वचम् ।
सूक्ष्मचूर्णीकृतं यत्नाद्विक्षिपेत् खल्लमध्यतः ।
कठिनीसम्भवञ्चूर्णं प्रक्षिपेत्तत्र तत्समम् ॥
एतद्दशनसंस्कारचूर्णं दन्तास्यरोगजित् ॥

वकुलाद्यं तैलम् ।

वकुलस्य फलं लोध्रं वज्रवल्ली कुरण्टकम् ।
चतुरङ्गुल बव्वोल वाजिकर्णारिमाग्रनम् ॥
एषां कषायकल्काभ्यां तैलं पक्वं मुखे धृतम् ।
स्थैर्य्यं करोति चलतां दन्तानां नावनेन च ॥

स्वल्पखदिरवटिका ।

खदिरस्य तुलां सम्यक् जलद्रोणे विपाचयेत् ।
शेषेऽष्टभागे तत्रैव प्रतिवापं प्रदापयेत् ॥
जातीकर्पूर पूगानि बव्वोल फलकानि च ।
दूत्वेषा गुडिका कार्य्या मुख सौभाग्यवर्द्धिनी ॥
दन्तोष्ठमुखरोगेषु जिह्वाताल्वामयेषु च ।

बृहत्खदिरवटिका ।

गायत्रीसार तुलमेरिव वल्कलानां
सार्द्धं तुलायुगलमम्बु घटैश्चतुर्भिः ।
निःक्वाथ्य पादमवशिष्ट सुवस्त्र पूतं
भूयः पचेदथ शनैर्मृदुपावकेन ।
तस्मिन् घनत्वमुपगच्छति चूर्णमेषां
सूक्ष्मं क्षिपेद्विकवङ्गपभागिकानाम् ।

एलामृणाल सितचन्दन चन्दनाम्बु
श्यामातमालविषयाघनलोहयष्टी।
लज्जा फलत्रय रसाञ्जन धातकीभ-
श्रीपुष्पगैरिक कटङ्कट कट्फलानाम्।
पद्माट लोध्र वटरोह यवासकानां
मांसी निशा सुरभि वल्कल संयुतानाम्॥
कक्कोल जातिफलकोष लवङ्गकानि
चूर्णीकृतानि विदधीत पलांशकानि
शीतेऽवताप्य घनसार चतुःपलञ्च
क्षिप्त्वा कषायसहशीगुडिकाः प्रकुर्य्यात्॥
शुष्का मुखे विनिहिता विनिवारयन्ति
रोगान् गलोष्ठ रसना द्विजतालुजातान्।
कुर्य्युर्मुखे सुरभितां पटुतां रुचिञ्च
स्थैर्य्यं परं दशनगं रसनालघुत्वम्॥

## मुखरोगहरो रसः।

रसगन्धौ समौ ताभ्यां द्विगुणञ्च शिलाजतु।
गोमूत्रेण विमर्द्याथ सप्तधार्कद्रवेण च॥
आतोनिम्ब महाराष्ट्री रसैः सिध्यति पाकहा।
कणामधु युता हन्ति मुखपाकं सुदारुणम्॥
अष्टगुञ्जा धृता वक्रे सद्यो हन्ति वटी गदान्।
महाराष्ट्रास्य कल्केन मुखञ्च प्रतिसारयेत्॥
धारणात् वेदगादेव वटी हन्ति मुखामयान्॥
दन्तकाष्ठं स्नानमन्नं मत्स्यमानूपसामिषम्।

दधि क्षीरं गुड़ं माषं रूक्षान्नं कठिनाशनम्॥
अधोमुखेन शयनं गुर्वभिष्यन्दकारि च
मुखरोगेषु सर्वेषु दिवानिद्रां विवर्जयेत्॥

## रसेन्द्रवटी।

रसेन्द्रगन्धाश्मजतुप्रवाल-
लौहानि वैद्यः समभागिकानि।
रसेन्द्रपादप्रमितञ्च हेम
विभाव्य निम्बाशनवह्नितोयैः॥
ततो वटीर्वल्लमिता विदध्यात्
विधाय बुद्धा बहुवारवाराः।
फलत्रिकक्वाथजलेन वापि
प्रातः प्रयुञ्ज्यात् प्रकरान्वना वा॥
रसेन्द्रवटयास्यगदान्निहन्ति
वातामयान्मेहगणान् ज्वरांश्च।
करोति बह्निं बलवीर्य्ययोश्च
वृद्धिं विशेषेण रसायनीयम्॥

## सहकारवटी।

सहकारस्य निम्बस्य खदिरस्याशनस्य च।
तुलां पृथग्विनिःक्वाथ्य द्रोणमानेन चाम्बुना॥
एकीकृत्य कषायांश्च पादशिष्टान् पुनःपचेत्।
तत्र क्षिपेन्मलयजं बालकं रक्तचन्दनम्॥
गैरिकं देवपुष्पञ्च धातकीं रजनीद्वयम्।
लोध्रं जातीफलं श्यामां चातुर्जातं फलत्रयम्॥

वटप्ररोहमञ्जिष्ठामांसीरक्खदिरं विडम्।
कटुत्रयमयश्चन्द्रं प्रत्येकं प्रमाणतः॥
ततः कलायसदृशीर्विदध्याद् गुड़िका भिषक्।
रोगान् कण्ठोष्ठरसना दन्ततालुसमुद्भवान्॥
सहकारवटी हन्यादास्ये व वदने धृता।
जनयेन्मुखसौरभ्यं सुरुचिं स्थिरदन्तताम्॥

## मालत्याद्यं घृतम्।

मालत्या द्रोणपुष्प्याश्च निम्बवब्बोलयोस्तथा।
सहाचरस्य सर्जस्य स्वरसेन पृथक् पृथक्॥
कल्कैर्मलयजोशीर रक्तचन्दनं चम्पकैः।
अश्वत्थवटनीलीभीरजनीदारुसैन्धवैः॥
दार्व्या विम्बाङ्कुष्ठाभ्यां कणया च पचेद् घृतम्।
शनैस्ताम्रमये पात्रे क्वतवङ्गविलेपने॥
मालत्याद्यमिदं सर्पिर्गदान्मुखसमुद्भवान्।
निहन्यान्नात्र सन्देहो भास्करस्तिमिरं यथा॥

## जात्याद्यं तैलम्।

जातीपल्लवतोयेन मञ्जुपुष्पीरसेन च।
वकुलत्वक्कषायेण पचेत्तैलं तिलोद्भवम्॥
गायत्रीमाम्रवीजञ्च त्रिफलां कटुकत्रयम्।
चव्यं नीलोत्पलं कुष्ठं मधुकं रजनीद्वयम्॥
मुस्तकं बालकं लोध्रं सिन्दूरं स्वर्णगैरिकम्।
कल्कोकृत्य क्षिपेत्तत्र वटरोहमयोऽपि च॥

जात्याद्याख्यमिदं तैलं निखिलान् मुखजान् गदान्
भगन्दरोपदंशौ च व्रणं दुष्टं निहन्ति च ॥

इति भैषज्यरत्नावल्यां मुखरोगाधिकारः समाप्तः ।



# अथ क्षुद्ररोगाधिकारः ।



तत्राजगल्लिकामामां जलौकाभिरुपाचरेत् ।
शुक्ति सौराष्ट्रिका क्षार कल्कैश्चालेपयेन्मुहुः ॥
नवीन कण्टकार्य्याश्च कण्टकैर्वेधमात्रतः ।
किमाश्चर्य्यं विपच्याशु प्रशाम्यन्त्यजगल्लिकाः ॥
वृषमूल विशालाभ्यां लेपो हन्त्यजगल्लिकाम् ।
कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम् ।
श्लेष्मविद्रधि कल्पेन जयेदनुशयीं भिषक् ।
विवृतामिन्द्रविद्धाञ्च गर्द्दभीं जालगर्द्दभम् ॥
इरिवेल्लिकां गन्धमालां जयेत्पित्तविसर्पवत् ।
मधुरौषधसिद्धेन सर्पिषा शमयेद् व्रणम् ॥
रक्तावसेकैर्बहुभिः स्वेदनै रपतर्पणैः ।
जयेद्विदारिकां लेपैः शिग्रु देवद्रुमोद्भवैः ॥
पनसिकां कच्छपिकामनेन विधिना भिषक् ।
साधयेत्कठिनानन्यान् शोथान् दोषसमुद्भवान् ॥

भल्लातजीं कच्छपिकां तथा पाषाणगर्द्दभम्।
सुरदारु शिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत्॥
कफ मारुत शोथघ्नो लेपः पाषाणगर्द्दभे।
शस्त्रेणोद्धृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्।
मनःशिलाल भल्लात सूक्ष्मैलागुरुचन्दनैः॥
जातीपल्लव कल्कैश्च निम्बतैलं विपाचयेत्।
वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुद्रवम्॥
सशोथं व्रणगन्धञ्च प्रवृद्धं मर्म्मसुस्थितम्।
हस्तपादश्रितञ्चापि वल्मीकं परिवर्जयेत्॥
पाददारीषु तु शिरां वेधयेत्तलशोधिनीम्।
स्नेहस्वेदोपपन्नौ तु पादौ चालेपयेन्मुहुः।
मधूच्छिष्ट वसा मज्ज घृतक्षारैर्विमिश्रयेत्।
गदलवण घृतचेचित्तिन्तिड़ी युक्तमेतद्
द्विगुणमिह विदध्यान्मृत्रमेकत्र कृत्वा।
दिन कतिचिदथेदं किञ्चिदाशोष्य लेपात्
स्फुटित पदतलं स्यात् पद्मपत्राभमाशु॥
सर्जाख्यं सिन्धूद्भवयोश्च चूर्णं मधुघृताप्लुतम्।
निर्म्मथ्य कटुतैलाक्तं हितं पादप्रमार्जनम्॥
सर्पादिका सर्षप निम्ब मोच-
कर्काककेर्वारुकभस्म तोये।
तैलं विपक्वं लवणं सकल्कं
तत्पाददारीं विनिहन्ति शीघ्रम्॥
मलसेऽम्लैश्चिरं सिक्तौ चरणौ परिलेपयेत्।
पटोलारिष्ट कासीस त्रिफलाभिर्मुहुर्मुहुः॥

करञ्जबीजं रजनी कासीसं मधुकं मधु ।
रोचना हरितालञ्च लेपोऽयमलसे हितः ॥
लाक्षाभयारसालेपः कार्य्यं रक्तस्य मोक्षणम् ।
बृहतीरस सिद्धेन तैलेनाभ्यज्य बुद्धिमान् ॥
शिलारोचनकासीस चूर्णैर्वा प्रतिसारयेत् ॥
दहेत्कदरमुत्कृत्य तैलेन दहनेन वा ॥
चिप्पमुष्णाम्बुना स्विन्न मुत्कृत्याभ्यज्य तं व्रणम् ।
दत्वा सर्जरसं चूर्णं बुद्धा व्रणवदाचरेत् ॥
स्वरसेन हरिद्रायाः पात्रे कृष्णायसेऽभयाम् ।
घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्पं मुहुर्मुहुः ॥
नखकोटौ प्रविष्टेन टङ्कनेन प्रशाम्यति ।
कुनखश्च तदा भ्रातः शैलोऽपि प्लवते जले ॥
काश्मर्य्याः सप्तभिः पत्रैः कोमलैः परिवेष्टितः ।
अङ्गुलीवेष्टकः पुंसो ध्रुवमाशु व्यपोहति ॥
निम्बोदकेन वमनं पद्मिनीकण्टके हितम् ।
निम्बोदक कृतं सर्पिः सक्षौद्रं पानमिष्यते ॥
पद्मनाल कृतः क्षारः पद्मिनीं हन्ति लेपनात् ।
निम्बारग्वधकल्कैर्वा मुहुरुद्वर्त्तनं हितम् ॥
नीली पटोलमूलाभ्यां साज्याभ्यां लेपनं हितम् ।
जालगर्दभ रोगे तु सद्यो हन्ति च वेदनाम् ॥
अहिपूतनके धात्र्याः पूर्वं स्तन्यं विशोधयेत् ।
त्रिफला खदिर क्वाथेर्व्रणानां धावनं सदा ॥
करञ्जत्रिफलातिक्तैः सर्पिः सिद्धं शिशोर्हितम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥

गुदभ्रंशे गुदं स्विन्नं स्नेहाभ्यक्तं प्रवेशयेत् ।
प्रविष्टे स्वेदयेच्चापि वद्ध गोफणया भृशम् ॥

गोफणावन्धनविशेषः मलनिर्गमार्थं सच्छिद्रेण चर्म्मणा कौपीनवन्धः कार्य्यः ।

कोमलं नलिनीपत्रं यः खादेच्छर्करान्वितम् ।
अचिरेण शमं याति गुदभ्रंशो रुजान्वितः ॥

वृक्षाम्लानलचाङ्गेरी बिल्वपाठा यवाग्रजम् ।
क्षारेण शीलयेत्पायुभ्रंशार्त्तोऽनलदीपनम् ॥

गुदञ्च गव्यवसयाभ्यञ्जयेदविशङ्कितः ।
दृष्टवेशो गुदभ्रंशो विशत्याशु न संशयः ॥

मूषिकाणां वसाभिर्वा गुदे सम्यक् प्रलेपनम् ।
स्विन्नमूषिकमांसेन अथवा स्वेदयेद्गुदम् ॥

गोतैलाभ्यक्तः शीघ्रं प्रविशेन्निर्गतो गुदः ।

## चाङ्गेरीघृतम् ।

चाङ्गेरी कोल दध्यम्ल नागर क्षारसंयुतम् ।
घृत मुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ॥
चुक्रीक्षारावत्र कल्कौ शिष्टन्तु द्रवमिष्यते ॥

## मूषिकाद्यं तैलम् ।

क्षीरे महत्पञ्चमूलं मूषिकामन्त्रवर्जिताम् ।
पक्त्वा तस्मिन् पचेत्तैलं वातघ्नौषधसंयुतम् ॥
गुदभ्रंशमिदं तैलं पानाभ्यङ्गात् प्रसाधयेत् ॥

चर्म्मकीलं जतुमणिं मशकांस्तिलकालकान् ।
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥

वसुनाशाक चूर्णेन घर्षा मग्यक नाशनः।
निर्मोकभस्म घर्षाद्वा मग्यः शान्तिं व्रजेद् द्रुतम्॥
युवानपिड़कान्यच्छ नीलिका व्यङ्गशर्कराः।
शिरावेधैः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा॥
लोध्र धान्य वचा लेपस्तारुण्यपिड़कापहः।
तद्वद् गोरोचना युक्तं मरिचं मुखलेपनम्।
वमनञ्च निहन्त्याशु पिड़कां यौवनोद्भवाम्॥
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका।
लेपः सनवनीता वा श्वेताश्वखुरजा मसी॥
रक्तचन्दनमञ्जिष्ठा कुष्ठलोध्रप्रियङ्गवः।
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः॥

वटाङ्कुराः वटस्य अभिनवपत्रमुकुलाः।

व्यङ्गानां लेपनं शस्तं रुधिरेण शशस्य च।

दृष्टफलमेतत्।

कवलान् पयसा पिष्टा तीक्ष्णान् शाल्मलिकण्टकान्।
आलिप्तं त्र्यहमेतेन भवेत् पद्मोपमं मुखम्॥
मसूरैः सर्पिषा भृष्टैर्लिप्तमास्यं पयोऽन्वितैः।
सप्तरात्राद्भवेत्सत्यं पुण्डरीकदलप्रभम्॥
मातुलुङ्ग जटासर्पिः शिला गोशकृतो रसः।
मुखकान्तिकरो लेपः पिड़कातिलकालजित्॥
नवनीत गुड़क्षौद्र कोलमज्ज प्रलेपनम्।
व्यङ्गजिद्वटवल्कवा छागक्षीरप्रपेषिता॥
जातीफल कल्कलेपो नीलीव्यङ्गादि नाशनः।
सायञ्च कटुतैलेनाभ्यङ्गो वक्त्र प्रसाधनः॥

कालीयकोत्पलामय दधिसर वदराष्ठि मध्यफलिनीभिः।
लिप्तं भवति हि वदनं शशिप्रभं सप्तरात्रेण॥
तुषरहित मसूर यवचूर्णं सम यष्टीमधुक लोध्रलेपेन।
भवति मुखं परिनिर्जितचामीकरचारुसौभाग्यम्॥
रक्तोत्पल शर्वरीद्वयमञ्जिष्ठा गैरिकाज्य वस्तपयः।
सिद्धेन लिप्तमाननमुद्यद्विधु बिम्बवद्विभाति॥
परिणतदधिशरपुंखैः कुवलयदलकुष्ठचन्दनोशीरैः।
मुखकमलकान्तिकारी भ्रुकुटी तिलकालकान् जयति॥
शर्कक्षीर हरिद्राभ्यां मर्दयित्वा विलेपनात्।
मुखकार्ष्ण्यं शमं याति चिरकालोद्भवं ध्रुवम्॥
हरिद्राद्वय यष्ट्याह्व कालीयककुचन्दनैः।
प्रपौण्डरीक मञ्जिष्ठा पद्म पद्मक कुङ्कुमैः॥
कपित्थ तिन्दुक प्लक्ष वटपत्रैः पयोऽन्वितैः।
लेपयेत्कल्कितैरेभिस्तैलञ्चाभ्यञ्जनं पचेत्॥
पिप्लवं निलीकां व्यङ्गांस्तिलकान् मुखदूषिकाम्।
नित्यसेवी जयेत् चिप्रं मुखं कुर्य्यान्मनोरमम्॥

कनकतैलम्।

मधुकस्य कषायेण तैलस्य कुडवं पचेत्।
कल्कैः प्रियङ्गु मञ्जिष्ठा चन्दनोत्पलकेशरैः॥
कनकं नाम तत्तैलं मुखकान्तिकरं परम्।
आभीर नीलीकाव्यङ्ग शोधनं परमर्चितम्॥

मञ्जिष्ठाद्यं तैलम्।

मञ्जिष्ठा मधुकं लाक्षा मातुलुङ्गं सयष्टिकम्।

कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं तथा ॥
आजं पयस्तद्द्विगुणं शनैर्मृद्वग्निना पचेत् ।
नीलीका पिड़का व्यङ्गानभ्यङ्गादेव नाशयेत् ॥
मुखं प्रपद्मोपचितं वलिपलितवर्जितम् ।
सप्तरात्रं प्रयोगेण भवेत् कनकसन्निभम् ॥

### कुङ्कुमाद्यं तैलम् ।

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका ।
कालीयकमुशीरञ्च पद्मकं नीलमुत्पलम् ॥
न्यग्रोधपादाः प्लक्षस्य मूलं पद्मस्य केशरम् ।
द्विपञ्चमूलसहितैः कषायैः पलिकैः पृथक् ॥
जलाढ़कं विपक्तव्यं पादशेषमथोद्धरेत् ।
मञ्जिष्ठा मधुकं लाक्षा पत्तङ्गं मधुयष्टिके ॥
कर्षप्रमाणैरेभिस्तु तैलस्य कुड़वं पचेत् ।
अजाक्षीरं द्विगुणितं शनैर्मृद्वग्निना पचेत् ॥
सम्यक्पक्वं परं ह्येतन्मुखवर्णप्रसादनम् ।
नीलिका पिड़का व्यङ्गानभ्यङ्गादेव नाशयेत् ॥
सप्तरात्रं प्रयोगेण भवेत्काञ्चनसन्निभम् ।
कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्मितं पुरा ॥

कषायार्थं पठितमपि कुङ्कुमं सिद्धतैले प्रक्षिपन्ति वृद्धाः ।

### कुङ्कुमाद्यं तैलम् ।

कुङ्कुमं किंशुकं लाक्षा मञ्जिष्ठा रक्तचन्दनम् ।
कालीयकं पद्मकञ्च मातुलुङ्गस्य केशरम् ॥

कुसुम्भं मधुयष्टि च फलिनी मदयन्तिका।
निशे द्वे रोचना पद्मसुत्पलञ्च मनःशिला॥
काकोल्यादिसमायुक्तैरेतैरक्षसमैर्भिषक्।
लाक्षा रस पयोभ्याञ्च तैलप्रस्थं विपाचयेत्॥
कुङ्कुमाद्यमिदं तैलमभ्यङ्गात्काञ्चनोपमम्।
करोति वदनं सद्यः पुष्टि लावण्य कान्तिदम्॥
सौभाग्यलक्ष्मी जननं वशीकरणमुत्तमम्॥

वर्णकघृतम्।

मधुकं चन्दनं कङ्गु सर्षपं पद्मकं तथा।
कालेयकं हरिद्रा च लोध्रमेभिश्च कल्कितैः॥
क्षिपेद्धि घृतं वैद्यस्तत्पक्वं वस्त्रगालितम्।
पादांशं कुङ्कुमं सिक्थं चिप्त्वा मन्दानले पचेत्॥
तत्सिद्धं शिशिरे नीरे प्रक्षिप्याकर्षयेत्ततः।
तदेतद्वर्णकं नाम घृतं वक्त्र प्रसादनम्॥
अनेनाभ्यासलिप्तं हि वलीभूतमपि क्रमात्।
निष्कलङ्केन्दुबिम्बाभं स्याद्विलासवतीमुखम्॥

कुङ्कुम सिक्थयोर्मिलित्वा पादांशः। सिक्थकस्य द्रवीकरणार्थं स्वल्प पाकं दत्त्वा शीतल जले कियत्क्षणं स्थापयित्वा शीतलं सत् अनुगुप्तं निधापयेत्।

अरुंषिकायां रुधिरेऽवसिक्ते
शिराव्यधेनाथ जलौकसा वा।
निम्बाम्बुसिक्ते शिरसि प्रलेपो
देयोऽश्ववर्चोरससैन्धवाभ्याम्॥

पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य वा।
मूत्रपिष्टः प्रलेपोऽयं शीघ्रं हन्यादरूंषिकाम्॥
अरूंषीघ्नं भृष्टकुष्ठचूर्णं तैलेन संयुतम्।
खोलके कुष्ठं भृष्टा कटुतैलेन तद्भस्म लेपः।

## द्विहरिद्राद्यं तैलम्।

हरिद्राद्वय भूनिम्ब त्रिफलारिष्टचन्दनैः।
एतत्तैलमरूंषीणां सिद्धमभ्यञ्जने हितम्॥
दारुणे तु शिरां विध्येत् स्निग्धस्विन्नां ललाटजाम्।
अवपीड़शिरोवस्तीनभ्याङ्गांश्चावचारयेत॥
कोद्रवाणां तृणक्षारपानीयं परिधावने॥
कार्य्यो दारुणके मूर्द्धि प्रलेपो मधुसंयुतः।
पियालवीज मधुक कुष्ठमाषैः ससैन्धवैः॥
काञ्जिकस्थास्त्रिसप्ताहं माषा दारुणकापहाः॥
सह नीलोत्पलकेशर यष्टिमधु तिल सममामलकम्
चिरजातमपि शीर्षे दारुण रोगं शमं नयति॥

## त्रिफलाद्यं तैलम्।

त्रिफलायोरजो यष्टी मार्कवोत्पल शारिवैः।
ससैन्धवैः पचेत्तैलमभ्यङ्गाद्दारुणिकां जयेत्॥

## वह्नितैलम्।

चित्रकं दन्तीमूलञ्च कोषातकिसमन्वितम्।
कल्कं पिष्टा पचेत्तैलं कीशदद्रुविनाशनम्॥

## गुञ्जातैलम्।

गुञ्जाफलैः पचेत्तैलं भृङ्गराजरसेन तु।

कण्डूदारुणजित्कुष्ठ कपालव्याधिनाशनम् ॥

## स्वल्पभृङ्गराजतैलम्।

भृङ्गराजस्त्रिफलोत्पल शारि
वोड्पुरीष समन्वितकारि।
तैलमिदं पच दारुणहारि
कुञ्चित केश घन स्थिरकारि ॥

## महाभृङ्गराजतैलम्।

आनूपदेशसम्भूतं गृहीत्वा मार्कवं शुभम्।
सुधौतं जर्जरीकृत्य स्वरसं तस्य चाहरेत् ॥
चतुर्गुणेन तेनैव तैलप्रस्थं विपाचयेत्।
क्षीरपिष्टैरिमैर्द्रव्यैः संयोज्य मतिमान् भिषक् ॥
मञ्जिष्ठा पद्मकं लोध्रं चन्दनं गैरिकं बला।
रजन्यौ केशरञ्चैव प्रियङ्गुमधुयष्टिका ॥
प्रपौण्डरीकं गोपी च पलिकान्यत्र दापयेत्।
सम्यक् पक्वं ततो ज्ञात्वा शुभे भाण्डे निधापयेत् ॥
केशपाते शिरोदुष्टे मन्यास्तम्भे गलग्रहे।
शिरः कर्णाक्षि रोगेषु नस्येऽभ्यङ्गे च योजयेत् ॥
कुञ्चितायानतिस्निग्धान् कचान् कुर्य्याद्दृढं स्तथा।
खालित्यमिन्द्रलुप्तञ्चतैलमेतदपोहति ॥

## प्रपौण्डरीकाद्यं तैलम्।

प्रपौण्डरीक मधुक पिप्पली चन्दनोत्पलैः।
कार्षिकैस्तैल कुडवस्तैर्द्विरामलकी रसः ॥

साध्यः स प्रतिमर्षः स्यात्सर्वशीर्ष गदापहः॥

मालत्याद्यं तैलम् :

मालती करवीराग्नि नक्तमाल विपाचितम्।
तैलमभ्यञ्जने शस्त मिन्द्रलुप्तापहं परम्॥
इदं हि त्वरितं हन्ति दारुणं दारुणं नृणाम॥

धात्र्याम्रमज्जलेपात् स्यात् स्थिरोरुस्निग्धकेशता।
इन्द्रलुप्ते शिरां विद्धा शिला कासीस तुत्थकैः।
लेपयेत्त्वरितः कल्कै स्तैलश्चाभ्यञ्जने हितम्॥
कुटन्नट शिखी जाती करञ्ज करवीरजैः॥

अवगाढ़ पदश्चैव प्रच्छयित्वा पुनः पुनः।
गुञ्जाफलैःशिरं लिम्पेल्लोमभूमिं समन्ततः॥

हस्तिदन्त मसीं कृत्वा मुख्यञ्चैव रसाञ्जनम्।
लोमान्यनेन जायन्ते नृणां पाणितलेष्वपि॥

हस्तिदन्त मसीं कृत्वा तैलेन सह योजयेत्।
हस्तेष्वपि प्रजायन्ते केशा नास्त्यत्र संशयः॥

भल्लातक वृहतीफल गुञ्जामूल फलैश्च एकेन।
मधुसहितेन विलिप्तं सुरपतिलुप्तं शमं याति॥

गुञ्जा फल रस पिष्टं गुञ्जामूल मिन्द्रलुप्तस्य।
कनक फल निघृष्टस्य सतोय दातव्यं प्रच्छितस्यमदा॥

घृष्टस्य कर्कशैः पत्रै रिन्द्रलुप्तस्य गुण्ठनम्।
चूर्णितैर्मरिचैः कार्य्यमिन्द्रलुप्त विनाशनम्।

छागक्षीर रसाञ्जन पुटदग्ध गजदन्त मसीलिप्ताः।
जायन्ते सप्त दिनात् खल्वामपि कुञ्चिताश्चिकुराः॥

मधुकेन्दीवर मूर्वा तिलाज्य गोक्षीर भृङ्गलेपेन।

अचिराद्भवन्ति केशा घनदृढ़मूलावतान्तजयः॥

क्षुद्राद्यं तैलम्।

स्नुहीपयः पयोऽर्कस्य मार्कवो लाङ्गली विसम्।
मूत्रमाजं सगोमूत्रं रक्तिका सेन्द्रवारुणी॥
सिद्धार्थं तोल्यातैलञ्च गर्भं दत्त्वा विचक्षणः।
वह्निना मृदुना पक्वं तैलं खालित्य नाशनम्॥
कूर्म्मपृष्ठ समानापि कन्या या रोमतस्करी।
दिग्धा सानेन जायेत ऋक्ष शारीर लोमशा॥
वटावरोह केशिन्योः चूर्णेनादित्य पाचितम्।
गुड़ची खरसेतैल मभ्यङ्गात् केशरोहणम्॥

चन्दनाद्यं तैलम्।

चन्दनं मधुकं मूर्वां त्रिफला नीलमुत्पलम्।
कान्ता वटावरोहश्च गुड़ूची विसमेव च॥
लौहचूर्णं तथा केशी शारिवे द्वे तथैव च।
मार्कवस्वरसेनैव तैलं मृदग्निना पचेत्॥
शिरस्युपचिताः केशा जायन्ते घन कुञ्चिताः।
स्निग्धाश्च दृढ़मूलाश्च तथा भ्रमरसन्निभाः॥
नस्येनाकाल पलितं निहन्यात्तैल मुत्तमम्।

यष्टीमध्वाद्यं तैलम्।

तैलं सयष्टिमधुकैः क्षीरे धात्री फलैः शृतम्।
नस्ये दत्तं जनयति केशान् श्मश्रुणि चाप्यथ॥

केशरञ्जकः।

त्रिफला नीलिनीपत्रं लौह भृङ्गरजः समम्।

अविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम् ॥
त्रिफला चूर्णं संयुक्तं लौह चूर्णं विनिक्षिपेत् ।
ईषत्पक्वे नारिकेले भृङ्गराज रसान्विते ॥
मासमेकन्तु निक्षिप्य सम्यग्गत्तात्समुद्धरेत् ।
ततः शिरो मुण्डयित्वा लेपं दत्वा भिषग्वरः ॥
संवेष्ट्य कदली पत्रैर्मोचयेत्सप्तमे दिने ।
क्षालयेत्त्रिफला क्वाथैः क्षीर मांस रसाशिनः ॥
कपाल रञ्जनश्चैतत् कृष्णीकरणमुत्तमम् ॥
उत्पलं पयसा सार्द्धं मासं भूमौ निधापयेत् ।
केशानां कृष्णीकरणं स्नेहनञ्च विधीयते ॥
भृङ्गपुष्पं जवापुष्पं मेषदुग्ध प्रपेषितम् ।
तेनैवालोड़ितं लौहपात्रस्थं भूम्यधः कृतम् ॥
सप्ताहादुद्धृतं पश्चाद् भृङ्गराज रसेन तु ।
आलोड्याभ्येन च शिरो वेष्टयित्वा वसेन्निशाम् ॥
प्रातस्तु क्षालनं कार्य्यमेवं स्यात्मूर्द्ध रञ्जनम् ।
एवं सिन्दूर बालाम्र शङ्ख भृङ्गरसैः क्रिया ।
नरदुग्ध शङ्ख चूर्णं काञ्जिक
रस संयुतं हि सीसकं घृष्ट्वा ।
लेपात्कचानर्कदलावदातान्
शुभ्रान् करोति नीलतरान् ॥
लौह मल कल्कैः सजवाकुसुमैर्नरः सदा स्नायी ।
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि ॥
निम्बस्य बीजानि हि भावितानि
भृङ्गस्य तोयेन तथाशनस्य ।

तैलन्तु तेषां विनिहन्ति नस्यात्
दुग्धाम्बुभोक्तुः पलितं समूलम्॥
निम्बस्य तैलं प्रकृतिस्थमेव
नस्तो निषिक्तं विधिना यथावत्।
मासेन गोक्षीरभुजो नरस्य
यथाग्रभूतं पलितं निहन्ति॥
क्षीरात्समार्कवरसात् द्विप्रस्थे मधुकात्पले।
तैलस्य कुड़वं पक्वं तन्नस्यं पलितापहम्॥

## महानीलतैलम्।

आदानी वल्गरा मूलानि कृष्णशैरीयकस्य च।
सुरसस्य च पत्राणि फलं कृष्णशणस्य च॥
मार्कवः काकमाची च मधुकं देवदारु च।
पृथक् दशपलांशानि पिप्पल्य स्त्रिफलाञ्जनम्॥
प्रपौण्डरीकं मञ्जिष्ठा लोध्रं कृष्णागुरूत्पलम्।
आम्रास्थि कर्दमः कृष्णो मृणाली रक्तचन्दनम्॥
नीली भल्लातकास्थीनि कासीसं मदयन्तिका।
सोमराज्यशनं शस्त्रं कृष्णौ पिण्डीतचित्रकौ॥
पुष्पाण्यर्जुनकाश्मर्य्योः राम्रजम्बूफलानि च।
पृथक् पञ्चपलैर्भागैः सुपिष्टैराढ़कं पचेत्॥
विभीतकस्य तैलस्य धात्रीरस चतुर्गुणम्।
कुर्य्यादादित्य पाकं वा यावत् शुष्को भवेद्रसः॥
लौहपात्रे ततः पूतं संशुद्ध मुपयोजयेत्।
पाने नस्तक्रियायाञ्च शिरोऽभ्यङ्गे तथैव च॥

एतच्चक्षुष्यमायुष्यं शिरसः सर्वरोगनुत् ।
महानीलमिति ख्यातं पलितघ्नमनुत्तमम् ॥

## भृङ्गराजघृतम् ।

भृङ्गराजरसेपक्वं शिखिपित्तेन कल्कितम् ।
घृतं नस्येन पलितं हन्यात्सप्ताहयोगतः ॥
काञ्जिकपिष्टशेलुफलमज्जनिसच्छिद्रलौहगे ।
यदर्कपातात्पततितैलं तन्नस्यमर्घणात् ॥
केशा नीलालिसंकाशाः सद्यः स्निग्धा भवन्ति च ।
नयनश्रवणग्रीवादन्तरोगांश्च हन्त्यदः ॥
कासीसरोचनातुत्थहरितालरसाञ्जनैः ।
अम्लपिष्टैः प्रलेपोऽयं वृषणकच्छ्वहिपूतयोः ॥
पटोलपत्रत्रिफलारसाञ्जनविपाचितम् ।
पीतं घृतं नाशयति कच्छामप्यहिपूतनाम् ॥
रजनीमार्कवमूलं पिष्टं शीतेन वारिणा तुल्यम् ।
हन्ति विसर्पं लेपाद्वराहदशनाह्वयं घोरम् ॥
नाडीचवीजकल्कः पीतो गव्येन सर्पिषा प्रातः ।
शमयति शूकरदंष्ट्रं सदाहपाकज्वरं घोरम् ॥
विसर्पोक्तः प्रतीकारः कार्य्यः शूकरदंष्ट्रके ।

## अमृताङ्कुरवटी ।

अमृतं पारदं गन्धं लौहमभ्रं शिलाजतु ।
गुञ्जामात्रां वटीं कुर्य्यान्मर्द्दयित्वामृताम्भसा ॥
एषामृताङ्कुरवटी पीता शाल्मम्भसा सह ।
क्षुद्ररोगानशेषांस्तु गदान् पित्तास्रकोपजान् ॥

ज्वरं जीर्णं प्रमेहञ्च कार्श्यमग्निक्षयं तथा।
नाशयेज्जनयेत्पुष्टिं कान्तिं मेधां शुभां मतिम्॥

चन्द्रप्रभारसः।

चन्द्रप्रभां तुगाक्षीरीं सैन्धवञ्च शिलाजतु।
कौशिकञ्चाश्वमानन्तु हेमारं रौप्यमभ्रकम्॥
माक्षिकं शाणमात्रञ्च मधुना परिमर्द्दयेत्।
ततो द्विवल्लमानेन वटिकाः परिकल्पयेत्॥
अनुपानविशेषेण योजितोऽयं महारसः।
सर्वान् क्षुद्रगदान् हन्ति प्रमेहानपि दुस्तरान्॥
वातव्याधीनशेषांश्च पित्तजान् कफसम्भवान्।
चिरप्रनष्टमग्निञ्च दीपयेज्जनयेद्बलम्॥

कुङ्कुमादिघृतम्।

कुङ्कुमेन निशाभ्याञ्च कषाया वह्निवारिणा।
घृतं पक्वं निराकुर्य्यान्नीलिकां मुखदूषिकाम्॥
सिध्मादींस्त्वग्गदान् सर्वान् व्याधिन् कफसमुद्भवान्।
शिरोऽर्त्तिं नाशयेच्चाशु लावण्यं जनयेत्परम्॥
जगतामुपकाराय दस्राभ्यां विहितन्त्विदम्।
पानेऽभ्यङ्गे तथानस्ये युक्त्या योज्यं विचक्षणैः॥

सप्तच्छदादितैलम्।

सप्तच्छदस्य वासाया: पिचुमर्दस्य चाम्भसा।
तैलप्रस्थं पचेत् कल्कैर्निशादार्व्वी फलत्रिकैः॥
श्योनेन्द्रयव मञ्जिष्ठा खदिर क्षार सैन्धवैः।

गोमूत्रस्याढ़कं दत्त्वा शनैश्च मृदुनाग्निना ॥
पद्मिनीकण्टकं क्षिप्तं कदरं व्यङ्गनीलिके ।
जालगर्दभकश्चैव तत्त्वगदांश्च विनाशयेत् ॥

## सहाचरघृतम् ।

सहाचर तुलाक्वाथे क्वाथे च दशमूलजे ।
शिरीषस्य कषाये च घृतप्रस्थं विपाचयेत् ॥
कल्कान् दत्त्वा पञ्चकोलं क्रिमिघ्नं पटुपञ्चकम् ।
क्षारत्रयं हरिद्राकालीं सिन्दूरमपि गैरिकम् ॥
हन्यादेतद् घृतं व्यङ्गं नीलिकां तिलकालकम् ।
अङ्गुलीवेष्टकं पाददारींश्च मुखदूषिकाम् ॥

## क्षारघृतम् ।

मुष्ककं कुटजं गुञ्जां चित्रकं कदलीं वृषम् ।
अर्कस्नुह्यावपामार्गमश्वमारं विभीतकम् ॥
पलाशं पारिभद्रञ्च नक्तमालञ्च सन्दहेत् ।
ततः प्रस्थं समादाय क्षारस्य षड्गुणाम्भसा ॥
त्रिःसप्तकृत्वो विस्राव्य पचेत् सर्पिस्तदम्बुना ।
कल्कं क्षारत्रयं दत्त्वा नातितीव्रेण वह्निना ॥
क्षारसर्पिरिदं हन्यात् मशक तिलकालकम् ।
पद्मिनीकण्टकं क्षिप्रमलसं दद्रुसिध्मनी ॥

## शय्यामूत्रचिकित्सा ।

क्वतमुत्रार्द्रभूभागमृद्माकृष्य खोलके ।
सम्भज्य मधुसर्पिर्भ्यां लेहयेश्च त्रितं जनम् ॥

शय्यायां मूत्ररोधः स्यान्मूत्रितस्य न संशयः।

शय्यातलस्थितमितमृत्तिकां गृहीत्वा खोलके भर्जयित्वा घृतमधुभ्यां लेहयेत्।

बिल्वमूलरसः पीतः शय्यामूत्रं निवारयेत्।
अहिफेनप्रयोगेण मूत्ररोधो भवेद् ध्रुवम्॥

लोमशातनविधिः।

हरितालचूर्णकणिका लेपात्तमेन वारिणा सद्यः।
निपतन्ति लोमनिचयाः कौतुकमिदमद्भुतं मन्ये॥

दग्ध्वा शङ्खं क्षिपेद्रम्भास्वरसे तच्च पेषितम्।
तुल्याल लेपतो हन्ति लोम गुह्यादिसम्भवम्॥

रक्ताब्जनीपुच्छचूर्णयुक्तं तैलन्तु सार्षपम्।
सप्ताहमुषितं हन्ति मूलाद्रोमाण्यसंशयम्॥

पलाशभस्मान्वितताालमूले-
रम्भाम्बुमिश्रैरुपलिप्य भूयः।
कन्दर्पगेहे मृगलोचनानां
रोमाणि रोहन्ति कदापि नैव॥

एकः प्रदेयो हरितालभागः
पञ्च प्रदेयाजलजस्य भागाः।
रसस्तरोर्भस्मन एव पञ्च
प्रोक्ताश्च भागाः कदली जलार्द्राः॥

संमिश्य पात्रेषु सप्ताहमात्रं
कृत्वा स्मरागार विलेपनञ्च।
रोमाणि सर्वाणि विलासिनीनां
पुनर्न रोहन्ति कदाचिदेव॥

रम्भाजले सप्तदिनं विभाव्य
भस्मानि कम्बोर्मसृणानि पश्चात्।
तालेन युक्तानि विलेपनेन
लोमानि निर्मूलयति क्षणेन॥

कुसुम्भतैलाभ्यङ्गो वा रोम्णामुत्पाटकोऽन्तकृत्॥

कर्पूर भल्लातक शङ्खचूर्णं
क्षारो यवानाञ्च मनःशिला च।
तैलं सुपक्वं हरिताल मिश्रं
रोमाणि निर्मूलयति क्षणेन॥

क्षारतैलम्।

शुक्तिशम्बूकशङ्खानां दीर्घवृन्तात्समुष्ककात्।
दग्धा क्षारं समादाय खर मूत्रेण भावयेत्॥
क्षाराष्टभागं विपचेत्तैलं वै सार्षपं बुधः।
इदमन्तःपुरे देयं तैलमात्रेयपूजितम्॥
बिन्दुरेकः पतेद्यत्र तत्र लोमापुनर्भवः।
मदनादि गणे तैलमश्विभ्यां परिकीर्त्तितम्॥
अर्शसां कुष्ठरोगाणां पामादद्रुविचर्च्चिनाम्।
क्षारतैलमिदं श्रेष्ठं सर्वकृदरुजापहम्॥

इति भैषज्यरत्नावल्यां क्षुद्ररोगाधिकारः समाप्तः।



# अथ स्त्रीरोगाधिकारः ।

## तत्रादौ प्रदरचिकित्सा ।

दध्ना सौवर्च्चलाजाजी मधुकं नीलमुत्पलम् ।
पिबेत् क्षौद्रयुतं नारी वातासृग्दरपीड़िता ॥
पिबेदैणेयकं रक्तं शर्करा मधुसंयुतम् ।
कुशमूलं समुद्धृत्य पेषयेत्तण्डुलाम्बुना ॥
एतत्पीत्वा त्र्यहान्नारी प्रदरात्परिमुच्यते ॥

## दार्व्यादिः ।

दार्वीरसाञ्जन वृषाब्द किरात विल्व-
भल्लातकैरवकृतो मधुना कषायः ।
पीतो जयत्यतिबलं प्रदरं सशूलं
पीतासितारुणविलोहितनीलशुक्लम् ॥

अशोकवल्कलक्वाथशृतं दुग्धं सुशीतलम् ।
यथाबलं पिबेत्प्रातस्तीव्रासृग्दरनाशनम् ॥
क्षौद्रयुक्तं फलरसं काकोडुम्बरजं पिबेत् ।
असृग्दर विनाशाय सशर्करपयोऽन्नभुक् ॥
प्रदरं हन्ति बलाया मूलं दुग्धेन संयुतं पीतम् ।
कुशवाट्यालकमूलं तण्डुलसलिलेन रक्ताख्यम् ॥
गुड़ेन वदरीचूर्णमसृग्दरविनाशनम् ॥
गुड़ेन वदरीचूर्णं मोचमामं तथापयः ।
पीता लाक्षा च सघृता पृथक् प्रदरनाशनम् ॥

रक्तपित्तविधानेन प्रदरांश्चाप्युपाचरेत्।
रक्तातिसारवच्चाथ रक्तार्शोवत्तथैव च॥
असृग्दरे विशेषेण कुटजाष्टक इष्यते॥
रोहितकमूलकल्कं पाण्डुरेऽसृग्दरे पिबेत्।
जलेनामलकीबीजकल्कं वा ससितामधु॥
धातक्याश्चाक्षमात्रं वा आमलक्या मधुद्रवम्।
काकजानुकमूलं वा मूलं कार्पासमेव वा॥
पाण्डुप्रदरशान्त्यर्थं पिबेत्तण्डुलवारिणा॥
शर्करा मधुकं शुण्ठी तैलं दधि च तत्समम्।
रजेन मथितं पीतं हन्याद्वातोत्थितं रजः॥
वासकस्वरसं पित्ते गुडूच्या रसमेव वा॥
आलोरस्यं शिफायुक्तं योनिदाहापहं पिबेत्॥
कुश्याकन्दचूर्णन्तु पीतं तण्डुलवारिणा।
त्रिसप्ताहप्रयोगेण स्त्रीरोगं नाशयेद्ध्रुवम्॥

## अशोकघृतम्।

अशोकवल्कलप्रस्थं तोयाढक विपाचितम्।
पादस्थेन घृतप्रस्थं जीरक क्वाथ संयुतम्॥
तण्डुलाम्बु त्वजाक्षीरं घृततुल्यं प्रदापयेत्।
तथैव केशराजस्य प्रस्थमेकं भिषग्वरः॥
जीवनीयैः पियालैस्तु परुषैः सरसाञ्जनैः।
यष्ट्याह्वाशोकमूलञ्च मृद्वीका च शतावरी॥
तण्डुलीयकमूलञ्च कल्कैरेभिः पलार्द्धकैः।
शर्करायाः पलान्यष्टौ सिद्धशीते प्रदापयेत्॥

पीतमेतद् घृतं हन्ति सर्वदोषसमुद्भवम्।
श्वेतं नीलं तथा कृष्णं प्रदरं हन्ति दुस्तरम्।
कुक्षिशूलं कटीशूलं योनिशूलञ्च सर्वगम्॥
मन्दाग्निमरुचिं पाण्डुं कृशतां श्वासकासमलाम्॥
आयुःपुष्टिकरं बल्यं बलवर्णप्रसादनम्।
[illegible]मेतत्परं सर्पिर्विष्णुना परिकीर्त्तितम्॥
जीवकर्षभकौ मेदे काकोल्यौ शूर्पपर्णिके।
[illegible]मधुकञ्चेति दशको जीवनो गणः।

## न्यग्रोधाद्यं घृतम्।

न्यग्रोधाश्वत्थपार्थामृतवृषकटुका प्लक्ष जम्बूपियालाः
[illegible]ाम्रोदुम्बराख्या मधुकतरुबला वेतसं केन्दुनीपौ।
[illegible]तं पीतसारं विधिविहितहृतं सर्वमेषां तरूणां
[illegible] तद्युगपलमखिलं चार्द्दयित्वा भिषग्भिः॥
[illegible] द्रोणाश्मा तदूर्द्धविमलकटाहेऽपि पादावशेषं
[illegible] पुरस्तु पाच्यं पचन कुशलिना मन्दमन्दानलेन।
[illegible] [illegible]रमालां त्रिधिविहितजलप्रस्थमेकञ्च शाले-
[illegible]न्तु कल्कं मधुकमपि मधोः पुष्प खर्जूर दार्व्यौ॥
[illegible]ल्लो काश्मरीणां फलमपि युगलं चीरकाकोलि युग्मं
रक्ताख्यं चन्दनं यत्तदपरममलं चाञ्जनं शारिवा च॥
न्यग्रोधाद्यं घृतं ह्येतद्देहं प्राप्यामृतायते।
दुस्तरं प्रदरं हन्ति नीलं रक्तं सितासितम्॥
योनिशूलं कुक्षिशूलं वस्तिशूलं सुदुःसहम्।
अङ्गदाहं योनिदाहमक्षिकुक्षिभवञ्च यम्।

मन्ददृष्टिं मश्रुपातं तिमिरं वातसम्भवम्।
आध्मानानाह शूलघ्नं वातपित्त प्रकोपजित्॥
अम्लपित्तञ्च पित्तञ्च योनिरोगं विनाशयेत्।
दृष्टिप्रसाद जननं बलवर्णाग्निकारकम्॥
पैत्तिके।

## चन्दनादिचूर्णम्।

चन्दनं नलदं लोध्रमुशीरं पद्मकेशरम्।
नागपुष्पञ्च बिल्वञ्च भद्रमुस्तञ्च शर्करा॥
ह्रीवेरञ्चैवपाठा च कुटजस्य फलत्वचम्।
शृङ्गवेरं सातिविषा धातकी च रसाञ्जनम्॥
आम्रास्थि जम्बुसारास्थि तथा मोचरसोद्भवः।
नीलत्पलं समङ्गा च सूक्ष्मैला दाडिमोद्भवम्॥
चतुर्विंशतिमेतानि समभागानि कारयेत्।
तण्डुलोदकसंयुक्तं मधुना सह योजयेत्॥
चतुःप्रकारं प्रदरं रक्तातीसार मुल्वणम्।
रक्तार्शांसि निहन्त्याशु भास्करस्तिमिरं यथा॥
अश्विन्योः सम्मतो योगो रक्तपित्तनिवर्हणः॥

एतानि चूर्णानि समभागानि एकीकृत्य माषक चतुष्टयं तण्डुलोदकेन मधुना च सह योजयेत्।

## प्रदरारिलौहः।

वत्सकस्य तुलां सम्यग् जलद्रोणे विपाचयेत्।
अष्टभागावशिष्टन्तु कषायमवतारयेत्॥
वस्त्रपूते घनीभूते द्रव्याणीमानि दापयेत्।

समङ्गा शाल्मलं पाठा विल्वं मुस्तञ्च धातकी॥
अरुणाव्योमकं लौहं प्रत्येकन्तु पलं पलम्।
कोलमात्रं प्रयुञ्जीत कुशमूलं पयो ह्यनु॥
श्वेतं रक्तं तथा नीलं पीतं प्रदर दुस्तरम्।
कुक्षिशूलं कटीशूलं देहशूलञ्च सर्वगम्॥
प्रदरारिरयं लौहो हन्ति रोगान् सुदुस्तरान्।
आयुःपुष्टिकरश्चैव बलवर्णाग्निवर्द्धनः॥

पुष्यानुगचूर्णम्।

पाठा जम्ब्वाम्रयोर्मध्यं शिलाभेदं रसाञ्जनम्।
अम्बष्ठकी मोचरसः समङ्गा पद्मकेशरम्॥
बाह्लीकातिविषा मुस्तं विल्वं लोध्रं सगैरिकम्
कट्फलं मरिचं शुण्ठी मृद्वीकारक्तचन्दनम्॥
कट्वङ्गवत्सकानन्ता धातकी मधुकार्जुनम्।
पुष्येणाहृत्य तुल्यानि श्लक्ष्णचूर्णानि कारयेत्॥
तानि क्षौद्रेण संयोज्य पाययेत्तण्डुलाम्बुना।
अर्शःसु चातिसारेषु रक्तं यच्चोपवेश्यते॥
दोषागन्तु कृता ये च बालानां तांश्च नाशयेत्।
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम्॥
स्त्रीणां श्यावारुणं यच्च तत्प्रसह्य निवर्त्तयेत्।
चूर्णं पुष्यानुगं नाम हितमात्रेय पूजितम्।
अम्बष्ठा दक्षिणे ख्याता टक्कन्त्यन्ये तु लक्षणाः॥

सितकल्याणकं घृतम्।

कुमुदं पद्मकोशीरं गोधूमं रक्तशालयः।

मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका।
बलातिबलयोर्मूलमुत्पलं तालमस्तकम्।
विदारी शतपुष्पी च शालपर्णी सजीरका॥
फलं त्रपुषबीजानि प्रत्यग्रं कदलीफलम्।
एषामर्द्धपलान् भागान् गव्यक्षीरं चतुर्गुणम्॥
पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत्।
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके॥
बहुरूपश्च यत् पित्तं कामलायाञ्च शोणिते।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे॥
तरुणी याल्पपुष्पा च या च गर्भं न विन्दति।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्द्धनम्॥

## मधुकाद्यवलेहः।

मधुकं चन्दनं लाक्षा रक्तोत्पलरसाञ्जनम्।
कुशवीरणयोर्मूलं बलावासकयोस्तथा॥
कोलमज्जाम्बुदं विल्वं पिच्छाढ्यं च धातकी
अशोक वल्कलं द्राक्षा जवाकुसुममस्फुटम्॥
आम्रजम्बूकिशलयं कोमलं नलिनीदलम्।
शतमूली विदारी च रजतं लौहमभ्रकम्॥
एषां कोलमितं चूर्णं द्विगुणा सितशर्करा।
वरीरसस्य प्रस्थार्द्धे पचेन्मन्देन वह्निना॥
घनीभूते क्षिपेच्चूर्णं शीतीभूते पलं मधु।
मधुकाद्यवलेहोऽयं महादेवेन भाषितः॥
दुस्तरं प्रदरं हन्ति नानावर्णं सवेदनम्।

योनिशूलं कुक्षिशूलं वस्तिशूलं सुदुःसहम्॥
रक्तातिसारं रक्तार्शो रक्तपित्तं चिरोद्भवम्।
मूत्ररोगानशेषांश्च दाहं मोहं वमिं भ्रमम्।
नाशयेन्नात्र सन्देहो भास्करस्तिमिरं यथा॥

वासाकषायसहितं रसभस्म प्रयोजितम्।
प्रदरं हन्ति वेगेन सक्षौद्रं नात्र संशयः॥

रक्तपित्तहरः सर्वः प्रदरे नूतने विधिः।
रक्तातिसारयोगश्च सर्वमत्र प्रयोजयेत्।

उत्पलादिः।

कन्दं रक्तोत्पलस्याथ रक्तकार्पास मूलकम्।
करवीरस्य मूलानि तथा रक्तोडु मूलकम्॥
बकुलस्य तथा मूलं गन्धमातृक जीरकौ।
रक्तचन्दनकं चैव समभागञ्च कारयेत्॥
तण्डुलोदकसंपिष्टं रक्तसूताय दापयेत्।
योनिशूलं कटीशूलं कुक्षिशूलञ्च नाशयेत्॥
योनिशूलहरः प्रोक्त उत्पलादिर्न संशयः।

तण्डुलोदकेन गोलयित्वा पेयः।

मूलञ्च शरपुङ्खाया पेषयेत्तण्डुलाम्बुना।
पीत्वा च कर्षमात्रन्तु अतिरिक्तं प्रशान्तयेत्॥

धात्रीघृतम्।

धात्रीफलरसप्रस्थे विदर्य्याः स्वरसे तथा।
तणपञ्च रसप्रस्थे घृतप्रस्थं विपाचयेत्॥
क्षीरस्यापि शतावर्य्याः प्रस्थं प्रस्थं रसस्य च।

दत्त्वा मृदग्निना वैद्यः पचेल्लिह्यं विधानतः॥
सुशीते प्रक्षिपेच्चूर्णमेषाञ्चापि पलं पलम्।
मधुकं त्रिवृताश्चैव क्षारश्च दृहद्दारकम्॥
शर्करायाः पलान्यष्टौ मधुनश्च पलाष्टकम्।
चूर्णं दत्त्वा प्रमथितं स्निग्धे भाण्डे निधापयेत्॥
सोमरोगं निहन्त्याशु तृष्णां दाहमरोचकम्।
मूत्रकृच्छ्रञ्च कृच्छ्रञ्च बहुमूत्रं विनाशयेत्॥
पित्तजान् विविधान् व्याधीन् वातजांश्च सुदुस्तरान्।
करोति शुक्रोपचयं सर्पिरेतदनुत्तमम्॥

## प्रदरान्तको रसः।

शुद्धसूतं तथा गन्धं शुद्धवङ्गकरूप्यकम्॥
खर्परञ्च वराटञ्च शानमानं पृथक् पृथक्।
तृतीयतोलकं ग्राह्यं लौहचूर्णं क्षिपेत्सुधीः।
कन्यानीरेण संमर्द्य दिनमेकं भिषग्वरः॥
असाध्यं प्रदरं हन्ति भक्षणान्नात्र संशयः॥

## शिलाजतुवटिका।

शुद्धसूतं समं गन्धं रक्तोत्पलदलद्रवैः।
कौटजेनाम्भसा चापि मर्दयेद्दिवसद्वयम्॥
शिलाजतु पलान्यष्टौ तावती सितशर्करा।
त्वक्क्षीरी पिप्पलीधात्री कर्कटाख्या पलोन्मिता।
निदिग्धिका फलमूलाभ्यां पलं युक्त्या त्रिजातकम्।
मधुनः पलसंयुक्तं कुर्य्यान्माषसमान् गुडान्॥
दाडिमाम्बु पयः पांशुरसं तोयं कुमारिकाम्।

तां भक्षयित्वाथ पिबेत्क्षीरञ्चो भुक्त एव वा ।
पाण्डुकुष्ठज्वरश्लीहतमकार्शो भगन्दरान् ।
पूतिविण्मूत्रशुक्रादिदोषमेहमहोदरम् ॥
कासासृग्रक्तपित्तञ्च प्रदरं रक्तसम्भवम् ।
तान् सर्वान् सुतरां हन्ति सर्वदोषहरा शिवा ॥
चन्द्रप्रभोक्तं शिलाजतु शोधनं कार्य्यम् ॥

अशोकारिष्टः ।

अशोकस्य तुलामेकाञ्चतुर्द्रोणे जले पचेत् ।
पादशेषे रसे पूते शीते पलशतद्वयम् ॥
दद्याद् गुड़स्य धातक्याः पलषोड़शिकं मतम् ।
अजाजीं मुस्तकं शुण्ठीं दार्व्युत्पलफलत्रिम् ॥
आम्रास्थि जीरकं वासां चन्दनञ्च विनिक्षिपेत् ॥
चूर्णयित्वा पलांशेन ततो भाण्डे निधापयेत् ॥
मासादूर्द्धञ्च पीत्वैन मसृग्दर रुजां जयेत् ।
ज्वरञ्च रक्तपित्तार्शो मन्दाग्नित्वमरोचकम् ॥
मेहशोथारुचिहरस्त्वशोकारिष्टसंज्ञितः ॥

पत्राङ्गासवः ।

पत्राङ्गं खदिरं वासा शाल्मलीकुसुमं बला ।
भल्लातकं सारिवे द्वे जवाकुसुममस्फटम् ॥
आम्रास्थिदार्वी भूनिम्ब आफेनफलजीरकम् ।
लौहं रसाञ्जनं विल्वं केशराजं त्वचं तथा ॥
कुङ्कुमं देवकुसुमं प्रत्येकं पलसम्मितम् ।
सर्वं सुचूर्णितं कृत्वा द्राक्षायाः पलविंशतिम् ॥

धात्रीं षोड़शपलां जलद्रोणद्वये क्षिपेत् ।
शर्कराया स्तुलां दत्त्वा क्षौद्रस्यार्द्धतुलां तथा ॥
एकीकृत्य क्षिपेद्भाण्डे निदध्यान्मासमात्रकम् ।
हन्त्युग्रं प्रदरं सर्वं श्वेताकृष्णं सवेदनम् ॥
ज्वरं पाण्डुं तथा शोफं मन्दाग्नित्वमरोचकम् ॥

## प्रियङ्ग्वादितैलम् ।

प्रियङ्ग्वलयष्ट्याह्व फलत्रिकरसाञ्जनैः ।
चन्दनद्व पञ्जिष्ठाशताह्वा सर्जसैन्धवैः ॥
मुस्तमोचरसानन्त वायसीविल्वबालकैः ।
कल्कैः कारजाणा कृष्णाकाकोली युगलैस्तथा ।
गन्धद्रव्यै निखिलैश्छागीक्षीरेण समुना ।
दार्व्वीक्वाथेन च पचेत्तैलं तिलसमुद्भवम् ॥
प्रियङ्ग्वादिमिदं तैलं प्रदरं योनिजान् गदान् ।
ग्रहणीमतिसारञ्च हन्याद् गर्भस्य रक्षणम् ॥

## योनिव्यापच्चिकित्सा ।

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म्मवातजित् ।
वस्त्यभ्यङ्गपरीषेकप्रलेपाः पिचुधारणम् ॥
वचोपकुञ्चिकाजाजी कृष्णा वृषकसैन्धवम् ।
अजमोदां यवक्षारं चित्रकं शर्करान्वितम् ॥
पिष्ट्वा प्रसन्नयालोड्य खादेत्तद् घृतभर्जितम् ।
योनिव्यापत्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥
... त्रिफला दन्ती क्वाथेन परिषेचनम् ।
... ... ... ... ... ... ... ... ॥

तैलात् प्रमाधिनाल्काद्यैः पिचूर्योनौ रुजापहः ॥
पित्तलानान्तु योनीनां सेकाभ्यङ्ग पिचुक्रियाः ।
शीता. पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च ॥
योन्यां बलासदुष्टायां सर्वं रूक्षोष्णमौषधम् ।
पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठ सैन्धवैः ।
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधिनी ॥
छित्त्वाकल्कन्तु वातार्त्तां कोष्णमभ्यज्य धारयेत् ।
पञ्चवल्कस्य पित्तार्त्तां श्यामादीनां कफोत्तरा ॥
मूषिकमांससंयुक्तं तैलमातपभावितम् ।
अभ्यङ्गात् हन्ति योन्यर्शः स्वेदस्तन्मांससैन्धवैः ॥
गोपित्ते मत्स्यपित्ते वा क्षौमं सप्ताह भावितम् ।
स्रोतसां शोधनं कण्डूक्लेद शोथहरञ्च तत् ॥
यामिन्याः पूतियोन्याश्च कर्त्तव्यः स्वेदनोऽपि वा ।
क्रमः कार्य्यस्ततः स्नेह पिचुभिस्तर्पणं भवेत् ॥
नक्तको जिङ्गिनी जम्बूधवत्वक् पञ्चपल्लवैः ।
कषायैः साधितः स्नेहः पिचुः स्याद्विप्लुतापहः ॥
कर्णिन्यां वर्त्तिकाकुष्ठपिप्पल्यर्काग्रसैन्धवैः ।
वस्तमूत्रे कृता धार्य्या सर्वञ्च कफनुद्धितम् ॥
त्रैवृतं स्नेहनं स्वेद उदावृत्तानिलार्त्तिषु ।
तदेव च महायोन्यां स्रस्तायाञ्च विधीयते ॥
आखोर्मांसं सपदि बहुधा खण्डखण्डीकृतं तत्
तैलेपाच्यं भवति नियतं यावदेतन्न सम्यक् ।
तैलाक्तं वसनमनिशं योनिभागे दधाना
हन्ति व्रीड़ाकर भगफलं नात्र सन्देह बुद्धिः ॥

शतपुष्पातैलसैंधवानुवरीदलजातथा ॥
पेटिका मूललेपेन योनिभिन्ना प्रशाम्यति ॥
मूषकीमूललेपेन प्रविष्टा तु बहिर्भवेत् ।
योनिर्मूषावसाभ्यङ्गाद्बिःसृता प्रविशेदपि ॥
लोध्रतुम्बी फलालेपो योनिदार्ढ्यं करोति च ।
वेतसमूलनिःक्वाथ चालनेन तथैव च ॥
वचा नीलोत्पलं कुष्ठं मरिचानि तथैव च ।
अश्वगन्धा हरिद्रा च गाढ़ीकरण मुत्तमम् ॥
पलाशोडुम्बरफलं तिलतैलसमन्वितम् ।
मधुना योनिमालिप्य गाढ़ीकरणमुत्तमम् ॥
मदनफल मधु कर्पूरप्रपूरितं कामिनीजनस्य ।
चिरगलित यौवनस्य च वराङ्गमति गाढ़सुकुमारम् ॥
पञ्चपल्लव यष्ट्याह्व मालती कुसुमैर्घृतम् ।
रविपक्वमन्यथा वा योनिगन्ध निवारणम् ॥
इक्ष्वाकुबीजदन्ती चपला गुड़ मदनफल मूलायष्ट्याद्यैः ।
सस्नुक् क्षीरैर्वर्त्तिर्योनिगता कुसुम सञ्जननी ॥
सकाञ्जिकं जवापुष्पं भृष्टं ज्योतिष्मतीदलम् ।
दूर्वापिष्टञ्च संप्राश्य वनिता लातवं लभेत् ॥
दूर्वापिष्टं तण्डुलयोगात् ।
धात्र्यर्जुनाभया चूर्णं तोयपीतं रजो हरेत् ।
शेलुच्छदमिश्रपिष्ट भक्षणञ्च तदर्थकृत् ॥
पाठापत्रं ऋतुस्नातो पीत्वा गर्भं न धारयेत् ।
रसाञ्जनं हैमवती वयःस्था
चूर्णीकृतं शीतजलेन पीतम् ।

रजो विनाशं नियतं करोति
प्रकाच वा गर्भसमागमस्य ॥
पुष्योद्धृतं लक्षणायाश्चक्राङ्गायास्तु कन्यया।
पिष्टं मूलं दुग्धघृत पीत ऋतौ तु पुत्रदम् ॥
सुवर्णस्य रूप्यकस्य चूर्णं ताम्रस्य चाज्य मिश्रिते।
पीते शुद्धे चेत्रे भेषजयोगाद्भवेद्गर्भः ॥
कृत्वा शुद्धौ स्नानं विलङ्घ्य दिवसान्तरे ततः प्रातः
स्नात्वा द्विजाय दत्त्वा भक्त्या संपूज्य लोकनाथेशम् ॥
श्वेत बलाङ्घ्रियष्टि कौ कर्षं पलम् शर्करायाः।
पिष्टैकवर्णा जीवद्वत्सैकवर्णाया गोस्तु दुग्धेन ॥
सर्पाधिकघृतेन पेयं नाव क्लिन्ने देयमन्यच्च।
क्षुधिते सदुग्धमन्नं स्नानाद्यापुरुषसन्निभं तस्याः ॥
सम दिवसे शुभयोगे दक्षिण पार्श्वे उन्मीलितो धीरः।
त्यक्तस्वान्तर सङ्गाहृष्ट मनसोऽपि प्रवर्तितो ॥
पुंसः सङ्गम मात्राल्लभते पुत्रं ततो नियतम्।
गोशृङ्गजातरत्नं च . . . नरगात्रजे शुभे।
शुद्धे माषौ तथा गौरसर्षपौ दधिमिश्रितौ।
पुष्यापीतौ द्रुतापन्नसत्वायाः पुत्रकारकौ ॥
पत्रमेकं पलाशस्य गर्भिणी पयसान्वितम्।
पीत्वा च लभते पुत्रं रूपवन्तं न संशयः ॥

## फलकल्याणघृतम्।

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला।
मेदे पयस्या काकोलीमूलञ्चैवाश्वगन्धजम् ॥

अजमोदा हरिद्रे द्वे हिङ्गुः कटुकरोहिणी।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम्॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत्।
शतावरीरसक्षीरं घृताद्देयं चतुर्गुणम्॥
सर्पिरेतन्नरः पीत्वा नित्यं स्त्रीषु वृषायते।
पुत्रान् सञ्जनयेन्नारी मेधाढ्यान् प्रियदर्शनान्॥
या चैवास्थिरगर्भा स्यात् या च वा जनयेन्मृतम्॥
अल्पायुषं वा जनयेद्या च कन्यां प्रसूयते॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते।
प्रजावर्द्धनमायुष्यं सर्वग्रहनिवारणम्॥
नाम्ना फलघृतं ह्येतदश्विभ्यां परिकीर्त्तितम्॥
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सकाः।
क्वाथेन हयगन्धायाः साधितं सघृतं पयः।
ऋतुस्नाताबला पीत्वा गर्भं धत्ते न संशयः।
पिप्पली शृङ्गवेरञ्च मरिचं नागकेशरम्।
घृतेन सहपातव्यं वन्ध्यापि लभते सुतम्॥

सोमघृतम्।

सिद्धार्थकं वचा ब्राह्मी शङ्खपुष्पी पुनर्नवा।
पयस्याभय यष्ट्याह्वं कटुका च फलत्रयम्॥
शारिवे रजनी पाठा भृङ्गदारु सुवर्च्चलाः।
मञ्जिष्ठा त्रिफला श्यामा वृषपुष्पं सगैरिकम्॥
क्षीमान् पक्त्वा घृतप्रस्थं सम्यङ्मन्त्राभिमन्त्रितम्।
द्विमासगर्भिणी नारी पक्षात्सामुपयोजयेत॥

संवत्सरं जनयेत् पुत्रं सर्वामय विवर्जितम्।
अस्य प्रयोगात् कुचिस्थः स्फुटवन्ध्या हरत्यपि॥
योनिदुष्टाश्च या नार्योरेतोदुष्टाश्च ये नराः।
स्त्रीणां पुंसां दोष हरं घृतमेतदनुत्तमम्॥
वन्ध्यापि लभते पुत्रं शूरं पण्डितमानिनम्॥
जड़गद्गद् मूकत्वं पानादेवापकर्षति॥
सप्तरात्र प्रयोगेण नरः श्रुतिधरो भवेत्।
नाग्निर्दहति तद्वेश्म न वज्रमुपहन्ति च॥
न तत्र म्रियते बालो यत्रास्ते सोम संज्ञितम्॥

कटुका च फलत्रयमित्यत्र कटुकैला फलत्रयमिति पाठः प्राचीन सम्मतः। अत्र फलत्रयं द्राक्षा काश्मरी परूषकाणि, श्यामा प्रियङ्गुः शेषं सुबोधम्। कल्कत्वं कर्ति २ तो ३ ना। मन्त्रश्च गायत्री यदाह सुश्रुतः। यत्र नोद्दीरितो मन्त्रो योगेषु येषु मारनैः। सर्वत्र गदिता तत्र गायत्री फलसिद्धिदा॥ मन्त्रश्चायम्। ओं नमो महाविनायकाय अमृतं रक्ष रक्ष ममफलसिद्धिं देहि देहि रुद्रवचनेनस्वाहा इति सप्तधा मन्त्रयेत् इति ग्रन्थान्तर दृष्टं लिखितम्।

## कुमारकल्पद्रुमं घृतम्।

पञ्चाशच्छागमांसस्य दशमूल्यास्तथैव च।
जलमष्टगुणं दत्वा क्वाथेनामृदुनाग्निना॥
चतुर्भागावशेषञ्च क्वाथं संस्राव्य यत्नतः।
गव्यं प्रस्थद्वयं सर्पिर्दद्यात् कुशलो भिषक्॥

क्षीरं घृतसमं दद्यान्नारायण्या रसं तथा।
ताम्रे वा मृण्मये पात्रे तदेकत्र पचेच्छनैः॥
कुष्ठं शठी च मेदे द्वे जीवकर्षभकौ तथा।
प्रियङ्गु त्रिफला दारु पत्रमेला शतावरी॥
काश्मरी मधुकं क्षीरकाकोली मस्तमुत्पलम्।
जीवनी चन्दनञ्चैव काकोली शारिवायुगम्॥
श्वेतवाट्यालजं मूलं मूलञ्च शरपुङ्खजम्।
विदारीद्वय मञ्जिष्ठा पर्णिनीद्वयमेव च॥
नागपुष्पं तथा दारु हरिद्रा रेणुकं तथा।
ज्योतिष्मतीभवं मूलं शङ्खिनी नीलिनी वचा॥
अगुरुत्वगलवङ्गञ्च कुङ्कुमं निक्षिपेत्ततः।
एतेषां कार्षिकं कल्कं दत्वा शुभदिने सुधीः॥
शुभनक्षत्रयोगे च संपूज्य गणनायकम्।
शङ्करञ्च मृडानीञ्च नमस्कृत्यातिभक्तितः॥
पाकं कुर्य्यात्प्रयत्नेन विजानन्मन्त्रपूर्वकम्।
सिद्धशीते क्षिपेत्तत्र पारदं परिनिर्मलम्॥
सुजीर्णं शोधितञ्चाभ्रं गन्धकं कार्षिकं न्यसेत्।
ततः पुष्परसं तत्र प्रस्थार्द्धञ्च विनिक्षिपेत्॥
काचसम्पुटके वान्यपात्रे वा स्थापयेत्सुधीः।
पराशर मुनिः प्रीतिकरुणावारिधिर्मुदा॥
वन्ध्यामय विनाशाय शिशुकल्पद्रुमं घृतम्।
चक्रपाणि प्रसादेन जन्मवन्ध्या लभेत्सुतम्॥
खादेत्कर्षद्वयं सर्पिर्दत्त्वा विप्राय सादरम्।
अनुपानं प्रकुर्वीत पयश्छागं विशेषतः॥

गव्यं वापि पिबेत् चिरं शीतं पलयुगं तथा।
घृतस्यास्य सुसिद्धस्य गुनान् शृणु समाहितः॥
अस्य प्रसादात् षण्डोऽपि बन्ध्यायां जनयेत्सुतान्।
रजोदोषेण या दुष्टा शुक्रदोषेण यापि च॥
स्त्रीभगस्य गदेनैव पीड़िता या च सर्वदा।
या च पुष्पं न विन्देत ऋतुना पीड़िता च या॥
भूत्वा भूत्वा च नश्यन्ति सुता यासां मुहुर्मुहुः।
अनेकौषधयोगेन मन्त्रयोगेन वा पुनः॥
अनेक व्रत योगेन यासां पुत्रो न जायते।
तासां कामसमाः पुत्रा जायन्ते चिरजीविनः॥
एतद् घृतं गृहे यस्य न तस्य कुलिशाद्भयम्।
न राक्षसैः पिशाचैश्च गृह्यते तस्य बालकः॥
नोपसर्पति सर्पोऽपि दर्पात्तस्य गृहान्तिकम्॥

अथ गर्भिणीचिकित्सा।

प्रथमे मासि गर्भे तु यदा भवति वेदना।
चन्दनं शतपुष्पा च शर्करा मदयन्तिका॥
एतानि समभागानि पिष्ट्वा तण्डुल वारिणा।
पाययेत्पयसालोड्य गर्भिणीं मात्रया भिषक्॥
तथा तिलान् पद्मकञ्च शालूकं शालितण्डुलान्।
क्षीरेण पिष्ट्वा क्षीरेण सिता क्षौद्रान्वितेन च।
आलोड्य पाययेन्नारीं ततः सम्पद्यते शुभम्।
तस्मिन् सुजीर्णे दातव्यं भोजनं क्षीर संयुतम्॥
द्वितीये मासि गर्भे तु यदा भवति वेदना।

तदोत्पलस्य कल्कन्तु शृङ्गाटक कशेरुकम्।
तण्डुलोदक पिष्टन्तु पाययेत्तण्डुलाम्बुना।
निवार्य्य गर्भशूलञ्च स्थिरं गर्भं करोति च॥

तृतीये क्षीरकाकोलीकाकोल्यामलकीफलम्।
पिष्टमुष्णोदकेनैतत्पाययेत् गर्भिणीं भिषक्॥
भोजनं पयसा जीर्णे भोजयेद्‌नुगर्भिणीम्।
तथा पद्मोत्पलं कुष्ठं शालकञ्च समांशिकम्॥
सितोदकेन पिष्ट्वा तु क्षीरेणालोड्य पाययेत्।
तेन शूलं निवर्त्तेत न गर्भो व्यथते ध्रुवम्॥

चतुर्थे तु विधानज्ञः पाययेदिदमौषधम्।
पिष्टोत्पलञ्च शालूकं कण्टकारी त्रिकण्टकम्॥
यथाग्निमात्रया काले गर्भिणीं पयसा सह।
तथागोक्षुरकं सिंहीं बालकं नीलमुत्पलम्॥
पिष्ट्वा क्षीरेण पातव्यं गर्भशूलनिवारणम्॥

पञ्चमे मासि गर्भे तु यदा भवति वेदना।
तत्र नीलोत्पलं वीरां पिष्ट्वा क्षीरेण पाचनम्॥
घृतक्षौद्रान्वितं पीत्वा गर्भस्य च रुजां हरेत्।
तथा नीलोत्पलं नारीं काकोलीं समभागिकम्॥
शीत तोयेन पिष्ट्वा च क्षीरेणालोड्य पाययेत्।
अनेन विधिना गर्भः स्थिरः स्यात् रुक् प्रशाम्यति॥

षष्ठे मासि यदा गर्भे वेदना जायते तथा।
मातुलुङ्गस्य वीजानि प्रियङ्गु चन्दनोत्पलम्॥
क्षीरेणालोड्य पातव्यं गर्भशूल निवारणम्।
तथा पिप्पल वीजानि मृद्वीकालाज मस्तवः॥

एतत् सुशीतलं काले पीत्वा च सुखमश्नुते ॥

सप्तमे शतपुष्पीञ्च मृणालसहितं पिबेत् ।
पिष्ट्वा क्षीरेण शूलार्त्ता गर्भिणी या सुखार्थिनी ॥
कपित्थक्रमुकाम्मूलं सलाजं शर्करायुतम् ।
शीततोयेन संपिष्टं क्षीरेणालोड्य पाययेत् ॥
पीत्वा हन्त्यबला शीघ्रं शूलं गर्भसमुद्भवम् ॥

अष्टमे तु यदा मासे गर्भे भवति वेदना ।
तदा पिष्ट्वा तु धन्याकं पाययेत्तण्डुलाम्बुना ॥
शूलं निवर्त्तते न तेन गर्भः संधार्य्यते स्त्रियाः ॥

एवं पलाशस्य दलं सुपिष्टं
सपीय तोयेन सुशीतलेन ।
अत्यन्त घोराष्टममास गर्भ-
व्यथातुरा यान्ति सुखं तरुण्यः ।

गर्भिण्या नवमे मासे जदा भवति वेदना
एरण्डमूलं काकोलीं पिष्ट्वा शीतोदकेन च
पीत्वा शूलाद्विमुच्येत तदा नारी न संशयः
तथा पलाशबीजञ्च सकाकोलीकुरुण्टकम् ।
भक्तेन वारिना पिष्ट्वा गर्भशूलं व्यपोहति ॥

अथवा दशमे मासे वेदना जायते यदा ।
तदा नीलोत्पलं जष्टीमधुकं मुद्गसंजूतम् ॥
ससितं चाम्भसा पीत्वा क्षीरेणालोड्य पाययेत् ।
दोषञ्च नाशयेदेष शूलं गर्भसमुद्भवम् ॥

तथा चैकादशे मासि गर्भे भवति वेदना ।
[illegible] नीलमुत्पलम ॥

शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य पाययेत् ।
तेनैव वेदनातीव नाशमायाति सत्वरम् ॥
क्षीरिकामुत्पलं कुष्ठं समङ्गामूलकं सिता ।
पिबेदेकादशे मासि गर्भिणी शूलशान्तये ॥
सिताविदारी काकोली तथा क्षीरविदारिका ।
गर्भिणी द्वादशेमासि पिबेच्छूलघ्नमौषधम् ॥
मधुकं शाकबीजञ्च पयस्या सुरदारु च ।
अश्मान्तकं कृष्णतिला स्ताम्रवल्ली शतावरी ॥
वृक्षादनी पयस्या च तथैवोत्पल शारिवा ।
अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ॥
वृहतीद्वयकाश्मर्य्य क्षीरिशुङ्गास्त्वचोघृतम् ।
पृथक्पर्णी बलाशिग्रु श्वदंष्ट्रा मधुयष्टीका ॥
शृङ्गाटकं विषं द्राक्षा कशेरु मधुकं सिता ॥
मासेषु सप्तयोगाः स्युरर्द्धश्लोक समापकाः ॥
यथाक्रमं प्रयोक्तव्या रक्तस्रावे पयोऽन्विताः ॥
कपित्थ विल्ववृहती पटोलेक्षु निदिग्धिका ।
मूलानि क्षीरपिष्टानि दापयेद्भिषगष्टमे ॥
नवमे मधुकानन्तापयस्याशारिवाः पिबेत् ॥
पयस्तु दशमे शुण्ठ्या शृतं शीतं प्रशस्यते ।
सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च ॥
एवमाप्यायते गर्भस्तीव्रा रुक्‌च प्रशाम्यति ॥
कुशकाशोरुवूकानां मूलैर्गोक्षुरकस्य च ।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत्परम् ॥

वंशैकशृङ्गाटकजीवनीय-
पद्मोत्पलैरण्डशतावरीभिः।
सिद्धं पयः शर्करया विमिश्रं
संस्थापयेद्गर्भमुदीर्णवेगम्॥

मधुना च्छागदुग्धेन कुलालकरकर्दमः।
अवश्यं स्थापयेद्गर्भं चलितं पानयोगतः॥

कशेरु शृङ्गाटक पद्मकोत्पलं
समुद्गपर्णी मधुकं सशर्करम्।
सशूलगर्भस्रुतिपीड़िताङ्गना
पयो विमिश्रं पयसान्नभुक् पिबेत्॥

गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम्।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः॥

चन्दनं शारिवा लोध्रं मृद्वीका शर्करान्वितम्।
क्वाथं कृत्वा प्रदातव्यं गर्भिण्या ज्वरनाशनम्॥

एरण्डादिः।

एरण्डमूलममृता मञ्जिष्ठा रक्तचन्दनम्।
दारुपद्मयुतः क्वाथो गर्भिण्या ज्वरनाशनः॥

अत्र सामान्य ज्वरोक्ताः कषायाश्च बुद्धा देयाः। सिंहास्यादिर्गुड़च्यादिः पञ्चमूलीरसोऽपि वा। मधुना शमयन्त्येते गर्भिण्या ज्वरमाशु च। पञ्चमूलीशृतं क्षीरं गर्भिण्या ज्वरशान्तये॥ इति ज्वराधिकारे चक्रदत्त लिखितम्।

आम्रजम्बूत्वचः क्वाथं लेहयेल्लाजशक्तुभिः।

अनेन लीढ़मात्रेण गर्भिणी ग्रहणीं जयेत् ॥

## ह्रीवेरादिः।

ह्रीवेरारलुरक्तचन्दन बला धन्याक वत्सादनी
मुस्तोशीर यवासपर्पट विषा क्वाथं पिवेद्गर्भिणी।
नानावर्णरुजातिसारकगदे रक्तस्रुतौ वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूतामयेषूत्तमः ॥

## लवङ्गादिचूर्णम्।

लवङ्गं टङ्कनं मुस्तं धातकी बिल्वधान्यकम्।
जातीफलं सर्जकञ्च शताह्वा दाड़िमं तथा॥
जीरकं सैन्धवं मोचं नीलोत्पलरसाञ्जनम्।
अभ्रकं बङ्गकञ्चैव समङ्गा रक्तचन्दनम् ॥
विश्वश्चातिविषा शृङ्गी खदिरं बालकं समम् ॥
एतच्चूर्णं प्रदातव्यं संग्रहग्रहणी हरम् ॥
नानावर्णमतीसारं ज्वरञ्चैव नियच्छति।
आमरक्तातिसारघ्नं शूलशोथनिसूदनम्।
भृङ्गराजरसैः द्रव्यं भावयित्वा दिनत्रयम्।
छागीदुग्धेन मतिमान् गर्भिणीमनुपानतः।
रोमराजी भवेद्यस्या वामपार्श्वे समुच्छ्रिता।
कन्यां तस्या विजानियात् दक्षिणे च तथा सुतम् ॥
धन्वन्तरिमतेनैव साध्यासाध्यस्य शास्त्रवित्।
सप्तमे चाष्टमेमासे मैथुनं परिवर्जयेत् ॥
यदि गच्छति दुर्मेधाः कामसोहादचेतनः।

विपद्यते तदा गर्भो गर्भिणी च विनश्यति ॥
अन्धमूकादि बधिरो जायते कुब्ज एव वा ॥

## गर्भचिन्तामणिरसः।

रसं तालं तथा लौहं प्रत्येकं कर्षमात्रकम्।
कर्षद्वयं तथा चाभ्रं कर्पूरं वङ्गताम्रकम् ॥
जातीफलं तथा कोषं गोक्षुरञ्च शतावरी।
बलातिबलयोर्मूलं प्रत्येकं तोलकं शुभम ॥
वारिणा वटिका कार्य्या द्विगुञ्जाफलमानतः।
सन्निपातं निहन्त्याशु स्त्रीणाञ्चैव विशेषतः ॥
गर्भिण्या ज्वरदाहञ्च प्रदरं सुतिकामयम् ॥

## गर्भविलासीरसः।

रसगन्धकतुल्यञ्च ताम्रं जम्बीरमर्द्दितम्।
त्रिभावितं त्रिकटुना देयं गुञ्जाद्वयोन्मितम् ॥
गर्भिण्याः शूलविष्टम्भ ज्वराजीर्णेषु केवलम्।
तुल्यस्थाने यदि स्वर्णं चिन्तामणिरसः स्मृतः ॥

## गर्भपीयूषवल्लीरसः।

सूतं गन्धं तथा स्वर्णं लौहं रजतमाक्षिकम्।
हरितालं वङ्गभस्माप्यभ्रकं समभागिकम्।
भावना खलु दातव्या रसैरेभिः पृथक् पृथक्।
ब्राह्मी वासा भृङ्गराज पर्पटं दशमूलकम ॥
सप्तधा भावयेद्वैद्यो गुञ्जामानां वटीं चरेत्।
गर्भपीयूषवल्ल्याख्यो गर्भिणीरोगहृत्परम् ॥

### गर्भविलासतैलम्।

विदारी दाडिमं पत्रं रजनी च फलत्रयम्।
शृङ्गाटकस्य पत्रञ्च जातीकुसुममेव च॥
वरी नीलोत्पलं पद्मं तैलमेतैः पचेत् सुधीः।
एतद्गर्भविलासाख्यं गर्भसंस्थापनं परम्॥
निहन्ति गर्भशूलञ्च शोणितस्रुतिसंहरम्।
परं हृद्यतरं ह्येतत्काशीराजेन निर्मितम्॥

### इन्दुशेखररसः।

शिलाजत्वभ्रसिन्दूरप्रवालायोरजांसि च।
माक्षिकञ्च तथा तालं समभागानि मर्दयेत्॥
भृङ्गराजस्य पार्थस्य निर्गुण्ड्या वासकस्य च।
स्थलपद्मस्य पद्मस्य कुटजस्य च वारिणा॥
भावयित्वा वटीः कृत्वा कलाय परिमाणतः।
यथादोषानुपानेन गर्भिणीषु प्रयोजयेत्॥
गर्भिणीनां ज्वरं घोरं श्वासं कासं शिरोरुजम्।
रक्तातिसारं ग्रहणीं वान्तिं वह्नेश्च मन्दताम्॥
आलस्यमपि दौर्बल्यं हन्यादेष न संशयः।
कलेरादौ ससर्जेमं भगवानिन्दुशेखरः॥

### अथ सूतिकारोगचिकित्सा।

पाठा लाङ्गलिसिंहास्य मयूरकजटैः पृथक्।
नाभिवस्तिभगालेपात्सुखं नारी प्रसूयते॥
मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम्॥

घृतेन सह पातव्यं सुखं नारी प्रसूयते।
इहामृतञ्च सोमश्च चित्रभानुश्च भाविनि।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते॥
इदममृतमपां समुद्धृतं भैरव
लघुगर्भमिमं विमुञ्चतु स्त्री।
तदनल पवनार्क वासवास्ते
सह लवणाम्बुधरैर्दिशन्तु शान्तिम्॥
मुक्ताः पाशा विपाशाय मुक्ताः सूर्य्येन्दुरश्मयः।
मुक्ताः सर्वभयाद्गर्भ एह्येहि माचिरं स्वाहा।
इति स्रावयेत्।
जलं च्यवन मन्त्रेण सप्तवाराभिमन्त्रितम्।
पीत्वा प्रसूयते नारी दृष्ट्वा चोभयत्रिंशकम्।
तथाभय पञ्चदशकं दृष्ट्वा प्रतिकृत्॥

च्यवनमन्त्रो यथा। ओं त्विप निच्चिप उत्थाप प्रथम मुञ्च मुञ्च स्वाहा। इति मन्त्रेण जलं सप्तधाभिमन्त्रितं पाययेत्। अथोभयपञ्चदशकं दर्शयेत्। यथा।
वसु गुणौ वेदार्कौ वाण नवषट् सप्तयुगैः क्रमात्।
सर्वं पञ्चदशं हिस्तु त्रिंशकं नवकोष्ठकं॥
नाडीकृतु वसुभिः सह पञ्च दिगष्टादशभिरेव च
अर्कभुवनाब्धि सहितैरुभय त्रिंशकमाश्चर्य्यम्॥
उभयोरेकतरं शरावे लिखित्वा दर्शयेत्।

प्रसव पत्र। यमुना सरट करटतीरे जम्भला नामराक्षसी। तस्याः स्मरणमात्रेण सद्यो नारी प्रसूयते॥
द्रष्टव्यम्।

अथ पञ्चदशकम् ।

| | | |
|---|---|---|
| ८ | ३ | ४ |
| १ | ५ | ९ |
| ६ | ७ | २ |

अथ विंशकम्

| | | |
|---|---|---|
| १६ | ६ | ८ |
| २ | १० | १८ |
| १२ | १४ | ४ |

गृहाम्बुना गेहधूमपानं गर्भापकर्षणम् ॥
पुटदग्धसर्पकञ्चुक मसृणमसी कुसुमसारसहिताञ्जी ।
झटिति विशल्या जायते गर्भिणी मूढगर्भापि ॥
स्नुहीक्षीरं तथा स्नोकं गर्भिण्याः शिरसि क्षिपेत् ।
मृतगर्भं तदा सूते गर्भिणीरागिणी द्रुतम् ॥
गृहाम्बुना हिङ्गुसिन्धुपानं गर्भापकर्षणम् ॥
करिमूषनदहनमूलं पिष्टं सलिलेन पातनं सद्यः ।
चिरमचिरजं गर्भं मृतममृतं वा निपातयति ॥
कटुतुम्ब्यहिनिर्मोककृतवेधनसर्षपैः ।
कटुतैलान्वितैर्धूपो योनौ पातयतेऽमराम् ॥
कचवेष्टितयाङ्गुल्या घृष्टे कुण्ठे पतत्यमरा ।
मूलेन लाङ्गलिक्याः संलिप्ते हस्तपादे च ॥
अमरा पातनं मद्यैः पिप्पल्यादिरजः पिबेत् ।
शालिमूलाचमानं वा मद्येनाम्लेन वा प्लुतम् ॥
उपकुञ्चिकां पिप्पलीञ्च मदिरां लाभतः पिबेत्
सौवर्चलेन संयुक्तां योनिशूलनिवारिणीम् ॥
सूताया हृच्छिरोवस्तिशूलं मक्कल्लसंज्ञितम् ।
यवक्षारं पिबेत्तत्र सर्पिषोष्णोदकेन वा ॥

पिप्पल्यादिगणक्वाथं पिबेद्वा लवणान्वितम् ॥
पारावतशकृत् पीतं शालितण्डुलवारिणा।
गर्भपातानन्तरोत्थरक्तस्रावनिवारणम् ॥
जलपिष्टवरुणपत्रैः सघृतैरुद्वर्त्तनालेपौ।
क्किक्किशरोगं हरतो गोमयघर्षादथो विहितौ ॥

अमृतादिः।

अमृता नागर सहचर भद्रोत्कट पञ्चमूल जलदजलम्।
पीतं मधुसंयुक्तं निवारयति सूतिकातङ्कम् ॥
सहचरपुष्करवेतसमूलं
विकङ्कतदारु कुलत्थसमम्।
जलमत्र ससैन्धवहिङ्गुयुतं
सद्योज्वरसूतिकशूलहरम् ॥
दशमूलीकृतः क्वाथः सान्यः सूतिकजापहः ॥

सूतिकादशमूलम्।

शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम्।
दासीप्रसारणी बिल्व गुडूची मुस्तकं तथा ॥
निहन्ति सूतिकारोगं ज्वरं दाहसमन्वितम् ॥

सहचरादिः।

सहचरमुस्तगुडूची भद्रोत्कट बिल्वबालकैः क्वथितम्।
पेयमिदं मधुमिश्रं सद्यो ज्वरशूलनुत् सूत्याः ॥
सहाचरकृतः क्वाथः पिप्पली चूर्णसंयुतः।
दीपनो ज्वरदोषामसूतिकारोगनाशनः ॥

पीतकुलत्थक्वथितं रजनीपर्य्युषितं पीतमपहरति ।
सूतिरोगान् सहस्रं तन्मूलं चर्वितं तद्वत् ॥

## वज्रकाञ्जिकम् ।

पिप्पली पिप्पलीमूलं चव्यं शुण्ठी यमानिका ।
जीरके द्वे हरिद्रे द्वे विड़ं सौवर्चलं तथा ॥
एतैरेवौषधैः पिष्टैरारनालं विपाचयेत् ।
एतदामहरं हृद्यं कफघ्नं वह्निदीपनम् ॥
काञ्जिकं वज्रकं नाम स्त्रीणामग्निविवर्द्धनम् ।
मक्कल्लशूलशमनं परं क्षीराभिवर्द्धनम् ॥
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम् ।

## भद्रोत्कटाद्यवलेहः ।

भद्रोत्कटतुला क्वाथे पादशेषे विनिक्षिपेत् ।
शर्करायाः पलानि शत् चूर्णानीमानि दापयेत् ॥
वत्सकं धान्यकं मुस्तमुशीरं बिल्वमेव च ।
शाल्मलीवेष्टकञ्चैव पिप्पली मरिचानि च ॥
बला चातिविषा मांसी ह्रीवेरं सदुरालभम् ।
एषाञ्च पलिकैर्भागैश्चूर्णैरेनं समाचरेत् ॥
संग्रहग्रहणीं हन्ति सूतिकाञ्च सुदुस्तराम् ।
वह्निञ्च कुरुते दीप्तं शूलानाहं विबन्धनुत् ॥

## भद्रोत्कटाद्यं घृतम् ।

समूलपत्रशाखन्तु शतं भद्रोत्कटस्य च ।
वारिद्रोणेन संसाध्य स्थाप्यं पादावशेषितम् ॥

घृतप्रस्थं विपक्तव्यं गर्भे दत्त्वा तु कार्षिकम्।
सव्योषं पिप्पलीमूलं चित्रकं जीरकं तथा॥
पञ्चमूलं कनिष्ठञ्च रास्नैरण्डसमन्वितम।
बलासिन्धुयवक्षार स्वर्जिका कृष्णजीरकम्॥
सिद्धमेतद् घृतं सद्यो निहन्यात् सूतिकामयान्।
ग्रहणीं पाण्डुरोगञ्च अर्शांसि विविधानि च॥
अग्निञ्च कुरुते दीप्तं स्त्रीणां स्तन्यविशोधनम्॥

सौभाग्यशुण्ठी मोदक।

कशेरुशृङ्गाटकपाटमुस्तं
द्विजीरकं जातीफलं सकोषम्।
लवङ्गशैलेय सनागपुष्पं
पत्रं वराङ्गं शटिधातकी च॥
एला शताह्वा धनिकेभपिप्पली
सपिप्पली सोपणका शतावरी।
प्रत्येकमेषामिह कर्षयुग्मं ७१
महौषधीचूर्णपलानि चाष्टौ॥ ७२
पलानि त्रिंशत्सितशर्करायाः
पलानि चाष्टावपि सर्पिषश्च।
प्रस्थद्वयं क्षीरमिह प्रयुक्तम्
पचेद्विधिज्ञः परमादरेण॥
खादेदिदं कर्षमथार्द्धकर्षं
कर्षद्वयं वापि समीक्ष्य शस्तम्।
सौभाग्यशुण्ठी कथिता भिषग्भिः
अग्निप्रदा सूतिगदापहा च।

सर्वातिसारग्रहणीहरा च ॥

## सौभाग्यशुण्ठीमोदक।

त्रिकटु त्रिफलाजाजी चातुर्जातकमुस्तकम्।
जातीकोषफलं धान्यं लवङ्गं शतपुत्रिका ॥
नलिका मादनफलं यमानीद्वयधातकी।
शतावरी तालमूली लोध्रं वारणपिप्पली ॥
पियालबीजममृता कर्पूरं चन्दनद्वयम्।
कर्षप्रमाणान्येतेषां सूक्ष्मचूर्णानि कारयेत् ॥
नागरस्य च चूर्णस्य प्रस्थद्वयमितं क्षिपेत्।
दृढ़े च मृण्मये पात्रे पाचयेन्मृदुनाग्निना।
यत्नतः पाकविद्वैद्यो गुड़िकां कारयेत्ततः।
घृतमष्टफलं दद्यात् क्षीरप्रस्थद्वयं तथा
सार्द्धप्रस्थद्वयं चात्र शर्करायास्ततः क्षिपेत्।
भक्षयेत् प्रातरुत्थाय अजाक्षीरं पिबेदनु ॥
आमवातं निहन्त्याशु कासं श्वासं सपीनसम्।
ग्रहणीमम्लपित्तञ्च रक्तपित्तं क्षयं क्षतम् ॥
स्त्रीरोगान् विंशतिञ्चैव तत्क्षणादेव नाशयेत्।
अहन्यहनि च स्त्रीणां स्तनदार्ढ्यकरं परम् ॥
सौभाग्यजननं स्त्रीणां पुष्टिदं धातुवर्द्धनम् ॥

## जीरकाद्यो मोदकः।

जीरकस्य पलान्यष्टौ शुण्ठी धान्यं पलत्रयम्।
शतपुष्पा यमानी च कृष्णजीरं पलं पलम् ॥
क्षीरद्विप्रस्थसंयुक्तं खण्डस्यार्द्धशतं पलम्।

घृतस्यापि पलान्यष्टौ शनैर्मृद्वग्निना पचेत् ॥
व्योषं त्रिजातकञ्चैव विडङ्गं चव्यचित्रकम्।
मुस्तकञ्च लवङ्गञ्च पलांशं संप्रकल्पयेत् ॥
मन्देन वह्निना पक्त्वा मोदकं कारयेद्भिषक्।
सर्वयोषिद्विकाराणां नाशनं वह्निदीपनम् ॥
सूतिकारोगशमनं विशेषाद्ग्रहणीहरम् ॥

## सूतिकारिरसः।

रसं गन्धं मृताभ्रञ्च मृतताम्रञ्च तुल्यकम्।
चूर्णितं मर्द्दयेद्यत्नाद्धेकपर्णीरसेन च ॥
छायाशुष्का गुडीकार्य्या कलायसदृशी ततः।
मात्रया कटुना देया सूतिकातङ्कनाशिनी ॥
ज्वरतृष्णारुचिहरी शोथघ्नी वह्निदीपनी ॥

## वृहत् सूतिकाविनोदरसः।

शुण्ठ्या भागो भवेदेको द्वौ भागौ मरिचस्य च।
पिप्पल्याश्च त्रिभागं स्यादर्द्धभागञ्च रोमकम् ॥
जातीकोषस्य भागौ द्वौ द्वौ भागौ तुत्थकस्य च।
सिन्धुवारजलेनैव मर्द्दयेदेकयामतः ॥
मधुना सह सेवेत सूतिकातङ्कनाशनम् ॥
वनकार्पासकेक्षूणां मूलं सौवीरकेण वा।
विदारीकन्दं सुरया पिवेद्वास्तन्यवर्द्धनम् ॥
दुग्धेन शालितण्डुलचूर्णपानं विवर्द्धयेत्।
स्तन्यं समाहृतः क्षीरसेविन्यास्तु न संशयः ॥
हरिद्रादिं वचादिं वा पिवेत् स्तन्यविशुद्धये ॥

तत्र वाताधिके स्तन्ये दशमूलीजलं पिबेत्।
पित्तदुष्टेऽमृताभीरु पटोलं निम्बचन्दनम्॥
धात्री कुमारश्च पिबेत् क्वाथयित्वा स शारिवम्॥

धात्री स्तन्यविशुद्ध्यर्थं मुद्गयूषरसाशना।
भार्गीं दारु वचा पाठाः पिबेत्सातिविषाः शृताः।

कुक्कुरमिकुङ्कमूलं चर्वितमास्येन धारितं जयति
सप्ताहात् स्तनकीलं स्तन्यं चैकान्ततः कुरुते॥

शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्याद्
यद्विद्रधावभिहितं बहुधा विधानम्।
आमे विदह्यति तथैव गते च पाकं
तस्याः स्तनौ सततमेव हि निर्दुहीत॥

विशालामूललेपस्तु हन्ति पीड़ां स्तनोत्थिताम्।
निशाकनकमूलाभ्यां लेपश्चापि स्तनार्त्तिहा॥

मूषिकवसया शौकरमाहिषगजमांसचूर्णयुतया।
अभ्यङ्गमर्द्दनाभ्यां सुकठिनपीनौ स्तनौ भवतः।
माहिषीभवनवनीतं व्याधिवल्लीश्च तथैव नागबला।
पिष्टा मर्द्दनयोगात्पीनं कठिनं स्तनं कुरुते॥

श्रीपर्णीतैलम्।

श्रीपर्णीरसकल्काभ्यां तैलं सिद्धं तिलोद्भवम्।
तत्तैलं तूलकेनैव स्तनस्योपरि धारयेत्॥
पतितावुत्थितौ स्त्रीणां भवेतान्तु पयोधरौ॥

काशीशतुरगगन्धाशारवगजपिप्पलीविपक्वेन।
तैलेन यान्ति वृद्धिं स्तनकर्णवराङ्गलिङ्गानि॥

प्रथमर्त्तौ तण्डुलाम्भो नस्यं कुर्यात् स्तनौ स्थिरौ ॥
गोमहिषीघृतसहितं तैलं श्यामाकताम्बूली वचाभि
मर्कटनिशाभिः सिद्धं नस्यं स्तनवर्द्धनं परमम् ॥
स्तनन्करोति मध्यं पीतं मथितेन मागधीमूलम्।
वेतसस्य तु मूलानि क्राथयेन्मृदुनाग्निना।
भगं प्रक्षालितं तेन गाढ़ं समुपजायते ॥

सूतिकाहरो रसः।

हिङ्गुलं हरितालञ्च शङ्खभस्मायसो रजः।
खर्परं धत्तूरबीजञ्च यवक्षारञ्च टङ्कनम ॥
विभीतककषायेण भावयित्वा विधानतः।
मर्द्दयित्वा विदध्याच्च कलायसदृशीर्वटीः ॥
यथादोषानुपानेन प्रयुक्तोऽयं रसोत्तमः।
निहन्यात् सूतिकातङ्कान् वह्निस्तृणगणानिव ॥

बृहत् सूतिकावल्लभरसः।

सूतं गन्धं माक्षिकञ्च व्योमेन्द्रं हेम तालकम्।
रजतं फणीफेनञ्च जातीकोषफले तथा ॥
मुस्तकस्य बलायाश्च शाल्मल्याः स्वरसेन च।
भावयित्वा वटीः कुर्य्याद्द्विगुञ्जापरिमाणतः ॥
सूतिकावल्लभो नाम प्रयुक्तोऽयं महान् रसः।
निहन्यात् सूतिकारोगान् दुर्व्वारं ग्रहणीगदम्।
अतीसारं सुघोरञ्च दौर्ब्बल्यं वह्निमन्दताम्।
जनयेदाशु पुष्टिञ्च कान्तिं मेधां धृतिं तथा ॥

धातक्यादितैलम्।

धातकीधवधन्याकधात्रीधुस्तूरधूपनैः।

नीलीनीपैर्निम्बनिम्बू नीरदैस्तागरैः ॥
पथ्यापद्मपृथापुत्रैः पत्रपत्रीणपूतिकैः ।
फणिज्झकफलेन्द्राभ्यां फञ्जिका फेनफेनिलैः ॥
कल्कैः कोलकपित्थाभ्यां कृष्णाकन्याकसेरुभिः ।
पिष्टैः पचेत् पयस्विन्याः पयसा पाकपण्डितः ॥
तैलं तिलभवं तिष्ये तिष्यातोयेन तन्मनाः ।
पूजयित्वा परानन्दां प्रयतः परमेश्वरीम् ॥
सुरसूनुदितमिदं सूतिकामयसूदनम् ।
सेवेत सततं सूता सुखदं सुखसेविनी ॥

सुखसेविनी पथ्यसेविनी ।

जीरकाद्यरिष्टः ।

जीरकस्य तुलाद्वन्द्वं चतुर्द्रोणजले पचेत् ।
द्रोणशेषे क्षिपेत् तत्र तुलात्रयमितं गुडम् ॥
धातकीं षोड़शपलां शुण्ठीञ्च द्विपलोन्मिताम् ।
जातीफलं मुस्तकञ्च चातुर्जातं यमानिकाम् ।
कक्कोलं देवपुष्पञ्च पलमानेन निक्षिपेत् ॥
मासं संस्थाप्य भाण्डे च मृत्तिकापरिनिर्म्मिते ।
ततः कल्कान् विनिर्ह्रत्य पाययेत् कर्षमात्रया ॥
अरिष्टो जीरकाद्योऽयं निहन्यात् सूतिकामयान्
ग्रहणीमतिसारञ्च तथा वह्नेश्च वैकृतम् ॥

इति भैषज्यरत्नावल्यां स्त्रीरोगाधिकारः समाप्तः ।



# अथ बालरोगाधिकारः।

त्रिविधः कथितो बालः क्षीरान्नोभयवर्त्तकः।
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसम्भवः॥
क्षीरपस्यौषधं धात्र्याः क्षीरान्नादस्य चोभयोः।
अन्नेन वा शिशोर्देयं भेषजं भिषजा सदा॥
मातरा लङ्घयेद्धात्रीं शिशोर्नेष्टं विशोषणम्।
सर्वं निवार्य्यते बाले स्तन्यन्तु न निवार्य्यते॥
यो बालोऽचिरजातः स्तन्यं न गृह्णाति तस्य सहसैव।
धात्री मधुघृत पथ्या कल्केनाघर्षयेज्जिह्वाम्॥
कुष्ठं वचाभया ब्राह्मी कनकं क्षौद्रसर्पिषा।
वर्णायुः कान्तिजननं लेहं बालस्य दापयेत्॥
स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिवेत्।
मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा।
स्वेदयेदुत्थितां नाभिं शोथ स्तेनोपशाम्यति॥
नाभि पाके निशालोध्र प्रियङ्गु मधुकैः शृतम्
तैल मभ्यञ्जने शस्तमेभिर्वाप्यवचूर्णनम्॥
सामग्रहणे विधिवत् केकिशिखा मूल मूत्र्न वद्धम्।
जघनेऽथ कन्धरायां क्षपयत्याहरिण्डकां नियतम्॥
सप्तदल पुष्पमरिचं पिष्टं गोरोचना सहितम्।
पीतं तद्वत्तण्डुलभक्ताशतो दग्धपिष्टक प्रायः॥
भेषजं पूर्वमुद्दिष्टं नराणां यज्ज्वरादिषु।
कार्य्यं तदेव बालानां मात्रा चात्र कनीयसी।

प्रथमे मासि जातस्य शिशोर्भेषज रक्तिका।
अवलेह्या तु कर्त्तव्या मधुक्षीर सिताघृतैः॥
एकैकां वर्द्धयेत्तावद्यावत्सम्वत्सरो भवेत्।
तदूर्द्धं माषवृद्धिः स्याद् यावद्याषोड़शाब्दिकः॥
हरिद्रादय यष्ट्याह्व सिंहो शक्रयवैः कृतः।
शिशोर्ज्वरातिसारघ्नः कषायः स्तन्यदोषनुत्॥

## कर्कटादिः।

कर्कटातिविषा शुण्ठी धातको विल्वबालकम।
मुस्तं मज्जा च कोलस्य मधुना सह मेलयेत्॥
हन्ति ज्वरमतीसारं दुर्वारं ग्रहणीगदम्।
छर्द्दिं रक्तस्रुतिं कासं श्वासं पञ्चारुजं तथा।

## बालचतुर्भद्रिका।

घनकृष्णारुणा शृङ्गी चूर्णं क्षौद्रेण संयुतम्।
शिशोर्ज्वरातिसारघ्नं श्वासकास वमीहरम्॥

## धातक्यादिः।

धातकी विल्वधन्याक लोध्रेन्द्रयवबालकैः।
लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित्॥
रजनी दारु सरलं श्रेयसी वृहतीद्वयम्।
पृश्निपर्णी शताह्वा च लीढ़ं माक्षिक सर्पिषा॥
ग्रहणीदीपनं हन्ति मारुतार्त्तिं सकामलाम्।
ज्वरातीसारपाण्डुघ्नं बालानां सर्वरोगजित्॥

मिषि कृष्णाञ्जनं लाजा शृङ्गी मरिच माक्षिकैः।
लेहः शिशोर्विधातव्यश्छर्दिकासज्वरापहः॥

शृङ्गी समुस्तातिविषां विचूर्ण्य
लेहं विदध्यान्मधुना शिशूनाम्।
कासज्वरच्छर्दिभिरर्दितानां
समाक्षिकां वातिविषामथैकाम्॥

पीतं पीतं वमेद्यस्तु स्तन्यं तन्मधु सर्पिषा।
द्विवार्ताकीफलरसं पञ्चकोलञ्च लेहयेत्॥

आम्रास्थि लाज सिन्धूत्थैर्लेहः क्षौद्रेण छर्दिनुत्।
पिप्पली मरिचानाञ्च चूर्णं समधुशर्करम।
रसेन मातुलुङ्गस्य हिक्काच्छर्दि निवारणम्॥

पेटी पाठा मूलाज्जम्बू. सहकार वल्कतः क्वाथः
इत्येकशश्च पिण्डौ विहृतौ ह्रन्नाभितात्वादौ॥
छर्द्यतिसारदज बोनं प्रबलं पत्ते तदैव नियमेन॥

पत्रैर्बदर चाङ्गेरी काकमाची कपित्थजैः।
शिशोरुग्वम्यतीसारनाशनं मूर्द्ध्निलेपनम्॥

क्षीरादस्य शिशोरास्यं शुष्कं दृष्ट्वा तु दारुणम्।
माषयुषं पिबेद्धात्री पिप्पलीचूर्णसंयुतम्॥

स्तन्यपस्य कुमारस्य सर्वस्यामातिसारिणः।
धात्रीं विलङ्घयेद्विमान् देहदोषाद्यपेक्षया॥
पञ्चकोलक सिद्धं वा पेयादिञ्च प्रयोजयेत्॥

वचामुस्त भद्रदारु नागरातिविषागणः।
हरिद्रादय यष्ट्याह्व सिंही शक्रयवैः समः॥
एतौ वचाहरिद्रादी गणौ स्तन्यविशोधनौ।

आमातिसारशमनो कफमेदोविशोषणौ ॥

मुस्तकादिः ।

मुस्तकातिविषाशुण्ठीबालकेन्द्रयवैः कृतम् ।
क्वाथं शिशुः पिबेत्प्रातः सर्वातिसारनाशनम् ॥

विल्वस्य पुष्पाणि च धातकीनां
जलं सलोध्रं गजपिप्पली च ।
क्वाथावलेहौ मधुना विमिश्रौ
बालेषु योज्यावतिसारितेषु ॥

भल्लातकाम्रजम्बूनां त्वचमादाय चूर्णयेत् ।
मधुना लेहयेद्बालमतीसारविनाशनम् ॥

सितजीरकसर्जचूर्णं विल्वदलोत्थाम्बुमिश्रितं पीतम् ।
हन्त्यामरक्तशूलं गुड़सहितः श्वेतसर्जो वा ॥

समङ्गाधातकीलोध्रसारिवाभिः शृतं जलम् ।
दुर्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥

नागरातिविषामुस्तबालकेन्द्रयवैः शृतम् ।
कुमारं पाययेत् प्रातः सर्वातीसारनाशनम् ॥

समङ्गा धातकी पद्म वयःस्था कच्छुरा तथा ।
पिष्टैरेतैर्यवागूः स्यादतीसारविनाशिनी ॥

विल्वमूलकषायेण लाजाश्चैव सशर्कराम् ।
आलोड्य पाययेद्बालं छर्द्यतीसारनाशनम् ॥

कल्कः प्रियङ्गु, कोलास्थिमध्य मुस्त रसाञ्जनैः ।
क्षौद्रलीढ़ः कुमारस्य छर्दितृष्णातिसारनुत् ॥

मोचरसः समङ्गा च धातकी पद्मकेशरम् ।

पिष्टैरेतैर्यवागूः स्याद्‌बालातीसारनाशिनी ॥

लेहस्तैल सिताक्षौद्रतिल यष्ट्याह्व कल्कितः ।
बालस्य रुन्ध्यान्नियतं रक्तस्रावं प्रवाहिकाम् ॥

लाजाः सयष्टीमधुशर्कराः क्षौद्रमेव च ।
तण्डुलोदक संयुक्तं क्षिप्रं हन्ति प्रवाहिकाम् ॥

अङ्कोटमूलमथवा तण्डुलसलिलेन कटुजमूलं वा ।
पीतं हन्त्यतिसारं ग्रहणीरोगञ्च दुर्वारम् ॥
नागरमहौषधकुटजं द्विगुणीकृतमुत्तरोत्तरं क्रमशः ।
गुड़तक्रयुतमेतत् ग्रहणीरोगं निहन्त्याशु ॥
बिल्व शक्राम्बु मोचाब्दसिद्ध माजं पयः शिशोः ।
समांसरक्तां ग्रहणीं पीतं हन्याच्चिरोत्थितः ॥

तद्विटजाक्षीरसमो जम्ब्वलगुड़वो रसः ।
गुदपाके तु बालानां पित्तघ्नीं कारयेत क्रियाम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥
दुष्टमन्नादिभिर्मातुः स्तन्यं संपिवतः शिशोः ।
यदा प्रकुपितं पित्त गुदं समभिधावति ॥
तदा संजायते तत्र जलौकोदरसन्निभः ।
व्रणः सदाहो व्यक्तोष्मा तदास्य स्याज्ज्वरः परः ॥
हरितं पीतकं वापि वर्चस्तेन भवेद्‌भृशम ।
व्रणः पद्माकजो नामव्याधिः परम दारुणः ॥

चन्दनं शारिवे द्वे च शङ्खिनीति समायुतैः ।
पद्माकजे प्रलेपोऽयमवलेहस्तु शस्यते ॥
कणाघणसिता क्षौद्र सूक्ष्मैला सैन्धवैः कृतः ।
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः ।

घृतेन सिन्धुविश्वैला हिङ्गु भार्गीरजो लिहन्।
आनाहं वातिकं शूलं जयेत्तोयेन वा शिशुः॥

हरीतकी वचाकुष्ठ कल्कं माक्षिकसंयुतम्।
पीत्वा कुमारः स्तन्येन मुच्यते तालुपातनात्॥

मुखपाके तु बालानां शाम्रसारमयोरजः॥
गैरिकक्षौद्रसंयुक्तं भेषजं सरसाञ्जनम्॥
अश्वत्थत्वग्दलैः क्षौद्रे मुखपाके प्रलेपनम्।
दार्वीं यष्ट्यभयाजातीपत्रं क्षौद्रैस्तथा परम्॥

सह जम्बीररसेन सुन्दरलरसघर्षणं सद्यः।
हन्तमुपहन्ति हि पाकं मुखजं बालस्य चाश्वेव॥

लावतित्तिरिवल्लूररसः पुष्परसान्वितः।
दूरां करोति बालानां पुष्पकोऽयरवत्सुखम्॥

दन्तोद्भवेषु रोगेषु न बालमतियन्त्रयेत्।
स्वयमेवोपशाम्यन्ति जातदन्तस्य ते गदाः॥

विभीतकाफलं कुष्ठं हरितालं मनःशिला।
एभिस्तैलं विपक्वाच्यं बालानां पुतिकर्णके॥

पञ्चमूलीकषायेण सघृतेन पयःशृतम्॥
सशृङ्गवेरं सगुडं शीतं हिक्कार्दितः पिवेत्॥
सवर्णगैरिकस्यापि चूर्णानि मधुनासह।
लीढ्वा सुखमवाप्नोति क्षिप्रं हिक्कार्दितः शिशुः॥

चित्रकं शृङ्गवेरञ्च तथा दन्ती गवाक्ष्यपि।
चूर्णं कृत्वा तु सर्वेषां सुखोष्णेनाम्बुना पिवेत्॥
कासं श्वासमथो हिक्कां कुमाराणां प्रणाशयेत्॥

द्राक्षायासाभयाकृष्णा चूर्णं सक्षौद्रसर्पिषा।

लीढ़ं कासं निहन्त्याशु श्वासञ्च तमकं तथा ॥

पुष्करादिचूर्णम् ।

पुष्करातिविषाशृङ्गी मागधी धन्वयासकैः ।
तच्चूर्णं मधुना लीढ़ं शिशूनां पञ्चकासनुत् ॥
दाड़िमस्य च बिजानि जीरकं नागकेशरम् ।
चूर्णितं शर्कराक्षौद्रलीढ़ं तृष्णानिवारणम् ॥
मायूरपक्षभस्माभ्युषितजलं तेन भावितं पेयम् ।
तृष्णाघ्नं वटकाष्ठजभस्मजलं वन्तिशोषजिद्बाले ॥
पिष्टैश्छागेन पयसा दार्वी मुस्तकगैरिकैः ।
बहिरालेपनं शस्तं शिशोर्नेत्रामयार्त्तिजित् ॥
मनःशिला शङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम् ।
वर्त्तिः क्षौद्रेण संयुक्ता बाले सर्वाक्षिरोगनुत् ॥
मातृस्तन्य कटुस्नेह काञ्जिकैर्भावितो जयेत् ।
स्वेदाद्दीपशिखातप्तो नेत्रामयमलक्तकः ॥
शुण्ठी भृङ्गनिशाकल्कः पुटपाकः ससैन्धवः ।
कुकूनकेऽक्षिरोगेषु तद्रसाश्च्योतनं हितम् ॥
क्रिमिघ्नाल शिलादार्वी लाक्षाचन्दनगैरिकैः ।
चूर्णाञ्जनं कुकूनेस्यात् शिशूनां पोथकीषु च ॥
सुदर्शनामूलचूर्णाञ्जनं स्यात्तु कुकूनके ।
गृहधूम निशाकुष्ठ राजिकेन्द्रयवैः शिशोः ।
लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्चिकाः ॥

अश्वगन्धाघृतम् ।

पादकल्कोऽश्वगन्धायाः क्षीरे दशगुणे पचेत् ।

घृतं पेयं कुमाराणां पुष्टिबलवर्द्धनम्॥

## बालचाङ्गेरीघृतम्।

चाङ्गेरी स्वरसेमर्पिश्छागक्षीरसमं पचेत्।
कपित्थ व्योष सिन्धूत्थ समङ्गोत्पल बालकैः॥
सविल्वधातकीमोचैः सिद्धं सर्वातिसारनुत्।
ग्रहणीं दुस्तरां हन्ति बालानान्तु विशेषतः॥

## कुमारकल्याणघृतम्।

द्राक्षा सशर्करा शुण्ठी जीवन्ती जीरकं बला।
शटी दुरालभा विल्वं दाडिमं सुरसा स्थिरा॥
मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली।
एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत॥
कषाये कण्टकार्य्याश्च क्षीरे तस्मिंश्चतुर्गुणे।
एतत् कुमारकल्याणं घृतरत्नं सुखप्रदम्॥
बलवर्णकरं धन्यं पुष्ट्यग्न्योरतिवर्द्धनम्॥
छायासर्वग्रहालक्ष्मी क्रिमिदन्तगदापहम्॥
सर्वबालामयं हन्ति दन्तोद्भेदं विशेषतः।

## अष्टमङ्गलघृतम्।

वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च।
शारिवा सैन्धवञ्चैव पिप्पली घृतमष्टमम्॥
मेध्यं घृतमिदं सिद्धं पातव्यञ्च दिने दिने।
दृढस्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान् भवेत॥
न पिशाचा न रक्षांसि न भूता न च मातरः।

भवन्ति कुमाराणां पिबतामष्टमङ्गलम् ॥

लाक्षादितैलम्।

लाक्षारससमं सिद्धं तैलं मस्तु चतुर्गुणम् ।
रास्ना चन्दन कुष्ठाब्द वाजिगन्धा निशायुगैः ।
शताह्वादारु यष्ट्याह्व मूर्वा तिक्ता हरेणुभिः।
बालानां ज्वररक्षोघ्नमभ्यङ्गाद्बलवर्णकृत् ॥
सर्पत्वग्लशुनं मूर्वा सर्षपारिष्टपल्लवाः ।
विड़ालविड्जालोम मेषशृङ्गवचा मधु ॥
धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः ।

बालरोगान्तकरसः।

शाणं सूतस्य शुद्धस्य गन्धकस्य च तत्समम् ।
सुवर्णमाक्षिकस्यापि चार्द्धभागं विनिक्षिपेत् ॥
ततः कज्जलीकां कृत्वा लौहपात्रे दृढ़े नवे ।
भृङ्गराजस्य भृङ्गस्य निर्गुण्ड्याः पत्रसम्भवम् ॥
स्वरसं काकमाच्याश्च ग्रीष्मसुन्दरकस्य च ।
सूर्य्यावर्त्तकशालिञ्चभेकपर्णीरसं तथा ॥
श्वेतापराजितायाश्च मूलं दद्याद्विचक्षणः ।
देयं रसार्द्धभागेन चूर्णं मरिचसम्भवम् ॥
सुभेशिलामये पात्रे लौहदण्डेन मर्द्दयेत् ।
शुष्कमातपसंयोगाद्वटिकां कारयेद्भिषक् ।
प्रमाणं सर्षपस्यैव बालानां विनियोजयेत् ॥
हन्ति त्रिदोषकञ्चैव ज्वरमामं सुदारुणम् ।
कासं पञ्चविधञ्चापि सर्वरोगं निहन्ति च ॥

शिशूनां रोगनाशाय निर्म्मितोऽयं महारसः ॥

## कुमारकल्याणरसः।

सिन्दूरं मौक्तिकं हेमव्योमायो हेममाक्षिकम्
कन्यातोयेन संमर्द्य कुर्य्यान्मुद्गमितावटीः ॥
वटिकां वटिकार्द्धं वा वयोऽवस्थां विविच्य च।
क्षीरेण सीतया सार्द्धं बालेषु विनियोजयेत् ॥
कुमाराणां ज्वरं श्वासं वमनं पारिगर्भिकम्।
ग्रहदोषांश्च निखिलान् स्तन्यस्याग्रहणं तथा ॥
कामलामतिसारञ्च कृशतां वह्निवैकृतम्।
रसः कुमारकल्याणो नाशयेन्नात्र संशयः ॥

## दन्तोद्भेदगदान्तकः।

पिप्पलीपिप्पलीमूलचव्यचित्रक नागरैः।
अजमोदायमानीभ्यां निशया मधुकेन च ॥
दारुदार्व्वीविडङ्गैलानागकेशरनीरदैः।
शटीशृङ्गीविड़ैर्व्योम्ना शङ्खायोहेममाक्षिकैः ॥
विधाय पयसा पिष्टैर्वटिका वल्लसम्मिताः।
दन्तघर्षेऽभ्यवहृती योजयेच्च प्रयोगवित् ॥
प्रयोगादस्य दन्तानां त्वरयोद्गमतो गदाः।
ज्वराक्षेपातिसाराद्या निवर्त्तन्ते न संशयः ॥

## लवङ्गचतुःसमम्।

जातीफलं शिद्‌शपुष्प समन्वितञ्च
जीरञ्च टङ्कनयुतं चरकैः प्रयुक्तम्।

चूर्णानि माक्षिकसितासहितानि लीढ़ा
सामातिसारमखिलं गुद हन्ति शूलम् ॥

दाड़िम्बचतुःसमम्।

एतद्द्रव्यचतुष्कञ्चेद् दाड़िमीफलमध्यगम्।
पुटपक्वं पयःपिष्टं तद्दाड़िम्बचतुःसमम्॥
पयोऽत्र च्छाग्याः तस्यातिसारहत्वात्।
पयःशब्दोऽत्र जलवाचकमिति च केचित्।

पिप्पल्याद्यं घृतम्।

पिप्पलीधातकीपुष्पधात्रीफलकशेरुभिः।
अचामूर्वामृतापाठाकटुकातिविषाघनैः॥
जीवनीयैर्घृतं सिद्धं शस्तं दशनजन्मनि।
सुखोष्णेन यथामात्रं पयसैतत्प्रपाययेत्॥

शिवामोदकम।

शिवा तामलकी मूर्वा शतपुष्पा निशाद्वयम्।
आंक्रगुड़ामलकी विल्वं देवपुष्पं शतावरी॥
भद्रा मधुरिका मांसी बिदारी त्रिश्वभेषजम्।
अनन्तामलकी श्यामा भार्गी करिकणा कणा।
चातुर्जातं चतुर्वीजं चन्दनं रक्तचन्दनम्।
मुशली वाजिगन्धा च वीजं गोक्षुरसम्भवम्॥
सर्वाण्येतानि तुल्यानि द्राक्षा सर्वसमा मता।
सिता द्राक्षासमा चैवैतानि मधुना सह॥
संमर्द्य मोदकान् कृत्वा माषकप्रमितान् भिषक्।

एकैकमेषां पयसा प्रातः प्रातः प्रयोजयेत्।
बालानां सर्वरोगघ्नं पुष्टिकृद्बलवर्द्धनम्।
परं वह्निकरं मेध्यमायुष्यं ग्रहदोषहृत्॥
भगवत्यै समुदितं शिवायै लोकमङ्गलम्।
एतन्मोदकमीशेन युगे भगवता कृते॥

सर्वौषधिस्नानम्।

मुरामांसी वचा कुष्ठं शैलेयं रजनीद्वयम्।
शटीचम्पकमुस्तञ्च सर्वौषधिगणः स्मृतः।
सर्वौषध्यम्बुना स्नानं बालानां गदनाशनम्।
ग्रहरक्षःप्रशमनमायुष्यं कान्तिवर्द्धनम्॥

कण्टकारीघृतम्।

कण्टकार्य्यो बृहत्याश्च भार्गीवासकयोरपि।
स्वरसेन तथाच्छागक्षीरेण विपचेद्घृतम्॥
कल्कैः करिकणाकृष्णामरिचैर्मधुकेन च।
वचाश्वगन्धिकमांसीभिश्चव्यचित्रकचन्दनैः॥
मुस्तामृतामलयजैर्यवान्या जीरकेण च।
बलाविश्वौषधाभ्याञ्च द्राक्षादाडिमदारुभिः।
सिद्धमेतद्घृतं सद्यः शिशूनां श्वासकासहृत्।
ज्वरारोचकशूलघ्नं वाक्पुष्टबलवह्निकृत्॥

व्याघ्रीतैलम्।

व्याघ्रीवासकबिल्वानां केशराजस्य चाम्बुना।
वाजिकेन तथा कल्कैर्मुस्तमोचरसाञ्जनैः॥

शताह्वादारुयष्ट्याह्वबलाराम्नानिशायुगैः ।
चन्दनद्वयमञ्जिष्ठा प्रियङ्गुत्पलकेशरैः ॥
शालिपर्णी पृश्निपर्णी चातुर्जातकबालकैः ।
मृदः पात्रे पचेत्तैलमरिष्टेन्धनवह्निना ॥
श्वासं कासञ्च बालानां ज्वरं वक्रेश्च वैकृतम् ।
व्याघ्रीतैलमिदं हन्यात्सगदान् निखिलानपि ॥

## शङ्खपुष्पीतैलम् ।

शङ्खपुष्पीमहानिम्बवासानामर्जुनस्य च ।
स्वरसैनारनालेन लाक्षातोयेन मस्तुना ॥
कल्कैश्च दाड़िमीदार्व्वीनिशायुगफलत्रिकैः ।
चन्दनोशीरबालैश्च श्रीखण्डमधुकाम्बुदैः ॥
श्यामाशैवालशेफालीरक्तोत्पलरसाञ्जनैः ।
गन्धद्रव्यैश्च निखिलैः पचेत्तैलं तिलोद्भवम् ॥
प्रयोगादस्य नश्यन्ति बालानामखिला गदाः ।
कान्तिर्मेधाधृतिः पुष्टिर्वर्द्धते नात्र संशयः ॥
कल्याणाय कुमाराणां कपर्दी करुणाकरः ।
ससर्जेदं शङ्खपुष्पीतैलं भुवनमङ्गलम् ॥

## अरविन्दासवः ।

अरविन्दमुशीरञ्च काश्मरीं नीलमुत्पलम् ।
मञ्जिष्ठैलाबलामांसीरम्बुदं शारिवां शिवाम् ॥
विभीतकवचाधात्रीः शठीं श्यामां सनीलिनीम् ।
पटोलं पर्पटं पार्थं मधुकं मधुकं मुराम् ॥
पलमानेन संगृह्य द्राक्षायाः पलविंशतिम् ।

धातकीं षोड़शपलां जलद्रोणद्वये क्षिपेत् ॥
शर्करायास्तुलां तत्र तुलार्द्धं माक्षिकस्य च।
मासं संस्थापयेद्भाण्डे मृत्तिकापरिनिर्म्मिते ॥
बालानां सर्वरोगघ्नो बलपुष्ट्यग्निवर्द्धनः।
अरविन्दासवः प्रोक्त आयुष्यो ग्रहदोषहृत् ॥

बालकुटजावलेहः।

मूलत्वचं वत्सकस्य पलमेकं सुकुट्टितम्।
अष्टभागं जलं दत्त्वा चतुर्भागावशेषितम ॥
अतिविषा च पाठा च जीरकं बिल्वमेव च।
आम्रास्थिशतपुष्पा च धातकी मुस्तकं तथा ॥
जातीफलञ्च सञ्चूर्ण्य निक्षिपेत्तत्र यत्नतः।
बालानामामशूलघ्नं रक्तस्रावं सुदारुणम् ॥
अपि वैद्यशतैस्त्यक्तं जयेदेतन्न संशयः॥

रामेश्वररसः।

शाणं सूतस्य गन्धस्य स्वर्णमाक्षिकस्य च।
यत्नतः कज्जलीं कृत्वा लौहपात्रे विमर्द्दयेत् ॥
केशराजस्य भृङ्गस्य निगुण्ड्याः पर्णसम्भवम्।
स्वरसं काकमाच्याश्च ग्रीष्मसुन्दरकस्य च ॥
सूर्य्यावर्त्तकशालिञ्च मेकपर्णीरसं तथा।
देयं रसार्द्धभागेन चूर्णं मरिचसम्भवम् ॥
श्वेतापराजितायाश्च मूलं दद्याद्विचक्षणः।
शुष्कामातपसंसर्गात् गुड़िकां कारयेद्भिषक् ॥
प्रमाणं सर्षपाकारं बालानाञ्चैव योजयेत्।

हन्ति त्रिदोषसम्भूतं ज्वरं घोरं सुदारुणम्॥
शिशूनां रोगनाशाय विश्वबोधेन निर्मितम्॥

भैषज्यं पूर्वमुद्दिष्टं नराणां यज्ज्वरादिषु।
कार्य्यं तदेव बालानां मात्रा तत्र कनीयसी॥
बलिशान्तीष्टकर्म्माणि कार्य्याणि ग्रहशान्तये।
मन्त्रश्चायं प्रयोक्तव्यस्तत्रादौ सर्वकार्मिकः॥

मन्त्रो यथा। ओं नमो भगवते गरुड़ाय त्र्यम्बकाय सद्यस्तवस्तत स्वाहा ओं कं टं यं गं वैनतेयाय ओं ऌां ऌीं चः।

बालदेहप्रमाणेन पुष्पमालान्तु सर्वतः।
प्रगृह्य मृच्छिकाभक्तं बलिर्देयस्तु शान्तिकः॥
ओं कारी स्वर्णपक्षोग बालकं रक्ष रक्ष स्वाहा॥
ओं रावणाय॥

प्रथमे दिवसे मासे वर्षे वा गृह्णाति नन्दा नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। अशुभ शब्दं मुञ्चति शीत्कारश्च भवति स्तन्यं न गृह्णाति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा शुक्लौदनं शुक्लपुष्पं सप्तध्वजाः सप्तप्रदीपाः सप्तवटकाः सप्तमुष्टिकाः सप्तशष्कुलिकाः जम्बुड़िका गन्धपुष्पं ताम्बूलं मत्स्यं मांसं सुरा अग्रभक्तञ्च पूर्वस्यां दिशि चतुष्पथे मध्याह्ने बलिर्दातव्यः। अश्वत्थपत्रं कुम्भे निक्षिप्य शान्त्युदकेन स्नापयेत्। रसोन सिद्धार्थक मेषशृङ्ग निम्बपत्र शिवनिर्माल्यैर्बालकं धूपयेत्। ओं नमो रावणाय हन हन मुञ्च मुञ्च स्वाहा।

चतुर्थे दिवसे ब्राह्मणान् भोजयेत्ततः सम्पद्यते शुभम् ॥ १ ॥

द्वितीये दिवसे मासे वर्षे वा गृह्णाति सुनन्दा नाम मातृका। तया गृहीत मात्रस्य प्रथमं भवति ज्वरः। चक्षुरुन्मीलयति गात्रमुद्वेजयति न शेते क्रन्दति स्तन्यं न गृह्णाति आत्कारश्च भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। तण्डुलं हस्तमुष्टैकं गृहीत्वा दधि गुड़ घृत मिश्रितं कृत्वा शरावैकं गन्धं ताम्बूलं पीत पुष्पं पीत सप्तध्वजाः सप्तप्रदीपाः सप्त स्वस्तिकाः। मत्स्य मांस सुरा तिल चूर्णञ्च पश्चिमायां दिशि चतुष्पथे दिवाबलिर्दातव्यः दिनानि त्रीणि सन्ध्यायां ततः शान्त्युदकेन स्नापयेत्। शिवनिर्माल्य सिद्धार्थक मार्जाररोमोशीर वासकघृतैर्धूपं दद्यात्। ओं रावणाय। अमुकस्य व्याधिं हन हन मुञ्च मुञ्च ह्रुं फट् स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत् ततः सम्पद्यते शुभम् ॥ २ ॥

तृतीये दीवसे मासे वर्षे वा गृह्णाति पूतना नाम मातृका। तया गृहीत मात्रस्य प्रथमं भवति ज्वरः। गात्रमुद्वेजयति स्तन्यं न गृह्णाति मुष्टिं बध्नाति क्रन्दति ऊर्द्धं निरीक्षते। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् नद्युभय तट मृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा गन्धं ताम्बूलं रक्तपुष्पं रक्तचन्दनं रक्त सप्तध्वजाः सप्त प्रदीपाः सप्त स्वस्तिकाः पक्षिमांस सुरा कृष्णभक्तञ्च दक्षिणस्यां दिशि अपराह्णे चतुष्पथे बलिर्दातव्यः शिव-

निर्माल्य गुग्गुलु सर्षपनिम्बपत्र मेषशृङ्गैर्दिनत्रयं धूपयेत्। ओं रावणाय बालस्य व्याधिं हन हन मुञ्च मुञ्च त्रासय स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्ततः सम्पद्यते शुभम् ॥ ३ ॥

चतुर्थे दिवसे मासे वर्षे वा गृह्णाति मुखमुण्डितिका नाम मातृका। तया गृहीत मात्रस्य प्रथमं भवति ज्वरः। ग्रीवां नामयति चक्षुरुन्मीलयति स्तन्यं न गृह्णाति रोदिति स्वपिति मुष्टिं बध्नाति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभय कूल मृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा उत्पल पुष्पं गन्धं ताम्बूलं दश शुक्ल ध्वजाः चत्वारः प्रदीपास्त्रयोदश स्वस्तिकाः मत्स्य मांस सुरा अन्नभक्तञ्च उत्तरस्यां दिशि चतुष्पथे अपराह्णे बलिर्दातव्यः। ओं रावणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत् ततःसम्पद्यते शुभम् ॥ ४ ॥

पञ्चमे दिवसे मासे वर्षे वा गृह्णाति कटपूतना नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। गात्र मुद्वेजयति मुष्टिं बध्नाति स्तन्यं न गृह्णाति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। कुम्भकारस्य चक्रमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा गन्धं ताम्बूलं शुक्लौदनं शुक्लपुष्पं पञ्चध्वजाः पञ्चवटकाः पञ्चप्रदीपाः ऐशान्यां दिशिबलिर्दातव्यः ततः शान्त्युदकेन स्नापयेत्। शिवनिर्माल्य सर्पनिर्मोक गुग्गुलु निम्बपत्र वासका घृतैः धूपं दद्यात्। ओं रावणाय चन्द्रेन चूर्णय स्वाहा।

चतुर्थे दिवसे ब्राह्मणान् भोजयेत्ततः सम्पद्यते शुभम् ॥ ५ ॥

षष्ठे दिवसे मासे वर्षे वा गृह्णाति शुष्कनिका नाम मातृका। तया गृहीत मात्रस्य प्रथमं भवति ज्वरः। गात्र भेदञ्च दर्शयति दिवा रात्रौ उत्तानो भवति ऊर्द्धं निरीक्षते। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। पिष्टेन पुत्तलकं कृत्वा शुक्लपुष्पं रक्तपुष्पं पीतपुष्पं गन्धं ताम्बूलं दशप्रदीपाः दशपीतध्वजाः दशस्वस्तिकाः दशवटकाः चोर गुडिका मत्स्य मांस सुरा आग्नेय्यां दिशिनिशिनिष्क्रान्ते मध्याह्ने बलिर्दातव्यः शान्त्युदकेन स्नापयेत्। शिवनिर्माल्य रसोन गुग्गुलु सर्पनिर्मोक निम्बपत्र घृतैर्धूपं दद्यात्। ओं रावणाय। चूर्णय चूर्णय हन हन स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ६ ॥

सप्तमे दिवसे मासे वर्षे वा गृह्णाति शुष्करेवती नाम मातृका। तया गृहीत मात्रस्य प्रथमं भवति ज्वरः। गात्र मुद्वेजयति मुष्टिं बध्नाति रोदिति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। रक्तपुष्पं शुक्लपुष्पं गन्धं ताम्बूलं रक्तौदनं कृशरा त्रयोदश स्वस्तिकास्त्रयोदश शष्कुलिका जम्बुलिका मत्स्य मांस सुरा त्रयोदश ध्वजाः पञ्चप्रदीपाः पश्चिमे दिग्भागे ग्राम निष्क्रान्ते अपराह्णे वृक्षमाश्रित्य बलिं दद्यात् ततः शान्त्युदकेन स्नापयेत्। गुग्गुलु मेषशृङ्ग सर्षपोशीर वासक घृतैर्धूपयेत्। ओं रावणाय दीप्तदेहाय हन हन मुञ्च मुञ्च स्वाहा।

चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ७ ॥

अष्टमे दिवसे मासे वर्षे वा यदि गृह्णाति अध्यमा नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। गृध्रगन्धः पूतिगन्धश्च जायते आहारञ्च न गृह्णाति उद्वेजयति गात्राणि। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। रक्त पीत ध्वजाश्चन्दनं पुष्पं शष्कुल्यः पर्पटिकां मत्स्य मांस सुरा जम्बुड़िका प्रत्यूषे बलिर्दातव्यः। प्रान्तरेव मन्त्रः ओं रावणाय त्रैलोक्य विद्रावणाय चतुर्दिशां मोचणाय ज्वल ज्वल दह दह ओं क्रूं फट् स्वाहा चातुर्थे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ८ ॥

नवमे दिवसे मासे वर्षे वा गृह्णाति सूतिका नाम मातृकाः। तया गृहीत मात्रस्य प्रथमं भवति ज्वरः। नित्यं छर्दिर्भवति गात्र भेदं दर्शयति मुष्टिं बध्नाति स्वापो भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभय कूल मृत्तिकां गृहित्वा पुत्तलिकां कृत्वा शुक्ल वस्त्रेणावेष्टयेत्। शुक्ल पुष्पं गन्धं ताम्बूलं शुक्ल त्रयोदश ध्वजास्त्रयोदश प्रदीपास्त्रयोदश स्वस्तिकास्त्रयोदश पूपिका मत्स्य मांस सुरा उत्तरास्यां ग्रामे निष्काशे बलिं दापयेत्ततः शान्त्युदकेन स्नापयेत्। गुग्गुलु निम्बपत्र गोशृङ्ग श्वेतसर्षप घृतैर्धूपयेत्। ओं रावणाय चतुर्भुजाय हन हन स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सुखी भवति बालकः ॥ ९ ॥

दशमे दिवसे मासे वर्षे वा यदि गृह्णाति नैऋ तिनाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। गात्रमुद्वेजयति। आत्कारश्च भवति रोदिति मूत्रपुरीषञ्च भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभयकूल मृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा गन्धं ताम्बूलं रक्तपुष्पं रक्तचन्दनं पञ्चवर्णपञ्चध्वजाः पञ्चप्रदीपाः पञ्चस्वस्तिकाः पञ्चपूपलिका मत्स्य मांस सुरा वायव्यां दिशिबलिं दद्यात्। काकविष्ठा गोमांस गोशृङ्ग रसोन मार्जाररोम निम्बपत्र घृतैर्धूपयेत्। ओं रावणाय कुणित हस्ताय मुञ्च मुञ्च स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सुखी भवति बालकः॥ १०॥

एकादशे दिवसे मासे वर्षे वा यदि गृह्णाति पिलिपिञ्जिका नाम मातृका। तया गृहीत मात्रस्य प्रथमं भवति ज्वरः। आहारं न गृह्णाति ऊर्द्ध्वदृष्टिर्भवति। गात्रभङ्ग आत्कारश्च भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। पिष्टेन पुत्तलिकां कृत्वा रक्तचन्दनाक्तां तस्या मुखं दुग्धेन सेचयेत्। पीतपुष्पं गन्धं ताम्बूलं सप्तपीतध्वजाः सप्तप्रदीपाः अष्टौ वटकाः अष्टौ पुलिका अष्टौ शष्कुलिका मत्स्य मांस सुरा पूर्वस्यां दिशिबलिं दद्यात् शान्त्युदकेन स्नापयेत्। शिवनिर्माल्य गुग्गुलु गोशृङ्ग सर्पनिर्मोक घृतैर्धूपयेत। ओं रावणाय मुञ्च मुञ्च स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ११॥

द्वादशे दिवसे मासे वर्षे वा यदि गृह्णाति कामुका नाम मातृका। तया गृहीत मात्रस्य प्रथमं भवति ज्वरः। विहस्य वादयति करेण तर्ज्जयति स्तन्यं न गृह्णाति क्रन्दति निःश्वसिति मुहुर्मुहुराहारं न करोति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यतेशुभम्। क्षीरेण पुत्तलिकां कृत्वा गन्धं ताम्बूलं शुक्लपुष्पं शुक्लसप्त-ध्वजाः सप्तप्रदीपाः सप्तशष्कुलिकाः करभेण सर्वकर्म्म बलिं दद्यात् शान्त्युदकेन स्नापयेत्। शिवनिर्म्माल्य गुग्गुलु सर्षप घृतैर्धूपयेत् ओँ रावणाय मुञ्च मुञ्च हन हन स्वाहा। चतुर्थेदिवसे ब्राह्मणान् भोजयेत्। ततः सुखी भवति बालकः॥ १२॥

इति रावणकृतं कुमारतन्त्र समाप्तम्।

इति भैषज्यरत्नावल्यां बालरोगाधिकारः समाप्तः।



## अथ विषाधिकारः।

सर्वैरेषादितः सर्पैः शाखादष्टस्य देहिनः।
दंशस्योपरि बध्नीयादरिष्टाश्चतुरङ्गुले॥
न गच्छति विषं देहमरिष्टाभिर्निवारितम्
दहेद्दंशमथोत्कृत्य यत्र बन्धो न जायते॥

मूलं तण्डुलधारिणा पिबति यः प्रत्यङ्गिरा सम्भवं
निष्पिष्टं शुचि भद्रयोग दिवसे तस्याहिभीतिः कुतः॥
दर्पादेव फणी यदा दशति तं मोहान्वितो मूलपं
स्थाने तत्र स एव याति नियतं वक्त्रं यमस्याचिरात्॥
मसूर निम्बपत्राभ्यां योऽत्तिमेषगते रवौ।
अब्दमेकं न भीतिः स्याद्विषात्तस्य न संशयः॥
धवलपुनर्नवजटयातण्डुलजल पीतया च पुष्यर्क्षे।
अपसरति खलु विषधरोपद्रव आवत्सरं पुंसाम्॥
गृहधूमो हरिद्रे द्वे समूलं तण्डुलीयकम्।
अपि वासुकिना दष्टः पिवेद्दधिघृताप्लुतम्॥
कुलिकमूलनस्येन कालदष्टोऽपि जीवति॥
शिरीषपुष्पस्वरसे भावितं मरिचं सितम।
सप्ताहं सर्पदष्टानां नस्यपानाञ्जने हितम्॥
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रचतुःपलम्।
अपि तक्षकदष्टानां पानमेतत् सुखप्रदम॥
वन्ध्याकर्कोटजं मूलं छागमूत्रेण भावितम्।
नस्यं काञ्जिकसंपिष्टं दर्वीपहतचेतसः॥
पीते विषे स्याद्वमनं त्वकस्थेप्रदेहः सेकादिसुशीतलः।
अगारधूम मञ्जिष्ठा रजनी लवणोत्तमैः।
लेपो जयत्याखुविषं शोणितस्रावणं तथा।
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपादिका।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः॥
यः कासमर्दनेत्रं वदवेविनिक्षिप्य कर्णपूजारम्।
मनुजो ददाति शीघ्रं भवति विषं वृश्चिकानां सः॥

उष्णं गव्यघृतञ्चापि सैन्धवेन समन्वितम्।
वृश्चिकस्य विषं हन्ति लेपनात्पर्वतात्मजे॥
शिरीषस्य तु बीजं वै स्नुहीक्षीरेण घर्षितम्।
तल्लेपेन महादेवि नश्येत् कुक्कुरजं विषम्॥
पिष्टतण्डुलमध्यस्थं भक्षितं मेषलोमकम्।
कुक्कुरस्य विषं हन्ति नात्र कार्य्या विचारणा॥
वचा हिङ्गु विडङ्गानि सैन्धवं गजपिप्पली।
पाठा प्रतिविषा व्योषं काश्यपेन विनिर्म्मितम्॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत्॥

अजितागदः।

विडङ्ग पाठा त्रिफलाजमोदा
हिङ्गूनि वक्रं त्रिकटूनि चैव।
तथैव वर्गो लवणस्य सूक्ष्मः
सचित्रकः क्षौद्रयुतो निधेयः।
शृङ्गे गवां शृङ्गमयेन चैव
प्रच्छादितः पक्षमुपेक्षितश्च।
एषोऽगदः स्थावरजङ्गमानां
जेता विषाणामजितो हि नाम्ना।

तार्क्ष्यागदः।

प्रपौण्डरीकं सुरदारु मुस्ता
कालानुसार्य्या कटुरोहिणी च।
स्थौणेयकध्यामकपद्मकानि
पुन्नागतालीशसुवर्च्चिकाश्च।

कुटन्नटैलासितसिन्धुवारा:
शैलेयकुष्ठे तगरं प्रियङ्गु।
लोध्रं जलं काञ्चनगैरिकञ्च
समागधं चन्दनसैन्धवञ्च॥
सूक्ष्माणि चूर्णानि समानि कृत्वा
शृङ्गे निदध्यान्मधुसंयुतानि॥
एषोऽगदस्तार्क्ष्य इति प्रदिष्टो
विषं निहन्यादपि तक्षकस्य॥

कुलिकादिवटिका।

कुलिकं सप्तपर्णञ्च कुष्ठं तोलकसम्मितम्।
माषमानं तथा दारु मर्दयेदर्कवारिणा॥
सर्षपाभां वटीं कृत्वा योजयेत्पयसा सह
अपि तक्षकदष्टञ्च मृतकल्पं हतस्वरम्॥
पुन: सञ्जीवयेदाशु मर्वक्ष्वेडविनाशिनी।
कुलिकादिवटी हन्ति ज्वरांश्च विषमांस्तथा।

भीमरुद्रोरस:।

मन:शिलाल मरिचैर्टङ्कणा दरदेन च।
अपामार्गस्य ह्रेम्नश्च हयमारशिरीषयो:॥
मूलै रुद्रात्ततोयेन विष्णुक्रान्ताम्बुना तथा।
शतधा भावितै: कुर्य्याद् वटिका मुद्गसन्निभा:॥
व्यालदष्टं पीतविषं निरिन्द्रियमचेतनम्।
पुन: सञ्जीवयेदेष भीमरुद्राभिधो रस:॥

तण्डुलीयकघृतम् ।

तण्डुलीयकमूलेन गृहधूमेन चैकतः ।
क्षीरेण च घृतं सिद्धं समस्तविषरोगनुत् ॥

मृत्युपाशच्छेदिघृतम् ।

अभयां रोचनां कुष्ठमर्कपत्रं तथोत्पलम् ।
नलवेतसमूलानि गरलं सुरसां तथा ॥
मकलिङ्गां समञ्जिष्ठामनन्ताञ्च शतावरीम् ।
शृङ्गाटकं समङ्गाञ्च पद्मकेशरमित्यपि ॥
कल्कीकृत्य पचेत्सर्पिः पयो दद्याच्चतुर्गुणम् ।
सम्यक् पक्वेऽवतीर्णे च शीते तस्मिन् विनिक्षिपेत् ॥
सर्पिस्तुल्यं भिषक् क्षौद्रं कृतरक्षं निधापयेत् ।
विषाणि हन्ति दुर्गाणि गरदोषकृतानि च ॥
स्पर्शाद्धन्ति विषं सर्वं गरैरुपहतां त्वचम् ।
रोगजं तमकं कण्डूं मांससादं विसज्ञताम् ॥
नाशयत्यञ्जनाभ्यङ्गपानवस्तिषु योजितम् ।
अपकीटाखुलूतादिदष्टानां विषहृत्परम् ॥
धुस्तूरस्य शिफा पेया क्षीरेण परिपेषिता ।
शृङ्गाटस्य शिफा चापि श्वविषघ्नी प्रकीर्त्तिता ॥
रजनीयुग्मपत्तङ्गमञ्जिष्ठा नागकेशरैः ।
शीताम्बुपिष्टैरालेपः सद्यो लूतविषं हरेत् ॥
जीरकस्य कृतः कल्को घृतसैन्धवसंयुतम् ।
सुखोष्णो मधुना लेपो वृश्चिकस्य विषं हरेत् ॥

शिखरिघृतम् ।

शिखरि स्वरसेनैव कल्कान् दत्त्वा च दाड़िमम् ।

कुष्ठमेलाद्वयं शृङ्गीं शिरीषममृतं वचाम् ॥
परशू पारिभद्रञ्च चन्दनं तगरं सुराम्।
पचेत्सर्पिस्त्वसलिलं मन्दमन्देन वह्निना॥
घृतमेतन्निहन्त्याशु निखिलान् विषजान् गदान
सन्निपातज्वरं घोरं ज्वरांश्च विषमांस्तथा॥

शिरीषारिष्टः।

पचेत्तुलार्द्धं द्विद्रोणे शिरीषस्य जले सुधीः।
पादशेषे कषायेऽस्मिन् क्षिपेद्गुडतुलाद्वयम्॥
कणाप्रियङ्गुकुष्ठैला नीलिनीं नागकेशरम्।
रजन्यौ पलमानेन दद्यादत्र च नागरम्॥
मासादूर्द्धं जातरसं यथामात्रं प्रयोजयेत्।
शिरीषारिष्टमित्येतं विषव्यापद्विनाशनम्॥

इति भैषज्यरत्नावल्यां विषाधिकारः समाप्तः।

# अथ वीर्य्यस्तम्भाधिकारः

शूरणं तुलसीमूलं ताम्बूलैः सह भक्षयेत्।
न मुञ्चति नरो वीर्य्यमेकेकेन न संशयः॥
कृष्णमार्जारसव्याङ्घ्रिसम्भवास्थिरतोद्यमे।
दक्षिणे ध्रियते येन तस्य वीर्य्यस्य न च्युतिः॥

चटकाण्डन्तु संगृह्य नवनीतेन पेषयेत् ।
तेन लेपयतः पादौ शुक्रस्तम्भप्रजायते ।
यावन्न स्पृशते भूमिं तावद्वीर्य्यं न मुञ्चति ॥
नीलोत्पलसितपङ्कजकेशरमधुशर्करावलिप्तेन ।
सुरते सुचिरं रमते दृढ़लिङ्गो नाभिविवरेण ॥
सिद्धं कुसुम्भतैलं भूमिलताचूर्णमिश्रितं कुरुते ।
चरणाभ्यङ्गेन रते वीजस्तम्भात् दृढ़ं लिङ्गम् ।
गोरेकोन्नतशृङ्गत्वग्भव चूर्णेन धूपितं वस्त्रम् ।
परिधाय भजत ललनां नैकाण्डो भवति हर्षार्त्तः ॥
योगजवराङ्गबन्धं मथितेन चालितं हन्ति ॥
उष्ण खगोशृङ्गोद्भवलेपो योगजध्वजभङ्गहरः ॥

## अर्जकादिवटिका ।

मूलमर्जकशङ्खिन्योर्निर्गुण्डीकेशराजयोः ।
जातीफलं देवपुष्पं विड़ङ्गं गजपिप्पलीम् ॥
जातुजातं तुगाक्षीरीमनन्तां मुशलीं वरीम् ।
विदारीं गोक्षुरं वीजञ्चाभातोयेन मर्दयेत् ॥
माषमानां वटीं कृत्वा सुरामण्डेन योजयेत् ।
वीर्य्यस्तम्भकरी ह्येषा वटिकेयं प्रकीर्त्तिता ॥

## नागवल्लाद्यञ्चूर्णम् ।

नागवल्ली बला मूर्वा जातीकोषफले सुरा ।
अपामार्गस्य वीजञ्च काकोलीयुगलं तथा ॥
कङ्कोलोशीरयष्ट्याह्व वचाश्चैतानि मर्दयेत् ।

वीर्य्यस्तम्भकरं वृष्यं चूर्णमेतद्रसायनम् ॥

### शुक्रवल्लभोरसः।

रसगन्धकलौहाभ्ररौप्यहेमानि माक्षिकम्।
शाणमानेन संगृह्य तुगाक्षीरीञ्च कार्षिकीम् ॥
पलप्रमाणं विजयावीजञ्चैकत्र मर्दयेत्।
विजयावारिणा पश्चाम्माषमानां वटीं चरेत् ॥
एकैका भक्षणीयैषा पेयश्चानु पयः पलम्।
श्रीशुक्रवल्लभो नाम रसो वाजिकरः परः ॥
वीर्य्यस्तम्भकरोऽत्यर्थं प्रमदादर्पनाशनः।
गतो ह्यप्सरसां शक्रो वाल्लभ्यं यत्प्रसादतः ॥

### कामिनीविद्रावणोरसः।

आकारकरभं शुण्ठीं लवङ्गं कुङ्कुमं कणाम्।
जातीफलञ्च तत्कोषं चन्दनं कार्षिकं पृथक् ॥
हिङ्गुलं गन्धकं शाणं फणिफेनं पलोन्मितम्।
गुञ्जात्रयमितां कुर्य्यात्संमर्द्य वटिकां भिषक् ॥
पयसा परिपीतोऽयं शुक्रस्तम्भकरो रसः।
विद्रावणः कामिनीनां वशीकरण एव च ॥

इति भैषज्यरत्नावल्यां वीर्य्यस्तम्भाधिकारः समाप्तः।



# अथ रसायनाधिकारः।



यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्।
पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत्॥
नाविशुद्धशरीरस्य युक्तो रासायनो विधिः।
न भाति वाससि क्लिष्टे रङ्गयोग इवार्पितः॥

जरणान्तेऽभयामेकां प्राग्भक्ते द्वे विभीतके।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्यामलकानि च॥
प्रयोजयेत्समामेकां त्रिफलाया रसायनम्।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च॥

ये मासमेकं स्वरसं पिबन्ति
दिने दिने भृङ्गरजः समुत्थम्।
क्षीराशिनस्ते बलवर्णयुक्ताः
समाशतं जीवितमाप्नुवन्ति।
मण्डूकपर्ण्याः स्वरसः प्रयोज्यः
क्षीरेण यष्टीमधुस्य चूर्णम्।
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि
मेध्यानि चैतानि रसायनानि।
मेध्याविशेषेण तु शङ्खपुष्पी॥
पीताश्वगन्धा पयसार्द्धमासं
घृतेन तैलेन सुखाम्बुना वा।

कृष्णस्य पुष्टिं वपुषो विधत्ते
बालस्य शस्यस्य यथाम्बुवृष्टिः।
धात्रीतिलान् भृङ्गरजोविमिश्रान्
ये भक्षयेयुर्मनुजाः क्रमेण।
ते कृष्णकेशा विमलेन्द्रियाश्च
निर्व्याधयो वर्षशतं भवेयुः॥

वृद्धदारकमूलानि श्लक्ष्णचूर्णानि कारयेत्।
शतावर्य्यारसेनैव सप्तवारांश्च भावयेत्॥
अक्षमात्रन्तु तच्चूर्णं सर्पिषा सह योजयेत्।
मासमात्रोपयोगेन मतिमान् जायते नरः॥
मेधावी स्मृतिमांश्चैव वलीपलितवर्जितः॥

हस्तिकर्णरजं खादेत्प्रातरुत्थाय सर्पिषा।
यथेष्टाहारचेष्टोऽपि सहस्रायुर्भवेन्नरः॥
मेधावी बलवान् कामी स्त्रीशतानि व्रजत्यसौ।
मधुना त्वश्ववेगः स्याद्वलिष्ठः स्त्रीसहस्रगः॥
मन्त्रश्चासौ प्रयोक्तव्यो भिषजा चाभिमन्त्रणे॥
मन्त्रो यथा ओं नमो महाविनायकाय अमृतं
रक्ष मम फलसिद्धिं देहि रुद्रवचनेन स्वाहा॥

धात्रीचूर्णस्य कंसं स्वरसपरिगतं क्षौद्रसर्पिः समांशं
कृष्णामाषो सिताष्टप्रसृतयुतमिदं स्थापितं भस्मराशौ।
वर्षान्ते तत्समश्नन् भवति विपलितो रूपवर्णप्रतापै-
र्निर्व्याधिर्बुद्धिमेधा स्मृतिवचनबलस्थैर्य्यसत्त्वैरुपेतः॥

गुडूच्यपामार्गविडङ्गशङ्खिनी
वचाभया शुण्ठिशतावरी समा।

घृतेन लीढ़ा प्रकरोति मानवं
त्रिभिर्दिनैः श्लोकसहस्रधारिणम् ॥
व्यङ्गवलीपलितघ्नं पीनसवैस्वर्य्यकासहरम्।
रजनीक्षयेऽम्बुनस्यं रसायनं दृष्टिजननञ्च ॥
अम्भसः प्रसृतान्यष्टौ रवावनुदिते पिवन्।
वातपित्तगदान् हत्वा जीवेद्वर्षशतं नरः ॥

ऋतुहरीतकी।

सिन्धूत्थशर्करा शुण्ठी कणा मधुगुड़ैः क्रमात्।
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥
दुर्नाम श्वास ज्वर वमथु तृषा पाण्डुता नेत्ररोगान्
हिक्का कुष्ठातिसार भ्रममदकसना जीर्णशूलप्रमेहान्।
तृष्णा शूलास्रपित्त ज्वर वितत जरा रोचकानाहदाहान्।
हन्यादेतानवश्यं मधुनि परिगता पूतना चाम्लपित्तम् ॥

अत्र मधुनि परिगतेत्यनेन मधुभाविता मधुपूर्ण-भाण्डे चिरावस्थिता हरीतकी ग्राह्या। व्यवहारस्तु मधु पिष्टा हरीतक्येव।

निर्गुण्डीकल्पः।

ओं सिद्धिः पिङ्गलायोगिनो कथितम्। निर्गुण्डी मूलचूर्णमष्टपलं गृहीत्वा षोड़शपल मधुमिश्रितं घृत भाण्डे कृत्वा शरावेण निविड़लेपनं दत्वा मर्दयित्वा मासमेकं धान्यमध्ये स्थापयेत्तन्मासमेकं भक्षितमात्रेण नरः कनकवर्णो गृध्रदृष्टिः सर्वरोगविवर्जितः वलीपलित-हीनः सम्वत्सरं खादिते चन्द्रार्कं यावज्जीवेत् वज्रमुक्तः

स्त्रीशतं कामयितुं क्षमो भवति। आकाङ्क्षां विहाय यथेच्छया भोज्यम्। तच्चूर्णं गोमूत्रेण सह यः पिबति हन्त्यष्टादशकुष्ठानि पामाविचर्च्चिकादीनि नाड़ीव्रणगुल्म-शूलप्लीहोदराणि। तच्चूर्णं तक्रेण यः पिबति स सर्वरोग-विवर्जितो गृध्रदृष्टिर्वराहबलो भवति वलीपलितवर्जितः पवनवेगो दिव्यमूर्त्तिर्भवति। मासद्वयप्रयोगेण पण्डितश्च न संशयः॥

## भृङ्गराजादिचूर्णम्।

अच्छीकृतं भृङ्गरजस्य चूर्णं
तिलार्द्धकं चामलकार्द्धकञ्च।
सशर्करं भक्षयतो गुडैर्वा
न तस्य रोगा न जरा न मृत्युः।
अन्धः पश्येद्गमनरहितो मत्तमातङ्गगामी
मूको वाग्मी श्रवणरहितो दूरशब्दानुसारी।
नीरुक्शर्त्तो भवति पलितो नीलजीमूतकेशो
जीर्णा दन्ताः पुनरपि नवाः क्षीरगौरा भवन्ति॥

## श्रीमृत्युञ्जयतन्त्रोक्ता अमृतवर्त्तिका।

त्रिफला त्रिकटु ब्राह्मी गुड़ूची रक्तचित्रकम्
नागकेशरचूर्णञ्च शृङ्गवेरं समार्कवम्॥
सिन्धुवारी हरिद्रे द्वे शक्राशनगुड़त्वचौ।
एला मधुकपर्णी च विड़ङ्गश्चोग्रगन्धिका॥
चूर्णं प्रत्येकमेतेषां समादाय पलद्वयम्।

कामरूपसमुद्भूतैर्गुडैः पञ्चाशतैः पलैः।
मयष्टिस्त्रिशती कार्य्या वर्त्तिस्तेन समानतः।
चन्द्रतारा विशुद्धौ च पूजयित्वेष्टदेवताम्॥
सुकृती प्रज्ञया प्रीतो वर्त्तिमेकान्तु भक्षयेत्।
ततोऽनुपानं पानीयं सलिलञ्च सुशीतलम्॥
कट्वम्लं लवणञ्चैव नातिमात्रं कदाचन।
यः प्रत्यहमिदं खादेत्तावर्षमानं निरन्तरम॥
भोजनादौ प्रदोषे वा शृणु याद्टक् फलं भवेत्।
नष्टवह्निस्तु दीप्ताग्निर्वडवानलसन्निभः॥
दृष्टापि भास्वतो कान्तिश्चन्द्रिकेव निशामुखे।
कासप्रसूनचः केशाः शिखिकण्ठमनोरमाः॥
पटलावहतं चक्षुर्नित्य योजन दर्शनम।
जरा विस्रग्ध देहोऽपि लेप निर्मोण शाड्वलः॥
निर्व्याधिनिर्जरः षड्वेगेनाश्वैःश्रवा इव।
दिनेश इव तेजस्वी कन्दर्प इव रूपवान्।
अहस्रायुर्महासत्त्वो गन्धर्व इव गायनः।
स्त्रीगतं रमते नित्यं नावसादं व्रजत्यसौ॥
न भजन्त्यापदः कश्चित्कामरूपी भवेदसौ।
पद्मगन्धि वपुस्तस्य पुष्पमिव सुकोमलम्॥
जराक्षये सुजीर्णस्य नखकेशादयो यथा।
प्रभवन्ति बलादुग्रादथ कन्दा इवाम्बुदात्॥
हृष्टः पुष्टश्च पापघ्नः शान्तो भवति मानवः।
श्रीअमृतवर्त्तिका नाम मृत्युञ्जयमुखोदिता॥
रसायनानां श्रेष्ठेयं सर्वव्याधिनिसूदनी॥

श्रीसिद्धमोदकः।

त्रिकटो स्त्रिपलं चूर्णं त्रिफलायाः पलत्रयम्।
गुडूच्याश्च विड़ङ्गानां ग्रन्थिक ग्रन्थिपर्णयोः॥
रक्तचित्राङ्घ्रिजं चूर्णं ग्राह्यञ्चापि पृथक् पृथक्।
प्रत्येकं द्विपलञ्चैषां गृह्णीयाद्मतिमान् नरः॥
कामरूपोद्भवा ग्राह्या गुड़स्यार्द्धतुलां तथा।
सर्व्वमेकत्र संमर्द्य सयष्टित्रिशतं शुभम्॥
मोदकं कारयेद्धीमान् समभागेन यत्नतः।
प्रत्यहं प्रातरेवैतत्पानीयेनैव भक्षयेत॥
एवं निरन्तरं कार्य्यं संवत्सरमतन्द्रितः।
प्रथमेमासि वाग्युक्तो द्वितीये बलवर्णवान्॥
तृतीये नाशयेत् कुष्ठं श्वास कासौ तुरीयके।
पञ्चमे स्त्रीप्रियत्वञ्च षष्ठे च पलितक्षयः।
सप्तमे कान्तियुक्तश्च अष्टमे बलवान् भवेत्।
नवमे च शतायुः स्याद् दशमे च स्वरान्वितः।
महाबलस्त्वेकादशे अष्टाङ्गो द्वादशे भवेत्।
दुःखाहारविहारोस्यात्ततो दैत्यरिपोः समः॥
षड़्मिरद्वितो देहो प्राणानि कल्पजीवितम्।
एवं निरन्तरं तिष्ठेद्यावत् कालञ्च जीवति।
भवन्ति सिद्धयोऽस्याष्टौ याश्चापि परिकीर्त्तिताः
श्रीसिद्धमोदको ह्येष [illegible] निषेवितः॥

[illegible]सः।

प्रवाल वङ्ग मौक्तिकाभ्रक [illegible] चतुर्भागभाक्
पृथक् [illegible] नीलतोदंशके।

अयोभुजगरङ्गकं त्रिलवकं विमर्द्याखिलं
शुभेऽहनि विभावयेद्विपगिदं धिया सत्तमः ।
द्रवैर्त्रिफलनिम्बभृङ्गजैः कमल मालती पुष्पजैः
पयः कदलि कन्दजैर्मलयजैर्घनाम्बु द्रवैः ।
वसन्तकुसुमाकरो रसपतिर्द्विवल्लोऽशितः
समस्तगदहृद्भवेत्किल निजानुपानैरयम् ॥

अष्टाङ्गरसः ।

रसराजस्य भागैकं द्विभागं गन्धकस्य च ।
भाग मेकं सुवर्णस्य भागार्द्धं रजतस्य च ॥
नागं ताम्रं खर्परञ्च वङ्गञ्चैव समांशकम् ।
प्रत्येकं रजतार्द्धञ्च सर्वमेतत्र मर्दयेत् ॥
वटाङ्कुररसैर्यामं यामं कन्यारसैः सह ।
कूप्यभ्यन्तरे संस्थाप्य त्रिदिनं पाचयेत् सुधीः ॥
दाड़िमकुसुम प्रख्यं जायते अविकल्पतः ।
जरा पलित विध्वंसि बलपुष्टिकरं महत् ॥
आरोग्य जननं मेधाकान्तिकन्दर्पवर्द्धनम् ।
महौषधवरश्चैतदष्टावक्रेण निर्मितम् ॥

त्रैलोक्यचिन्तामणिः ।

रसं वज्रं हेमतारं ताम्रं तीक्ष्णं मृताभ्रकम् ।
मौक्तिकं गन्धकं शङ्खं प्रवालं तालकं शिला ॥
शोधितञ्च समं सर्वं सप्ताहं मर्दयेद्दृढ़म् ।
वह्निमूलकषायेण भानुदुग्धे दिनत्रयम् ॥

निर्गुण्डी शूरण द्रावैर्वन्ही दुग्धैर्दिनत्रयम्।
अनेनपुटयेत्तस्मै पीतवर्णं वराटिकाम्॥
टङ्कनं रविदुग्धेन पिष्ट्वातस्य मुखं लिपेत्।
रुद्ध्वा भाण्ड मुषं पाच्यं स्वाङ्गशीतं विचूर्णयेत्॥
चूर्णतुल्यं मृतं सूतं वैक्रान्तं सूत पादिकम्।
शोभाञ्जनद्रवैः सर्वं सप्तधारान् विभावयेत्॥
वह्निमूल कषायेण भावनात्रय मीहते।
एवं संशुद्ध सूतेन्द्रः सर्वव्याधिकुलान्तकः॥
मासार्द्धेन निहन्त्याशुजरामृत्युं न संशय।
वातं विद्रधिशूल पाण्डु यकृणौ रक्तातिसारान जयेत्॥
मेहप्लीहा जलोदराश्मरि तृषा शोथं हलीमोदरम।
मूत्राघात भगन्दर ज्वरगणान् सर्वाणि कुष्ठान्यपि
साध्यासाध्य भवान् गदान् बहुतरान् संसाधयेद्योगत॥

## पूर्णचन्द्ररसः।

द्विकर्षं शुद्धसूतञ्च गन्धकञ्च द्विकार्षिकम्।
लौहभस्मपलञ्चैक जारिताभ्रं पलांशिकम्॥
हरतालं रजतञ्चैव वङ्गभस्म द्विकार्षिकम्।
स्वर्णं तीलकञ्चैव ताम्रं कांस्यञ्च तत्समम्॥
जातीफलञ्चेन्द्रपुष्प मेला भृङ्गञ्च जीरकम्।
कर्पूरं वनिता मुस्तं कर्षं कर्षं पृथक् पृथक्॥
सर्वं खल्लतले चिप्त्वा कन्यारस विमर्दितम्।
भावयित्वा वरातोये वयुकायां रसैस्तथा॥
एरण्डपत्रैः संवेष्ट्य धान्यराशौ दिनत्रयम्।

उद्धृत्य मर्दयित्वा तु वटिकां चणकप्रमाम् ॥
खादेच्च वटिकामेकां पर्णखण्डेन संयुताम्।
सर्वव्याधिविनाशाय काशीराजेन निर्मिता ॥
बल्या रसायनी वृष्या वाजीकरणमुत्तमम्।
अग्निमान्द्यमजीर्णञ्च ग्रहणीं चिरजामपि ॥
आमवातमम्लपित्तं जीर्णज्वरमरोचकम्।
आमशूलं कटीशूलं हृच्छूलं पक्तिशूलकम् ॥
कामशोकोद्भवं रोगं प्रमेहं बहुमूत्रकम्।
वायुं बहुविधं हन्ति ध्वजभङ्गं विशेषतः ॥
मेधाञ्च लभते रात्रिं तुष्टिं पुष्टिं समन्विताम्।
वृद्धोऽपि तरुणस्पर्द्धी स्त्रीषु चापि वृषायते ॥
दृष्टः सिद्धफलो ह्येष रसायनवरः स्मृतः ॥

## श्रीमहालक्ष्मीविलासरसः।

पलं वज्राभ्रचूर्णस्य तदर्द्धौ गन्धपारदौ।
तदर्द्धं वङ्गभस्मापि तदर्द्धं तारकं तथा ॥
तत्समं माक्षिकञ्चैव तदर्द्धं ताम्रभस्मकम्।
रसतुल्यञ्च कर्पूरं जातीकोषफले तथा ॥
वृद्धदारकबीजञ्च बीजं स्वर्णफलस्य च।
प्रत्येकं कार्षिकं भागं मृतस्वर्णं द्विशाणकम् ॥
निष्पिष्य वटिका कार्य्या द्विगुञ्जाफलमानतः।
निहन्ति सन्निपातोत्थान् गदान् घोरान् सुदारुणान् ॥
गलोत्थानन्त्रवृद्धिञ्च तथातीसारमेव च।
कुष्ठमष्टादशविधं प्रमेहान् विंशतिं तथा ॥

श्लीपदं कफवातोत्थं चिरजं कुलजं तथा।
नाड़ीव्रणं व्रणं घोरं गुदामय भगन्दरम्॥
कासपीनसयक्ष्मघ्नः स्थौल्यदौर्गन्ध्यरक्तनुत्।
आमवातं सर्व्वरूपं जिह्वास्तम्भं गलग्रहम्॥
उदरं कर्णनासाक्षि मुखवैजात्य मेव च।
सर्व्वशूलं शिरःशूलं स्त्रीणां गदनिसूदनः॥
वटिकां प्रातरेकैकां खादेन्नित्यं यथाबलम्।
अनुपानमिह प्रोक्तं मांस पिष्टं पयो दधि॥
वारिभक्त सुरासीधु सेवनात् कामरूपधृक्।
वृद्धोऽपितरूण स्पर्द्धी न च शुक्रक्षयो भवेत्।
न च लिङ्गस्य शैथिल्यं न केशानाञ्च पक्वता।
नित्यं गच्छेत शतं स्त्रीणां मत्तवारणविक्रमः।
द्विलक्षयोजनी दृष्टिर्जायते पौष्टिकस्तथा।
प्रोक्तः प्रयोगराजोऽयं नारदेन महात्मना॥
रसो लक्ष्मीविलासोऽयं वासुदेवो जगत्पतौ।
अभ्यासादस्य भगवान् ललनासु वल्लभः॥

सारस्वतारिष्टः।

समूलपत्रशाखाया ब्राह्म्या ब्राह्ममुहूर्त्तके।
गृहीत्वा विंशतिपलं पुष्ययोगे शतावरी॥
विदारिकाभयोशीराश्चार्द्रकञ्च तथा मिशिः।
पञ्च पञ्च पलान्येषां जलद्रोणे पचेद्भिषक्॥
पादावशेषे विस्राव्य रसं वस्त्रेण गालयेत्।
माक्षीकस्य दशपलं सितयाः पञ्चविंशतिः॥

धातकी पद्मपलिका रेणुका त्रिहृता कणा।
देवपुष्पं वचाकुष्ठं वाजिगन्धा विभीतकी॥
अमृतैला विडङ्गं त्वक् प्रत्येकं कर्षसम्मितम्।
क्वाथे तस्मिन् समस्तानि समाक्षिप्य प्रयत्नतः॥
स्वर्णकुम्भे निदध्याद्वा नवेमृद्भाजनेऽपि वा।
स्वर्णप्रतनुपत्रञ्च क्षिप्ताऽस्मिन् कर्षसम्मितम्॥
मासाज्जातरसं दृष्ट्वा हैमपात्रे चयं गते।
वाससा च परिस्राव्य स्थापयेद् घृतभाजने॥
सारस्वताभिधोऽरिष्ट एषोऽमृत समः पुरा॥
ऋषीणामुपकारार्थं धन्वन्तरिविनिर्मितः॥
आयुर्वीर्य्यं धृतिं मेधां बलं कान्तिं विवर्द्धयेत्।
वाग्विशुद्धिकरो हृद्यो रसायनवरः स्मृतः॥
बालकानाञ्च यूनाञ्च वृद्धानाञ्च हितः सदा।
नरनारीहितो नित्यं परमौजस्करो मतः॥
वारयेत् स्वरकार्कश्यं तथा चास्पष्टभाषणम्।
स्वरं परभृतस्येव जनयेत् सेवनात् सदा॥
रजोदोषेण दुष्टानां योषितां शुक्रदोषिणाम्।
पुंसाञ्चापि शुभकरः सर्वदोषहरो मतः॥
सत्यध्ययन गीतादि क्षीणस्मृति बला नराः।
लभन्ते चित्तसन्तोषं स्मृतिञ्चास्य निषेवणात्।
पयसा सह पातव्योऽरिष्टोऽयं शाणमानतः।
मासाभ्यां रोगहृच्चायं शरदां सर्वसिद्धिदः॥

अकालमृत्योर्हरणे यदीच्छा-
माराधितव्यं यदि वाञ्छितं स्यात्।

वाक्शुद्धि धैर्य स्मृतिलब्धिरिष्टा
निषेव्यतां तद्यमृतं भवद्भि ॥

शरद्दावर्षेण

इति भैषज्यरत्नावल्यां रसायनाधिकारः समाप्तः ।



## अथ वाजीकरणाधिकारः ।

### वृष्याधिकारः ।

चिन्तया ज्वरया शुक्रं व्याधिभिः कर्मकर्षणात् ।
क्षयं गच्छत्यनशनात् स्त्रीणाञ्चाति निषेवणात् ॥

वाजं शुक्रं तदस्यास्तीति वाजी अवाजो वाजी क्रियते पुरुषोऽनेन इति वाजीकरणम् । अथवा वाजीव योगात् यदुक्तं चरके । येन नारीषु सामर्थं वाजिवल्लभते नरः । येन वाप्यधिकं वीर्यं वाजीकरणमेव तत् ॥

### अथैतदकरणेदोषाः ।

ग्लानिः कम्पोऽवसादस्तदनु च कृशता चीणता चेन्द्रियाणां
शोषोच्छ्वासोपदंश ज्वरगुदजगदाः चीणता सर्वधातौ ॥
जायन्ते दुर्निवाराः पवनपरिभवाः क्लीवता लिङ्गभङ्गौ ।

वामांवशत्यातियोगान्नजत इह सदा वाजिकमेच्छतस्य॥

यत्किञ्चिन्मधुरं स्निग्धं जीवनं वृंहणं गुरुः।
हर्षणं मनसश्चैव सर्वं तद्दृष्य मुच्यते॥

घृतभृष्टमाषविदलं दुग्धसिद्धञ्च शर्कराविमिश्रम्।
भुक्त्वा सदैव कुरुते तरुणीगतमैथुनं पुरुषः॥

शतावरी शृतं क्षीरं पिपिवेत्सितया युतम।
व्यवायस्य विरतिं मृदुतां यातिमेन्द्रियम्॥

वृद्धशाल्मलिमूलस्य रसं शर्करया समम।
प्रयोगात्तस्य सप्ताहाज्जायते रेतसोऽम्बुधिः॥

लघुशाल्मलि मूलेन तालमूलीं सुचूर्णिताम:
सर्पिषा पनसा पोला रतौ वटज्वलयेन॥

विदारीकन्दचूर्णञ्च घृतेन पयसा पिवेत्।
उडुम्बररसेनैव वृद्धोऽपि तरुणायते॥

सप्तधामलकीचूर्णं मामलक्यस्वभावितम्
घृतेन मधुना लीढ्वा पिवेत् क्षीरपलं नरः।
वाजीकरणयोगोऽयमुत्तमः परिकीर्त्तितः॥

अम्लानलवणकटुतिक्तकषायमस्त्रं
क्षारञ्च शाकमथवा लवणाधिकञ्च।
कामी सदैव रतिमान् वनिताभिलाषी
नो भक्षयेदिति समस्तजनप्रसिद्धिः॥

पिप्पलीलवणोपेतौ वस्ताण्डौ क्षीरसर्पिषा।
साधितौ भक्षयेद्यस्तु स गच्छेत्प्रमदाशतम्॥

वस्ताण्डसिद्धे पयसि भावितांश्च सकृत्तिलान्।
यःखादेत्सनरो गच्छेत् स्त्रीणां शतमपूर्ववत्॥

चूर्णं विदार्य्याः सुकृतं तद्रसेनैव भावितम्।
सर्पिःक्षौद्रयुतं लीढ्वा शतं गच्छेन्नरोऽङ्गनाः॥

एवामामलकं चूर्णं स्वरसेनैव भावितम्।
शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत्॥
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति॥

विदारीकन्दकल्कन्तु घृतेन पयसा नरः।
उडुम्बरसमं खादेद्वृद्धोऽपि तरुणायते॥

स्वयं गुप्तेक्षुरकयोर्बीजं समधुशर्करम्।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत्॥

उच्चटाचूर्णमप्येवं क्षीरेणोत्तम मुच्यते।
शतावर्य्युच्चटाचूर्णं पेयमेवं सुखार्थिना॥

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम्।
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत्॥

गोक्षुरकः क्षुरकः शतमूली
वानरी नागबलातिबला च।
चूर्णमिदं पयसा निशिपेयं
यस्य गृहे प्रमदाशतमस्ति॥

आर्द्राणि मत्स्यमांसानि शफरीर्वा सुभर्जिताः।
तप्ते सर्पिषि यः खादेत्स गच्छेत् स्त्रीषु न क्षयम्॥

## नरसिंहचूर्णम्।

शतावरीरसः प्रस्थं प्रस्थं गोक्षुरकस्य च॥
वाराह्या विंशतिपलं गुडूच्याः पञ्चविंशतिः॥
भल्लातकानां द्वात्रिंशच्चित्रकस्य दशैव तु।

तिलानां शोधितानाञ्च प्रस्थं दद्यात्सुचूर्णितम् ॥
चूर्णस्य पलान्यष्टौ शर्करायाश्च सप्तति:।
माक्षिकं शर्करार्द्धेन माक्षिकार्द्धेन वै घृतम् ॥
शतावरीसमं देयं विदारीकन्दजं रजः।
एतदेकीकृतं चूर्णं स्निग्धे भाण्डे निधापयेत् ॥
पलार्द्ध मुपयुञ्जीत यथेष्टञ्चास्य भोजनम् ।
मासैक मुपयोगेन जरां हन्ति रुजामपि ॥
वलीपलित खालित्य मेह पाण्ड्वाद्य पीनसान् ।
हन्त्यष्टादश कुष्ठानि तथाष्टावुदराणि च ॥
भगन्दरं मूत्रकृच्छ्रं गृध्रसीञ्च हलीमकम् ।
क्षयञ्चैव महाव्याधिं पञ्च कासान् सुदारुणान् ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ।
विंशतिं श्लैष्मिकांश्चापि संसृष्टान् सान्निपातिकान् ॥
सर्वानर्शोगदान् हन्ति वृक्षमिन्द्राशनिर्यथा ॥

मकाञ्चनाभो मृगराजविक्रम-
मुरङ्गमश्चाप्यनुयाति वेगतः।
स्त्रीणां शतं गच्छति सातिरेकं
प्रकृष्टपुष्टश्च यथा विहङ्गः ॥

पुत्त्रान् संजनयेद्धीमान् नरसिंहनिभां स्तथा।
नरसिंह मिदं चूर्णं सर्वरोगहरं नृणाम् ॥
वाराहीकन्दसंज्ञस्तु चर्म्मकारालुको मतः।
पश्चिमे घृष्टिशब्दाख्यो वराह इव लोमवान् ॥

गोधूमाद्यं घृतम् ।

गोधूमात् पलशतं निःक्वाथ्य सलिलाढके।

पादशेषे च पूते च द्रव्याणीमानि दापयेत् ॥
गोधूमं मुञ्जातफलं माष द्राक्षा परूषकम् ।
काकोली क्षीरकाकोली जीवन्ती शतावरी ॥
अश्वगन्धा सखर्ज्जूरा मधुकं त्रपुषं सिता ।
भल्लातकमात्मगुप्ता समभागानि कारयेत् ॥
घृत प्रस्थं पचेदेवं क्षीरं दत्त्वा चतुर्गुणम् ।
मृद्वग्निना च सिद्धे तु द्रव्याण्येतानि निक्षिपेत् ॥
त्वगेला पिप्पली धान्य कर्पूर नागकेशरम् ।
यथालाभं विनिक्षिप्य सिता क्षौद्रं पलाष्टकम् ॥
दत्त्वेक्षुदण्डेनालोड्य विधिवद् विनियोजयेत ।
शाल्योदनेन भुञ्जीत पिबेन्मांसरसेन वा ॥
केवलस्य पिबेदस्य पलमात्रं प्रमाणतः ।
न चास्य लिङ्गशैथिल्यं न च शुक्रक्षयो भवेत् ॥
बल्यं परं वातहरं शुक्रसंजननं परम् ।
मूत्रकृच्छ्र प्रशमनं वृद्धानाञ्चापि शस्यते ॥
पलद्वयं तदश्नीयाद् दशरात्रमतन्द्रितः ।
स्त्रीणां शतञ्च भजते पीत्वा चानुपिबेत्पयः ।
अश्विभ्यां निर्मितं चैव गोधूमाद्यं रसायनम् ॥

जलद्रोणेऽत्र गोधूमक्वाथस्तच्छेष आढ़कम् । मुञ्जातकस्य स्थाने तु तद्गुणं तालमस्तकम् । कल्कद्रव्य सम मानं त्वगादेः साहचर्य्यतः ॥

## बृहदश्वगन्धाघृतम् ।

अश्वगन्धा पलशतं शुभदेशसमुद्भवम् ।

पुष्येऽहनि समाहृत्य साधयेत् सम्यक् कुट्टितम् ॥
द्रोणेऽम्भसि पचेत्तावद् यावत्पादावशेषितम्।
सर्पिःप्रस्थं पचेत्तेन गव्यक्षीरं चतुर्गुणम् ॥
कषायं छाग मांसस्य दद्याच्छतद्वयस्य च।
कल्कानि सूक्ष्मपिष्टानि तदामूनो प्रदापयेत् ॥
काकोलीयुग मृद्वी द्वे मेदे द्वे चाथ जीरकम्।
श्वगंगुप्ता मृषभकमेलां मधुकमेव च ॥
मृद्वीकां शूर्पपर्ण्यौ च जीवन्तीं चपलां बलाम्।
नारायणीं विदारीञ्च दत्त्वा सम्यग्विपाचयेत् ॥
सिता माक्षिकयोः शीतिदत्त्वोयात्कुड़वौ पृथक्।
लीढ़ा पाणितल भुञ्ज्यात्परिहार विवर्जितम्।
चाणिन्द्रियाः क्षीणशुक्रा वृद्धा बाला स्तथाबलाः।
हीनमांसाश्च ये केचित्प्राश्नेदं मात्रया घृतम्।
ओजः स्वास्थ्यञ्च तेजश्च प्रसाद मिन्द्रियस्य च ॥
लभते सूर्य्यसङ्काशो भ्राजते विगतज्वरः।
वृद्धो वृषायते स्त्रीषु नित्यं षोड़शवर्षवत्।
नारीणाञ्च शतं गच्छेत न च शुक्रक्षयो भवेत्।
वन्ध्या च लभते पुत्रं वृद्धिमेधासमन्वितम् ॥
मासमात्रप्रयोगेण वलीपलित नाशनम्।
खालित्य तिमिरं व्याधीन् वातिकान् कफपित्तजान् ॥
पञ्चकासान् क्षयं श्वासं हिक्काश्च विषमज्वरम्।
हन्ति सर्वान् गदान् शीघ्रमश्विभ्यां निर्मितं पुरा।

अत्र छागमांस शतद्वये जलद्रोणद्वयं दत्त्वा चतुर्भागावशेषः कार्य्यः तुलाद्वये जलद्रोण इति वचनात्।

गुड़कुष्माण्डकम् ।

कुष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम् ।
प्रस्थञ्च घृततैलस्य तस्मिंस्तप्ते निधापयेत् ॥
त्वक्‌पत्र धान्यक व्योष जीरकैलाद्वयानलम् ।
ग्रन्थिकं चव्य मातङ्गपिप्पली विश्वभेषजम् ॥
शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम् ।
चूर्णीकृतं पलांशञ्च गुड़स्य तुलया पचेत् ॥
शीतीभूते पलान्यष्टौ मधुनः संप्रदापयेत् ।
कफपित्तानिलहरं मन्दाग्नीनाञ्च शस्यते ॥
कृशानां वृंहणं श्रेष्ठं वाजीकरण मुत्तमम् ।
प्रमदासु प्रसक्तानां ये च स्युःक्षीणरेतसः ॥
क्षयेण तु गृहीतानां परमेतद्भिषग् जितम् ।
कासं श्वासं ज्वरं हिक्कां हन्ति छर्दिमरोचकम् ।
गुड़कुष्माण्डकं ख्यातमश्विभ्यां समुदाहृतम् ।
खण्डकुष्माण्डवत्पात्रं स्विन्नकुष्माण्डकद्रवः ॥

योगान् संसेव्य वृष्यान् मितमथ पयः शीतलञ्चाम्बु पीत्वा
गच्छेन्नारीं रमण्यां स्मरशरतरणीं कामुकः काममाद्ये ।
यामे हृष्टः प्रहृष्टां व्यपगत सुरतस्तत् समुत्पाद्य सद्यः
कान्तः कान्ताङ्गसङ्गाद्‌महदपि न वै धातुवैषम्यमेति ॥

सुरूपा यौवनस्था च लक्षणैर्यदि भूषिता ।
वयस्या शिक्षिता या च सा स्त्री वृष्यतमा मता ॥
स्त्रीष्वजयं मृगयतां वृद्धानाञ्च रिरंसताम् ।
क्षीणानामल्पशुक्राणां स्त्रीषु क्षीणाश्च ये नराः ॥
विलासिनामर्थवतां रूपयौवनशालिनाम् ।

वक्षोपतीनां नृणाञ्च योगा वाजीकरा हिताः ॥

## बृहच्छतावरीमोदकः।

शतावरी श्वदंष्ट्रा च बला चातिबला तथा।
मर्कटीक्षुरवीजञ्च विदारी कन्दजं रजः ॥
एतानि समभागानि पलिकानि विचूर्णयेत्।
तस्माच्चतुर्गुणं देयं त्रैलोक्यविजयारजः ॥
एतदेकीकृतं यावत्तद्द्वैं माहिषं पयः।
तावन्मात्रेण दातव्यः शतावर्य्या रसस्तथा ॥
विदार्य्याः स्वरस प्रस्थं सितापलशतद्वयम्।
गालयित्वा सिताञ्चैव पात्रे ताम्रमये दृढ़े ॥
पाचयेत् पाकविद्वैद्यो मोदकं परमं हितम्।
त्र्यूषणं त्रिफलादन्ती त्रिजातं सैन्धवं शटी ॥
धन्याकं बालकं मुस्थं कसुरी गोस्तनी तुगा।
जातीकोषफलं मांसी पत्रं वारेन्द्र ग्रन्थिकम ॥
शतपुष्पा चवीदारु प्रियङ्गु सलवङ्गकम्।
सरलं शैलजं कुष्ठं जातीपुष्प यमानिका ॥
कट्फलं केशरं मङ्गी मधुका सुरदारु च।
मिषीतालीशपत्रञ्च खर्ज्जुरं रसगन्धकौ ॥
चन्दणं तगरं चारं प्रत्येकं कर्षसम्मितन्।
आलोड्य त्रिसुगन्धेन कर्पूरेणाधिवासयेत् ॥
काञ्चने राजते पात्रे स्थाप्यमेतद् भिषग्वरैः।
कर्षं प्रमाणं कर्त्तव्यं क्षीरं चानुपिवेत् पलम् ॥
प्रातर्भोजन काले वा भक्षयेत्तु विचक्षणः।

प्रमदा शतश्च भजते न च शुक्रक्षयो भवेत् ॥
न तस्य लिङ्गशैथिल्यं शुक्र सञ्जननं परम्।
चयश्चैव महाव्याधिं पञ्च कासान् सुदुस्तरान्।
वातजान् पैत्तिकांश्चैव कफजान् सान्निपातिकान्
इत्यष्टादश कुष्ठानि वातरक्तादिकानि च।
प्रमेहं श्लीपदं शोथं लक्ष्मीकान्तिविवर्द्धनम्।
सर्वानर्शोगदान् हन्ति वृक्षमिन्द्राशनिर्यथा ॥
व्याधीन् कोष्ठगतानन्यान् जनार्दन इवासुरान् ॥
नातः परतरं श्रेष्ठं विद्यते वाजीकर्म्मसु।
स्त्रीणाञ्चैवानपत्यानां दुर्व्वलानाञ्च देहिनाम् ॥
क्लीवानामल्पशुक्राणां जीर्णानामल्परेतसाम्।
ओजस्तेजः स्मरं बुद्धिमायुः प्राणं विवर्द्धयेत् ॥

रतिवल्लभो मोदकः।

शक्राशनस्य वीजानां चूर्णानि पलपञ्च च।
हविषः कुडवञ्चैकं सिताप्रस्थं प्रगृह्य च ॥
शतावरी रस प्रस्थं तथा शक्राशनस्य च।
गव्यमाजं पयः प्रस्थं ततः प्रस्थद्वयं पचेत् ॥
भाङ्गी द्विजीरकं मुस्तं लगेलापत्र केशरम्।
आत्मगुप्ता चातिबला तालाङ्कुर कशेरुकम् ॥
शृङ्गाटकं त्रिकटुकं धान्यमभ्रञ्च वङ्गकम्।
पथ्या द्राक्षा च काकोल्यौ खर्जूरं चुरकं तथा ॥
कटुका मधुकं कुष्ठं लवङ्गं सार सैन्धवम्।
यमानी चाजमोदा च जीवन्ती गजपिप्पली ॥

प्रत्येकं कर्षमेकन्तु चूर्णितानि शुभानि च।
कुड़वार्द्धं पाक शेषे मधुनः प्रक्षिपेत्ततः॥
मृगाण्डजं सकर्पूरं यथालाभं विनिक्षिपेत्।
रतिवल्लभनामायं सेव्यमानो महारसः॥
परमोजस्करो बल्यो वातव्याधि विनाशनः
वातपित्तहरो वृष्यो दृष्टि सन्दीपनः परः।
पित्तघ्नं चास्रपित्तघ्नो विषगुल्मज्वरापहः॥
पाययत्येष मन्दाग्नि रोगाणां क्षय हेतुकः।
न भवेल्लिङ्गशैथिल्यं वृद्धानां पुष्टि वर्द्धनम॥
यस्य गेहे सदा वह्व्यः पत्न्यः स्युः सुमनोहराः।
रसः सेव्यः सदैवायं मोदको रतिवल्लभः॥
ये केचिद् त्रिजगद्योगा लौहवङ्गाभ्रसंयुता।
युक्ताश्च रसगन्धाभ्यां रसायनवरा मताः॥

तन्त्रान्तरे कामेश्वरो मोदकः।

चर्णाग्नं गगनं यनार्द्ध विमलं गन्धश्च कुष्ठामृता
मेथी मोचरसो विदारि मुषली गोक्षूरकश्चेक्षुरः।
ओरश्चैव कशेरुकं यमानिका तालाङ्कुरं धान्यकं
यष्टीनागबलातिला मधुरिका जातीफलं सैन्धवम्॥
भार्गी कर्कटशृङ्गक त्रिकटुकं जीरद्वयं चित्रकं
चातुर्जात पुनर्नवा करिकणा द्राक्षाशटी कट्फलम्।
शाल्मल्यस्थि फलत्रिकं कपिभवं वीजं समं चूर्णयेत्
चूर्णार्द्धा विजया सिता द्विगुणितामध्वाज्य मिश्रन्तुतत्॥
कर्षार्द्धा गुड़िकाथ कर्षमथवा सेव्या सदा सर्वदा
पेयं क्षीर मनुस्रवीर्य्यकरणे स्तम्भेऽप्ययं कामिनाम्।

वामावश्यकर इत्यादि गुणाः सम्यक् मारितमभ्रक-मित्यादिनोक्तस्य कामेश्वरस्य समाः ॥ अंशश्चतुर्थो भागः कुष्ठादि कपिवीज पर्य्यन्त चूर्णानामंशमभ्रकम् । अभ्राद्ध गन्धकं विमलं निर्मलम् । चूर्णार्द्धा विजयेति अभ्रादि सर्व चूर्णानामर्द्धा । घृत मधु मोदककरण योग्यम् ।

कामाग्निसन्दीपनो मोदकः ।

कर्षो रसो गन्धक मभ्रकञ्च
द्विक्षार चित्रेलवणानि पञ्च ।
शटी यमानीद्वय कोटहारि
तालीश पत्राण्यपरं द्विकर्षम् ॥
जीरं चतुर्जात लवङ्गजाती-
फलञ्च कर्षत्रयमेव गन्धम् ।
सद्देवदारं कटुकत्रयञ्च
तथा चतुःकर्ष मितं निवोधः ॥
धन्याक यष्टी मधुरी कशेरु
कर्षाः पृथक् पञ्च वरी विदारी ।
वरीभकर्णोभवलात्मगुप्ता
वीजं तथा गोक्षुर वीज युक्तम् ॥
सवीज पत्रेन्द्र रजः समानं
समासिता क्षौद्रघृतञ्च तुल्यम् ।
कर्षैकमिन्दो रथ मोदकं तत्
कामाग्नि सन्दीपनमेतदुक्तम् ॥
वृष्यस्ततः परतरं सततं न दृष्ट-
मेनं निषेव्य मनुजः प्रमदा सहस्रम् ।

गच्छेच लिङ्गशिथिलत्वमवाप्नुयाच
नागाधिपं विजयते बलतः प्रमत्तम् ॥
कान्त्या हुताशन मपि स्वरतो मयूरान्
वाहं जवेन नयनेन महाविहङ्गम्।
वातानशीतिमथ पित्तगदं समस्तं
श्लेष्मोत्थविंशतिरुजः परमग्निमान्द्यम् ॥
दुर्नाम कामल भगन्दर पाण्डुरोग-
मेहातिसार क्रमिहृद्ग्रहणी प्रदोषान्।
कासज्वर श्वसन पीनस पार्श्वशूल-
शूलाम्लपित्त सहितां स्विरजान् समस्तान् ॥
हत्वा गदानपि च तत्पुमपत्यकारि
सर्व्वर्त्तु पथ्यमथ सर्वसुख प्रदायि।
तथ्यं वलीपलितहारि रसायनं स्यात्
श्रीमूलदेव कथितं परमं प्रशस्तम् ॥

## खण्डाम्रकम्।

पक्वचूतरस द्रोणः पात्रंस्यात् शुद्धखण्डतः।
घृतमर्द्ध ततो ग्राह्यं चतुर्थांशञ्च नागरम् ॥
तदर्द्धं मरिचं प्रोक्तं तदर्द्धा पिप्पली मता।
तोयं खण्ड समं दद्यात्सर्वमेकत्र संस्थितम् ॥
विपचेन्मृण्मये पात्रे यदा दार्व्वी प्रलेपनम्।
चूर्णान्येषां ततो दद्यात्पलं पलचतुष्टयम् ॥
ग्रन्थिकं चित्रकं मुस्तं धन्याकं जीरकद्वयम्।
चतुर्जातं जाति तालिशं चूर्णमेषां पलं पलम् ॥

लवङ्गेलाकेशराणाञ्च प्रत्येकञ्च पलं तथा ।
सितशीते च मधुनः प्रस्थं दत्त्वा विघट्टयेत् ॥
तत्सर्वमेकतः कृत्वा शुभे भाण्डे निधापयेत् ।
भोजनादावतः खादेत्पलमानं प्रमाणतः ॥
गच्छेत्कन्दर्पदर्पान्धो रागवेगाकुलेन्द्रियः ।
शतंवापि तदर्द्धं वा रमेत् स्त्रीणां पुमानयम् ॥
संसेव्य भेषजं ह्येतद्वन्ध्यायां जनयेत्सुतम् ।
वीरं सर्वगुणोपेतं शतायुश्च भवेदयम् ॥
मृतवत्सा च या नारी या च गर्भोपघातिनी ।
सापि सूते सुतं सभ्यं नारायणपरायणम् ॥
वन्ध्यापि लभते पुत्रं वृद्धोऽपि तरुणायते ।
तुरङ्ग इव संहृष्टो मातङ्ग इव विक्रमी ॥
सदा भेषज संसेवी भवेन्मारुतवेगवान् ।
हन्ति सर्वामयं घोरं कासं श्वास चयं तथा ॥
दुर्नामाजीर्णकञ्चैव अम्लपित्तं सुदारुणम् ।
तृष्णांछर्दिञ्च मूर्च्छाञ्च शूलमष्टविधं जयेत् ॥
खण्डाम्रक मिदं प्रोक्तं भार्गवेण स्वयम्भुवा ।
वयस्यं मेध्यमायुष्यं सर्वपाप विनाशनम् ॥
ग्रहरक्षः पिशाचघ्नमपस्मार विनाशनम ।
पाण्डुरोगं प्रमेहञ्च मूत्रकृच्छ्रञ्च नाशयेत् ॥
वेश्या योषिद्भवेत् पुंसां पुमान् वेश्यश्च योषिताम् ।
दृष्टं वार सहस्रञ्च कथमत्र विचारणा ॥

मन्मथाभ्ररसः ।

रसगन्धकयोर्ग्राह्यं पलमेकं सुशोधितम् ।

अभ्रं निश्चन्द्रकं दद्यात्पलार्द्धञ्च विचक्षणः॥
कर्पूरं तोलकं दद्यात्वङ्गञ्च कोलसम्मितम्।
ताम्रं तोलार्द्धकं तत्र निःशेषं मारितं पुनः॥
लौह कर्षं सुजीर्णञ्च वृद्धदारक जीरकम्।
विदारीं शतमूलीञ्च क्षुरबीजं बलां तथा॥
मर्कट्यतिविषाश्चैव जातीकोष फले तथा।
लवङ्गं विजया वीजं श्वेत सर्जं यमानिकाम॥
शाणभागान् गृहीत्वैतान् एकीकृत्यैव पेषयेत।
गुञ्जाद्वयन्तु कर्त्तव्यं कोष्णं क्षीरं पिवेदनु॥
गृहे यस्य शतं नार्यो विद्यन्तेऽतिव्यवायिनः।
न तस्य लिङ्ग शैथिल्य मौषधस्यास्य सेवनात्॥
न च शुक्रं क्षयं याति न बलं क्षाममाव्रजेत्।
कामरूपो भवेन्नित्यं वृद्धः षोड़शवर्षवत्॥
रसः श्रीमन्मथाभ्रोऽयं महेशेन प्रकाशितः।
अस्य भक्षण मात्रेण काष्टं जीर्य्यति तत्क्षणात्॥
नाशयेद् ध्वजभङ्गादीन् रोगान् योगकृतानपि।

मकरध्वजो रसः।

स्वर्णादष्टगुणं सूतं मर्दयेत्सिकगन्धकम्।
रक्तकार्पास कुसुमैः कुमार्य्या च विमर्दयेत्।
शुष्कं काचघटीं रुद्धा बालुकायन्त्रगं हठात्।
भस्म कुर्य्याद्रसेन्द्रस्य नवार्क किरणोपमम्॥
भागोऽस्य भागाश्चत्वारः कर्पूरस्य सुशोभनाः।
लवङ्गं मरिचं जातीफलं कर्पूर मात्रया॥

मेलयेन्मृगनाभिञ्च गद्यानक मितं ततः ।
श्लक्ष्णपिष्टो रसो नाम जायते मकरध्वजः ॥
वल्लं वल्लद्वयं वाथ ताम्बूलीदल संयुतम् ।
भक्षयेन्मधुरं स्निग्धं मृदुमांसमवातलम् ॥
शृत शीतं सितायुक्तं दुग्धं गोभव माज्यकम् ।
मध्वाद्यं पिष्टमपरं मद्यानि विविधानि च ॥
करोत्यग्निबलं पुंसां वलीपलित नाशनः ।
मेधायुः कान्तिजननः कामोद्दीपनकृन्महान् ॥
अभ्यासात् साधकः स्त्रीणां शतं जयति नित्यशः ।
रतिकाले रतान्ते च पुनः सेव्यो रसोत्तमः ॥
मानहानिं करोत्यासां प्रमदानां सुनिश्चितम् ।
कृत्रिमं स्थावर विषं जङ्गमं विषवारि च ।
न विकाराय भवति साधकानाञ्च वत्सरात् ॥
मृत्युञ्जयो यथाभ्यासान्मृत्युं जयति देहिनाम् ।
तथायं साधकेन्द्रस्य जरा मरण नाशनः ।

अत्र गद्यानं षण्माषकम् । वल्लं द्विगुञ्जकम् ।
अत्रार्थे परिभाषामाह ।

यवद्वयेन गुञ्जा स्यात् द्विगुञ्जो वल्ल उच्यते ।
धरणः स्याच्चतुर्माषैः षड्भिर्गद्यान् मुच्यते ॥

## कामिनीमदभञ्जनः ।

शुद्धसूतं समं गन्धं ताम्रं कल्हारकद्रवैः ।
मर्दितं वालुकायन्त्रे यामं सम्पुटके पचेत् ॥
रक्ताङ्गस्य द्रवैर्भाव्यं दिनैकन्तु सितायुतम् ।

यथेष्टं भक्षयेच्चानु कामयेत् कामिनीशतम् ॥

## हरशशाङ्कः।

शाल्मल्यास्तुचमादाय स्नक्ष्ण चूर्णानि कारयेत्।
शुद्ध गन्धक चूर्णानि तद्रसेनैव भावयेत् ॥
मासमात्र प्रयोगेण शृणु वक्ष्यामि ये गुणाः ।
मकरध्वजरूपोऽपि स्त्रीशतानन्द वर्द्धनः ॥
शतायुश्च भवेद्देवि वलीपलित वर्जितः ।
तेजस्वी बल सम्पन्नो वेगेन तुरगोपमः ।
सततं भक्षयेद्यस्तु तस्य मृत्युर्नजायते ॥

## कामधेनुः।

गन्धमामलक चूर्णं धात्रीरस विभावितम् ।
सप्तधाशाल्मली तोयैः शर्करा मधुयोजितम ॥
लीढ़ा चानुपयः पानं प्रत्यहं कुरुते तु यः ।
एतेनाशीति वर्षोऽपि शतधा रमते स्त्रिया ॥

## लक्ष्मणालोहम्।

लक्ष्मणाहस्तिकर्णाभ्यां त्रिकत्रय समन्वयात।
अश्वगन्धा समायोगाल्लौहं पुंसवनं मतम् ॥
पुत्रोत्पत्तिकरं वृष्यं कन्यासूति निवर्त्तकम् ।
लघश्च बलदं श्रेष्ठं सर्व्वामयहरं परम् ॥

## गन्धामृतरसः।

भस्मसूतं द्विधागन्धं कन्यकाभिर्विमर्दयेत् ।

दत्त्वा लघुपुटे पश्चादुद्धृत्य मधुसर्पिषा ।
वल्लं खादेज्जरां मृत्युं हन्ति गन्धामृतो रसः ।
समूलं भृङ्गराजञ्च छायाशुष्कं विचूर्णयेत् ।
तत्समं त्रिफलाचूर्णं सर्वतुल्या सिता भवेत् ।
पलैकं भक्षयेच्चानु सेवनाच्च जरापहः ॥

## स्वर्णसिन्दूरम् ।

पलं रसेन्द्रस्य च गन्धकस्य
हेम्नोऽपि कर्षं परिगृह्य सम्यक् ।
वटप्ररोहस्य रसेन यामं
यामं विमर्द्याथ कुमारिकायाः ॥
तत्काचकूप्यां निहितं प्रयत्नात्
पचेद्दिधिज्ञः सिकताख्ययन्त्रे ।
ततो रजश्चोर्द्धगतं सुरम्यं
प्रगृह्य यत्नादरुणप्रभं यत ॥
तद् योजयेत्सर्वगदेषु वीक्ष्य
धातुं बलं वह्निमथो वयश्च ।
रसायनं वृष्यतरञ्च बल्यं
मेधाग्निकान्तिस्मरवर्द्धनञ्च ॥

## सुरसुन्दरीगुड़िका ।

अभ्रकं माक्षिकं वज्रं कान्तं हेम समं समम् ।
सर्वाणि समभागानि सूतयुक्तानि कारयेत् ॥
गोलकञ्च ततः कृत्वा पक्वं निम्बुकवारिणा ।
ततस्तं पुटपाकेन स्तम्भयित्वा प्रयत्नतः ॥

शाल्मे चास्यापि लिप्ता च वङ्गाख्या गुडिकोत्तमा।
स्तम्भयेच्छुक्रसंघातं विषरोगांश्च नाशयेत्॥
अब्देनैकेन वङ्गाख्या वयःस्तम्भं करोति च।
वलीपलित हन्त्रीयं गुडिका सुरसुन्दरी॥

भोफरवा इति प्रसिद्धं

यवनकृतौषधम्।

जातीपल्लव नागकेशर कणा कक्कोल मज्जाफलं
श्यामा कटफल शारिवागुरु वचा मुस्तं शटीमस्तकौ।
मांसी शाल्मली धातकी कटुलता गोक्षुरमेथी वरी
वीजं वानरि कोकिलाक्षिच गुहा धुस्तूः परं पङ्कजम्॥
कुष्ठ चोत्पल केशरञ्च मधुकं श्रीखण्ड जातीफलं
स्वर्णं कन्दविदारि मूषलियुता रम्भा प्रियङ्गुः फलम्।
जीवद्वन्द्व सविश्व मूषण वरा एलात्वचो धान्यकं
चीनीचोप समुद्रशोष शिखरं चाकारकारभं कषम्।
द्वन्द्वं कुङ्कुम नाभिजं सगगनं चूर्णं समं कारयेत्
स्वर्णं तारभुजङ्ग वङ्गमयसा वज्रं तथा ताम्रकम्।
मुक्ताशाश्मव तालकानि विधिना शुद्धं मृतं योजयेत्
तुर्य्यांशं विजयादलस्य विमलं चूर्णं ततोद्रापयेत॥
तेषामर्द्धांश युक्ता विमलतर सिता चौद्रमेवं सितांश
तोयं स्वल्पं प्रदेयं मृदुतर दहने लेहसिद्धिर्विधेया।
शाते क्षिप्ता तु चूर्णं घृतपरिलुलितं घट्टयेत्तञ्च दार्व्या
स्वल्पेनोक्तः सुलेहोमुफर इति मतः सेव्यतां सर्वकालम्
काम्यं वामा प्रमोदं सकल गदहरं राजयोग्यं प्रदिष्टम्॥

अपरगुणा द्वद्गामिश्वरस्येव। मज्जफलं माजुफल

मिति प्रसिद्धं वणिग् द्रव्यं एवं मस्तकीति गुह्वावदरी फलं मस्यं धूर्त्तो धुस्तूरबीजं चीनोच्चोपः चोपचिनीति प्रसिद्धं काष्ठवन्मूलं सिंहलादौ प्रसिद्धं समुद्रशोषः हिज्जलबीजं शिखरं लवङ्गं आकरकरभं आकरकरा इतिख्यातं कचं बाला इन्दुः कर्पूरं शाम्भवो रसः ।

## पल्लवसारतैलम् ।

त्रिफलायारसप्रस्थं भृङ्गराजरसं तथा ।
शतावरीरसं क्षीरं कुष्माण्डस्वरसं पृथक् ॥
प्रस्थैकं तिलतैलस्य पचेन्मृद्वग्निना भिषक् ।
लाक्षारनाल सिद्धाम्बु प्रस्थं प्रस्थं विपाचयेत् ॥
कल्कं कणा शिवा द्राक्षा त्रिफला नीलमुत्पलम् ।
मधुकं क्षीरकाकोली प्रत्येकञ्च पलं पलम् ॥
कर्पूरञ्च नखं गन्धमण्डजं विरला समम् ।
जातीकोषं लवङ्गञ्च प्रतिकर्षद्वयं पचेत् ॥
महावातहरं तैलं महापित्तविनाशनम् ।
नेत्ररोगेषु सर्वेषु अपस्मारेऽनिलागमे ॥
विद्रधिव्रणशोथघ्नं मेहदोषहरं परम् ।
शूलरोगप्रशमनमानाहक्लकृच्छ्रनाशनम् ॥
गुल्मघ्नं हृदिशूलघ्नं मूत्राघातविनाशनम् ।
प्रशस्तं ग्रहणीरोगे प्रमेहज्वरनाशनम् ॥
नाम्ना पल्लवसाराख्यं तैलं विद्याद्भिषग्वरः ॥

## श्रीगोपालतैलम् ।

रसाढ़कं शतावर्याः कुष्माण्डामलयोस्तथा ।

वाजीगन्धा सहचर बलानाञ्च शतं पृथक्॥
परिपच्याम्भसां द्रोणे पादशेषेऽवतारयेत्।
पञ्चमूलं महच्छाग्नी मूर्वाकेतकपूतिकाः।
पारिभद्रञ्च सर्वेषां ग्राह्यं दशपलं शुभम्॥
क्वाथयित्वा जलद्रोणे तत्पादमवशेषयेत्।
आढ़कं तिलतैलस्य कल्कैरेतैश्च संपचेत्॥
अश्वगन्धा चोरपुष्पी पद्मकं कण्टकारिका।
बलागुरु घनं पूति शिह्लकागुरु चन्दनम्॥
चन्दनं त्रिफला मूर्वा जीवनीय कटुत्रयम्।
पूति कुङ्कुमकस्तूर्य्यश्चातुर्जातञ्च शैलजम्॥
नखमुस्त मृणालानि नीलोत्पलमुशीरकम्।
मांसी मुरा सुरतरु वचा दाड़िम तम्बुरु॥
ऋद्धिवृद्धि दमनकं चुट्रैलाद्ध पलं पृथक्।
एतत्तैलवरं हन्ति वातपित्तकफोद्भवान्॥
व्याधीनशेषान् जनयेत् स्मृतिं मेधां धृतिं धियम्।
वातरोगान् विशेषेण प्रमेहान् हन्ति विंशतिम॥
गर्भं संस्थापयेत् स्त्रीणां सर्वं शूलं व्यपोहति।
मूत्रकृच्छ्रमपस्मारमुन्मादान् निखिलानपि॥
स्थविरोऽपि जराजीर्ण स्तैलस्यास्य निषेवणात्॥
लोलया प्रमदानाञ्च उन्मादानां शतं जयेत्॥
तिष्ठेद्यस्य गृहे तैलं श्रीगोपालाभिधं शुभम्।
न तत्र भूताः सर्पन्ति न पिशाचा न राक्षसाः॥
न दारिद्र्यं भवेत्तस्य विघ्नः कश्चिन्नजायते।
अश्विभ्यां निर्म्मितं ह्येतद् विश्वकल्याण हेतवे॥

## मृतसञ्जीवनीसुरा।

नवं गुड़स्य संगृह्य शतमेकं पलं तथा।
वावरीत्वच संगृह्य वदरीत्वचमेव च॥
प्रस्थं प्रस्थं प्रदातव्यं पूगं देयं यथोचितम्।
लोध्रस्य कुड़वं दत्त्वा आर्द्रकस्य पलद्वयम्॥
तोयमष्टगुणं दत्त्वा गुड़ं संगीलयेत्सुधीः।
प्रथमे चार्द्रकं दद्यात् द्वितीये वारवीत्वचम्॥
तृतीये वदरीं दत्त्वा गीलयित्वा भिषग्वरः।
मुखे शरावकं दत्त्वा यत्नात्कृत्वा च वन्धनम्॥
मुख संवन्धनं कृत्वा स्थापयेद्दिनविंशतिम्।
मृण्मये मौक्तिक[illegible] मयूराख्येऽपि यन्त्रके॥
यथाविधि प्रकारेण मन्दमन्देन वह्निना।
चूल्लीमध्ये विधातव्यं मृत्तिका दृढ़ भाजने॥
तद्दोषधस्य तन्मध्ये समुद्धृत्य विनिक्षिपेत्।
नलस्य युगलं दत्त्वा कुम्भौ च गजकुम्भवत्॥
कुम्भ मध्ये निधातव्यं पूगस्य सैलवालुकम्।
देवदारु ल[illegible]स्य पद्मकोशीर चन्दनम्॥
शतपुष्पा[illegible]नी च मरिचं जीरकद्वयम्।
शटी म[illegible] त्वगेला च जातीफलं समुस्तकम्॥
ग्रन्थिपर्णं तथा शुण्ठी मेथी मेथी च चन्दनम्।
एषां चार्द्धपलान् भागान् कुट्टयित्वा विनिक्षिपेत्॥
यथाविधि प्रकारेण चालनं दापयेत्सुधीः।
वुद्धिमान् योजनं कृत्वा उद्धरेद्विधिवत्सुराम्।
पलमात्रं पिबेन्नित्यं यथावलं वयःक्रमम्॥

आरोग्यं जननं देहदार्ढ्यं ब्रह्मवर्द्धनम्।
मेधाग्निस्मृतिकान्त्यो शुक्रबृंहणमायनम्।
बलपुष्टिकरश्चैव कामसन्दीपनं परम्।
दशस्त्रियो रमेन्नित्यमानन्दमुपजायते।
रणे तेजोमयः सद्यो यथा भीम पराक्रमः।
नातः परतरं किञ्चिद्‌ रणोत्साह प्रदं महत्॥
देवासुरेषु काले शुक्रेण परिनिर्मितम्॥

## दशमूलारिष्टः।

पर्णी बृहत्यौ गोकण्ट विल्वोऽग्निमथनोऽरलुः।
पाटला काश्मरी चेति दशमूल मिहोच्यते।
दशमूलानि कुर्वीत भागैः पञ्चपलैः पृथक्।
पञ्चविंशत्पलं कुर्य्याच्चित्रकं पौष्करं तथा॥
कुर्य्याद्विंशत्पलं लोध्रं गुड़ूची तत्समा भवेत्।
पलैः षोड़शभिर्धात्री रविसंख्यैर्दुरालभा॥
खदिरो बीजसारश्च पथ्या चेति पृथक् पलैः।
अष्टाभिर्गुणितैः कुष्ठं मञ्जिष्ठा देवदारु च॥
विड़ङ्गं मधुकं भार्गी कपित्थोऽक्षः पुनर्नवा।
चव्यं मांसी प्रियङ्गुश्च सारिवा कृष्णजीरकम्॥
त्रिवृता रेणुकं रास्ना पिप्पली क्रमुकः शठी।
हरिद्रा शतपुष्पा च पद्मकं नागकेशरम्॥
मुस्तमिन्द्रयवः शृङ्गी जीवकर्षभकौ तथा।
मेदा चान्या महामेदा काकोल्यौ ऋद्धिवृद्धिके॥
कुर्य्यात्पृथक् द्विपलिकान् पचेदष्टगुणे जले।
चतुर्थांशं शृतं नीत्वा वस्त्रपूतं सन्निधापयेत॥

ततः अष्टिपलां द्राक्षां पचेन्नीरे चतुर्गुणे ।
त्रिपादशेषं शीतञ्च पूर्वक्वाथे श्रृतं क्षिपेत् ॥
द्वात्रिंशत्पलिकं क्षौद्रं दद्यात् गुड़चतुःशतम् ।
त्रिंशत्पलानि धातक्याः कक्कोलं जलचन्दनम् ॥
जातीफलं लवङ्गञ्च त्वगेलापत्रकेशरम् ।
पिप्पली चेति संचूर्ण्य भागैर्द्विपलिकैः पृथक् ॥
शाणमात्राञ्च कस्तूरीं सर्वमेकत्र निक्षिपेत् ।
भूमौ निखनयेद्भाण्डं ततो जातरसं पिवेत् ॥
कतकस्य फलं क्षिप्त्वा रसं निर्म्मलतां नयेत् ।
ग्रहणीमरुचिं शूलं श्वासकासभगन्दरान् ॥
वातव्याधिं क्षयं छर्द्दिं पाण्डुरोगञ्च कामलाम ।
कुष्ठान्यर्शांसि मेहांश्च मन्दाग्निमुदराणि च ॥
शर्करामश्मरीं मूत्रकृच्छ्रं धातुक्षयं जयेत् ।
कृशानां पुष्टिजननो वन्ध्यानां पुत्रदः परम् ॥
अरिष्टो दशमूलाख्यस्तेजः शुक्र बलप्रदः ॥

मदनमोदकः ।

त्रैलोक्यविजयापत्रं सवीजं घृतभर्जितम् ।
समे शिलातले पश्चाच्चूर्णयेदतिचिक्कणम् ॥
त्रिकटु त्रिफला शृङ्गी कुष्ठं सैन्धवधान्यकम् ।
शटी तालीशपत्रञ्च कट्फलं नागकेशरम्
मेथी जीरकयुग्मञ्च गृहीत्वा स्वल्पभर्जितम् ।
यावन्त्येतानि चूर्णानि तावदेव तदौषधम् ॥
तावत्येव सिता देया यावत्यायाति वन्धनम् ।
घृतेन मधुना मिश्रं मोदकं परिकल्पयेत् ॥

त्रिसुगन्धि समायुक्तं कर्पूरेणाधिवासयेत् ।
स्थापयेद् घृतभाण्डे च श्रीमन्मदनमोदकम् ॥
भक्षणेऽआतङ्काय वातश्लेष्मनिवारणम् ।
कासघ्नं सर्वशूलघ्नमामवातविनाशनम् ॥
सर्वरोगहरश्चैतत्संग्रहग्रहणीहरम् ।
एतस्य सतताभ्यासात् वृद्धोऽपि तरुणायते ॥
ब्रह्मणः प्रमुखात् श्रुत्वा वासुदेवे जगत्पतौ ।
एतत् कामस्य हैत्वर्थं नारद प्रतिपादितम् ॥

इति भैषज्यरत्नावल्यां वाजीकरणाधिकारः समाप्तः ।

# परिशिष्टम् ।

## मानपरिभाषा ।

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् ।
अतः प्रयोगकार्य्यार्थं मानमत्रोच्यते मया ॥
षट् सर्षपैर्यवस्त्वेको गुञ्जैका तु यवैस्त्रिभिः ।
माषस्तु पञ्चभिः षड्भिस्तथा सप्तभिरष्टभिः ॥
दशभिर्द्वादशाभिश्च रक्तिभिः षड्विधो मतः ।
चरकस्य तु माषस्तु दशगुञ्जाभिरेव च ॥
चरकस्य तु चार्द्धेन सुश्रुतस्य तु माषकः ।
माषैश्चतुर्भिः शाणः स्याद्धरणं तन्निगद्यते ॥

टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ।
क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते ॥
कोलद्वयञ्च कर्षः स्यात्प्रोक्तः पाणिश्च माणिका ।
अक्षं पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम् ॥
विडालपदकञ्चैव तथा षोड़शिका मता ।
करमध्यो हंसपदं सुवर्णं कवलग्रहः ॥
उड़ुम्बरञ्च पर्य्यायैः कर्ष एव निगद्यते ।
स्यात्कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ॥
शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रञ्चतुर्थिका ।
प्रकुञ्चः षोड़शी विल्वं पलमेवात्र कीर्त्त्यते ॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतश्च निगद्यते ।
प्रसृतिभ्यामञ्जलिःस्यात् कुड़वोऽर्द्धशरावकः ॥
अष्टमानञ्च स ज्ञेयः कुड़वाभ्याञ्च माणिका ।
शरावोऽष्टपलं तद्वज् ज्ञेयमत्र विचक्षणैः ॥
शरावाभ्यां भवेत्प्रस्थश्चतुः प्रस्थैस्तथाढ़कम् ।
भाजनं कंस पात्रञ्च चतुःषष्टि पलञ्च तत् ॥
चतुर्भिराढ़कैर्द्रोणः कलशो नल्वणोऽर्म्मणः ।
उन्मानञ्च घटो राशिर्द्रोणपर्य्याय संज्ञितः ॥
द्रोणाभ्यां शूर्पकुम्भौ च चतुःषष्टि शरावकः ।
सूर्पाभ्याञ्च भवेद्द्रोणी वाहो गोणी च सा स्मृता ॥
गोणी चतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ।
चतुःसहस्र पलिका षण्णवत्याधि काच सा ॥
पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः ।
तुला पलशतं ज्ञेयं मर्द्दत्रैव निश्चयः ॥

गुञ्जादिमानमारभ्य यावत्स्यात् कुडवस्थितिः ।
द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् ॥
प्रस्थादिमानमारभ्य द्विगुणं तद् द्रवार्द्रयोः ।
मानस्तथा तुलायास्तु द्विगुणं न क्वचित् स्मृतम् ॥
अन्यच्च । कुडवे माणिकायाञ्च तुलामाने तथैव च ।
पलेऽप्येवागते माने न द्वैगुण्यं मिहेष्यते ॥
अन्यच्च । कुडवेऽपि क्वचिद् द्वित्वं यथा दृश्योच्यते स्मृतम् ।
सर्पिः खण्ड जलं क्षौद्र तैल चोरासवादिषु ॥
अष्टौ पलानि कुडवो नारिकेले तथैव च ॥
शुष्क द्रव्यस्य या मात्रा आर्द्रस्य द्विगुणा हि सा ।
शुष्कस्य गुरुतीक्ष्णत्वात्तस्मादर्द्धं प्रयोजयेत् ॥

अस्यापवादः ।

वासानिम्बपटोलकेतकि बला कुष्माण्डकेन्दीवरी
वर्षाभुकुटजाश्वगन्धसहितास्ताः पूतिगन्धामृताः
मांसं नागबला सहाचरपुरोहिङ्ग्वार्द्रके नित्यशो
ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षु जाता घनाः

अथ गणाः ।

त्रिफला ।

पथ्या विभीतकं धात्री महती त्रिफला मता
स्वल्पा काश्मर्य खर्जूर परूषक फलैर्भवेत् ।

त्रिमदः ।

विडङ्गमुस्तं चित्रञ्च त्रिमदः समुदाहृतः ॥

त्र्यूषणादि।

पिप्पली मरिचं शुण्ठी त्रयमेतद्विमिश्रितम्।
त्रिकटु त्र्यूषणं व्योषं कटुत्रिक मथोच्यते॥
ग्रन्थिकानल चव्यैस्तु चतुःपञ्च षडूषणम्।
चविका चित्रको नागपिप्पली त्र्यूषणं मतम्॥

चातुर्जातं त्रिजातञ्च।

चातुर्जातं समाख्यातं त्वगेला पत्रकेशरैः।
तदेव त्रिसुगन्धि स्यात्त्रिजातकमकेशरम्॥

सर्वगन्धम्।

चातुर्जातक कर्पूर कक्कोलागुरुशिह्लकम्।
लवङ्ग सहितञ्चैव सर्वगन्धं विनिर्द्दिशेत्॥

चातुर्भद्रकम्।

नागरातिविषा मुस्तं त्रयमेतद्विमिश्रितम्।
गुडूचीसंयुतं तच्च चातुर्भद्रकमुच्यते॥

पञ्चकोलम्।

पिप्पली पिप्पलीमूल चव्य चित्रक नागरम्।
पञ्चकोलमिदं प्राहुः पञ्चोषणमथापरे॥
पिप्पली पिप्पलीमूल चव्य चित्रक नागरम्।
पञ्चभिः कोलमात्रं यत्पञ्चकोलं तदुच्यते॥

क्षीरिवृक्षाः।

उडुम्बरो वटोऽश्वत्थो वेतसःप्लक्ष एव च।
पञ्चैते क्षीरिणो वृक्षाः संज्ञाया समुदाहृताः॥

चतुरम्लं पञ्चाम्लञ्च।

कोलदाडिमवृक्षाम्लै रम्लवेतससंयुतैः।
चतुरम्लन्तु पञ्चाम्लं मातुलुङ्ग समन्वितम्॥

पञ्चगव्यम्।

पञ्चगव्यं दधिक्षीर घृतगोमूत्र गोमयैः॥

लवणवर्गः।

सिन्धूसौवर्चलञ्चैव विड़ं सामुद्रमौद्भिदम्।
एक द्वि त्रि चतुः पञ्चलवणानि क्रमादिह॥

पञ्चमूलं दशमूलञ्च।

विल्वश्योनाक गाम्भारी पाटला गणिकारिकाः।
एतन्महत्पञ्चमूलं संज्ञया समुदाहृतम्॥
शालपर्णी पृश्निपर्णी वृहतीद्वय गोक्षुरम्।
कनीयः पञ्चमूलं स्यादुभयं दशमूलकम्॥

तृणपञ्च मूलम्।

कुशः काशः शरो दर्भ इक्षुश्चैव तृणोद्भवम्।
पञ्चतृणमिदं ख्यातं तृणजं पञ्चमूलकम्॥

जीवनीयो गणः।

जीवकर्षभकौ मेद काकोल्यौ मधुकं तथा।
माषपर्णी मुद्गपर्णी जीवन्ती मधुरो गणः।

अष्टवर्गः।

द्वे मेदे चापि काकोल्यौ जीवकर्षभकौ तथा।
ऋद्धिवृद्धियुतैः सर्वैरष्टवर्ग उदाहृतः॥

## द्रव्याप्राप्तिनिधिः ।

कदाचिद्द्रव्यमेकं वा योगे यत्र न लभ्यते ।
तत्तद्गुणयुतं द्रव्यं परिवर्त्तेन गृह्यते ॥
मध्वभावे गुड़ो जीर्णः शाल्यभावे च षष्टिका ।
नतं तगरमूलं स्यादभावे भिहलीजटा ॥
वृक्षाम्लं दाड़िमाभावे सितयाः खण्डमिष्यते ।
चविका गजपिप्पल्यौ पिप्पलीमूलवत् स्मृते ।
सौराष्ट्र्यभावे च ग्राह्या पङ्कस्य पर्पटी ।
रसाञ्जनापरिप्राप्तौ दार्वीक्काथः प्रशस्यते ॥
लौहाभावे तु मण्डूरं दार्व्यभावे मता निशा ।
सुवर्णं रूप्य योगस्याभावे लौहं प्रयोजयेत् ॥
नित्यं पुष्ठातकाभावे तालमस्तकमिष्यते ।
वाराहीणामभावे तु चर्म्मकारालुकं मतम् ॥
अभावात्पौष्करे मूले कुष्ठं सर्वत्र गृह्यते ।
सामुद्रं सैन्धवाभावे विड़ं वा गृह्यते बुधैः ॥
कुस्तुम्बुरु न विद्येत यत्र तत्र च धान्यकम् ।
पुष्पाभावे फलस्थामं विड़भेदे बिल्वतः फलम ॥
भल्लातकासहत्वे तु रक्तचन्दनमिष्यते ।
सिद्धार्थकस्य चाभावे सामान्यः सर्षपो मतः ॥
मेदाभावेऽश्वगन्धास्यात् महामेदे तु सारिवा ।
जीवकर्षभकाभावे गुड़ूची वंशलोचना ॥
ऋद्ध्यभावे बला ग्राह्या वृद्ध्यभावे महाबला ।
काकोली युगलाभावे निःक्षिपेच्च शतावरीम् ॥
यत्र यद्द्रव्यमप्राप्तं भिषजै परपूर्वतः ।

ग्राह्यं तत्तु बसाध्यात्तु न तत्र कापि दूषणम् ॥

भेषजग्रहणसङ्केतः ।

उक्ते चन्दनशब्दे तु गृह्यते रक्तचन्दनम् ॥
लवणे सैन्धवं विद्यात् मूत्रे गोमूत्रमुच्यते ॥
शकृद्रस पयः सर्पिः प्रयोगे गव्यमिष्यते ।
विशेषो यत्र नोक्तः स्यादेष तत्र विधिः स्मृतः ॥
सारः स्यात् खदिरादीनां निम्बादीनां त्वचस्तथा ।
फलन्तु दाड़िमादीनां पटोलादेश्छदस्तथा ॥
फलप्रधानवृक्षाणां फलं सर्वत्र गृह्यते ।
रक्तचित्रकमूलन्तु सर्वत्रैव प्रयोजयेत् ॥
मांसलत्वात् सुतीक्ष्णत्वादभावादन्य चित्रकम् ।
महान्ति यानि मूलानि काष्ठगर्भाणि यानि च ॥
तेषान्तु वल्कलं ग्राह्यं ह्रस्वमूलानि कृत्स्नशः ।
अङ्गेऽनुक्ते जटा ग्राह्या भागेऽनुक्तेऽखिलं समम् ॥
पात्रेऽनुक्ते मृद्पात्रं कालेऽनुक्ते त्वहर्मुखम् ।
द्रवेऽनुक्ते जलं देयमेष सर्वत्र निश्चयः ॥
द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ ।
ऋते गुड़घृत क्षौद्र धान्य कृष्णा विड़ङ्गतः ॥

भावनाविधिः ।

दिवा दिवातपे शुष्कं रात्रौ रात्रौ निवासयेत् ।
शुष्कं चूर्णीकृतं द्रव्यं समाहं भावनाविधिः ॥
द्रवेण यावता द्रव्यमेकीभूयार्द्रतां ब्रजेत् ।
द्रवप्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ ॥

भाव्यद्रव्य समं क्वाथं क्वाथ्यादष्टगुणं जलम्।
अष्टांशशेषितः क्वाथो भाव्यानां तेन भावना॥

ज्वराधिकारे।

सन्ततादि ज्वरे कषायाः।

कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी।
पटोलं शारिवा मुस्तं पाठा कटुकरोहिणी॥
निम्बं पटोलं मृद्वीका त्रिफला मुस्त वत्सकौ।
किराततिक्तममृता चन्दनं विश्वभेषजम्॥
गुड़ूच्यामलकं मुस्तमर्द्धश्लोक समापनाः।
कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान्॥
सन्ततं सततान्येद्युस्तृतीयक चतुर्थकान्॥
यथा क्रमम्। तृतीयकमैकाहिकमिति यावत्॥

नासाज्वराधिकारे।

नस्यम्।

दुर्वाभया दाड़िमपुष्करागा
द्राक्षामलक्योः स्वरसेन नस्यम्।
दिनत्रयं यः कुरुते प्रभाते
स आह्वयं नाम रुजं जयेच्च॥

दूर्वाद्यं तैलम्।

दूर्वा भव्यफलं माषः कुलत्थो वशपत्रिका।
जलस्थल भवौ कर्णमोरटौ खरमञ्जरी॥
दण्डोत्पलस्य मूलञ्च निक्वाथ्याष्टगुणेऽम्भसि।
तस्मात् शेषितं तैलं तुल्यं कृत्वा विपाचयेत्॥
तत्तैलं प्रतिमर्षेण [illegible] नस्यं [illegible]॥

## ग्रहण्यधिकारे ।

### वृहद् गङ्गाधरचूर्णम् ।

विल्वं मोचरसं पाठा धातकीधान्यमेव च ।
समङ्गा नागरं मुस्तं तथैवातिविषा समम् ॥
अहिफेनं लोध्रकञ्च दाड़िमं कूटजं तथा ।
पारदं गन्धकञ्चैव समभागं विचूर्णयेत् ॥
तक्रेण खादयेत् प्रतिश्यं गङ्गाधरं महत् ।
ज्वरमष्टविधं हन्यादतीसारं सुदुस्तरम् ॥
ग्रहणीं विविधाञ्चैव कोष्ठव्याधिहरं परम् ॥

## विसूचिकाधिकारे ।

### कर्पूरासवः ।

तुलां प्रसन्नां परिगृह्य शुद्धां
पलाष्टकं चोडुपतेः क्षिपेच ।
एला च मुस्ता घन शृङ्गवेरं
यमानिका वेल्लजमत्र सर्वम् ॥
पल प्रमाणं पिहिते च भाण्डे
मासं निदध्याद् भिषगत्र यत्नाद् ॥
विसूचिकायाः परमौषधं त-
न्निहन्तिचान्यान् विविधान् विकारान् ॥

### विसूचिविध्वंसरसः ।

टङ्कनं माक्षिकं शुण्ठी पारदं गन्धकं विषम् ।
मरिचं समभागेन सर्वेषां हिङ्गुलं समम् ॥
मर्द्दयेत् अर्कक्षीरेणैव वटीकार्य्या प्रयत्नतः ।

श्वेतसर्षपतुल्या च मृतसञ्जीवनी तथा ॥
विसूचीं नाशयत्याशु दध्यन्नं पथ्यमाचरेत् ।
त्रिदोषोत्थमतिसारं सर्वोपद्रवसंयुतम् ॥

मुस्ताद्या वटी ।

अब्दोत्पलद्वयं मुस्तं कणाकर्पूरहिङ्गुतः ।
पलं पलं गृहीत्वा तु मर्दयित्वा वटीं चरेत् ॥
वल्लद्वयमितां खादेत्कर्पूराम्बु सुवासिताम् ।
अतीसारमजीर्णञ्च विसूचीं घोररूपिणीम् ॥
अरोचकं वह्निमान्द्यं ग्रहणीमपि दारुणाम् ।
कासं पञ्चविधं चैव नाशयेदविकल्पतः ॥
केचिदत्र फणिफेनस्य भागार्द्धं प्रक्षिपन्ति ।

क्रिम्यधिकारे ।

विडङ्गघृतम् ।

त्रिफलायास्त्रयः प्रस्था विडङ्गप्रस्थ एव च ।
दीपनं दशमूलञ्च लाभतः समुपाचयेत् ॥
पादशेषे जलद्रोणे शृते सर्पिर्विपाचयेत् ।
प्रस्थोन्मितं सिन्धुयुतं तत्परं क्रिमिनाशनम् ॥
विडङ्गघृतमेतच्च लेह्यं शर्करया सह ॥

दीपनं पञ्चकोलं मिलित्वा प्रस्थमानं एवं दशमूलं मिलित्वा प्रस्थमानम् ।

आमवाताधिकारे ।

सिंहनादगुग्गुलुः ।

पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम् ।

सौगन्धिकपलञ्चैकं कौशिकस्य पलन्तथा ॥
कुड़वं चित्रतैलस्य सर्वमादाय यत्नतः।
पाचयेत्पाकविद्वैद्यः पात्रे लौहमये दृढ़े ॥
हन्ति वातं तथा पित्तं श्लेष्माणं खञ्जपङ्गुताम्।
श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा ॥
कुष्ठानि वातरक्तञ्च गुल्मशूलोदराणि च।
आमवातं जयेदेतदपि वैद्यविवर्जितम् ॥
एतदभ्यासयोगेन वलीपलितनाशनम्।
सिंहनाद इति ख्यातो रोगवारणदर्पहा ॥
वह्निवृद्धिकरः पुंसां भाषितो दण्डपाणिना ॥

त्रिफलायाः प्रत्येकं पलत्रयं कषायस्य चूर्णस्यापि सौगन्धिकं गन्धकम्। चित्रतैलस्य एरण्डतैलस्य।

## प्रमेहाधिकारे।

### वृहद्वङ्गेश्वरः।

सूतं गन्धं मृतं लौहं मृतमभ्रं समांशिकम्।
रौप्यवङ्गञ्च मुक्ता च ताम्यमेवं समं समम् ॥
सर्वेषां चूर्णितं कृत्वा कन्यारसविमर्दितम्।
गुञ्जाद्वयप्रमाणेन वटिकां कुरु यत्नतः ॥
वृहद्वङ्गेश्वरो ह्येष रक्तमूत्रे प्रशस्यते।
श्वेतमूत्रं वृहन्मूत्रं कृच्छ्रमूत्रं तथैव च ॥
सर्वप्रकारमेहांस्तु नाशयेदविकल्पतः।
अग्निवृद्धिं वयोवृद्धिं कान्तिवृद्धिं करोति च ॥
क्षयरोगं निहन्त्याशु कासं पञ्चविधं तथा।

कुष्ठमष्टादशविधं पाण्डुरोगं हलीमकम् ॥
शूलं श्वासं ज्वरं हिक्कां मन्दाग्निलमरोचकम् ।
क्रमेण शोथिनो हन्ति द्रुमभिन्द्राशनिर्यथा ॥

श्लीपदाधिकारे ।

श्लीपदारिलौहः ।

हरीतक्या विभीतस्य धात्र्याश्चूर्णं सुचूर्णितम् ।
षट्तोलकप्रमानेन ग्राह्यं त्रीणां गुणैषिणा ॥
तोलद्वयं लौहचूर्णं कान्तलौहस्य ज्वारितम् ।
तोलद्वयं ततो देयं विशुद्धञ्च शिलाजतु ॥
सर्वैकत्र समस्तेषु त्रिफला क्वाथभावना ।
श्लीपदाद्यगदध्वंसी सर्वव्याधिविनाशनः ॥
श्लीपदारिरिति ख्यातो लौहो मुनिभिरर्चितः ॥

पञ्चानन घृतं तदाख्यन्तैलञ्च ।

शालञ्चिका पलद्वन्द्वं शोननैव पलद्वयम् ।
इन्द्रसूर पलद्वन्द्वं पलैकं चमरीफलम् ॥
गुञ्जादलं पलैकन्तु क्वाथयेत्प्रास्थिकेऽम्भसि ।
पादावशेषे विपचेत् गोघृतं प्रास्थिकं सुधीः ॥
अभया चित्रकं चारं सैन्धवं विश्वभेषजम् ।
एतेषां कर्षमानेन वस्त्रपूतं सुचूर्णितम् ॥
घृते सिद्धे प्रदातव्यं तच्च मासन्तु खादयेत् ।
पञ्चाननघृतं नाम श्लीपदे गदकुम्भिनि ॥
शोथगुल्मोदरानाह ज्वरशोथ विनाशनम् ।
श्रीमद्गहननाथेन निर्मितं विश्वसम्मदे ॥

गोमूत्रं श्लैष्मिके देयं दुग्धं वाते च पैत्तिके ।
सामान्यभोजनं देयमनुपानं प्रकीर्त्तितम् ॥
एतत्तैलं प्रकर्त्तव्यं कल्केन वसुना विना ।
घृतेन वा कृतं तैलं घृततुल्यगुणं भवेत् ॥

वातरक्ताधिकारे ।

महापिण्डतैलम्

अमृतायाः पलशतं सोमराजी तुलां तथा ।
प्रसारण्याः पलशतं जलद्रोणे पृथक् पचेत् ॥
पादशेषं गृहीत्वा च तैलप्रस्थं पचेद्भिषक् ।
क्षीरं चतुर्गुणं दत्त्वा मन्दमन्देन वह्निना ॥
पिण्डशालजनिर्य्यास सिन्धुवारफलत्रयम् ।
विजया बृहती दन्ती कक्कोलकपुनर्नवाः ॥
वह्निग्रन्थिककुष्ठानि निशे द्वे चन्दनद्वयम् ।
पूति पूतीकसिद्धार्थं वाकुची चक्रमर्द्दकम् ॥
वासा निम्बपटोलानि वानरीवीजमेव च ।
अश्वगन्धा सरलं सर्वं प्रतिकर्षमितं पचेत् ॥
एतत्तैलवरं हन्ति वातरक्तमसंशयम् ।
कुष्ठमष्टादशविधं ग्रन्थिवातं सुदारुणम् ॥
कम्पग्रहत्वामवातं भगन्दरगुदामयम् ।
ज्वरमष्टविधं हन्ति मर्द्दनान्नात्र संशयः ॥

कुष्ठाधिकारे ।

विषगर्भकारितैलम् ।

जातीनिम्बार्ककुटजद्रोणपुष्प्यश्वमारा समम् ।

कल्कैर्निम्बाविमच्चोच कुमोलुक कलिङ्गकैः ॥
पद्मचारशिलाताम्र कासीसैश्च सनागकैः।
पचेत्क्रोशमितैर्वैद्यः कटुतैलशरावकम् ॥
एतत्तैलं निहन्त्याशु विचर्चीमतिदारुणाम्।
नाड़ीव्रणश्चोपदंशं चिरोत्यच्च भगन्दरम् ॥

मसूरिकाद्यधिकारे।

इन्दुकलावटिका।

शिलाजत्वयसी हेम संमर्द्याजकवारिणा।
गुञ्जामात्रा वटीः कृत्वा कुर्य्याच्छायाविशोषिताः।
मसूरिकायां विस्फोटे ज्वरे लोहितसंज्ञके।
एकैकां दापयेदासां सर्व्वव्रणगदेषु च।

उषणादिचूर्णम्।

उषणं पिप्पलीमूलं कुष्ठं वारणपिप्पलीम् ॥
मुस्तकं मधुकं मूर्वां भार्गीं मोचरसं शुभाम् ॥
यवजातिविषा वासा गोक्षुरं वृहतीद्वयम्।
सञ्चूर्ण्य समभागानि माषामानेन योजयेत् ॥
उषणाद्यमिदं चूर्णं विस्फोटं लोहितज्वरम्।
रोमान्तिकां ज्वरं जीर्णं हन्याच्चापि मसूरिकाम् ॥

सर्व्वतो भद्रोरसः।

सिन्दूरमभ्रं रजतञ्च हेम
समेन भागेन मनःशिलाच।
दिव्यस्तु वार्गौं निखिलेन तुल्यं
सम्मर्दयेत् मृदुमं प्रयत्नात्।

ततस्तु माषप्रमितां विधाय
वटीं प्रयुञ्जीत यथानुपानम् ।
यं सर्वतोभद्र रसो न हन्ति
न सोऽस्ति रोग खलु देहिदेहे ॥

एलाद्यरिष्टः ।

पञ्चाशत्पलमेलाया वासायाः पलविंशतिम् ।
मञ्जिष्ठां कुटजं दन्तीं गुडूचीं रजनीद्वयम् ॥
रास्नामुशीरं मधुकं शिरीषं खदिरार्ज्जुनौ ।
भूनिम्बनिम्बचक्रींश्च कुष्ठं मधुरिकां तथा ॥
दशैता दिक्पलोन्मित्या जलद्रोणाष्टके पचेत् ।
द्रोणशेषे कषाये च पूते शीते विनिक्षिपेत् ॥
धातक्याः षोडशपलं माक्षिकस्य तुलात्रयम् ।
चातुर्जातं त्रिकटुकं चन्दनं रक्तचन्दनम् ॥
मांसीं मुरां मुस्तकञ्च शैलेयं शारिवाद्वयम् ।
पलप्रमाणतश्चात्र क्षिप्ता मासं निधापयेत् ॥
एलाद्यरिष्टो हन्त्येष विसर्पांश्च मसूरिकाम् ।
रोमान्तिकां शीतपित्तं विस्फोटं विषमज्वरम् ॥
नाड़ीव्रणं व्रणं दुष्टं कासं श्वासञ्च दारुणम् ।
भगन्दरोपदंशौ च प्रमेहपिड़कास्तथा ॥

गदोद्वेगाधिकारे ।

यमान्यादिचूर्णम् ।

यमानी पिप्पली शुण्ठी चातुर्जातं फलत्रयम् ।
मुषली चोरपुष्पी च वाजिगन्धा पुनर्नवा ॥

अष्टवर्गस्तुगाक्षीरी सुरागुरुवचाबलाः ।
उशीरोत्पलमांसी च विदारी चन्दनद्वयम् ॥
शतपुष्पा मधुरिका सर्वाण्येतानि चूर्णयेत् ।
पाययेत्पयसालोड्य शर्करासलिलेन वा ॥
शस्तोद्वेगं बह्निमान्द्यमुन्मादं वातजान् गदान् ।
पित्तोत्थितानपि क्लैब्यं चूर्णमेतद्विनाशयेत् ॥

## क्षीरोदधिरसः ।

रसं गन्धं मभ्रञ्च शिलाजत्वयसी शुभाम् ।
रसार्द्धमानं स्वर्णञ्च गृहकन्याम्बुना भिषक् ॥
मर्द्दयित्वा वटीः कुर्य्यात्कलाय परिमाणतः ।
त्रिफलाजलयोगेन प्रातःसायञ्च पाययेत् ॥
शस्तोद्वेगं महाघोरं रक्तपित्तं क्षतं क्षयम् ।
प्रमेहं वातजान् रोगान् कामलाञ्च हलीमकम् ॥
पाण्डुताञ्च ज्वरं जीर्णमर्शांसि निखिलानि च ।
रसः क्षीरोदधिर्नाम निहन्यान्नात्र संशयः ॥

## गन्धराजतैलम् ।

मालती मल्लिका जाती केतकी यूथिका शमी ।
कदम्बः सहकारश्च चम्पकाशोकपाटलाः ॥
पुष्पाण्येषां यथालाभं तुलामानानि चाहरेत् ।
द्रोणाम्बुना विनिःक्वाथ्य पादशिष्टं वतारयेत् ॥
क्वाथमेतं रसञ्चापि पुण्डरीकस्य तत्समम् ।
प्रस्थमानेन तैलेन पचेत् कल्कानिमांस्तथा ॥
वचा शैलेय कुष्ठैला सुरामांसी शतावरी ।

देवदारु बला रास्ना शताह्वा चन्दनद्वयम् ।
कुङ्कुमागुरुशटाश्च काकोलीशीरसारिवाः ।
ग्रन्थिपर्णाश्च मुस्ताश्च मांसीश्च सहिता इति ॥
साधुसिद्धं परिस्राय तैलं समवतारयेत् ।
शीतीभूते क्षिपेच्चात्र शीतशिल्हक मोदिनी: ॥
गन्धराजाभिधं तैलमेतद्वाभ्यभिशङ्कनम् ।
वातामयान् घोररूपान् कार्श्यमग्निचयं तथा ॥
क्लैव्यं शुक्रप्रमेहंश्च स्नायुरोगांश्च नाशयेत् ।
बालानां पुष्टिकृच्छेदं गर्भसंस्थापनं परम् ॥

मस्तिष्करोगाधिकारे ।

अमृतादिमण्डूरम् ।

अमृता निम्बभूनिम्बौ बृहती विश्वभेषजम् ।
रजन्यौ मधुकं मूर्वा मञ्जिष्ठा मदभञ्जिनी ॥
तोयाधिवासिनो तोयपिप्पली तोयधिप्रियम् ।
एतानि समभागानि मण्डूरं द्विगुणं त्वतः ॥
किट्टादष्टगुणे मूत्रे पक्वमानि यथाविधि ।
उडुम्बर प्रमाणेन प्रयुञ्ज्यान्मधुना सह ॥
मस्तिष्करोगानखिलान् वातपित्तकफैः कृतान् ।
विनिहन्यान्न सन्देहो मण्डूरममृतादिकम् ॥

अभयादिगुग्गुलुः ।

अभयामलकीद्राक्षाः शताह्वां ब्रह्मयष्टिकाम्
शारिवाद्वयमञ्जिष्ठानिशादारुनिशावचाः ॥
शिथिलं वाससा बद्धं गुग्गुलुश्चाष्टमुष्टिकम् ।

सार्द्धद्रोणे जले पक्वा पादे शिष्टेऽवतारयेत् ॥
ततस्तं गुग्गुलुं तस्मिन् क्वाथतोये पुनः पचेत ।
सिद्धप्राये क्षिपेत्तस्मिन् मुशलीं मधुकं मुराम् ॥
चातुर्जातं विड़ङ्गञ्च देवपुष्पं दुरालभाम् ।
त्रिवृतां त्रायमाणाञ्च च्यवनाञ्च पलोन्मितम् ॥
अभयादिरसौ हन्ति गुग्गुलुः स्नायुसम्भवान् ।
मास्तिष्कानपि रोगांश्च मधुना सह सेवितः ।

पञ्चामृतलौहगुग्गुलुः ।

रसगन्धक ताराभ्रमाक्षिकाणां पलं पलम् ।
लौहस्य द्विपलञ्चापि गुग्गुलोः पलसप्तकम् ॥
मर्दयेदायसे पात्रे दण्डेनाप्यायसेन च ।
कटुतैलं समायोगाद्यामद्वयमतन्द्रितः ॥
माषमात्रप्रयोगेन गदा मस्तिष्कसम्भवाः ।
स्नायुजा वातजाश्चापि विनश्यन्ति न संशयः ॥
यं पञ्चामृतलौहाख्यो गुग्गुलुर्नहरेद्गदम् ।
नासौ सञ्जायते देहे मनुजानां कदाचन ॥

विल्वादिचूर्णम् ।

विल्वं मुस्तकमेलाञ्च चन्दनं रक्तचन्दनम ।
यमानीमजमोदाञ्च त्रिवृतां चित्रकं विड़म् ॥
अश्वगन्धां बलां कृष्णां तुगाक्षीरीं शिलाजतु ।
सञ्चूर्ण्य पयसा सार्द्धं प्रयुञ्ज्यात् काञ्जिकेन वा ॥
सेवनादस्य मस्तिष्का गदाः स्नायविका अपि ।
पलायन्ते सुदूरं हि तार्क्ष्यत्रस्ता यथाहयः ।

## त्रिवृतादिमोदकम्।

त्रिवृतामम्रतां द्राक्षां जातीकोषफलेऽभयाम्।
जीवन्तीं मधुकं श्यामामनन्तामिन्द्रवारुणीम्॥
अब्दमिन्दीवरं वह्निं मधुकं मागधीं सुराम्॥
चविकां चोरपुष्पीञ्च चन्द्रशूरञ्च चन्द्रिकाम्॥
चूर्णीकृतानां विजयां शुद्धां वीजविवर्जिताम्।
सितां सर्वद्विगुणितां निकुम्भेन्धन वह्निना॥
यथाशास्त्रं भिषक् पक्वा मोदकं परिकल्पयेच।
प्रयुञ्ज्यात्पयसोष्णेन सायाह्ने शाणमात्रया॥
मास्तिष्के दारुणे रोगे स्नायव्ये मारुतोद्भवे।
पित्तजे कफजे चापि ग्रहण्यां विकृतेऽनले॥
क्लीवतायां ज्वरे जीर्णे दुष्टे रजसी रेतसी।
प्रयोज्यं देवदेवोक्तं मोदकं त्रिवृतादिकम्॥

## बृहद्धात्रीघृतम्।

धात्रीफलस्य शाल्मल्या बृहत्या वासकस्य च।
शतावर्य्या विदार्य्याश्च प्रस्थमानेन चाम्भसा॥
कल्कैः करिकणाकृष्णा कक्कोलक कशेरुभिः।
खलिनी खदिराभ्याञ्च खण्डकेन च खण्डिमा
गद्गागदाभ्यां गन्धेन गोस्तन्या गोपकन्यया।
घनाघनाघनाभ्याञ्च घनाघनघनस्वनैः॥
पयसा च पयस्विन्याः पक्वा प्रस्थमितं घृतम्।
प्रयुञ्ज्यात्पयसोष्णेन प्रातरक्षप्रमाणतः॥
मास्तिष्कानखिलान् व्याधीन् वायुदोष समुद्भवाः

रक्तपित्तं क्षयं क्लैव्यं कासश्वासानिलामयान्।
उन्मादञ्च भ्रमं मूर्च्छां धात्वीष्टतमिदं महत्।
सप्ताहमभ्यवहृतं निराकुर्य्यान्न संशयः॥

## लक्ष्मीविलासं तैलम्।

शतावर्य्या विदार्य्याश्च कदल्या गोक्षुरस्य च।
नारिकेलस्य धात्र्याश्च कुष्माण्डस्याम्बुना पृथक्॥
मस्तुना काञ्जिकेनापि लाक्षायाः सलिलेन च।
छागेन पयसा कल्कैः शटीचम्पकमुस्तकैः॥
बलाविल्वाश्वगन्धाभिर्वृहत्या वासकेन च।
चन्दनद्वयमञ्जिष्ठाश्यामानन्तानिशायुगैः॥
मधुकेन मधूकेन पद्मकोत्पलबालकैः।
श्यामान्या च प्रसारण्या गन्धद्रव्यैस्तथाखिलैः॥
एकादश्यां पूजयित्वा लक्ष्मीनारायणौ शुचिः।
तैलं तिलसमुद्भूतं पचेन्मौनी जितेन्द्रियः॥
मास्तिष्कान् स्नायुजान् घोरान् गदान् मेहांश्च विंशतिम्
वातव्याधीनशेषांश्च मूर्च्छोन्मादावपस्मृतिम्।
ग्रहणीं पाण्डुतां शोषं क्लीवतां वातशोणितम्।
मूढ़गर्भं रजोदोषं दोषं शुक्रगतं तथा।
तैलं लक्ष्मीविलासाख्यं नाशयित्वाशु वै बलम्।
पुष्टिं कान्तिं धृतिं मेधां जनयेन्नात्र संशयः॥

## स्नायुरोगाधिकारे।

### कुमारीवटी।

कुमार्य्यद्भिर्हेम रौप्यं हरितालञ्च माक्षिकम्।

श्र ञ्चा भावयित्वाथो गुञ्जामात्रां वटीं चरेत् ॥
धा न्यमा वटी सेयं कुमारी योजिता हरेत् ।
निखिलान् स्नायुजान् रोगान् कुर्य्यात् तीक्ष्णं धनञ्जय

## महारजत वटी ।

कर्षप्रमाणं रजतं मौक्तिकं स्वर्णगैरिकम् ।
कालमानन्तु वैक्रान्तं सिन्दूरं सम्मिलञ्जतु ॥
लौहमभ्रं प्रवालञ्च त्रिधा चित्रकवारिणा ।
काकमाचीरसेनापि सप्तधा च विभावेत् ॥
गुञ्जाद्वयमितांकृत्वा वटिकां पयसा सह ।
प्रातः प्रातः प्रयुञ्जीत स्नायुरोगनिवृत्तये ॥

## स्वर्णसिन्दूर रसः ।

स्वर्णसिन्दूरमभ्रञ्च मौक्तिकं कर्षसम्मितम् ।
हेममाक्षिकवैक्रान्तवङ्गायांसि च पित्तलम् ॥
शिलाजतुप्रवालाब्धिफेनगुग्गुलुगन्धकान् ।
कोलमानेन संगृह्य भावयेद् वह्निवारिणा ॥
ततो गुञ्जाद्वयोन्मानां विधाय वटिकां भिषक् ।
देवदारुकषायेण प्रातः स्नायव योजयेत् ॥
स्वर्णसिन्दूरसंज्ञोऽयं रसेषु प्रवरो रसः ।
स्नायुजान् निखिलान् रोगान् हन्ति नास्त्यत्र संशयः ॥

## शतावरी घृतम् ।

शतावर्य्या रसप्रस्थं छागीदुग्धस्य चाढ़कम् ।
घृतप्रस्थं तथैकत्र कल्कैरेभिः पचेद् भिषक् ॥

मुषली चीरपर्णी च विदारी चन्दनद्वयम् ।
शृङ्गीतामलकी द्राक्षा श्यामानन्ता निशायुगम् ॥
बलेन्द्रवारुणी वासा नीलिनी नीलमुत्पलम् ।
अभयाद्राक्षमौ दारुनिम्बौ नागबलेति च ।
सिद्धमेतद् घृतं हन्ति वायुजानखिलान् गदान् ।
पुष्टिं वीर्य्यं बलं मेधां शुभां सञ्जनयेन्मतिम् ॥

सुरवल्लभ तैलम् ।

दशमूलं कणा शुण्ठी शटी रास्ना त्रिवृद्वचा ।
अश्वगन्धातुगाक्षीरी त्रिफला विल्ववासकौ ॥
जयन्ती हस्तिशुण्डी च मूर्वा कुटजदाड़िमौ ।
दृश्येभिर्विपचेद् कल्कैस्तैलं तिलसमुद्भवम् ॥
अश्वगन्धाकषायेण छागेन पयसा तथा ।
गन्धद्रव्यैश्च निखिलैर्मन्दमन्देन वह्निना ॥
सुरवल्लभनामेदं तैलं वायविकान् गदान् ।
वातपित्तकफोत्थांश्च निहन्यान्नात्र संशयः ॥

स्त्रीरोगाधिकारे ।

चन्द्रांशु रसः ।

रसमभ्रमयो वङ्गं गन्धकं कन्यकाम्बुना ।
मर्दयित्वा वटीं कुर्य्याद् गुञ्जाद्वन्द्वप्रमाणतः ॥
जीरकाथेन पीतोऽयं रसश्चन्द्रांशुसंज्ञकः ।
जरायुदोषानखिलान् योनिशूलं सुदारुणम् ॥
योनिकण्डूं स्मरोन्मादं योनिविक्षेपणं तथा ।
निराकरोति सन्तापं चन्द्रांशुर्दैत्यिनं यथा ॥

## रत्नप्रभा वटिका ।

स्वर्णं मौक्तिकमभ्रञ्च नागं वङ्गञ्च पित्तलम् ।
माक्षिकं रजतं वज्रं लौहं तालञ्च खर्परम् ॥
वाह्न्याः काकमाच्याश्च वासकस्योत्पलस्य च ।
स्वरसेन जयन्त्याश्च कर्पूरसलिलेन च ॥
भावयित्वा यथाशास्त्रं अहोरात्रं ततः परम् ।
संमर्द्यातन्द्रितः कुर्य्याद्भिषग् गुञ्जामिता वटीः ॥
एकैकाञ्च पयस्तोले प्रातराशां बलाम्बुना ।
उष्णेन पयसा वापि केशराजरसेन वा ॥
इयं रत्नप्रभानाम्नी वटिका सर्वसिद्धिदा ।
सर्वरोगहन्त्री च बल्या वृष्या रसायनी ॥

## लक्ष्मणालौहम् ।

लक्ष्मणायाः पलशतं क्वाथयित्वा यथाविधि ।
क्वाथे पूते पुनः पक्वे घनीभूते च निक्षिपेत् ॥
भार्गीकं कुशमूलञ्च मधुकं मधुकं बलाम् ।
पाठां बिल्वं पलोन्मानं लौहं सर्वसमं तथा ॥
लक्ष्मणालौहनामेदं भेषजं स्त्रीगदापहम् ।
जन्तूनामुपकाराय दस्राभ्यां परिनिर्मितम् ॥

## विश्ववल्लभं घृतम् ।

केशराजस्य निर्गुण्ड्याः शतावर्य्याः कुशस्य च ।
विदार्य्याः स्वरसेनापि छागेन पयसा तथा ॥
कल्कैर्दाडिम बिल्वाब्दैर्लवङ्गैला फलत्रिकैः ।

महता पञ्चमूलेन द्राक्षाचन्दनचम्पकैः ॥
निशादारुनिशाभ्याञ्च वह्निना लवणैरपि ।
तोयपिष्टैः पचेत्सर्पिः पात्रे मृत्परिनिर्मिते ॥
विश्ववल्लभनामेदं घृतं स्त्रीगदसूदनम् ।
वल्यं रसायनं वृष्यं बालानाञ्चाङ्गवर्द्धनम् ॥

## हयमारादितैलम् ।

हयमारामृताव्योषसिन्धूत्थैः सरसाञ्जनैः ।
त्रिवृद्दन्ती निशाभिश्च पथ्याकट्फलमुस्तकैः ॥
इन्द्रवारुणिकापाठानागकेशर चित्रकैः ।
सिद्धं तैलं निहन्त्याशु योनिकण्डूं सुदारुणाम
भगाङ्कुरस्य संवृद्धिं अशोन्मादञ्च योषिताम् ;
योनिव्रणञ्च तत्क्लेदं तदर्शांसि च सर्वथा ॥
तैलमत्र सार्षपं वृद्धवैद्योपदेशात्

## हिङ्ग्वादितैलम् ।

हिङ्गुकासीससिन्धूत्थैः शुण्ठीपत्रक चित्रकैः ।
सद्दासाराब्धिफेनेन्द्र क्षारत्रयनिशायुगैः ॥
विपक्कं सार्षपं तैलं पुष्प सञ्जननं परम् ।
रजःकृच्छ्रहरञ्चापि योनिशूल निसूदनम् ॥

## सुधाकरतैलम् ।

बलायाः केशराजस्य दूर्वायाश्च धवस्य च ।
पारिभद्रस्य पद्मस्य स्वरसेन च मस्तुना ॥
तण्डुलस्य च तोयेन लाक्षायाः सलिलेन च ।

काञ्जिकेन तथा कल्कैर्धात्रीधान्यक मुस्तकैः ॥
काकोलीक्षीरकाकोलीजीवकर्षभकोत्पलैः ।
वाजिगन्धा तुगाक्षीरी शिलाजतु रसाञ्जनैः ॥
यष्टीमधुक मञ्जिष्ठा मुरा मांसी यवासकैः ।
गन्धद्रव्यैश्च निखिलैः पचेत्तैलं तिलोद्भवम् ॥
सुधाकराभिधं तैलमेतत् स्त्रीगद सूदनम् ।
बल्यं रसायनं वृष्यमायुष्यं स्मरदीपनम् ॥

## लक्ष्मणारिष्टः ।

लक्ष्मणायाः पलशतं चतुर्द्रोणजले पचेत् ।
पादशेषे कषायेऽस्मिन् क्षिपेद्गुड़तुलाद्वयम् ॥
धातकीं षोड़शपलां मुस्तकं मधुकं बलाम् ।
फलत्रयं निशाद्वन्द्वं जीरकं चन्दनद्वयम् ॥
अजमोदां यमानीञ्च बिल्वञ्च पलमानतः ।
मासादूर्द्ध्वन्तु सिद्धोऽयमरिष्टः स्त्रीगदान्तकृत ॥

स्मृत्वा श्रीहरिपादपद्मयुगलं संसारघोरां निधी
श्रीड़ं सिद्धिशुभप्रदं विरचिता संमुद्रिताभूदियम् ।
अब्दे नाम वसुग्रहर्षिशशभृत्संख्ये नभस्ये शुभे
सन्तोषाय मनीषिणामुपहृता भैषज्यरत्नावली ।

## सम्पूर्णेयं भैषज्यरत्नावली ।



श्रीश्रीमन्महाराजाधिराजवर्द्धमानप्रदेशाधिपतिबाहादुरेणानु-
मोदितोऽनुज्ञातश्च

## श्रीविनोदलालसेनकविराजस्य

कलिकाताराजधान्यन्तर्गतफौजदारीबालाखानाभिधस्थानमध्यवर्ती

### २६ संख्यकभवनस्थितायुर्वेदौषधालयः,

तत्संक्रान्तौषधादिमूल्यनिरूपणञ्च ।



प्रायः पञ्चदशवत्सरादतीतान्यौषधालयोऽयं संस्थापितः । अस्माभिरत्र साध्यातिरिक्तव्ययमक्लान्तश्रममपरिमितयत्नञ्च स्वीकृत्य शास्त्रोक्तानि नानाविधौषधतैलघृतचूर्णमोदकासवारिष्टानि, सर्व्वविध-जारितधातुद्रव्याणि, आयुर्वेदशिक्षोपयुक्तानि विविधपुस्तकानि च

प्रस्तुतीकृत्य नियमितमूल्येन विक्रीयन्ते । बहूपस्थितैरपि येन प्रयुक्तचिकित्सकेन रोगिभ्यो रोगनिवारणोपयोगिनी व्यवस्था प्रदीयते । विदेशस्थरोगिणां पीड़ितावस्थायां परिज्ञातायामस्माभिरुपयुक्ता रोगशान्तिकरी व्यवस्था विदेशेऽपि प्रेष्यते । अधुना कृपालुभिः सहृदयजनगणैरस्य उत्साहे प्रदत्ते श्रमोऽस्माकं सफलीभविष्यति ।

प्रत्यहं प्रातरत्र समागतान् पीड़ितजनान् सयत्नं परीक्ष्य विना मूल्यं तेभ्यो रोगशान्त्यर्थं व्यवस्थौषधञ्च प्रदीयते ।

प्रथमं मूल्यं प्रेरणादिव्ययञ्चाप्राप्यौषधादीनां विदेशप्रेरणं सर्वथा निषिद्धं, प्राप्ते त्वादेशे भ्यालिउ-पेयेबल-पार्शेल-नामकेनोपायेन तानि प्रेरयितव्यानि ।

औषधपुस्तकादिक्रयार्थं नोट-मनिअर्डर-पत्रादीनि निम्नलिखितेन मन्नाम्ना प्रेरयितव्यानि ।

अस्माकं नवाविष्कृतौषधव्यवहारतः प्राप्तोपकारैर्बहुप्रतिष्ठजनगणैरस्मै प्रदत्तानि बहूनि प्रशंसापत्राण्यत्र बाहुल्यभयेन न मुद्रितानि । केवलञ्चैतान्यस्माकं वङ्गहिन्दीप्रश्नमूल्यनिरूपणपुस्तकानि प्रेरणव्यये (डाकमाशुल अर्द्ध आना) प्रदत्ते सर्वजनैः प्राप्तव्यानि ।

इंरेजीभाषया पत्रादौ लिखिते सति तत्राभिज्ञतयास्माकं कर्मचारिणः सम्यगभिप्रेतमर्थं साधयितुं शक्नुवन्ति । सर्वैरस्य पत्राणि तथैव लिखितव्यानि यथा तान्यस्माकं विदितार्थानि भवन्ति ।

गुणोपमभिक्षुकस्य
**श्रीविनोदलालसेनकविराजस्य**
अर्बुद आयुर्वेदौषधालये,
फौजदारीबालाखाना, कलिकाता ।

# नवाविष्कृतान्यौषधानि।

## अश्वगन्धारसायनम्।

जराव्याधिनाशकमौषधमिदमोज्ञ्यत्वाद्रक्तशोधकं, शुक्रजनकं, जीवनीशक्तिसंवर्द्धकञ्च। सेवनादस्य दीर्घकालीनपीड़ाजनिता वा स्वाभाविकी देहक्षीणता रक्तहीनता च, स्नायविकं शारीरिकञ्च दौर्बल्यं, शिरोघूर्णनं, दर्शनश्रवणशक्तेरल्पता, शुक्रमेहः, शुक्रतारल्यं, नारीणां प्रसवान्ते कारणान्तरवशतो वा जाता दुर्बलता कृशता चेत्यादि उपशाम्यन्ति, भवति च शरीरं हृष्टपुष्टं बलिष्ठञ्च। बालवृद्धवनितानां सर्वावस्थास्वनायासं सेव्यमिदम्।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... ... ३॥०

प्रेरणव्ययः ( डाकमाशुल्क ) ... ... ।।/०

## कुष्ठाभेदिनी वटिका।

सेवनेनास्याः कोष्ठाग्निमवायुर्ज्वरोऽर्शोऽजीर्णं यकृत् प्लीहा शोथो वातः शिरःपीड़ा विकृतरक्तता विकृतपित्तता चोपशाम्यन्ति, निःसन्देहमारोग्यमाप्नुवन्ति च कोष्ठबद्धजनिताः सर्वाः पीड़ाः। यतो मलबद्ध एव सर्वरोगाणां कारणं, कोष्ठेऽविशुद्धे न कश्चिदपि रोग औषधरूपशाम्यत्यतः सर्वरोगशान्त्यर्थं प्रथमं विरेचनमिदमवश्यं व्यवहार्य्यम्। औषधमिदं बालयुववृद्धानां सुस्थायामपि पीड़ितायावस्थायां निर्विघ्नं सेव्यम्।

क्षुद्रैकपात्रस्य (१ कौटा) मूल्यम् ... ... ॥०

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ।०

## उदयभास्कररसवचम् ।

अस्य सेवनतो गुल्मामाष्ठीला-वाताष्ठीला-प्लीहयकृत्प्रभृतीनामुदर-मध्यस्थानामाकृतियुक्तानां बहुकालस्थायिनामपि सोपद्रवाणामपि च सर्वविधरोगाणां नूनं शान्तिर्भवति ।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... १।०

पेटरयादिव्ययः ( डाकमाशुलादि ) ... ।।/

## ऋषभकवटिका ।

धातुस्थविषमज्वराणां, प्लीहयकृज्जनितज्वराणां, विशेषतश्चा-मैककद्रूनादनसेवनोत्पन्नसर्वविधज्वराणां महौषधमियम् ।

क्षुद्रैकपात्रस्य ( १ कौटा ) मूल्यम् ... ... १/

पेटरव्ययः ( डाकमाशुल ) ... ।०

## कर्पूरासवः ।

सेवनादस्य विसूचिकाप्रबलातिसारामाशयाग्निमान्द्याजीर्णप्रभृतीनां पीड़ानामाशूपशमो भवति । विसूचिकायाः प्रारम्भात् सेविते ऽस्मिन् रोगोऽयं न प्रबलो मारात्मकश्च भवेत् ।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... ।।०

पेटरयादिव्ययः ( डाकमाशुलादि ) ... ।/

## कालीयकाद्रवः ।

नियमेन व्यवहारादस्य नेत्राभिष्यन्द-चक्षुर्मांसवृद्धि-पर्व-नतन्ध्या-दूरदर्शनप्रभृतयः सर्वे चक्षूरोगाः सत्वरमुपशाम्यन्ति ।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... १/

पेटरयादिव्ययः ( डाकमाशुलादि ) ... ।/

## कुङ्कुमासवः।

आसवोऽयं मूर्च्छापस्मार-योषापस्मार-चित्तविकार-शिरोघूर्णनप्रभृतीनां रोगाणामाशुनिवारणोपायः।

| | | |
|---|---|---|
| जुद्रकाचकूप्याः (१ शिशि) मूल्यम् | ... | ॥० |
| प्रेरणादिव्ययः ( डाकमाशुलादि ) | ... | ।८ |

## कुन्तलवृष्यतैलम्।

बहुदिनमानि केशतत्त्वं पर्य्यालोच्य महोपकारि तैलमिदमस्माभिः प्रस्तुतीकृतम्। नियमेन व्यवहारादस्य केशहीनता केशस्याल्पताप्रभृतयो रोगाः प्रशमं यास्यति. भवति च केशो वर्द्धितः सुशोभितश्च, मस्तकघूर्णनप्रभृतयश्च शिरोरोगा आरोग्यमायान्ति, भवति च मस्तकं सुशीतलं, चक्षुर्ज्योतिश्च वर्द्धते। सुगन्धि तैलमिदमेवं विभिन्नदेशीयेभ्योऽपि विशेषफलप्रदम्।

| | | |
|---|---|---|
| जुद्रकाचकूप्याः (१ शिशि) मूल्यम् | ... | |
| प्रेरणादिव्ययः ( डाकमाशुलादि ) | ... | ।८ |

## मुष्कवृद्धे महौषधम्।

अव्यर्थमेतदौषधं ज्वराद्युपसर्गयुक्तायाः मुष्कवृद्धिपीड़ायास्तज्जनितपुरुषत्वह्रासस्य च प्रशमो भवति।

| | | |
|---|---|---|
| जुद्रकपालस्य ( १ कौटा ) मूल्यम् | ... | १, |
| प्रेरणव्ययः ( डाकमाशुल ) | ... | ।- |

## क्षतान्तकतैलम्

तैलमिदं दुष्टक्षतनालीव्रणघर्षणादिजक्षतभगन्दरपीनसमुखरोगकर्णक्षतप्रभृतीनां सर्वविधक्षतरोगाणां सत्वरनिवारणक्षमम्।

| | | |
|---|---|---|
| जुद्रकाचकूप्याः ( १ शिशि ) मूल्यम् | ... | १, |
| प्रेरणादिव्ययः ( डाकमाशुलादि ) | ... | ।८ |

## क्षीरोदद्रावम् ।

औषधसेवनं विनाप्यस्य भक्षणेनोदरामयाम्लपित्तशूलमूत्राशयवकृत्-पीड़ा-प्लीहज्वर-कोष्ठबद्ध-प्रमेह-रक्तपित्त-कास-श्वास-क्षयरोगकर्णरोग-मुखरोगाधिकचिन्ताध्ययनजनितमस्तिष्कबलहानि-चित्तविकार-निद्रा-नाश-सूतिका-प्रदर-कष्टरजः-प्रभृतीनां पीड़ानां बालकोदरामयप्रभृति-पीड़ानाञ्च प्रशमः स्यात्, भवति च क्षुधावृद्धिः सुनिद्राहारे रुचिश्च । बालदुर्बलपीड़ितानामेतद्भिन्नं लघुतरं पुष्टिकरञ्च पथ्यं नाद्यापि प्रकाशितम् ।

चतुष्ककाचकूप्याः ( १ शिशि ) मूल्यम् ... ॥०

प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ... ॥

## अम्लक्षीरपानकम् ।

सेवनेनास्य दीर्घकालस्थायिपीडायाः कारणाज्जातायाः गर्भकालीनारुचिवमनेच्छाग्निमान्द्योदराध्मानप्रभृतीनाञ्च प्रशमः स्यात्, भवति चाहारे रुचिः क्षुधावृद्धिश्च । अधिकन्तु ग्रीष्मकाले सेवितेऽस्मिन् तत्क्षणमेव नराणां ग्रीष्मनिवारणं, शरीरञ्च सुशीतलं भवति ।

चतुष्ककाचकूप्याः ( १ शिशि ) मूल्यम् ... ॥०

प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ... ॥/०

## दद्रुहरचूर्णम् ।

चूर्णेनानेन सर्वाङ्गस्थानां सर्वेषां दद्रुरोगाणां प्रशान्तिर्भवति ।

चतुष्ककाचकूप्याः ( १ शिशि ) मूल्यम् ... ॥०

प्रेरणव्ययः ( डाकमाशुल ) ... ... ।०

## दन्तशोधनचूर्णम् ।

अस्मिन्नियमेन व्यवहृते दन्तमूलस्य स्फीतता, शिथिलता, वेदना चैतञ्च तस्मात् पूयरक्तादिस्रावश्च प्रशाम्यति, क्रिमिदन्तकश्चारोग्यमायाति, मुखदुर्गन्धश्च दुरीभवति, दन्ताः शुभ्रवर्णाश्च भवन्ति ।

क्षुद्रैकपात्रस्य ( १ कौटा ) मूल्यम् ... ।/०

प्रेरणव्ययः (डाकमाशुल ) ... ... ।०

## दार्व्यादिकषायः ।

व्यवहृते चास्मिन् यकृद्विवृद्धि-प्लीहाधिक्यजनितज्वरस्य प्रशममाप्नोति, प्रशाम्यन्ति च मुखस्रावाद्याण्डुवर्णत्व-कोष्ठबद्धोत्कासाद्याहारारुचि-निद्रानाश-शारीरिकदौर्बल्य-प्रभृतयो विविधरोगाः ।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... ।।०

प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ।।४

## धातुक्षय-ध्वजभङ्गयोर्महौषधम् ।

नानाप्रकारेन्द्रियपरतन्त्रतया वा यौवनस्वभावसुलभदोषवशतोऽपरिमितशुक्रक्षयाज्जातं धातुदौर्बल्यं पुरुषत्वहीनत्वञ्च व्यवहारेणास्य सत्वरं प्रशाम्यति ।

मासैकव्यवहारोपयोगिनो द्विविधौषधस्य तैलस्य च मूल्यम् ... ६

प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ।।४

## नलिनासवम् ।

सेवनेनास्य नारीणां सूतिकाजनिताग्निमान्द्योदरामयज्वरशोथादिप्रभृतीनां रोगाणामाशु प्रशमो भवति, प्रशाम्यन्ति च सर्वविधा ओषध्यश्चर्मरोगाः, शरीरञ्च हृष्टपुष्टं चित्तञ्च प्रफुल्लं भवति ।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... १।।०

प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ।०

युक्तानां सर्वविधानां मूत्राधिक्यानां प्रमेहपीड़ानाञ्च सम्यक् प्रशान्तिर्भवति ।

मासैकव्यवहारोपयुक्तानां द्विविधवटिकाघृततैलानां मूल्यम् १४)

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... १।०

## वातरक्त-कुष्ठरोगयोर्महौषधम् ।

हस्तपदादिषु ज्वाला गात्राभ्यन्तरे पिपीलिकादिगतेरनुभवो गात्रे विशेषतश्च गण्डादिषु चक्राकारचिह्नोत्पत्तिरित्यादिलक्षणसंयुक्ताः सर्वविधा वातरक्तकुष्ठरोगा एतदौषधव्यवहारेण सत्वरं प्रशाम्यन्ति ।

मासैकव्यवहारोपयुक्तौषधतैलानां मूल्यम् ... ८)

प्रेरणादि[illegible] ... [illegible]

## वासामृतम् ।

सेवनेनास्य सद्योत्कास-सर्वविधकास-वक्षोवेदना-श्वासकृच्छ्र-रात्रिकालीनघर्म-प्रभृतीनां रोगाणां चाशु प्रशान्तिर्भवति ।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् ... ... १)

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ।/

---

## विडङ्गाष्टकम् ।

सेवनतोऽस्यान्त्रस्थाः सर्वविधाः क्रिमयो सम्यक् विनश्यन्ति, क्रिमिजनिताजीर्ण-मुखजलोद्गम-वमनोद्वेग-ज्वरोदरामय-शूलप्रभृतीनां निवारणं भवति च ।

क्षुद्रैकपात्रस्य (१ कौटा) मूल्यम् ... ... ॥०

प्रेरणव्ययः (डाकमाशुल) ... ... ... ।०

## भूनिम्बादिकषायः ।

दूषितजलवायु(म्यालेरिया)जनितज्वर-सर्वविधपुरातनज्वर-विषम-ज्वर-मेहघटितज्वर-पर्य्यायज्वर प्रभृतीनां तत्संयुक्तप्लीहयकृदादीनामारोग्यकारकं महौषधमिदम् ।

काचैककूप्याः (१ बोतल) मूल्यम् ... ... १)

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ॥/

## उत्कृष्टः स्वर्णघटितः षड्गुणबलिजारितो मकरध्वजः स्वर्णसिन्दूरं वा ।

अनुपानविशेषेण सह सेवितेऽस्मिन् महौषधे जीर्णज्वर-हस्तपदादिज्वालानिद्राहीनतावायुरोगप्रमेहशुक्रतारल्यमानसिकचिन्ताध्ययनजनितदौर्बल्यमस्तिष्कविकृतिशिरःपीडाकासश्वासयक्ष्मादिजातसर्वविधरोगाणां सत्वरं प्रशमो भवति ।

सप्तमात्राणां मूल्यम् ... ... ... १)

एकतोलकस्य मूल्यम् ... ... ... २४)

प्रेरणव्ययः (डाकमाशुल) ... ... ।०

## सूत्यादिघृतम् ।

घृतेनानेन पारादोषजनिताग्न्यौपदंशिकक्षतानि, अपराणि च सर्वाणि क्षतानि, नाडीव्रणानि च प्रशमनुपयान्ति ।

क्षुद्रैकपात्रस्य (१ कौटा) मूल्यम् ... ॥०

प्रेरणव्ययः (डाकमाशुल) ... ।०

## मालतीतैलम् ।

तैलमिदं चित्तचाञ्चल्योन्माद-मूर्च्छा-स्त्रीगुल्मवायु(हिष्टिरिया)-कर्त्तव्याकर्त्तव्यानिश्चय-विमनस्कतातिक्रोध-भयङ्कर-मनोविकाराणाम्,

## रक्तातिसारामरक्तग्रहणीरोगयोर्महौषधम् ।

महौषधमिदं ज्वरशोथारुचिप्रभृत्युपद्रवसंयुक्तानामपि सर्वविध-रक्तातिसारामरक्तग्रहणीरोगाणां निवारणक्षमम् ।

चतुर्दशैककाचकूप्याः (१ शिशि) मूल्यम् ... २)

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ।।/

---

## रास्नादिमर्दनम् ।

नियमेनास्मिन् मर्दिते सर्वविधवात-पृष्ठपार्श्वकटिजानुप्रभृतिजात वेदनाशातघातजनितवेदनाधिकवेदनादीनां सत्वरं शान्तिर्भवति ।

चतुर्दशैककाचकूप्याः (१ शिशि) मूल्यम् ... २)

[illegible] ... ।/

## लोमशातनचूर्णम् ।

लोमस्थाने प्रदत्तेऽस्मिन् क्लेशं विना तत्क्षणमेव लोमा[illegible] जानि भवन्ति । ग्रीवाकपोलप्रभृतिकोमलस्थानेष्वपि निर्विघ्नकार्यमिदम् ।

चतुर्दशैककाचकूप्याः (१ शिशि) मूल्यम् ... [illegible]

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... [illegible]

## शूलसंहारचूर्णम् ।

नियमपूर्वकं सेवितेऽस्मिन् बहुदिनोत्पन्नमतियन्त्रणादायकं शूल-मम्लपित्तञ्च वमिकोष्ठबद्धप्रभृत्युपद्रवसंयुक्तमपि शीघ्रमुपशाम्यति ।

चतुर्दशैककाचकूप्याः (१ शिशि) मूल्यम् ... ...

प्रेरणादिव्ययः (डाकमाशुलादि) ... ...

## सुरसुन्दरीवटिका (सर्वविधस्त्रीरोगाणां महौषधम्)।

महौषधमिदं रक्तश्वेतप्रदरबहुरजःबाधकगर्भस्रावप्रभृतीनां सर्व-विधस्त्रीरोगाणामारोग्यकारणम्। कल्याणकरी वटिकेयं सर्वशरीरस्थ-शोणितं शोधयित्वा जरायुस्थसर्वरोगाणामारोग्यं विदधाति।

क्षुद्रैकपात्रस्य ( १ कौटा ) मूल्यम् ... १,

प्रेरणव्ययः (डाकमाशुल) ... ... ।०

## प्रसिद्धान्यौषधानि।

| नाम | | | | मूल्यम् |
|---|---|---|---|---|
| अभयालवणम् | ... | ... | ७ मात्राः | २, |
| कस्तूरीभैरवम् | ... | ... | ७ वटिकाः | २, |
| गुडपिप्पली | ... | ... | ७ मात्राः | १, |
| गुडूच्यादिलौहः | ... | ... | [illegible] | ॥० |
| चतुर्मुखम् | ... | ... | ,, | १, |
| चन्द्रोदयमकरध्वजः | ... | ... | ,, | ३, |
| चिन्तामणिचतुर्मुखः | ... | ... | ,, | ५, |
| जयमङ्गलरसः | ... | ... | ,, | [illegible] |
| ज्वरकुञ्जरपारीन्द्ररसः | | ... | ,, | [illegible] |
| ज्वराङ्कुशः | ... | ... | ,, | [illegible] |
| ज्वरान्तकरसः | ... | ... | ,, | [illegible] |
| त्रैलोक्यचिन्तामणिः | | ... | ,, | ४, |
| धात्रीलौहः | ... | ... | ७ मात्राः | १।० |
| पूर्णचन्द्ररसः | ... | ... | ७ वटिकाः | ५, |
| मृत्युञ्जयलौहः | ... | ... | ,, | [illegible] |
| यकृत्प्लीहोदरहरलौहः | | ... | ,, | १, |
| योगेन्द्ररसः | ... | ... | ,, | ५, |

| नाम | | | | मूल्यम् |
|---|---|---|---|---|
| स्मरराजरसः | ... | ... | ७ वटिकाः | २) |
| राजमृगाङ्कः | ... | ... | ७ मात्राः | ४) |
| लक्ष्मीविलासः | ... | ... | ७ वटिकाः | १) |
| लोहितचूर्णं (लालगुंड़ा) | | ... | ,, | १, |
| लङ्केश्वरः | ... | ... | ,, | २) |
| वसन्तकुसुमाकरः | ... | ... | ,, | ४) |
| वसन्ततिलकरसः | ... | ... | ७ मात्राः | २) |
| वातचिन्तामणिः | ... | ... | ७ वटिकाः | २) |
| विषमज्वरान्तकलौहः | ... | ... | ,, | २) |
| शृङ्गाराभ्रम् | ... | ... | ,, | ॥० |
| श्वासारिलौहः | ... | ... | ७ मात्राः | १) |
| सर्वज्वरहरलौहः | ... | ... | ७ वटिकाः | २) |
| सर्वाङ्गसुन्दर | ... | ... | ७ मात्राः | २) |
| [illegible] | ... | ... | ७ वटिकाः | १) |
| सोमनाथरसः | ... | ... | ,, | २) |

## अवलेहः

[illegible]

| | | | | |
|---|---|---|---|---|
| [illegible]ावलेहः | ... | ... | ७ मात्राः | १) |
| [illegible]नप्राशः | ... | ... | ,, | २) |
| दन्तीहरीतकी | ... | ... | ,, | १॥० |
| भार्गीगुडः | ... | ... | ,, | १॥० |
| [illegible]लेहः | ... | ... | ,, | १।० |

| नाम | | | | मूल्यम् |
|---|---|---|---|---|
| क्षीरकल्याणघृतम् | ... | .. | ८० तोला (१सेर) | ८, |
| चैतसघृतम् | ... | .. | ,, | १२, |
| छागादिघृतम् | .. | ... | ,, | १६, |
| फलघृतम् | .. | .. | ,, | २७ |
| ब्राह्मीघृतम् | . | ... | ,, | ८ |

## तैलम्

| | | | | |
|---|---|---|---|---|
| अङ्गारकतैलम् | ... | .. | ८० तोला: (१सेर) | ८, |
| कन्दर्पसारतैलम् | ... | . | ,, | ४०, |
| किराताद्यतैलम् | .. | .. | ,, | १६, |
| कुब्जप्रसारणीतैलम् | . | .. | ,, | १२, |
| गुडूच्यादितैलम् | ... | ... | ,, | ८, |
| गोपालतैलम् | .. | .. | ,, | ४०, |
| पञ्चगुणमिहिरतैलम् | ... | .. | ,, | १२, |
| चन्दनादितैलम् | ... | ... | ,, | १६, |
| त्रिशतीप्रसारणीतैलम् | | ... | ,, | १६, |
| दशमूलतैलम् | ... | ... | ,, | १६, |
| नारायणतैलम् | ... | ... | ,, | १२, |
| दूर्वादितैलम् | ... | ... | ,, | १२, |
| राजप्रसारणीतैलम् | | ... | ,, | २४ |
| मरिचादितैलम् | ... | ... | ,, | ८, |
| महाराजप्रसारणीतैलम् | | ... | ,, | ६४, |
| महारुद्रगुडूचीतैलम् | ... | ... | ,, | १२, |
| माषतैलम् | ... | ... | ,, | १६, |
| बृहन्मिहिरतैलम् | ... | ... | ,, | १२, |
| लाक्षादितैलम् | ... | ... | ,, | ८, |

| नाम | | | मू |
|---|---|---|---|
| नारायणवृनादितैलम् | ... | ... | ८० तोला: (१सेर |
| विष्णुतैलम् | ... | ... | ,, |
| अपराजिततैलम् | ... | ... | ,, |
| गुल्ममूलकादितैलम् | ... | ... | ,, |
| षड्बिन्दुतैलम् | ... | ... | ,, |
| वैश्वधारादितैलम् | ... | ... | |
| सोमराजीतैलम् | ... | ... | |
| हिमसागरतैलम् | ... | ... | ,, |

## रससिन्दूरादि।

| | | | |
|---|---|---|---|
| मकरध्वजः | ... | ... | १ तोलकः |
| रससिन्दूरम् | ... | ... | ,, |
| षड्गुणबलिजारितमकरध्वजः | | ... | |
| षड्गुणबलिमकरध्वजः | | ... | ,, |
| स्वर्णसिन्दूरम् | ... | ... | ,, |

## धातुद्रव्यम्।

| | | | |
|---|---|---|---|
| जारिताभ्रम् | ... | ... | १ तोलकः |
| प्रवालः | ... | ... | ,, |
| मुक्ता | ... | ... | ,, |
| रौप्यम् | ... | ... | ,, |
| लौहः | ... | ... | ,, |
| वङ्गम् | ... | ... | ,, |
| स्वर्णम् | ... | ... | ,, |